## ಕೃತಜ್ಞತಾ ಸಮರ್ಪಣೆ

ಹೀಗೆ ಎರಡನೆಯ ಅಧ್ಯಾಯದ ಮೂರು ಹಾಗೂ ನಾಲ್ಕನೇ ಪಾದಗಳ ವ್ಯಾಖ್ಯಾನಸಹಿತವಾದ ಸಂಪಾದನಾಕಾರ್ಯವನ್ನು ಹರಿವಾಯುಗುರುಗಳು ನಮ್ಮಲ್ಲಿ ನಿಂತು ಯಥಾಯೋಗ್ಯವಾಗಿ ಮಾಡಿಸಿದ್ದಾರೆ. ಇದನ್ನು ಅಸ್ಮದ್ಗುರ್ವಂತರ್ಗತ ಭಾರತೀರಮಣ ಮುಖ್ಯಪ್ರಾಣಾಂತರ್ಯಾಮಿ ಗ್ರಂಥಪ್ರತಿಪಾದ್ಯ ನಾರಾಯಣನಿಗೆ ಅನಂತಾನಂತ ಭಕ್ತಿಪೂರ್ವಕ ಸಾಷ್ಟಾಂಗಪ್ರಣಾಮಗಳೊಂದಿಗೆ ಸಮರ್ಪಿಸುತ್ತಿದ್ದೇವೆ. ಈ ಸಂದರ್ಭದಲ್ಲಿ ಅನ್ನದಾನ-ವಿದ್ಯಾದಾನಾದಿಗಳನ್ನು ಮಾಡಿ ನಮ್ಮ ಸ್ವರೂಪೋದ್ಧಾರ ಮಾಡಿದ ಪರಮಪೂಜ್ಯ ವಿದ್ಯಾಗುರುಗಳಾದ **ಶ್ರೀ 1008 ಶ್ರೀ ಸತ್ಯಾತ್ಮತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರ** ಪಾದಾರವಿಂದಗಳಲ್ಲಿ ಭಕ್ತಿಪೂರ್ವಕ ಸಾಷ್ಟಾಂಗ ಪ್ರಣಾಮಗಳು. ಗ್ರಂಥಸಂಪಾದನಾ ಕಾರ್ಯದಲ್ಲಿ ಮೊದಲಿನಿಂದಲೂ ಉಪಯುಕ್ತ ಸಲಹೆ ನೀಡಿ ಅನುಗ್ರಹಿಸುತ್ತಿರುವ ಜಯತೀರ್ಥ ವಿದ್ಯಾಪೀಠದ ಕುಲಪತಿಗಳಾದ ವಿದ್ಯಾಗುರುಗಳಾದ ಗುತ್ತಲ ರಂಗಾಚಾರ್ಯರಿಗೆ ಅನಂತಾನಂತ ಪ್ರಣಾಮಗಳು. ತಮ್ಮ ಇಳಿಯ ವಯಸ್ಸಿನಲ್ಲಿಯೂ ಅಮೂಲ್ಯ ಸಲಹೆ ನೀಡಿ ಮಾರ್ಗದರ್ಶನ ಮಾಡುತ್ತಿರುವ ದ್ವೈತವೇದಾಂತ ಸಂಶೋಧನಾ ಕೇಂದ್ರದ ನಿರ್ದೇಶಕರಾದ ಪ್ರೊ. ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿ ಅವರಿಗೆ ಅನಂತ ನಮಸ್ಕಾರಗಳು. ಪ್ರಸ್ತುತ ಈ ಕಾರ್ಯದಲ್ಲಿ ನಮ್ಮನ್ನು ತೊಡಗಿಸಿ ಅದರ ಪ್ರಕಾಶನಕ್ಕೆ ಬೇಕಾದ ಎಲ್ಲ ವ್ಯವಸ್ಥೆಗಳನ್ನು ಮಾಡಿ ಮಾರ್ಗದರ್ಶನ ಮಾಡುತ್ತಿರುವ ವಿದ್ಯಾಧೀಶ ಸ್ನಾತಕೋತ್ತರ ಸಂಸ್ಕೃತ ಶೋಧಕೇಂದ್ರದ ನಿರ್ದೇಶಕರಾದ ಡಾ॥ ಸತ್ಯಧ್ಯಾನಾಚಾರ್ಯ ಕಟ್ಟಿಯವರಿಗೆ ಅನಂತ ನಮಸ್ಕಾರಗಳನ್ನು ಸಮರ್ಪಿಸುತ್ತಿದ್ದೇವೆ.

ಅಭಿನವ ಚಂದ್ರಿಕಾ ಪ್ರತಿಯನ್ನು ಶುದ್ಧಮಾಡಿ ನೀಡಿದ ವಿದ್ವಾನ್ ಆಲೂರು ವಾಮನಾಚಾರ್ಯರಿಗೆ, ಮುಖಪುಟ ವಿನ್ಯಾಸ ಮಾಡಿದ ಶ್ರೀ ಗೋಪಾಲಕೃಷ್ಣನಿಗೆ ಹಾಗೂ ಮುದ್ರಣಕಾರ್ಯವನ್ನು ಅಚ್ಚುಕಟ್ಟಾಗಿ ಮಾಡಿಕೊಟ್ಟ ವಾಗರ್ಥದವರಿಗೆ ಹಾರ್ದಿಕವಾದ ಕೃತಜ್ಞತೆಗಳು.

ಡಾ॥ ಕೃಷ್ಣಾಚಾರ್ಯ ಉಪಾಧ್ಯಾಯ
ಡಾ॥ ಬಿ.ಆರ್. ವೆಂಕಟೇಶಾಚಾರ್ಯ

# श्रीकृष्णद्वैपायनप्रणीतानि ब्रह्मसूत्राणि

## तृतीयः पादः

### (१) वियदधिकरणम्

ॐ न वियदश्रुतेः ॐ ॥ १ ॥

ॐ अस्ति तु ॐ ॥ २ ॥

ॐ गौण्यसम्भवात् ॐ ॥ ३ ॥

ॐ शब्दाच्चॐ ॥ ४ ॥

ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ५ ॥

ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥

ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ ७ ॥

### (२) मातरिश्वाधिकरणम्

ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ ८ ॥

### (३) असम्भवाधिकरणम्

ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ९ ॥

### (४) तेजोऽधिकरणम्

ॐ तेजोऽतस्तथा ह्याह ॐ ॥ १० ॥

### (५) अबधिकरणम्

ॐ आपः ॐ ॥ ११ ॥

### (६) पृथिव्यधिकरणम्

ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ १२ ॥

### (७) तदभिध्यानाधिकरणम्

ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ १३ ॥

### (८) विपर्ययाधिकरणम्

ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ १४ ॥

### (९) अन्तराधिकरणम्

ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥ १५ ॥

ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ॥ १६ ॥

### (१०) आत्माधिकरणम्

ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥ १७ ॥

### (११) ज्ञाधिकरणम्

ॐ ज्ञोऽत एव ॐ ॥ १८ ॥

ॐ युक्तेश्च ॐ ॥ १९ ॥

### (१२) उत्क्रान्त्यधिकरणम्

ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥ २० ॥

ॐ स्वात्मना चोत्तरयोः ॐ ॥ २१ ॥

ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ २२ ॥

ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २३ ॥

ॐ अविरोधश्चन्दनवत् ॐ ॥ २४ ॥

ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥ २५ ॥

ॐ गुणाद्वाऽऽलोकवत् ॐ ॥ २६ ॥

### (१३) व्यतिरेकाधिकरणम्

ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ २७ ॥

### (१४) पृथगधिकरणम्

ॐ पृथगुपदेशात् ॐ ॥ २८ ॥

ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २९ ॥

### (१५) यावदधिकरणम्

ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥३०॥

### (१६) पुंस्त्वाधिकरणम्

ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥३१॥

ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ ॥ ३२ ॥

### (१७) कर्तृत्वाधिकरणम्

ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ ३३ ॥

ॐ विहारोपदेशात् ॐ ॥ ३४ ॥

ॐ उपादानात् ॐ ॥ ३५ ॥

ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ॥३६

ॐ उपलब्धिवदनियमः ॐ ॥ ३७ ॥

ॐ शक्तिविपर्ययात् ॐ ॥ ३८ ॥

ॐ समाध्यभावाच्च ॐ ॥ ३९ ॥

ॐ यथा च तक्षोभयथा ॐ ॥ ४० ॥

ॐ परात्तु तच्छ्रुतेः ॐ ॥ ४१ ॥

ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ ४२ ॥

(१८) अंशाधिकरणम्

ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ ४३ ॥

ॐ मन्त्रवर्णात् ॐ ॥ ४४ ॥

ॐ अपि स्मर्यते ॐ ॥ ४५ ॥

ॐ प्रकाशादिवन्नैवं परः ॐ ॥ ४६ ॥

ॐ स्मरन्ति च ॐ ॥ ४७ ॥

ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ॥ ४८ ॥

ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ ४९ ॥

ॐ आभास एव च ॐ ॥ ५० ॥

(१९) अदृष्टाधिकरणम्

ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥

ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ ५२ ॥

ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥ ५३ ॥

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥

## चतुर्थः पादः

(१) प्राणाधिकरणम् (प्राणोत्पत्त्यधिकरणम्)

ॐ तथा प्राणाः ॐ ॥ १ ॥

ॐ गौण्यसम्भवात् ॐ ॥ २ ॥

ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ ३ ॥

(२) मनोधिकरणम्

ॐ तत्प्राक्श्रुतेश्च ॐ ॥ ४ ॥

(३) वागधिकरणम्

ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ ५ ॥

(४) सप्तगत्यधिकरणम्

ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ ६ ॥

ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ॥ ७ ॥

(५) अण्वधिकरणम्

ॐ अणवश्च ॐ ॥ ८ ॥

(६) मुख्यप्राणाधिकरणम्

ॐ श्रेष्ठश्च ॐ ॥ ९ ॥

ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ १० ॥

(७) चक्षुराद्यधिकरणम्

ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ ११ ॥

ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ॥१२॥

(८) पञ्चवृत्त्यधिकरणम्

ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३ ॥

(९) प्राणाणुत्वाधिकरणम्

ॐ अणुश्च ॐ ॥ १४ ॥

(१०) ज्योतिराद्यधिकरणम्

ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥ १५ ॥

ॐ प्राणवता शब्दात् ॐ ॥ १६ ॥

ॐ तस्य च नित्यत्वात् ॐ ॥ १७ ॥

(११) तइन्द्रियाधिकरणम्

ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ १८

ॐ भेदश्रुतेः ॐ ॥ १९ ॥

ॐ वैलक्षण्याच्च ॐ ॥ २० ॥

(१२) संज्ञाधिकरणम्

ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥२१॥

(१३) मांसाधिकरणम्

ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ॥ २२ ॥

ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ २३ ॥

॥ इति द्वितीयाध्यायस्य चतुर्थः पादः ॥

# विषयानुक्रमणिका

## अथ चतुर्थः पादः

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रभाष्यम्

## अथ द्वितीयाध्याये तृतीयः पादः

### १. अथ वियदधिकरणम्

जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परं विरोधमपाकरोत्यनेन पादेन ।

**॥ ॐ न वियदश्रुतेः ॐ ॥ १ ॥**

न वियदनुत्पत्तिमत् । तथाऽश्रुतेः ।

श्रीत्रिविक्रमपण्डिताचार्यविरचिता

### तत्त्वप्रदीपिका

जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परविरोधमपाकरोत्यनेन पादेन । **अधिभूतेषु** महाभूतेष्वाकाशादिषु । 'इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषि' इति हि श्रुतिः । **अधिदैवेषु** तदभिमानिषु । अथवाऽधिभूतेष्विति भूततत्सम्बन्धिविवक्षया । अधिदैवेष्विति तदभिमानितत्सम्बन्धिविवक्षया । एतदुक्तं भवति । समन्वयस्य स्मृतियुक्तिविरोधः परिहृतः प्रथमपादे । द्वितीये प्रमाणत्वेन कैश्चिदभिमतानां मतान्तराणां भ्रान्तिमूलकत्वापादनेन तदविरोध उक्तः । भूतेषु तत्कारणेषु चाव्यक्तादिषु भूताभिमानिषु देवेषु तत्कारणेषु चाव्यक्तादिदेवेषु परमात्मनि जीवे चोत्पत्त्यादिविषयाणां श्रुतीनां मिथोऽप्यविरोधं प्रकाशयत्यनेन पादेन । क्रमविपर्यासस्तु द्वन्द्वेऽल्पाक्षरपदप्राथम्यार्थम् । न चायमविरोधः समन्वयानुपयोगीति मन्तव्यम् । मिथोऽप्यनपाकृते विरोधे तेनैव दौर्बल्यमिति स प्रशिथिलतामापद्येत । विरोधनिरासमुखेन च प्रतिपाद्यन्त एव खलु परमात्मन एवोत्पत्तिविलयादयः सर्वस्य ।

**ॐ न वियदश्रुतेः ॐ** । वियदिति विशेषव्याप्तिमत्त्वादहङ्कारादिकमप्युच्यते । तस्यापि सम्भवात् । ब्रह्मणस्त्वसम्भव एवोच्यते ॥ **न वियदनुत्पत्तिमत्** ॥ **तथाऽश्रुतेः** ॥ यथा श्रवणेऽनुत्पत्तिमदिति स्यात् । न हि तथा श्रूयते । तथाविधश्रवणाभावं वक्ष्यति । यथा वा ब्रह्मणोऽनुत्पत्तिः श्रूयते, यथा वोत्पत्तिर्बहुशः श्रूयते, न च तथाऽनुत्पत्तिः श्रूयते ।

## श्रीजयतीर्थविरचिता
## तत्त्वप्रकाशिका

एतत्पादार्थं दर्शयति ॥ **जीवेति** ॥ युक्तिसमयविरोधाभावेऽपि न वेदसमन्वयेन विष्णोर्जगत्कारणत्वं सिद्ध्यति । वेदानां परस्परविरोधेनाप्रमाणत्वात् । न ह्यप्रमाणसिद्धोऽर्थः सिद्ध्यतीत्याशङ्कानिवृत्त्यर्थं श्रुतीनां विरोधः परिहरणीयो भवति । श्रुतिविरोधश्चाधिभूतादिविषयोऽध्यात्मविषयश्च । तत्र जिज्ञासोरध्यात्म विषयविचारस्यान्तिमत्वादधिभूतादिविषयश्रुतीनां परस्परविरोधमस्मिन्पादे परिहरतीति भावः । न च वाच्यं श्रुतीनां जीवादिविषय एव विरुद्धत्वेनोक्तबाधाभावाद् व्यर्थः पादद्वयारम्भ इति । अभ्युपगतार्थद्वयेऽन्यतरार्थेऽप्रामाण्यप्राप्तावन्यार्थेऽनाश्वासप्रसङ्गात् । जगत्स्वरूपानिर्णये तत्कारणत्वानिर्णयाच्च अत्र 'ज्ञोऽत एव' इत्यारभ्यापादसमाप्तेर्जीवविचारः । 'असम्भवस्तु' 'नात्माश्रुतेः' इत्याधिकरणद्वये परमात्मविचारः । एकैकस्मिन्नेवाधिकरणेऽधिभूतादिविचारः । अतो विचारबाहुल्याभिप्रायेण क्रमोल्लङ्घनम् । अधिभूतं नाम सकारणकार्यभूतानि । तदभिमानिदेवता अधिदैवम् । अत्र भूतेष्वाकाशस्योत्पत्त्याद्यष्टके चोत्पत्तेः प्राधम्याद् ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमाकाशोत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सकलजगज्जन्मादिकर्ता विष्णुरित्युक्तम् । तच्चाकाशस्य नित्यत्वेऽसम्भवि स्यात् । श्रुतिविरोधेन गुणान्तरस्य चाभावापातात् । श्रुत्यविरोधेनाकाशस्योत्पत्तिः समर्थनीया । आकाशोऽत्र विषयः । उत्पत्तिमान्न वेति सन्देहः । 'आत्मन आकाशः सम्भूतः' । 'अनादिर्वा अयमाकाशः' इति श्रुतिविप्रतिपत्तिः सन्देहबीजम् । वियदनुत्पत्तिमदेवेति पूर्वः पक्षः । आकाशस्योत्पत्त्यङ्गीकारेऽनुभूतियुक्तिबहुवाग्विरोधात् । न ह्यवकाशस्योत्पत्तिरनुभवानुसारिणी । वियदनुत्पत्तिमद्विभुत्वादित्यादियुक्तिः । 'अनादिर्वा अयमाकाशः' इत्यादिबहुश्रुतयः । न च 'आत्मन आकाशः सम्भूतः' इति श्रुत्या तदुत्पत्तिसिद्धिः । अनुभूत्यादिविरुद्धायास्तस्याः प्रामाण्यानुपपत्तेः । अत एवानुत्पत्तिश्रुतेर्भाक्तत्ववर्णनं च परास्तम् । तस्मादाकाशोत्पत्तिश्रुतेरप्रामाण्यादयुक्तं श्रुतिसमन्वयेनाकाशकारणत्वं ब्रह्मणः । न च सम्भूतश्रुतेरन्यार्थतया विरोधाभावः । तथा सति वाय्वादावप्यन्यार्थतापातात् । न ह्यस्ति सम्भवशब्दो यत्र श्रूयते तत्रामुख्यो यत्रापकृप्यते तत्र मुख्य इति । अतो दुष्परिहरं श्रुत्यप्रामाण्यमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **नेति** ॥ अत्रोत्पत्त्यसम्भवादिति प्रकृतानुत्पत्तिः सम्बध्यते । यदुक्तं वियदनुत्पत्तिमदिति न तद्युक्तम् । तथा अनुत्पत्तौ श्रुत्यभावादित्यर्थः ॥

श्री वादिराजतीर्थविरचिता

## गुर्वर्थदीपिका

अध्यात्मविचारस्यान्तिमत्वात् इति वदता स्थूलपृथिव्यादिषु बाह्यार्थेषु दोषदर्शनेन क्रमेण जातवैराग्यस्य तदनन्तरमतिसूक्ष्मेषु दैहिकप्राणेन्द्रियादिषु वैराग्योत्पत्तिरिति सूचितम् । यद्वा सुगम-स्थूलविचारानन्तमतिसूक्ष्माध्यात्मिकचर्चायां शक्तिर्भवति । अतस्तद्विचारस्यान्तिमत्वमित्यभि-संहितम् । **अभ्युपगतार्थद्वये** इत्यस्य वेदार्थतयाऽभ्युपगते परापराख्यार्थद्वय इत्यर्थः । ननु द्वितीयाध्यायस्य तृतीयपादे 'न वियदश्रुतेः' इति 'एतेन मातरिश्वा व्याख्यातः' इति 'तेजोऽ-तस्तथा ह्याह' इति 'आपः' इति 'पृथिव्यधिकाररूपशब्दान्तरादिभ्यः' इत्यधिकरणपञ्चकेऽधि-भूतादिविचारः क्रियते 'विपर्ययेण तु क्रमोऽत उपपद्यते च' 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्' इत्यधिकरणद्वये भूतादिलयविचारचर्चा क्रियते । सोऽप्यधिभूतादि-विचार एव 'असम्भवस्तु सतोऽनुपपत्तेः' 'तदभिध्यानादेव तु तल्लिङ्गात्सः' 'नात्माऽश्रुतेः' इत्यधिकरणत्रये परमात्मविचारः क्रियते । अतोऽधिकरणद्वये परमात्मविचारः एकैकस्मि-न्नधिकरणेऽधिभूतादिविचार इति कथं टीकेति चेत् सत्यं, 'ज्ञोऽत एव' इत्यधिकरणे जीवस्या-नादित्वात्तदंशे न भगवतो जन्मादिकारणत्वमित्यापतति । 'उत्क्रान्तिगत्यागतीनाम्' इत्यधिकरणे जीवस्य परमात्मवद्विभुत्वात् न जन्मादिमत्त्वमिति प्राप्तम् । 'व्यतिरेको गन्धवत्तथा च दर्शयति' इत्यधिकरणे निरवयवत्वाज्जीवस्य न व्यतिरेक इति वदता निरवयवत्वापरपर्यायनित्यत्वमेवोदितम् । अतोऽपि न जन्मादिप्राप्त, 'पृथगुपदेशात्' इत्यस्मिन्नधिकरणे जीवपरयोरभेदस्य पूर्वपक्षिणोऽभि-मतत्वान्न जीवस्य जन्मादि प्राप्तम् । 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इत्यधिकरणे जीवस्य स्वरूपत एवोत्पत्तिमाशङ्कमानस्य जीवप्रागभावदशायामदृष्टाभावेन सृष्टेरेवाभावान्न कुत्रापि भगवतो जन्मादिकारणत्वमित्यापतति । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इत्यधिकरणे जीवानादि-त्वादिकमङ्गीकृत्य 'आनन्दस्यैवोत्पत्तेराशङ्कितत्वात् पूर्ववदेव दोषः । कर्ता शास्त्रार्थवत्वात्' इत्यधिकरणे जीवस्य सर्वथा कर्तृत्वाभावे तत्कृतपुण्यपापाख्यादृष्टस्याप्यभावप्रसङ्गेन पूर्ववदेव दोषः । 'अंशो नानाव्यपदेशात्' इत्यत्रांशश्रुतिबलाज्जीवस्यापि मत्स्यादिवद्भगवदंशत्वे न जन्मादीति प्राप्तम् । 'अदृष्टानियमात्' इत्यधिकरणे प्रतिबिम्बभूतजीवानां वैचित्र्ये कारणाभावेन तारतम्याख्य-

(गुर्वर्थदीपिका)

महाप्रमेयभङ्गः । एवं च 'ज्ञोऽत' इत्यारभ्यापादसमाप्तेस्सर्वाण्यधिकरणानि महातत्वविरोधिपूर्वपक्ष-निराकरणरूपत्वादावश्यकानि । तानि च नव । तस्माद् बह्वधिकरणेषु विचार्यमाणत्वेनान्तिम-विचारविषयस्यापि विचारबाहुल्यादादौ ग्रहणं भाष्ये । 'असम्भवस्तु सतोऽनुपपत्तेः' 'नात्माऽश्रुतेः' इत्यधिकरणद्वये ब्रह्मणोऽप्युत्पत्तिलयवत्त्वेन जीववन्न जगज्जन्मादिकारणत्वमिति प्राप्तम् । अतस्तदधिकरणद्वयमपि महातत्वविरोधि । 'तदभिध्यानात्' इत्यधिकरणे संहारमात्रस्यान्यपरत्व-शङ्कायामपि तदतिरिक्तजन्मादिसप्तकर्तृत्वस्य तेनैवाङ्गीकृतत्वान्न बहुविरोधिता । अतस्तदुपेक्षितं टीकाकृता ।

'तेजोऽतस्तथा ह्याह' 'आप' इत्यधिकरणद्वये ब्रह्मणस्सर्वकारणत्वमङ्गीकृत्य तेजोमात्रे वायोस्तन्मात्रे च तेजसस्साचिव्यमात्रस्याशङ्कितत्वान्न बहुविरोधिता । अतिरिक्ताधिकरणत्रयं तु कथञ्चित् श्रुत्यप्रामाण्यप्रतिपादकमपि न मुख्यतो भगवन्महिमविरोध्यर्थकम् । अतोऽस्मिन्नधिकरणे मातरिश्वाख्याधिदेवताधिकरणे च तयोरनादित्वस्य पूर्वपक्षिणाऽऽशङ्कितत्वात्तदंशे न जन्मादि-कारणत्वं भगवत इति प्राप्तम् । तस्मान्महातत्त्वविरोधित्वादिदमधिकरणद्वयमेकैकस्मिन्निति गृहीतं टीकाकृता । नित्यत्वेनाभिमतगगनस्य भगवतस्सकाशादुत्पत्तिसिद्धौ नित्यत्वेनाभिमत-वाय्वादिभूतचतुष्टयोत्पत्तिरपि तत एव सिद्धेत्यतः अधिभूतोत्पत्तिविषये एकमधिकरणम् । मातरिश्वाधिकरणं तु वाय्वाख्याधिदैवविषयमेवेति भावेन तत्राप्येकमेवाधिकरणमित्युक्तम् । अत आदिपदेनाधिदैवमेवोच्यत इत्यभिप्रेतम् ।

वस्तुतस्तु भाष्यमर्यादया सूत्रमर्यादया च सकलसूत्रार्थस्यापि सङ्ग्राह्यत्वाद्भाष्यकृता च जीवपरमात्माधिभूताधिदैवेष्वित्येवोक्तत्वेनाधिकरणसङ्ख्याया अनुक्तत्वाच्च जीवविषये नवाधि-करणानि । ब्रह्मविषये त्रीण्येवाधिकरणानि । अधिभूताधिदैवविषये उक्तविधया महातत्व-विरोधित्वादेकमेकमधिकरणम् । अत एव विचारबाहुल्यापेक्षया क्रमोल्लङ्घनं भाष्ये । अवशिष्ट-मधिकरणपञ्चकमपि परम्परयोपयोगित्वादधिभूतपदेनैव सङ्गृहीतमिति ज्ञेयम् । सूत्रकारस्तु मन्दमतीनामप्युपकाराय सूचीकटाहन्यायेन प्राक्प्रबलैकैकविषये एकमेकं, मध्ये त्वेकस्य विषये द्वे, अन्ते पुनरेकस्यैव विषये बहून्यधिकरणानि सूत्रितवान् । अल्पविरोधपरिहारायापि कानिचि-दधिकरणानि निर्ममे । अतोऽसौ निरवधिककृपाम्बोधिरिति युक्तमुत्पश्यामः । श्रुतिविरोधेन

(गुर्वर्थदीपिका)
गुणान्तराभावापातादित्यत्र श्रुतिविरोधेन आकाशोत्पत्तिविषयश्रुत्योर्मिथो विरोधेनाप्रामाण्ये गुणप्रतिपादकवेदस्याप्यप्रामाण्येन स्रष्टृत्वातिरिक्तसार्वज्ञादिगुणान्तरस्याप्यभावापातादित्यर्थः । अवकाशस्योत्पत्तिः कुत्रेति पृष्टे अत्रेति देशाख्यावकाशस्यैव प्रागपि वक्तव्यत्वेन साक्षिविरुद्धत्वात्तदुत्पत्तिरनानुभाविकीति भावेनाह **न हीति** ।

यद्वा सर्वलयेऽवकाशस्य सुतरां सत्वेन पुनः सृष्टिकाले तस्योत्पत्तिरनानुभाविकीति भावः । अत्रोपत्त्यसम्भवादित्यत्र मतुबर्थसङ्ग्रहेण विभक्तिव्यत्ययेन च सम्बध्यत इत्यर्थः । अत एव अनुत्पत्तिमदिति फलितमाह । 'अनादिर्वा अयमाकाशः' इत्यादिबहुश्रुतिष्वाकाशानादित्वश्रवणात्कथमनुत्पत्तेरश्रुतिरित्यत उक्तं भाष्यकृता तथाऽश्रुतेः' इति । यथा सूत्रकारस्योत्पत्तिरभिमता तद्विरोधितयाऽनुत्पत्तेरश्रुतत्वादित्यर्थः । 'आत्मन आकाशः सम्भूतः' इति भूतचतुष्टयप्रायपठितस्य तद्वदेव सम्भूतपदेनोत्पत्तिर्वक्तव्या, न चात्रोपचरितोत्पत्तिर्वक्तुं शक्या भूतान्तरेऽपि तत्प्रसङ्गात् । न हि सम्भवति यत्र साक्षात्सम्भूतपदेनोत्पत्तिः श्रूयते तत्र साऽमुख्या यत्राऽऽकृष्यते तत्र मुख्येति । अतो निरवकाशोत्पत्तिश्रुतिविरोधादव्याकृताकाशादिषु सावकाशा 'अनादिर्वा अयमाकाशः' इत्यादिश्रुतिः नैतदनुत्पत्तिं श्रावयतीति भावेनाऽश्रुतेरित्युक्तमित्यर्थः । अन्यत्रापि स्वरूपानादित्वपरवादिसम्भवेनाभिमानिनि देहोत्पत्तेरव्याकृताकाशे तदभिमानिश्रीदेव्यां च पराधीनविशेषावाप्तिरूपोत्पत्तेरभञ्जकत्वेन सूत्रकृदभिमतोत्पत्त्यभावरूपानुत्पत्तेरश्रुतेरित्यर्थ इति भावः ।

## श्री रघूत्तमतीर्थविरचितः
## तत्त्वप्रकाशिकाभाववोधः

'अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः' इत्यनुव्याख्यानं मनसि निधायाह– **तत्र जिज्ञासोरिति** ।। सुगमस्थलाधिभूतादिविचारानन्तरम् अतिसूक्ष्माध्यात्मिकचर्चायां शक्तिर्भवति । अतस्तद्विचारस्यान्तिमत्वमिति भावः । **अधिभूतादिविषयश्रुतीनां परस्परविरोधमिति** ।। तथा च सूत्रकृता सर्वानपि वेदविरोधान् परिहर्तुं द्वितीयाध्यायस्यारब्धत्वात् श्रुतीनां परस्परविरोधपरिहारस्यावसरप्राप्तत्वाच्चास्य पादस्यान्तर्भावलक्षणानन्तर्यलक्षणा च सङ्गतिरिति भावः । न चैवमस्य पादस्यानेकविषयत्वेनानेकत्वापत्तिरिति वाच्यम्; **अध्यात्मेतरविषयत्वेनैकत्वोपपत्तेरिति** ।।

(भावबोधः)

**अभ्युपगतार्थद्वय इति ।** श्रुत्यर्थत्वेनाभ्युपगते परापरतत्त्वरूपार्थद्वयेऽन्यतरार्थे जगति श्रुतीनामप्रामाण्यप्राप्तावन्यार्थे परमात्मगुणपूर्त्यादावनाश्वासप्रसङ्गादित्यर्थः । हेत्वन्तरमाह– **जगत्स्वरूपानिर्णय इति ॥ विचारबाहुल्याभिप्रायेण क्रमोल्लङ्घनमिति ॥** सूचीकटाहन्यायेन वर्तिष्यमाणक्रमानुसारेणाधिभूताधिदैवपरमात्मजीवेति वक्तव्ये जीवपरमात्माधिभूताधिदैवेष्विति जीवादिशब्दानां पूर्वनिपातोऽत्र जीवादिविचारस्य बह्वर्थविषयकत्वेन जिज्ञासुं प्रत्यभ्यर्हितत्वादल्पाक्षरत्वाच्चेत्यर्थः ॥ **आकाशोत्पत्तिविषयेति** ॥ 'उत्पत्त्यसम्भवात्' इति पूर्वसूत्रप्रकृतोत्पत्तेराकाशसम्बन्धित्वेनात्र विचारादनन्तरसङ्गतिरिति भावः ।

**उत्पत्तिमान्न वेति** ॥ अत्र पादे श्रुतिसमन्वयेन विष्णोः जगज्जन्मादिकारणत्वमयुक्तमुत युक्तमिति चिन्ता । तदर्थं जगत्कारणत्वाद्यभिधायकश्रुतिरप्रमाणमुत प्रमाणमिति चिन्ताद्वयानुवृत्तिः सर्वत्र द्रष्टव्या । अत्राकाशः किमनुत्पत्तिमानुतोत्पत्तिमानिति चिन्ता । तदर्थमाकाशस्योत्पत्तिमत्त्वमनादित्वश्रुतिविरुद्धं न वेति । तदर्थमनादित्वश्रुतिः किं मुख्यार्थोत गौणीति । तदर्थं सा श्रुतिः किमनुभूत्यादियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं वियत उत्पत्तिमत्वे श्रुतियुक्त्यादिरूपप्रमाणमस्त्युत नास्तीति । वियत उत्पत्तिमत्त्वेऽनुभूतियुक्तिबहुवाग्विरोधोऽस्तीति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह– **आकाशस्योत्पत्त्यङ्गीकार इति** ॥ **भाक्तत्ववर्णनमिति** ॥ अनादित्वश्रुतेः स्वरूपानादित्वपरत्वेन भाक्तत्ववर्णनमित्यर्थः ॥ **अन्यार्थतयेति** ॥ प्रादुर्भावार्थतयेत्यर्थः ।

## श्रीराघवेन्द्रतीर्थविरचितः
## भावदीपः

ननु श्रुतीनामन्योन्यमविरोधोक्तिर्व्यर्था । तत्राप्येतत्पादीयश्रुत्यविरोधस्य प्राथम्यं निर्बीजमित्यत आह ॥ **युक्तिसमयेति** ॥ **अन्तिमत्वादिति** ॥ 'अध्यात्मप्रवणोः भूत्वा तस्य सन्निहितत्वतः' इत्युपासनापादीयानुभाष्योक्तेरिति भावः ॥ **अभ्युपगतेति** ॥ पादद्वयप्रतिपाद्यजीवाधिभूताध्यात्मरूपेऽर्थद्वये अन्यतरार्थे अधिभूतादिरूपे अध्यात्मरूपे चार्थेऽप्रामाण्यप्राप्तावीश्वरकर्तृत्वाद्यर्थेऽप्यनाश्वासप्रसङ्गादित्यर्थः । यद्वा विरुद्धश्रुतिभ्यामभ्युपगतार्थद्वयेऽन्यतरार्थेऽप्रामाण्यप्राप्तावित्यर्थः । अन्यतरार्थे वेति वाशब्दसंयोजनेन विरुद्धश्रुतिद्वयाप्रामाण्यमिति पूर्वपक्षस्थलेऽर्थद्वयेऽप्यप्रामाण्यप्राप्तौ

(भावदीपः)

दौर्बल्येनान्यतरश्रुत्यप्रामाण्ये तत्पूर्वपक्षस्थलेऽन्यतरार्थेऽप्राप्ताविति ध्येयम् । अथवा समन्वयाध्याये सर्वश्रुतीनां कल्पनोपदेशादित्यादिन्यायेन परममुख्यमुख्यवृत्तिभ्यामभ्युपगते परमात्मतदन्यरूपेऽर्थ-द्वयेऽन्यतरस्मिन्जीवादिरूपेऽर्थे अप्रामाण्यप्राप्तौ परमात्मपूर्णगुणत्वाद्यर्थेऽनाश्वासप्रसङ्गादित्यर्थः । तथा च विरुद्धश्रुत्योः प्रामाण्यायाविरोधेन तयोरर्थव्यवस्थापनाय पादद्वयारम्भो युक्त इति भावः ।

ननु जगत्स्वरूपविषयश्रुतीनां विरोधेन तदर्थे तासामप्रामाण्येऽन्यार्थेनाश्वासो निर्बीजः । तत्र श्रुतिविरोधाभावात् । शङ्कामात्रस्याप्रयोजकत्वादित्यत आह ॥ **जगदिति** ॥ ननु सूत्रेषु वक्ष्यमाणक्रमानुरोधेन भाष्य अधिभूताधिदैवपरमात्मजीवेष्विति वाच्ये विपरीतक्रमेण निर्देशो निर्बीज इत्यत आह ॥ **अत्र ज्ञोऽत एवेतीति** ॥ अत्र पाद इत्यर्थः ॥ **अधिभूतादिविचार इति** ॥ एकैकाधिभूतादिविचार इत्यर्थः । भूतमधिकृत्य स्थितमधिभूतं भूतकार्यमिति भ्रान्तिनिरासायाह ॥ **अधिभूतं नामेति** ॥ तथा चैतन्नयार्थोऽपि सङ्गृहीत इति भावः । अत्र देवताविचारपरं सूत्रं नोपलभ्यत इत्यत आह ॥ **तदभिमानीति** ॥ भूतविचारपरसूत्राण्येवाधिदैवविचारपराणीति भावः ।

ॐ **नवियदश्रुतेः** ॐ ॥ **प्राथम्यादिति** ॥ 'आकाशाद्वायुः' इत्यादिश्रौतक्रमाल्लब्धजन्मनः स्थित्यादेरिति भावः । अन्येषामुपलक्षणतया विचारः सिद्ध्यतीति हृदयम् ॥ **ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमिति** ॥ अभ्युपगतार्थद्वय इत्याद्युक्तदिशा हेतुहेतुमद्भावो बोध्यः । अनेन शास्त्रेऽन्तर्भाव उपपादितः । श्रुतीति पादे विरोध इति चाध्याय इति विवेक्तव्यम् । एवमग्रेऽपि । श्रुत्यधिकरणसङ्गती आह ॥ **सकलेति** ॥ **श्रुतिविरोधेनेति** ॥ अनुत्पत्तिश्रुतिविरोधे-नोत्पत्तिश्रुतेरप्रामाण्यप्राप्तौ सर्वस्रष्टृत्वासिद्धावानन्दादिश्रुतिप्रामाण्येऽप्यनाश्वासापत्त्या तदुक्तगुण-स्याप्यभावापातादित्यर्थः । अजन्मश्रुत्यविरोधाय जन्मैव नेति निर्णयस्य दुःशकत्वान्निर्णयप्रकारमाह ॥ **श्रुत्यविरोधेनेति** ॥ न वियदनुत्पत्तिमदिति भाष्यसूचितप्रतिज्ञामाह ॥ **वियदनुत्पत्तिमदेवेति** ॥ वियदिति प्रकृतिजीवचैतन्यकालवेदमहदहंमनोबुद्ध्यादीनामुपलक्षणम् । वियत उत्पत्तिमत्त्वे अनुभूतियुक्तिबहुवाग्विरोधोऽस्ति व्यवस्थायोगादित्यन्यत्रोक्तयुक्तिमाह ॥ **आकाशस्योत्पत्त्यङ्गीकारे अनुभूतियुक्तीति** ॥ तां विवृणोति ॥ **न हीत्यादिना** ॥ व्यक्तमेतद्वैशेषिकनयानुभाष्यसुधयोः केवलं साक्षिमानेन कालो देशोऽपि नान्तवानित्यादौ । विभुत्वात् व्याप्तत्वादित्यर्थः । निरुपादानत्वादि-रादिपदार्थः । न चासिद्धिः । धर्मिग्राहकसाक्ष्यनुभवसिद्धत्वात् । अत एवानुभवस्य प्रागुक्तिः । न च

(भावदीपः)

क्षणलवादिसूक्ष्मकालावयवेषु विभुत्वे सत्यप्यनुत्पत्तेरभावाद्व्यभिचारः । 'सर्वे निमेषा जज्ञिरे' इत्यादिश्रुत्या तेषां सिद्धान्ते जन्माङ्गीकारात् । तथैव वैशेषिकाधिकरणभाष्यादावुक्तेरिति वाच्यम् । पूर्वपक्षे तेषु जन्मासम्प्रतिपत्तेरिति भावः ।

ननु वियदिति भूतस्य पक्षत्वे विभुत्वमसिद्धम् । 'आकाशस्तल्लिङ्गात्' इत्यत्र तस्यान्तवत्त्वोक्तेः । अव्याकृतस्य पक्षत्वे सिद्धसाधनमिति चेन्न । आकाशद्वैताज्ञानेन तदैक्यबुध्यैवमुक्तेः । अव्याकृतस्य पक्षत्वेऽपि विष्णोः सर्वस्रष्टृत्वासिद्धेश्च । यद्वा काशद्वित्वोपगमेऽपि 'अनादिर्वा अयमाकाशः' इत्यादौ सामान्याकाशपदेन द्वयोरपि गृहीतेर्भूतेऽप्यन्तवत्त्वादिकमप्यसिद्धमिति भावेन पूर्ववादिनैवमनुमानमवादीति ध्येयम् ॥ **इत्यादीति** ॥ 'आकाशवत्सर्वगतश्च नित्यः' । 'स यथा अनन्तोऽयमाकाश' इत्यादिरादिपदार्थः । विरोधपदतात्पर्यं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न चात्मन इति** ॥ नन्वनादित्वश्रुतेरनेककालवर्तित्वमात्रेण वा श्रुतिद्वयबलेनाकाशद्वयं कल्पयित्वा एकैकाकाशविषयत्वेन व्यवस्था वाऽस्त्वित्यतो व्यवस्थायोगादिति न्यायविवरणांशतात्पर्यमाह ॥ **अत एवेति** ॥ सम्भूतश्रुत्यप्रामाण्यादेव कल्पकाभावादित्यर्थः । व्यवस्थायोगादित्यस्य श्रुतौ सम्भूतशब्दस्य आकाशे अभिव्यक्त्यर्थत्वं वाय्वादावुत्पत्त्यर्थत्वमिति व्यवस्थाया अयोगादित्यर्थान्तरमुपेत्य शङ्कापूर्वं व्यनक्ति ॥ **न च सम्भूतश्रुतेरिति** ॥ **अत इति** ॥ अनुभूत्यादिविरोधादित्यर्थः । एवं वियत्पदोपलक्षितप्रकृत्यादेरपि पूर्वपक्षो ध्येयः । 'अनुत्पत्तिमत्' इति भाष्यमनुवृत्तसौत्रपदार्थ इति दर्शयति ॥ **अत्रोत्पत्त्यसम्भवादितीति** ॥ अप्राप्तस्य निषेधायोगादाह ॥ **यदुक्तमिति** ॥ अश्रुतेरित्यादिवक्ष्यमाणयुक्तीनां सामान्यादत्रापि वियदिति प्रकृत्यादेरुपलक्षणं ध्येयम् । एतेन सूत्रे वियदुत्पत्तिमदेवेत्येव कुतो नोक्तमिति शङ्काऽपास्ता । अनुत्पत्तेरेव शङ्कितया तस्या एव निरस्यत्वात् । पूर्वस्मादनुत्पत्तेरेव प्रकृतत्वाच्चेति भावः । तथेति भाष्यस्थानुवादः । अनुत्पत्ताविति व्याख्या पराधीनविशेषावाप्तिरूपोत्पत्त्यभाव इत्यर्थः ।

## श्रीसत्यनाथतीर्थविरचित
## अभिनवचन्द्रिका

**एतत्पादार्थमिति** ॥ 'अध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धन इत्यत' इति वर्तते । तस्य एतत्पादार्थं दर्शयतीत्यनेन सम्बन्धः । ननु 'जीवपरमात्माधिभूताधिदैवेषु' इति

(अभिनवचन्द्रिका)

भाष्यमनुपपन्नम्। जीवविचारस्य प्रथममदर्शनादित्यत आह **तत्र जिज्ञासोरिति ॥** भाष्यं न पादप्रतिपाद्यक्रमप्रदर्शनाय प्रवृत्तमपि तु पादप्रतिपाद्यमात्रप्रदर्शनाय प्रवृत्तम्। यद्यपि जीवविचारस्यानेकाधिकरणनिर्वाह्यत्वात् सूत्रकृता महामल्लभङ्गन्यायेन जीवविचारं कृत्वा अन्यविचारः कर्तव्यः। तथा हि जिज्ञासोरध्यात्मविचारस्यान्तिमत्वसूचनाय स[ू]क्रटाहन्यायेन अधिभूताधिदैवपरमात्मजीवविचारः क्रमेण कृत इति भावः ॥ **व्यर्थः पादद्वयारम्भ इति ॥** ईश्वरे श्रुतिविरोधपरिहारार्थान्येवाधिकरणान्यारम्भणीयानि नाऽन्यानीति भावः। अनुत्पत्तिश्रुत्यविरोधेनोत्पत्तिसमर्थनस्याऽऽवश्यकत्वमाह **सकलजगज्जन्मादिकर्तेत्यादिना ॥** श्रुत्यविरोधेनाकाशोत्पत्तिः समर्थनीयेति विशिष्टा प्रतिज्ञा। तत्र उत्पत्तिसमर्थनाभावे तच्चाऽऽकाशस्य नित्यत्वेऽसम्भवि स्यादिति बाधकमुक्तम्। तस्यार्थः यदि श्रुतिविरोधेनैवाकाशोत्पत्तिः समर्थ्यते, अनादित्वश्रुतेरप्रामाण्यमभ्युपेत्यैव समर्थ्यत इति यावत्। तर्ह्याकाशानादितानियामकत्वलक्षणगुणहानिः स्यादिति ॥ **अन्यार्थतयेति ॥** प्रादुर्भावाद्यर्थतयेत्यर्थः। अत्र टीकायां न वियदश्रुतेरिति सूत्रप्रतीकग्रहणानन्तरं श्रूयमाणम् 'अत्रोत्पत्त्यसम्भवादिति प्रकृतानुत्पत्तिः सम्बध्यत' इति वाक्यं प्रक्षिप्तं न टीकावाक्यम्। अवश्यं चैतदेवं विज्ञेयम् 'उत्पत्त्यसम्भवात्' इति सूत्रे अनुत्पत्तिशब्दाभावात् अनुत्पत्तिमच्छब्दस्यापेक्षितत्वेनाऽनुत्पत्तिशब्दस्यानपेक्षितत्वाच्च।

## ताम्रपर्णी श्रीनिवासविरचिता
## वाक्यार्थमुक्तावली

**पादप्रतिपाद्यमिति ॥** अन्यथैतत्पादस्यैतदध्यायान्तर्भावपूर्वपादानन्तर्यसङ्गत्योरज्ञानप्रसङ्गादिति भावः। श्रुतीनां परस्परविरोधपरिहारस्यानन्तरसङ्गतिमुपपादयति ॥ **युक्तीति ॥** सर्वविरोधानां युक्तिमूलत्वेन युक्तिविरोधस्याप्राथम्ये तत्प्रपञ्चात्मकत्वेन समयविरोधस्य तदानन्तर्ये श्रुतीनां परस्परविरोधस्यावसरप्राप्तत्वादस्यानन्तरसङ्गतिविरोधपरिहारादेवाध्यायान्तर्भावश्चेति भावः। चतुर्थपादेऽपि श्रुतिविरोधपरिहारात्कथमस्य ततो विपयभेद इत्याशङ्कां परिहरन्नस्य प्राथम्ये च कारणमाह **श्रुतिविरोधश्चेति ॥** अधिभूतादिविपय इत्यनेनैवास्य पादस्यानेकविषयत्वेऽप्यध्यात्मेतरविपयत्वोपाधिनैकत्वमिति सूचयति। तदुक्तं सुधायाम्। अध्यात्मेतरविषयकत्वेनैकत्वोपपत्तेरिति ॥ **जिज्ञासोरिति ॥** 'अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः' इत्यनुव्याख्यानोक्तेरिति भावः

(वाक्यार्थमुक्तावली)

॥ **अभ्युपगतार्थद्वय इति** ॥ 'आकाशः सम्भूत' इत्यादीनामभ्युपगतमुख्यामुख्यार्थद्वय इत्यर्थः । यद्वा 'सत्यं ज्ञानमनन्तं' 'आकाशः सम्भूतः' इत्यादि श्रुतीनामर्थत्वेनाभ्युपगतपरापरतत्वयोर्मध्य इत्यर्थः । पूर्वमनाश्वासमुखेनोक्तबाध उक्तः । इदानीं साक्षादाह ॥ **जगदिति** ॥ सूचीकटाहन्यायेन वर्तिष्यमाणसौत्रक्रमानुरोधेनाधिभूताधिदैवपरमात्मजीवा इति वक्तव्ये प्रतिपाद्यक्रमोल्लङ्घनमनुचित-मित्यतो बह्वधिकरणप्रतिपाद्यत्वलक्षणप्राधान्यविवक्षयोक्तमिति भावेनाह ॥ **अत्रेत्यादिना** ॥ **एकैकस्मिन्निति** ॥ एकैकस्मिन्नेवाधिकरणे एकैकाधिभूततदभिमानिविचार इत्यर्थः । भूतमधिकृत्य स्थितं भूतकार्यमेवाधिभूतमिति प्रतीतिनिरासायाह **अधिभूतं नामेति** ॥ भूतपदेन भूतसमुदाय उच्यते। तमधिकृत्य विद्यमानमधिभूतम् । तच्च भूतकार्यं भूतकारणं तदेकदेशवियदादिकं चेति समुदायाकारेण कार्यभूतान्यधिभूतमित्यर्थः । उक्तं च न्यायविवरणटीकायाम्, अधिभूतादि-शब्देनाकाशादीन्युच्यन्ते ॥ समुदायैकदेशाश्रयणेनाधिकरणाधिकर्तव्यतोपपत्तेरिति । अत्र देवता-विचारपरं सूत्रं नोपलभ्यत इत्यत आह ॥ **तदभिमानीति** ॥ अधिगतं च तद्दैवं चेति विग्रहः । भूतपराण्येव सूत्राण्यधिदैवपराणीति भावः ।

ननु जीवविचारोऽप्यध्यात्मविचार एव तस्यापीन्द्रियादिवदात्मशब्दितं शरीरमधिकृत्य विद्यमानत्वादिति चेन्न । आत्मानं जीवमधिकृत्य वर्तते यत् तदध्यात्ममिति विवक्षितत्वेन जीव-भोगसाधनप्राणादीनामेवाध्यात्मपदेन विवक्षितत्वात् ॥ **ॐ न वियदश्रुतेः ॐ** ॥ **आकाशोत्पत्ति-विषयेति** ॥ उत्पत्त्यसम्भवादिति पूर्वाधिकरण प्रकृतोत्पत्तेराकाशसम्बन्धित्वेनात्र विचारादनन्तर-सङ्गतिरिति भावः ॥ **उत्पत्तिमान्न वेति** ॥ आकाशोऽनुत्पत्तिमानुत उत्पत्तिमानिति चिन्ता, तदर्थमाकाशानुत्पत्तिश्रुतिः अनुत्पत्तेरनुभूतियुक्ति बहुवाक्सिद्धत्वेन निरवकाशतया मुख्यार्थतोत्पत्ति-श्रुत्यादिन्नाहुल्येन गौणीति 'गौण्यसम्भवात्' इत्यत्र, श्रुत्यनुभवयुक्तीनां व्यवस्थाश्रयेणाविरोधो त्वया सूचितं पूर्वपक्षसाधकमनुभूतियुक्तिबहुवाग्विरोधलक्षणन्यायमुक्त्वा अनुभूतिविरोधमुपपादयति **न हीति** ॥ आकाशस्योत्पत्त्यङ्गीकारेऽत्राकाशो नेति तत्प्रागभावोऽवश्यं प्रत्येतव्यः । न चाकाशा-भावस्याश्रयप्रतीतिरुपपद्यते । यदेवेह' इति निर्दिश्यते तस्यैवाकाशत्वात् । अतस्तदभावस्य धर्मिग्राहकानुभवबाधितत्वेनाकाशोत्पत्तिर्नानुभवानुसारिर्णीति भावः ॥ **विभुत्वादिति** ॥ क्षण-लवादिव्यतिरिक्तत्वे सतीति विशेषणीयम् । अन्यथा तत्र व्यभिचारात् । अथवा सोऽपि पक्षसम

(वाक्यार्थमुक्तावली)

इति न व्यभिचारः । निरुपादानत्वात्प्रागभावशून्यत्वादित्यादिपदार्थः । न चासिद्धिः । धर्मिग्राहकसाक्ष्यनुभवसिद्धत्वादिति भावः ॥ **इत्यादीति** ॥ 'आकाशवत्सर्वगतश्च नित्यः' । 'स यथाऽनन्तो यमाकाशः' इत्यादिरादिपदार्थः ॥ **न चात्मन आकाश इति** ॥ ननु अव्याकृताकाशोपीह पूर्वपक्षविषयः । कथमेतच्छ्रुत्युदाहरणमस्याभूतप्रकरणत्वादिति चेन्नपरेणाकाश-द्वैतस्यानङ्गीकृतत्वेन तं प्रति तदुदाहरणासम्भवात् ।

यद्वाऽव्याकृताकाशविषये, 'इदं सर्वमसृजत' इति श्रुतेरुदाहर्तव्यत्वात् । उक्तमेतत्सुधायाम् । ननु अव्याकृताकाशस्योत्पत्त्यभावे माभूत् 'आत्मन आकाशः सम्भूतः' इति श्रुतिविरोधः 'इदं सर्वमसृजत' इति श्रुतिविरोधो भविष्यतीति । नन्वनादित्वश्रुतेः बहुकालवर्तित्वमात्रेण वा श्रुतिद्वय-बलेनाकाशद्वयमङ्गीकृत्यैकैकाकाशविषयत्वमात्रेण वा सूक्ष्मरूपानादित्वपरत्वेन वा भाक्तत्व-मस्त्वित्यत आह ॥ **अत एवेति** ॥ उक्तन्यायविरोधेनोत्पत्तिश्रुतेरप्रामाण्येन कल्पकाभावादेवेत्यर्थः ॥ **अन्यार्थतयेति** ॥ व्यक्त्यर्थतयेत्यर्थः । अत्र वियत्पदं नाकाशमात्रपरं किं नाम 'अथ ह वाः' नित्यानि पुरुषः प्रकृतिरात्मा कालः इत्यादि श्रुतिविगानविषयाणां प्रकृतिपुरुषकाल तदभिमानि-देवमहदहङ्कारमनोबुद्धीन्द्रियभूतसूक्ष्मतन्मात्रवदादीनामुपलक्षणार्थम् । मातरिश्वप्रभृतिषु पुनरभ्यधिका-शङ्कानिरासायाधिकरणान्तरारम्भः । प्रकृत्यादीनां भूतकारणत्वादधिभूतपदेन तत्सम्भवोपपत्ते-र्नाधिकरणावच्छेदकोपाध्यानाक्रान्तत्वं कालाव्याकृतवेदादीनां भूतकारणत्वाद्यभावेऽपि न्यायसाम्येन विचार्यता । मनोबुद्धीन्द्रियाणामध्यात्मत्वाच्चतुर्थ एव विचार्यतेति चेन्न ॥ **तेषामिति** भूतकारण-त्वेनाधिभूतत्वस्येह विवक्षितत्वादध्यात्मत्वस्याविवक्षितत्वात् । स्पष्टं चैतदनुव्याख्यान इति ज्ञेयम् । तथेति भाष्यानुवादः । अनुत्पत्ताविति व्याख्या पराधीनविशेषावाप्तिरूपोत्पत्त्यभाव इत्यर्थः ।

## पाण्डुरङ्गि श्रीनिवासाचार्यविरचिता
## तत्त्वसुबोधिनी

पूर्वपादेनास्य सङ्गतिमाह ॥ **युक्तीति** ॥ नन्वध्यात्मविषयश्रुतिविरोधपरिहारः प्रथमं किं न क्रियते इत्यत आह ॥ **तत्रेति** ॥ **अधिभूतादिविषयेति** ॥ तथा च सूत्रकृता सर्वानपि विरोधान् परिहर्तुं द्वितीयाध्यायस्यानारब्धत्वात् श्रुतीनां परस्परविरोधपरिहारस्य तदानन्तर्ये सति श्रुतीनां

(तत्त्वसुबोधिनी)
परस्परविरोधपरिहारस्यापि तदन्तर्भूतत्वात् प्राधान्याद्युक्तिविरोधस्य प्राथम्ये तत्प्रपञ्चनात्मकत्वेन समयविरोधपरिहारस्य तदानन्तर्ये सति श्रुतीनां परस्परविरोधपरिहारस्यावसरप्राप्तत्वाच्चास्य पादस्यान्तर्भावलक्षणा आनन्तर्यलक्षणा च सङ्गतिरिति भावः ॥ **अभ्युपगतार्थद्वय इति** ॥ श्रुत्यर्थत्वेनाभ्युपगते परापरतत्वरूपार्थद्वये अन्यतरार्थे जगति श्रुतीनामप्रामाण्यप्राप्तौ अन्यार्थे परमात्मगुणपूर्त्यादावनाश्वासप्रसङ्गादित्यर्थः । तत्र हेत्वन्तरमाह **जगदिति** ॥

ननु सूचिकटाहन्यायेन वर्तिष्यमाणक्रमानुसारेण अधिभूताधिदैवेति वक्तव्यम्, तथा च जीव-परमात्मेति क्रमोल्लङ्घने किं बीजमित्यत आह ॥ **अतो विचारबाहुल्येति** ॥ यत एवं विचारबाहुल्यं अतस्तदभिप्रायेणेत्यर्थः । विचारबाहुल्यमेव दर्शयति ॥ **अत्र ज्ञोऽत एवेति अधिभूतादिविचार इति** ॥ एकैकाधिभूताधिविचार इत्यर्थः । तथा चात्र जीवादिशब्दानां पूर्वनिपातोऽत्र जीवादि-विचारस्य बह्वर्थमाह ॥ **अधिभूतमिति** ॥ नन्वादौ आकाशविचार एव कुतः, तत्रापि उत्पत्ति-विचार एव कुतः इत्यत आह **अत्र भूतेष्विति** ॥ **आकाशोत्पत्तिविपयेति** ॥ **उत्पत्त्यसम्भवादिति** ॥ पूर्वसूत्रप्रकृतापत्तेराकाशस्यानादिनित्यत्वे न केवलं सकलजगज्जन्मादिकारणत्वस्यैवासम्भवः किन्तु आकाशस्य नित्यत्वेन तत्संहर्तृत्वाङ्गीकारे तन्नित्यत्वप्रतिपादकश्रुतिविरोधापत्त्या सर्वसंहर्तृत्वरूपगुणान्तरस्याभावप्रसङ्ग इत्यर्थः । आकाशस्य नित्यत्वे नित्यत्वस्य भगवल्लक्षण-त्वानुपपत्तिः । नित्यत्वस्य तल्लक्षणत्वे, आकाशस्य नित्यत्वप्रतिपादकश्रुतिविरोधादित्यर्थः इत्याह। अनुभवादिविरोधमेव दर्शयति ॥ **न हीति** ॥ अत एवेति अनुभूतादिविरोधेन उत्पत्तिश्रुतेरप्रामाण्यादेवेत्यर्थः ॥ **भाक्तत्ववर्णनमिति** ॥ अनादित्वश्रुतेः स्वरूपानादित्वपरत्वेन भाक्तत्ववर्णनमित्यर्थः ॥ **अन्यार्थतयेति** ॥ प्रादुर्भावार्थतयेत्यर्थः ॥ **वाय्वादीति** ॥ **आकाशाद्वायुरिति** ॥ वाय्वनित्यत्वप्रतिपादकश्रुतेरपि प्रादुर्भावार्थत्वं स्यादित्यर्थः । ननु सम्भूतः श्रुतेराकाशे प्रादुर्भावार्थत्वेत्यन्यत्रोत्पत्त्यर्थत्वमेवास्त्वित्यत आह ॥ **न ह्यस्ति सम्भव इति** ॥ यत्र 'आकाशाद्वायुः' इत्यत्र सम्भूतिशब्दः आकृष्यते अत्रायं मुख्योत्पत्त्यर्थकः । यत्र 'आत्मन आकाशः' इत्यत्र सम्भूतशब्दः श्रूयते तत्र तु प्रादुर्भावरूपमुख्योत्पत्त्यर्थक इति न कुत्रापि दृष्टमित्यर्थः ।

## श्रीनिवासतीर्थविरचिता श्रीतत्त्वप्रकाशिकाव्याख्या वाक्यार्थविवरणम्

**अन्तिमत्वादिति** ॥ आध्यात्मिका हि भावा मिथ्या सम्यग्वा विदिता बन्धमोक्षयोरन्तरङ्गता-मश्नुवते न तथा बाह्याः । अत आध्यात्मिकपदार्थविचारेऽप्यन्ते सावधानताया अपेक्षितत्वेनादौ बाह्यविचारे व्युत्पन्नं प्रति पश्चादध्यात्मविचारस्य कार्यत्वेनाध्यात्मविचारस्य चरमत्वमिति भावः ॥ **अधिभूतादिति** ॥ न चैवमस्य पादस्यानेकविषयत्वेनैकवाक्यत्वायोग इति वाच्यम् । अत्र देहमधिकृत्य विद्यमानमिन्द्रियमध्यात्मपदेन विवक्षितम् । तथा च जीवपरमात्मनोरप्यध्यात्मत्वात् कथं तदितरत्वेनैकार्थतेति शङ्कानवकाशः । अध्यात्मेतरविषयकत्वेन तदुपपत्तेरिति ध्येयम् ॥ **उक्तबाधाभावादिति** ॥ उक्ते जगज्जन्मादिकर्तृत्वरूपे प्रमेये विरोधाभावादित्यर्थः । उक्तेऽर्थे विरोधं दर्शयतीति ह्युक्तम् ॥ **अनिर्णयाच्चेति** ॥ ततश्चोक्तबाधोऽस्त्येवेति भावः । क्रमः । प्राधान्यक्रमः ।

ननु भूतमधिकृत्य विद्यमानं यत्प्रकृत्यादिकारणं ब्रह्माण्डादिकार्यं तदेवायास्यति । न तु भूतम् । न प्रकृते च भूतविषय एव श्रुतिविरोधः परिह्रियते । अतः कथमेतदित्यतो व्याचष्टे ॥ **अधिभूता-नामिति** ॥ सत्यम् । प्रकृत्यादि कारणं, ब्रह्माण्डादि कार्यमेव पूर्वोक्तव्युत्पत्त्याऽधिभूतशब्दम् न तु भूतम् । तथापि कारणकार्यसाहित्यस्य भूतेऽपि सत्त्वेनोपचाराद् भूतेषु अधिभूतशब्द इति भावः । अत एव सकारणकार्यभूतानीत्युक्तमिति । अधिदैवमित्यत्र दैवशब्दो देवतावाची । तथा च देवानधिकृत्य विद्यमानं यत्तेषां पदादिकं तदेवायास्यति । न तु स्वयं देवताः । प्रकृते च भूतविषय एव श्रुतिविरोधपरिहारेण तदभिमानिदेवताविषय एव श्रुतिविरोधः परिह्रियते । अतः कथमेतदिति चेदुच्यते । अत्र न देवतावाची दैवशब्दः । किन्तु देवानां सम्बन्धि दैवमिति व्युत्पत्त्या देवतासम्बन्धि यदाकाशादितत्त्वजातं तद्वाची । एवं च देवानां सम्बन्धि यत्तत्त्वजातं तदधिकृत्य तदभिमानितया विद्यमाना ये देवास्ते अधिदैवमित्यभिप्रेत्याह ॥ **तत्त्वाभिमानिनो देवा अधिदैवमिति** ॥ भूतादितत्त्वाभिमानिन इत्यर्थ इत्याहुः ।

वस्तुतस्तु न्यायविवरणटीकानुसारेणाधिभूताधिदैवशब्दयोरयमर्थः । अव्ययविभक्तीति सूत्रे विभक्त्यर्थे अधिकरणमात्रे अव्ययसमास उक्तः । यथा अधिहरि प्रवृत्ता कथा, हरौ प्रवृत्ता

(वाक्यार्थविवरणम्)

कथेत्यर्थः । एवं प्रकृते विभक्त्यर्थेऽधिकरणमात्रे अधीत्यव्ययं भूतदैवपदाभ्यां समस्तम् । तथाचाधिभूतं भूतेष्वित्यर्थः । एवमधिदैवं देवेष्वित्यर्थः । विषयसप्तमीयम् । तथा चाधिभूताधिदैवेषु भूतदैवविषयेष्विति भावार्थः । एवं भाष्ये भूतमात्रवाचिना अधिभूतशब्देन तत्कारणकार्येऽपि लक्षणया ग्राह्ये इत्याशयेन सकारणकार्येत्युक्तम् । तदभिमानिन इति तु देवानां स्वरूपकथनमिति ध्येयम् । यथोक्तं न्यायविवरणटीकायां टीकाकारैः 'अत्र विभक्त्यर्थेऽधिकरणमात्रे अव्ययं समस्तम् । ततश्चाधिभूतं भूतेष्वित्यर्थः । सर्वत्र विषयसप्तमी' इत्यादि । ननु एवमधिभूतशब्दस्याव्ययीभावत्वे 'अधिदैवानि अव्यक्ताद्यभिमानिदेवता, अधिभूतानि अव्यक्तादिकारणकार्योपेतानि भूतानि' इति वियत्पादीयसुधाविरोधः । अव्ययीभावत्वे नपुंसकैकवचनत्वप्राप्त्या अधिदैवान्यधिभूतानीति प्रयोगानुपपत्तिरिति चेन्न । यथाऽत्र नानुपपत्तिस्तथा गुरुचरणैस्तट्टीकायां प्रतिपादितमनुसन्धेयम् ॥ **उत्पत्त्यष्टकेति** ॥

''**ॐ तदभिध्यानादेव तु तल्लिङ्गात् सः ॐ** इति सप्तमाधिकरणमारभ्याधिकरणदशकपर्यन्तं संहारविषयेऽपि श्रुतिविरोधपरिहारात्तदपेक्षयोत्पत्तेः प्राथम्यादुत्पत्तिविषय एव श्रुतिविरोधः परिह्रियत इत्यर्थः । श्रुत्यविरोधेनास्योत्पत्तिस्समर्थनीयेत्यत्र निमित्तमुक्तं श्रुतिविरोधेनेति पूर्वभागेन । उत्पत्तिश्रुतेरनादित्वश्रुतिविरोधेनाप्रामाण्ये तद्दृष्टान्तेन सर्ववेदस्याप्यप्रामाण्यापत्त्या तत्प्रतिपादितजग-ज्जन्मादिकर्तृत्वरूपगुणान्तरस्याप्यभावापातादित्यर्थः । तथा च अनादित्वश्रुत्यविरोधेन तद्विरोधो यथा न स्यात्तथोत्पत्तिः समर्थनीयेत्यर्थः ॥ **अवकाशः** ॥ अव्याकृताकाशः ॥ **अत एवेति** ॥ अनुभूत्यादिविरुद्धाया उत्पत्तिश्रुतेरप्रामाण्येन तद्विरोधाभावादेवेत्यर्थः । उत्पत्तिश्रुतेरप्रामाण्यं नास्तीत्याशङ्क्य निराकरोति ॥ **न चेति** ॥ **तथा सतीति** । 'आकाशः सम्भूत' इत्यत्र सम्भूतशब्दस्य प्रादुर्भावार्थतयाऽनादित्वश्रुतेस्तद्विरोधाभावोक्तौ 'आकाशाद्वायुः' इत्यादौ सम्भूत इत्यस्याकर्षणेन तत्र आकृष्टस्य सम्भूतशब्दस्यापि प्रादुर्भावाद्यन्यार्थोपपत्तौ वाय्वादेरप्युत्पत्तिर्न स्यादित्यर्थः । नन्वाकाशादौ श्रुतः सम्भूतशब्दोऽमुख्यार्थो वाय्वादावाकृष्टस्तु मुख्यार्थ एवेति चेत्तत्राह ॥ **न हीति** ॥ **सम्बध्यत इति** ॥ तथा च '**वियदुत्पत्त्यसम्भववन्न तथा श्रुतेः ॥**' इति सूत्रयोजना भवति । '**न वियदनुत्पत्तिमत्**' इति तात्पर्यतो व्याख्यातमित्यवधेयम् । भाष्ये तथेत्यस्यानुत्पत्तिमत्त्वेनेत्यर्थः ।

## शर्करा श्रीनिवासविरचिता
## वाक्यार्थमञ्जरी

**अध्यात्मेति ॥** आत्मानं देहमधिकृत्य वर्तमानमिन्द्रियादीत्यर्थः ॥ **अन्तिमत्वादिति ॥** तस्याः सन्निहितत्वेन प्रथममविचारविषयत्वेन तद्विचारश्चतुर्थपाद इति भावः ॥ **उक्तेति ॥** जगत्कारणत्वादीत्यर्थः ॥ **अभ्युपगतार्थद्वय इति ॥** श्रुत्यर्थत्वेनाभ्युपगते परापरतत्वरूपद्वये अन्यतरार्थे जगति श्रुतीनामप्रामाण्यप्राप्तावन्यार्थे ब्रह्मणो जगत्कारणत्वादावनाश्वासप्रसङ्गादित्यर्थः । प्रकारान्तरेणोक्तोपयोगमाह ॥ **जगत्स्वरूपेति ॥** नन्वत्र पादे सूचीकटाहन्यायेन वक्ष्यमाणक्रमानुसारेणाधिभूताधिदैवपरमात्मजीवेति वक्तव्यम् । अतः कथं जीवादित्वेन ग्रहणमित्यत आह ॥ **अत्रेति ॥** जीवादिविचारस्य बह्वर्थविषयकत्वेन जिज्ञासुं प्रत्यभ्यर्हितत्वादल्पाचृतरत्वाच्च क्रमोल्लङ्घनमित्यर्थः । नन्वधिभूताधिदैवेष्विति कथम् । अव्ययं विभक्तीत्यादिनाऽव्ययीभावे सति तस्याव्ययीभावश्चेत्यव्ययत्वापव्ययादात्' 'असुपः इति सुपो' लुकाभाव्यत्वादिति चेदुच्यते । नात्राव्ययीभावः । येनोक्तदोषः किन्तु कर्मधारय एव । तत्राधिभूतेत्यत्राधिराधिक्यार्थः । एवं चाधि अधिकानि च तानि भूतानि चेत्यधिभूतानि । भूतानामाधिक्यं च कार्यकारणसाहित्येनेत्यभिप्रेत्य तस्य तात्पर्यमाह ॥ **सकारणकार्यभूतानीति ॥** कारणमव्यक्तादिकार्यमन्नादितत्सहित-पञ्चभूतानीत्यर्थः । वक्ष्यमाणरीत्या वियदादिशब्दानामन्योपलक्षकत्वादिति भावः । अधिदैवे-त्यत्राधिरैश्वर्यार्थः । ततश्चाधि ईश्वराणि च तानि दैवतानि चेति विग्रहमभिप्रेत्य तत्तात्पर्यमाह ॥ **तदभिमानिदेवतेति ॥** सकारणकार्यभूताभिमानिदेवतेत्यर्थः । आकाशोत्पत्तीत्येतदुपपादनाय भूतेष्वित्याद्युक्तम् ॥ **असम्भवीति ॥** आकाशोत्पत्तिविनाशाकर्तृत्वादिति भावः । आकाशोत्पत्ति-समर्थनेनैवासम्भवे निवृत्ते किं श्रुत्यविरोधेनेत्यत उक्तम् । **श्रुतिविरोधेनेति ॥** आकाशोत्पत्तिश्रुतेः श्रुत्यन्तरविरोधेनाप्रामाण्ये तद्दृष्टान्तेन विशिष्टभागस्याप्यप्रामाण्यप्रसङ्गादिति भावः ॥ **अत एवेति ॥** उत्पत्तिश्रुतेरप्रमाणत्वे न तद्विरोधाभावादेवेत्यर्थः ॥ **भाक्तत्ववर्णनमिति ॥** आकाशपदवाच्यानां भूताव्याकृततदभिमानिनां मध्ये अव्याकृतादीनां स्वरूपानादित्वपरत्ववर्णनमित्यर्थः ॥ **अन्यार्थ-तयेति ॥** प्रादुर्भावतयेत्यर्थः । वाय्वादावित्यनन्तरमनुवृत्तसम्भूतशब्दस्येति योज्यम् । कुत इत्यत आह ॥ **न हीति ॥** ॐ न वियदश्रुतेः ॐ । वियदनुत्पत्तिमत्र भवति कुतः अश्रुतेः अनुत्पत्तिश्रुत्यभावादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अस्ति तु ॐ ॥ २ ॥**

**अस्त्येव चोत्पत्तिश्रुतिः –**

**'आत्मन आकाशः सम्भूतः' (तै.उ.२-१) इत्यादि ॥**

## तत्त्वप्रदीपिका

**न केवलमनुत्पत्तिर्न श्रूयते । ॐ अस्ति तु ॐ । अस्त्येव चोत्पत्तिवादिनी श्रुतिः । आदिशब्दात् 'खं वायुः' 'नाभ्या आसीदन्तरिक्षं' 'सन्देहो बहुल' इत्यादिका ।**

## तत्त्वप्रकाशिका

**न वियत उत्पत्त्यभावे प्रमाणं नियमेन वक्तव्यम् । उत्पत्तौ प्रमाणाभावादेव तत्सिद्धेः । न हि घटे प्रमाणाभावे पुनस्तदभावे प्रमाणापेक्षा स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ अस्तीति ॥** नोत्पत्तौ प्रमाणाभावः । श्रुतेरेव विद्यमानत्वादिति भावः ।

## भावबोधः

॥ **नियमेनेति** ॥ क्वचिदभावसद्भावे पृथक् प्रमाणस्याप्युपन्यासादिति भावः ।

## भावदीपः

वियदनुत्पत्तौ प्रत्यक्षस्याप्रसरादश्रुतेरिति श्रुत्यभावोक्त्या च प्रत्यक्षश्रुत्यन्यतरमूलतया प्रवर्तमानस्यानुमानस्य तयोरभावेऽभावात्सूत्रादावश्रुतेरित्युक्तावपि प्रमाणाभावादित्येवोक्तं भवतीति मत्वाऽनुवदति ॥ **न वियतः उत्पत्त्यभावे प्रमाणं नियमेन वक्तव्यमिति** ॥ ईक्षतेर्नाशब्द-मित्यादावभावसत्त्वेऽपि प्रमाणोपन्यासान्नियमेनेत्युक्तम् । नासतोऽदृष्टत्वादित्यादौ कारणत्वे प्रमाणाभावादेव कारणत्वाभावसिद्धेरुक्तत्वादिति भावः । उक्तशङ्कानिरासकत्वाप्रतीतेर्भाष्य-भावमाह ॥ **नोत्पत्ताविति** ॥

## वाक्यार्थमुक्तावली

ईक्षतेर्नाशब्दमित्यत्र शब्दवाच्यत्वाभावे प्रमाणस्योक्तत्वान्नियमेनेत्युक्तम् ॥ **तत्सिद्धेरिति** ॥ नासतोदृष्टत्वादित्यादौ कारणत्वे प्रमाणाभावादेव तदभावसिद्धेरित्युक्तत्वादिति भावः ॥ **श्रुतेरेवेति** ॥ एतेनाश्रुतेरित्यतः श्रुतिरित्यनुवर्तते । तुरेवार्थ इत्युक्तं भवति ।

## तत्त्वसुबोधिनी

॥ **नियमेनेति** ॥ क्वचित् गगनाभावे पृथक् प्रमाणस्याप्युपन्यासादिति भावः ।

## वाक्यार्थविवरणम्

॥ **उत्पत्त्यभावे** ॥ अनुत्पत्तिमत्त्वे ।

## वाक्यार्थमञ्जरी

॥ **नियमेनेति** ॥ क्वचिदभावसद्भावेऽपि पृथक् प्रमाणस्योपन्यासादिति भावः ॥ ॐ **अस्ति तु** ॐ ॥ अस्त्येव वियदुत्पत्तिश्रुतिरात्मन आकाश इत्यादिकेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ गौण्यसम्भवात् ॐ ॥ ३ ॥**

**'अनादिर्वा अयमाकाशः शून्योऽलौकिक' इत्यादिश्रुतिर्गौणी । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ।**

## तत्त्वप्रदीपिका

**शून्यः सूक्ष्मः । सूक्ष्मत्वं वायोरप्यस्तीत्यलौकिकः लौकिकेन्द्रियागम्य इति । अनादित्वश्रुतिः गौणार्थापेक्षया । एवं हि बहूनामनुग्रहयोगः ।**

## तत्त्वप्रकाशिका

**न वियतोऽनया श्रुत्योत्पत्तिः साधयितुं शक्या अनादित्वाभिधायकश्रुतिविरोधादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ गौणीति ॥ शून्यः सूक्ष्मः अलौकिकोऽतीन्द्रियः । नोत्पत्तिश्रुतेरनादित्वश्रुतिविरोधः । अनादित्वश्रुतिर्गौणानादित्वपरा । उत्पत्तिश्रुतिस्तु मुख्यार्थेति व्यवस्थायोगात् । तथा हि । आकाशपदेन भूतावकाशतद्देवता उच्यन्ते । तत्र भूतं स्वरूपत एवोत्पत्तिमद्रूपित्वात् । 'आकाशो नीलिमोदेति' इति श्रुतेः । तदभिमानिनोऽपि शरीरोत्पत्तिद्वारास्त्येवोत्पत्तिः । अवकाशतदभिमानिनोरप्यस्ति पराधीनविशेषलाभलक्षणोत्पत्तिरिति सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था । अनादित्वश्रुतिस्तु न सर्वविषयेति भवति गौणी भूते कथमप्यवृत्तेः । स्यादेतत् । किमेतया व्यवस्थयानादित्वश्रुत्यनुसारेणानुत्पत्तिरेव किं नाश्रीयते । मैवम् । तथा सत्युत्पत्तिश्रुतेर्विषयाभावेनाप्रामाण्यापातात् । अनुभवाद्यनुसारि श्रुतिविरोधेनाप्रामाण्यं युक्तमिति चेन्न । उत्पत्तिश्रुतीनामपि बाहुल्येन प्रबलत्वादिति भावः । अनेनानुभवादिविरोधोऽपि निरस्तः ।**

## गुर्वर्थदीपिका

उत्पत्तिश्रुतीनामपि बाहुल्येनेत्यत्र बाहुल्येनोक्तविधयाकाशपदवाच्यभूतादिबहुलसम्बन्धित्वेन चतुर्विधाकाशपरतायामप्यर्थसङ्कोचाभावेनेति यावत् । उत्पत्तिपक्षेऽप्येकामेव श्रुतिं मुखत उदाहृतवतो भाष्यकारस्येदमेव बाहुल्यमभिमतमिति ज्ञेयम् ।

## भावबोधः

**अनादित्वाभिधायकश्रुतिविरोधादिति** ॥ अनेनाश्रुतेरिति सौत्रहेतोरसिद्धिरप्युक्ता भवति ॥ **व्यवस्थायोगादिति** ॥ न्यायविवरणोक्तव्यवस्थाप्रकारप्रदर्शनपरमनादित्वश्रुतिर्गौणीति भाष्यं तद्भाष्यसिद्धांशप्रदर्शनपूर्वकं व्याचष्टे– **अनादित्वश्रुतिरिति** ॥ अवकाशमात्रस्याव्याकृतात्मकत्वात् अनुत्पत्तिवचनानां तद्विषयत्वम् । उत्पत्तिवचनानामसितवर्णभूततदभिमानिशरीरविषयत्वं पराधीनविशेषवत्त्वमात्रविषयत्वं चेति व्यवस्थेति न्यायविवरणाभिप्रायमाह– **तथा हीत्यादिना** ॥ अत्र भूतं स्वरूपत एवोत्पद्यत इत्यादिनाऽस्त्युत्पत्तिरित्यन्तेनासितवर्णभूततदभिमानिशरीरविषयत्वमिति न्यायविवरणांशो व्याख्यातः । असितवर्णेत्येतद्धेत्वर्थगर्भं विशेषणमभिप्रेत्योक्तम् ॥ **रूपित्वादिति** ॥ न च परमात्मादौ व्यभिचारः ।

(भावबोधः)

'भौतिकं त्वेव रूपादिव्याप्तं नाशेन नो मते' ।

इत्युक्तत्वेन भौतिकरूपवत्त्वादित्यर्थत्वात् । असिद्धिपरिहारार्थं न्यायविवरणोदाहृतश्रुतिमाह– **आकाश इति** । आकाशतदभिमानिनोरपीत्यनेन पराधीनविशेषवत्त्वमात्रविषयत्वं चेति न्यायविवरणांशो व्याख्यातः । अभिमानिनोरपीत्यपिशब्दो भूततदभिमानिसमुच्चयार्थो वा स्वरूपोत्पत्तिरहितयोरपीति विरोधस्फूर्त्यर्थो वा । तथा च भूततदभिमानिनोः स्वरूपोत्पत्ति-देहोत्पत्त्योः सद्भावेऽपि भूतादिचतुष्टये सर्वत्राकाशपदार्थे तयोरभेदाभावेन पराधीनविशेषवत्त्वमात्रस्य च सत्त्वादनुगतत्वविवक्षया न्यायविवरणे मात्रपदम् । न तु स्वरूपोत्पत्त्यादेः सम्भूतशब्दार्थत्व-व्यवच्छेदविवक्षया । तस्य तदर्थत्वस्याप्यसितवर्णेत्यादिनोक्तत्वात् । एवञ्च 'आत्मन आकाशः सम्भूतः' इति श्रुतिगताकाशशब्दस्य भूतादिसर्वाकाशविषयत्वेन मुख्यत्ववत् सम्भूतशब्दस्यापि स्वरूपोत्पत्त्यादिसर्वोत्पत्तिविषयत्वेन मुख्यत्वात् । उत्पत्तिश्रुतिर्मुख्यार्थेति न्यायविवरणतात्पर्यमभि-प्रेत्याह– **सर्वविषयत्वादुत्पत्तिर्मुख्येति** ॥ अत्र यद्यपि अव्याकृताकाशचित्प्रकृत्योर्भूताभिमानिनश्च पराधीनविशेषलाभाभावरूपमुख्यानादित्वासम्भवेनानादित्वश्रुतिः स्वरूपानादित्वपरा भूते स्वरूपा-नादित्वस्याप्यभावेन सूक्ष्मरूपानादित्वमात्रपरेत्यनादित्वश्रुतेर्गौणत्वं वक्तुं शक्यम् । तथापि 'तथा प्राणाः' इत्युत्तरपादीयाधिकरणगत 'गौण्यसम्भवात्' इति सूत्रार्थपर्यालोचनयास्य सुज्ञानत्वादिह तन्नोक्तम् । अवकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिवचनानां तद्विषयत्वमिति न्यायविवरण-तात्पर्यमाह– **अनादित्वश्रुतिस्त्विति** ॥ न्यायविवरणे अवकाशपदेन तदभिमानिचित्प्रकृतेरपि सङ्ग्रहः । मात्रपदं तु भूतव्यवच्छेदकम् । तथा च 'अनादिर्वा अयम्' इत्यत्राकाशशब्द अव्याकृताकाशतदभिमानिस्वरूपाकाशपदार्थैकदेशविषयः, न तु सर्वविषय इत्यर्थः । कुत इत्यत आह– **भूत इति** । अनादिपदार्थस्य स्वरूपोत्पत्त्याद्यभावस्य भूते बाधितत्वादित्यर्थः । एवमनादि-शब्दार्थस्य सौत्रोत्पत्त्याद्यभावस्याकाशपदार्थैकदेशेऽव्याकृताकाशादौ सत्त्वेऽपि तत्प्रतिपादितस्य पराधीनविशेषलाभलक्षणोत्पत्त्यभावस्य क्वाप्याकाशपदार्थेऽभावेनानादिपदस्यापि न सर्वविषयत्व-मित्यनादित्वश्रुतिर्न सर्वविषयेत्यपि द्रष्टव्यम् । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवादिति भाष्यगता-'न्यथा'पदस्याभिप्रायमाह– **किमेतया व्यवस्थयेति** ॥

नन्वनया व्यवस्थया बहुवाक्यविरोधस्य निरासेऽपि अनुभूतियुक्तिविरोधस्तु स्यादेवेत्यत आह– **अनेनेति** ॥ साक्षिरूपानुभवस्य विभुत्वयुक्तेश्चाव्याकृताकाशस्वरूपादिविषयत्वेन सावकाशत्वादिति भावः ।

## भावदीपः

अनादित्वश्रुतेर्गौणत्वोक्तेरसाङ्गत्यनिरासाय न वियत उत्पत्तिमत्त्वे अनुभूतियुक्तिबहुवाग्विरोधोऽस्ति । व्यवस्थायोगादिति न्यायविवरणोक्तं साध्यैकदेशं हेतुं च भाष्ये गौणीत्यनन्तरं शेषपूर्त्या च योजयति ॥ **नोत्पत्तिश्रुतेरिति** ॥ व्यवस्थायोगादित्युक्तहेतोर्द्वेधा विवरणपरम् अवकाशमात्रस्याव्याकृत(तात्मक)त्वात् अनुत्पत्तिवचनानां तद्विषयत्वम् उत्पत्तिवचनानाम् असितवर्णभूततदभिमानिशरीरविषयत्वं पराधीनविशेषमात्रविषयत्वं चेति व्यवस्थेति न्यायविवरणं तत्र सूत्रभाष्ययोर्गौणत्वोक्तिस्वारस्याय पराधीनेत्याद्यंत्यपक्षमादाय व्यवस्थायोगं व्यनक्ति ॥ **तथा हीति** ॥ **आकाशेति** ॥ जन्माजन्मश्रुतिद्वयस्थेनाप्याकाशपदेनेत्यर्थः । तत्र चतुष्टयमध्ये ॥ **स्वरूपत एवेति** ॥ तथा च तत्र स्वरूपोत्पत्तिरूपपराधीनविशेषावाप्तिः स्फुटैवेति भावः । न्यायविवरणेऽसितवर्णेति भूतविशेषणोक्तिर्युक्तिसूचनायेति भावेनाह ॥ **रूपित्वादिति** ॥ भौतिकेतिविशेषणान्न व्यभिचारश्शङ्क्यः । तथा चोक्तं प्राग्रूपादिमत्त्वाच्च विपर्ययो दर्शनादिति । एतेन तदभिमानिशरीरस्यापि जनिः सिद्धा रूपित्वात् । न्यायविवरणस्थश्रुतिमेवाह ॥ **आकाश इति** ॥ भावभवित्रोरभेदान्नीलिमेत्युक्तिः ॥ **शरीरोत्पत्तिद्वारेति** ॥ तथा च शरीरोत्पत्तिरूपपराधीनविशेषावाप्तिरस्तीति भावः ॥ **पराधीनविशेषलाभलक्षणेति** ॥ यथाक्रमं मूर्तसम्बन्धसिसृक्षुत्वयोः परमात्माधीनविशेषयोर्लाभो गगने रमायां चेति भावः । तथापि मूर्तसम्बन्धपरतन्त्रविशेषयुगिति । सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया । प्राप्तैव सृष्टेत्युदितेति चानुभाष्योक्तेः । स्वरूपोत्पत्तिशरीरोत्पत्त्योरपि पराधीनविशेषत्वेऽपि भूततदभिमानितच्छरीरेषु पराधीनविशेषः लोकप्रसिद्धः स्वरूपोत्पत्त्यादिरूप एवेति प्रदर्शनाय स्वरूपत एवेत्यादिविशिष्योक्तिः ॥ **सर्वविषयत्वादिति** ॥ एतेनान्यथेत्यादिभाष्यशेषस्यान्यथोत्पत्तिश्रुतेरेव गौणार्थत्वे तस्याबहुविषयत्वरूपबाहुल्यस्यासम्भवप्रसङ्गादित्यर्थो दर्शितः ॥ **गौणीति** ॥ भूते चिरन्तनत्वाभिप्रायेणानादिर्वेत्यादिश्रुतिर्वर्तत इत्यर्थः । अत्र जन्माजन्मश्रुत्योर्भूतावकाशरूपभिन्नविषयतया मुख्यार्थत्वेनैव व्यवस्थेति पक्षस्य न्यायविवरणोक्तस्यात्र टीकायामनुक्तौ बीजं चन्द्रिकायां व्यक्तम् । अन्यथेत्यादिभाष्यमन्यथाप्यवतार्य व्याचष्टे ॥ **स्यादेतदित्यादिना** ॥ बाहुल्यपदस्य प्रामाण्यलक्षकत्वमुपेत्य फलितार्थमाह ॥ **अप्रामाण्येति** ॥ मुख्यार्थमेवोपेत्याह ॥ **बाहुल्येनेति** ॥ एवं न्यायविवरणोक्तं बहुवाग्विरोधा-

(भावदीपः)

भावरूपसाध्यं व्यवस्थायोगहेतुनोपपाद्य तत्रैवोक्तोऽनुभूतियुक्तिविरोधाभावोऽपि तेनैव हेतुनोपपाद्य इति भावेनाह ॥ **अनेनेति** ॥ यद्वोत्पत्तिश्रुतेर्बाहुल्येन प्राबल्यवदनादित्वश्रुतेरनुभूतियुक्तिसाहित्ये- नास्ति प्राबल्यमित्यत आह ॥ **अनेनेति** ॥ व्यवस्थायोगेन हेतुनेत्यर्थः । अनुभवयुक्त्योर्भूत- विषयत्वायोगेन भूतेतरविषयत्वेन सङ्कोचरूपगौणत्वेनोत्पत्तिश्रुतेः सर्वविषयत्वे तया मुख्यार्थत्वेन व्यवस्थोपपत्तेरिति भावः ।

## अभिनवचन्द्रिका

**अनादित्वश्रुतिरिति** ॥ आधुनिकोत्पत्त्यभावरूपगौणानादित्वपरेत्यर्थः । कुतोऽनादित्व- श्रुतेर्गौणत्वम् । उत्पत्तिश्रुतेरेव गौणत्वं किं नाद्रियत इत्यत आह– **तथा हीत्यादिना** ॥ सत्यमुत्पत्तिश्रुतेर्गौणत्वाङ्गीकारेणापि विरोधपरिहारो भवति, तथापि न तदङ्गीकर्तुं शक्यम् । आकाशशब्दार्थे सर्वत्र उत्पत्तिश्रुतिप्रतिपाद्योत्पत्तेः सत्त्वात् । उत्पत्तिश्रुतिः सर्वविषया सर्वत्र स्वार्थप्रतिपादनक्षमा बाधाभावात् । अतः सा मुख्यार्थैवाभ्युपगम्यते । अनादित्वश्रुतिस्तु न सर्वविषया। सर्वाकाशेषु न स्वार्थप्रतिपादनक्षमेति सर्वविषयत्वसिद्धये सैव गौणीत्यभ्युपगम्यत इति भावः । कुतोऽनादित्वश्रुतिः सर्वत्र न स्वार्थप्रतिपादनक्षमेत्यत आह – **भूत इति** ॥ भूताकाशेऽनादित्वश्रुत्यर्थस्य कथमप्यभावात् न सर्वत्र स्वार्थप्रतिपादनक्षमेत्यर्थः । न्यायविवरणे तु अनादित्वश्रुतेरव्याकृताकाशपरत्वम्, उत्पत्तिश्रुतेस्तु भूतत्ववदभिमानिपरत्वमिति धर्मिभेदेन श्रुत्योर्विरोधं परिहृत्य उत्पत्तिश्रुतेः अभिमानिविषये अव्याकृताकाशविषये च पराधीन- विशेषवत्त्वमात्रविषयत्वं न त्वनादित्वश्रुतिनिषेध्यस्वरूपलाभरूपोत्पत्तिविषयत्वमिति धर्म्यैक्यपक्षेऽपि विरोधः परिहृतः ॥ **प्रबलत्वादिति भाव इति** ॥ बाधायोग्यत्वादित्यर्थः । एतेन उभयोः प्राबल्यासम्भवात् 'उत्पत्तिश्रुतीनामपि' इति समुच्चयाभिधानमयुक्तमिति परास्तम् । मा भूत् श्रुतिविरुद्धत्वेनाप्रामाण्यम्, अनुभवादिविरुद्धत्वेन तु अप्रमाण्यं स्यादित्यत आह– **अनेनेति** ॥ बाधायोग्यत्वेनेत्यर्थः । बहुबाधस्यान्याय्यत्वात् अनुभवश्रुत्योर्भिन्नविषयत्वमेव कल्पनीयं विभुत्वादियुक्तेस्तु अप्रामाण्यमेवाभ्युपेयमिति भावः ।

## वाक्यार्थमुक्तावली

**श्रुतिविरोधादिति** ॥ एतेनाश्रुतेरित्येतदसिद्धमित्युक्तं भवति ॥ **शून्यः सूक्ष्म इति** ॥ अव्यक्तत्वापादकधर्मविशेषवानित्यर्थः । अत एवालौकिकः लौकिकेन्द्रियागम्य इत्यर्थः ।

(वाक्यार्थमुक्तावली)

अत्राव्याकृताकाशस्यातीन्द्रियत्वं प्राकृतेन्द्रियागोचरत्वं ज्ञेयम् । सूत्रे श्रुतेरित्यस्ति । तथा चानादित्वश्रुतिः गौणीत्युक्त्या उत्पत्तिश्रुतिर्मुख्यार्थेति लभ्यतेऽतो न विरोध इति सूत्रभाष्ययोरर्थं व्यवस्थायोगादिति न्यायविवरणानुसारेणाह ॥ **नोत्पत्तीति** ॥ **स्वरूपत एवेति** ॥ उपादानधर्मिणो धर्म्यन्तरात्मना विपरिवृत्तिः स्वरूपत उत्पादः नत्वभूत्वाभवनमिति मन्तव्यम् ॥ **रूपित्वादिति** ॥ जन्यरूपवत्वादित्यर्थः । अतो नेश्वरादावतिप्रसङ्गः ॥ **शरीरेति** ॥ शरीरोत्पत्तौ तदभिमानेन चैतन्ये विक्रिया लभ्यत इत्यर्थः ॥ **आकाशतदभिमानिनोरपीति** ॥ भूतवत्स्वरूपेण तदभिमानिवद्देह-द्वारोत्पत्तिरिह न किन्तु तयोरपीत्यर्थः । उपलक्षणमेतत् । वेदादीनामपीति द्रष्टव्यम् । तत्राव्याकृताकाशस्य मूर्तसम्बन्धः । तदभिमानिश्रीदेव्याः सिसृक्षुत्वलाभः । वेदस्यार्थावबोधकत्व-शक्त्याविर्भावः । प्रकृतेरीषद्विकार इत्यादिरूपेण पराधीनविशेषलाभो द्रष्टव्यः । यद्यपि सर्वत्र पराधीनविशेषलाभ एवोत्पत्तिः । स च कचिद्धर्म्यन्तरात्मना विपरिवृत्तिः । कचित् शरीरो-त्पत्यभिमानद्वारा चैतन्ये भिन्नाभिन्नधर्मविशेषोत्पत्तिः । कचिन्मूर्तसम्बन्धरूप इत्यङ्गीकारे उत्पत्ति-शब्दार्थस्यैकरूप्यम् । 'प्रकृतिः पुरुषः कालो देवास्तदभिमानिनः' । महदाद्याश्च जायन्ते पराधीनविशेषतः । पराधीनविशेषाप्त्या जनिमत्सर्वमेव च' इत्यनुव्याख्यानानुगुण्यं च । तथापि पराधीनविशेषे वैचित्र्यं दर्शयितुमेवमुक्तिः ॥ **सर्वविषयत्वादिति** ॥ आकाशादिशब्दार्थे सर्वत्र स्वरूपोत्पत्यादि यथायोग्यपराधीनविशेषलाभरूपोत्पत्तिप्रतिपादकत्वादित्यर्थः ॥ **अनादित्व-श्रुतिस्त्विति** ॥ पराधीनविशेषलाभाभावरूपमुख्यानादित्ववादिन्यनादित्वश्रुतिर्ब्रह्मण्येव मुख्यार्था । ब्रह्मव्यतिरिक्ते आकाशशब्दार्थे सर्वत्र स्वार्थप्रतिपादनाक्षमेत्यव्याकृततदभिमानिचित्प्रकृत्यादौ स्वरूपानादित्वमात्रेण गौण्यमुख्या । भूते तु कथमप्यव्याकृतवत्स्वरूपानादित्वस्याप्यभावेनाप्रवृत्तेः छत्रिवल्लाक्षणिकी । चिरन्तनत्वमात्रेण गौणी वा, भूतेतरतयाऽऽकाशपरतया भाक्तावेति भावः ।

ननु, 'भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम् । एषां विकारोनित्यस्यात्' इत्युक्तेः सूक्ष्म-रूपेणानादित्वात्कथमनादित्वश्रुतेर्भूते कथमप्यप्रवृत्तिरिति चेन्न । भूतसूक्ष्मस्यैव'' स्थूल-धर्म्यन्तरात्मना परिणामाङ्गीकारेणाव्याकृतादिवन्मूर्तसम्योगादिरूपविपरिवृत्यभावात् । उपादानभूत-सूक्ष्मभागस्तु प्रकृतिरेव सोच्यत इत्यन्यत्रोक्तत्वात् । न च भूतस्यासंसृष्टत्वेनाण्डतदन्तर्गत-वदुपादानधर्मिणो नित्यत्वाभावात् । सूक्ष्मरूपेण सतामुपचयावाप्तिमात्रत्वात्तदुत्पत्तेः । भूते

(वाक्यार्थमुक्तावली)
कथमनादित्वश्रुतेरप्रवृत्तिरिति चेदव्याकृतवत्स्वरूपानादित्वाभावेनानादित्वश्रुतेः कथमप्यप्रवृत्ति-मङ्गीकृत्येह लाक्षणिकत्वादेरुक्तत्वेऽपि सूक्ष्मरूपस्य नित्यत्वेनानादित्वस्य तत्र प्रवृत्तिमङ्गीकृत्य मुख्यनित्यत्वाभावेन अनादित्व श्रुतेरमुख्यार्थत्वस्य चतुर्थे प्रमाणानां वक्ष्यमाणन्यायेन सिद्धतयेह तदनिषेधादित्यलम् । उत्पत्ति श्रुतिबाहुल्यासम्भवादित्यत्रोत्पत्तिश्रुतिप्रामाण्यासम्भवप्रसङ्गात् । न चेष्टापत्तिः । तथात्वे उत्पत्तिश्रुतीनां बाहुल्येनाप्रामाण्यसम्भवादित्यर्थं मत्वाह ॥ **तथा सतीत्यादिना** ॥ ननूक्तव्यवस्थया बहुवाक्यविरोधपरिहारेप्यनुभूतियुक्तिविरोधः स्यादेवेत्यत आह ॥ **अनेनेति** ॥ साक्ष्यनुभवस्य विभुत्वानुमानस्य चाव्याकृताकाशस्वरूपामुख्यानादिविषयत्वेन व्यवस्था-श्रयणेनेत्यर्थः ।

## तत्त्वसुबोधिनी

अनादित्वेति अनेनाश्रुतेरिति सौत्रहेतोरसिद्धिरुक्ता । असत्वप्रतीतिनिरासाय शून्यपदार्थमाह ॥ **सूक्ष्म इति** ॥ सर्वथा लोकवैलक्षण्यप्रतीतिनिरासाय आह ॥ **अतीन्द्रियः इति** ॥ कथं न विरोधः इत्यतोऽव्यवस्थया विरोधं परिहरति ॥ **अनादित्वेति** ॥ अनुत्पत्तिवचनानां अव्याकृताकाश-विषयत्वानुत्पत्तिवचनानां असितवर्णभूततदभिमानिशरीरविषयत्वमिति व्यवस्थेति न्यायविवरणानु-सारेण व्यवस्थामेवाह ॥ **तथा हीति** ॥ **रूपित्वादिति** ॥ न च विष्णौ व्यभिचारः भौतिकरूपत्वादित्यर्थात् । ''भौतिकं त्वेव रूपादिव्याप्तं नाशेन नो मत इत्यन्यत्रोक्तत्वात् । भूताकाशस्य रूपवत्वमसिद्धमित्यतः तत्र प्रमाणमाह ॥ **'आकाशे'** इति ॥ नीलिमा नीलरूपविशेष इत्यर्थः ॥ **अवकाश तदभिमानिनोरपि इति** ॥ अपिशब्दः भूतत-दभिमानिसमुच्चयार्थो वा, स्वरूपोत्पत्तिदेहोत्पत्तिरहितयोरपीति विरोधस्फूत्यर्थो वा दृष्टव्यः । अत एव स्वरूपोत्पत्तिदेहोत्पत्तेः भूततदभिमानिनोः सद्भावेऽपि सर्वस्मिन्नाकाशपदार्थे तदभावात् पराधीनविशेषवत्वस्य च सार्वत्रिकत्वात् तस्य सर्वानुगतत्वविवक्षया न्यायविवरणे मात्रपदम् न तु स्वरूपोत्पत्त्यादेः सुभूतशब्दार्थत्वविवक्षयेति दृष्टव्यम् ॥ **अनादित्वश्रुतिस्तु** इति ॥ तथा चानादिर्वेति श्रौत आकाशशब्दः अव्याकृताकाशतदभिमानिभूताभिमानिस्वरूपाकाशपदार्थैक-देशविषयो न तु सर्वविषय इत्यर्थः । कुतः इत्यत आह ॥ **भूतेति** ॥ अनादिपदार्थस्य स्वरूपो-त्पत्त्याद्यभावस्य भूते बाधितत्वादित्यर्थः । एवमनादिशब्दार्थस्य स्वरूपोत्पत्त्याद्यभावस्याकाश-

(तत्त्वसुबोधिनी)

पदार्थैकदेशेऽव्याकृताकाशादौ सत्वेऽपि तत्प्रतिपादितस्य पराधीनविशेषलाभलक्षणोत्पत्त्यभावस्य क्वाप्याकाशपदार्थे अभावेनानादिपदस्यापि सर्वविषयत्वेनानादित्वश्रुतिर्न सर्वविषयेति दृष्टव्यम् ॥ **अन्यथेति** ॥ भाष्यगतान्यथाशब्दार्थमाह **किमेतयेति** ॥ **उत्पत्तिश्रुतीनामिति** ॥ स इदं सर्वमित्यादिश्रुतीनामित्यर्थः । ननु अनया व्यवस्थया बहुवाक्यविरोधस्य निरासेऽपि अनुभूत-युक्तिविरोधस्तु स्यादेवेत्यत आह ॥ **अनेनेति** ॥ साक्षिरूपानुभवस्य विभुत्वयुक्तेश्चाव्याकृताकाश-स्वरूपानादित्वविषयत्वेन सावकाशत्वादिति भावः ।

## वाक्यार्थविवरणम्

असत्त्वस्य बाधादाह ॥ **सूक्ष्म** इति ॥ यद्यपि भूताकाशं महत्तथापि तदवयवानां सूक्ष्मत्वादेवमुक्तम् ॥ **अतीन्द्रिय इति** ॥ अस्मदतीन्द्रिय इत्यर्थः । 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव तु' इति दिव्यदृष्टिगोचरत्वस्योक्तत्वादित्यर्थः ॥ **गौणानादित्वेति** ॥ अत्रानादित्वश्रुतेर्गौणत्वं नाम एकदेशविषयकत्वमेव, नोपचरितत्वम् । तथा चैकदेशानादित्वपरेत्यर्थः । पराधीनविशेषावाप्ति-रूपोत्पत्तिर्भगवद्व्यतिरिक्तरमादिसर्वपदार्थसाधारणेत्युत्पत्तिश्रुतिर्मुख्यार्थेत्याशयेनोपपादयति तथा हीत्यादिना ॥ **स्वरूपत एवेति** ॥ स्वरूपलाभ एव तत्र पराधीनो विशेष इति ध्येयम् । 'अत आकाशशब्दोक्तस्तद्देवोऽत्र विनायकः । देहोत्पत्त्या समुत्पन्न' इत्येतद् हृदि निधायाह ॥ **तदभिमानिन इति** ॥ शरीरोत्पत्तिरेव पराधीनो विशेष इति ध्येयम् । अवकाशे पराधीनो विशेषो मूर्तपदार्थसम्बन्धः । 'तथापि मूर्तसम्बन्धपरतन्त्रविशेषयुक् । खमेवोत्पत्तिमन्नाम श्रुतिशब्दे विवक्षितम्' इत्युक्तेः । तदभिमानिनी च रमा । तस्यां च पराधीनो विशेषसिसृक्षुत्वरूपः । ''सिसृक्षुत्त्वविशेषतत्साक्षाद्भगवदिच्छया । प्राग्वैव सृष्टेत्युदिता'' इत्युक्तेः ॥ **सर्वविषयत्वादिति** ॥ आकाशशब्दवाच्यः सर्वविषयत्वादित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । अनुभवाद्यनुसारिणी श्रुतिरनादित्वश्रुतिः ।

## वाक्यार्थमञ्जरी

अनादित्वश्रुतिर्गौणी गौणानादिपरा अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवादित्यर्थः । सूक्ष्मोऽ-प्रतिघातः अतीन्द्रियः बाह्येन्द्रियागोचरः आकाशपदेनात्मन आकाश इत्यत्रत्येन ॥ **भूताकाशेति** ॥

(वाक्यार्थमञ्जरी)

भूताव्याकृततदभिमानिरमागणेशावित्यर्थः ॥ **रूपित्वादिति** ॥ भौतिकरूपित्वादित्यर्थः । नीलिमा नीलरूपवान् ॥ **पराधीनविशेषेति** ॥ अत्राकाशस्य मूर्तपदार्थसम्बन्धरूपः रमायाः सिसृक्षत्वरूपः । पराधीनविशेषोऽनुव्याख्यानानुसारेण द्रष्टव्यः ॥ **सर्वेति** ॥ आकाशपदवाच्यसर्वेत्यर्थः । कुत इत्यत आह ॥ **भूत इति** ॥ अनादिपदार्थस्य स्वरूपतोत्पत्त्यभावस्य भूते बाधितत्वादित्यर्थः । नन्वनया व्यवस्थया बहुवाक्यविरोधनिरासेऽपि अनुभवयुक्तिविरोधस्तु स्यादेवेत्यत आह ॥ **अनेनेति** ॥ उत्पत्तिश्रुति प्राबल्यनिरूपणेन साक्ष्यनुभवस्य विभुत्वयुक्तेश्चाव्याकृताकाशस्वरूपानादित्वविषयत्वेन सावकाशत्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ शब्दाच्च ॐ ॥ ४ ॥**

**'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति । अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानीति । यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि । न ह्येतानि कदाचनोत्पद्यन्ते न लीयन्ते पुरुषः प्रकृतिरात्मा काल इति । अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्त' इति भाल्लवेयश्रुतेः ।**

## तत्त्वप्रदीपिका

पुरुषः प्रकृतिरात्मा काल इत्यत्र परमात्मा देव्यास्तत्तदभिमानीनि त्रीणि रूपाणि चोच्यन्ते । भूश्रीदुर्गात्मिकाया लक्ष्म्या न स्वरूपदेहयोरुत्पत्तिः । नापि प्रधानवत्परिणाम इति नित्यसमत्वेन नित्यत्वमुच्यते । प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते, भागैरुत्पद्यन्ते, भागेन नोत्पद्यन्ते ।

## तत्त्वप्रकाशिका

न केवलमुक्तव्यवस्थाऽसम्भवयुक्तिसिद्धा । अपि तु श्रुतिसिद्धा चेत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां श्रुतिमुदाहरति ॥ **शब्दाच्चेति** ॥ आत्मा परमात्मा । पुरुषादिपदैर्जीवचैतन्यप्रकृतिस्वरूपकाल-प्रवाहा उच्यन्ते । तदभिमानिप्रकृतिश्च । प्राणो मुख्यवायुः । श्रद्धा तत्पत्नी । पुरुषपदेन

(तत्त्वप्रकाशिका)

**गृहीतयोरप्यनयोश्चैतन्यमात्रादधिकमपि नित्यत्वमस्तीति दर्शयितुं पुनः सपरिकरयोर्ग्रहणम् । उक्तप्रतिज्ञाद्वयसमर्थनाय व्याप्तिरुच्यते ॥ यानीति ॥ नित्यत्वव्याप्तस्यानादित्वहेतोरुपनयो न हीति । न विलीयन्त इति निगमनम् । एवमनित्येष्वपि प्राणादीन्युत्पत्तिमन्ति । तस्माल्लीयन्ते इत्युपनयनिगमने द्रष्टव्ये । प्राणादिषु न सर्वेषामनित्यत्वमेवेत्युच्यते ॥ अथेति ॥ तस्मान्नित्यानित्यानीति शेषः । तत्रोपपत्तिः भागश इति । बहुभागैरुत्पद्यन्ते कैश्चिन्नोत्पद्यन्त इत्यर्थः । तत्प्रकारश्चाकाशस्योक्तः । प्राणस्योपरि वक्ष्यते ।**

## गुर्वर्थदीपिका

असम्भवयुक्तिसिद्धेत्यत्र उत्पत्तिश्रुतिबाहुल्यासम्भवाख्या युक्तिरसम्भवयुक्तिरित्यर्थः । 'अथ ह वाव नित्यानि'' इत्यादिश्रुतेरयमर्थः । पुरुषपदेन जीवचैतन्यमित्यनेन सकलजीवचैतन्यमुच्यते, आत्मा परमात्मा ॥ **'पुराणाद्याः कालः प्रकृतिरेव च ॥ नित्यानित्यं त्रिधा प्रोक्तम्'** इति भाष्यकृतैवान्यत्रोक्तत्वात्कालप्रकृत्योः कथं नित्यत्वेन परिगणनमित्यत उक्तं **प्रकृतिस्वरूपकाल-प्रवाहा इति** ॥ कालस्य पटतन्तुवद्धटकपालवच्च न यौगपद्येनावयवाः सम्भवन्ति । क्षणलवादिभेदेन कालावयवानां क्रमिकत्वादतः कालप्रवाहाख्यः कालावयवी तृणजलूकावत्पूर्वपूर्वावयवे नष्टे उत्तरोत्तरावयवे तिष्ठति ते चावयवाः निरवधिकाः । अतः कालप्रवाहस्य कदाऽप्युपरमाभावा-न्नित्यत्वमित्यर्थः । प्रकृतिविकाराणामनित्यत्वेऽपि प्रकृतिस्वरूपस्य नित्यत्वात् साऽपि नित्यत्वेन परिगणिता । अवयवावयविनोर्भेदाभेदाङ्गीकाराद्भेदपुरस्कारेण श्रुतिरेषा प्रवृत्ता । अभेदपुरस्कारेण तु नित्यानित्यतया परिगणनेति भावः । यद्वा प्रलयेऽप्यविच्छिन्नज्ञानत्वेन वायोर्नित्यत्वस्य वक्ष्यमाणत्वात्, प्रलये विद्यमानत्वरूपं पारिभाषिकनित्यत्वं प्रलयेऽपि परिवर्तमानकालावयवेष्वस्ति, प्रलये वर्तमानमुख्यप्राणमनोवृत्तिरूपज्ञानाख्यप्रकृतिविकारेऽप्यस्ति । अतो वा कालप्रकृत्योर्नित्यत्वेन परिगणनम् । अतो नित्यानित्यत्वयोरप्यस्यामेव श्रुतौ कथ्यमानत्वात् तत्रैवानयोरपरिगणनेति चोद्यस्यापि नावकाशः । प्राणो मुख्यवायुरित्यत्र प्राणः श्वासः मुख्यवायुरित्यस्य मुख्यवाय्वभि-मन्यमान इत्यर्थः । श्रद्धा तत्पत्नीत्यत्र श्रद्धापदेन सकलजीवमनोवृत्तिरूपास्तिक्यबुद्धिरुच्यते । तत्पत्नीत्यस्य तद्धार्येत्यभिमन्यमानेत्यर्थः । साक्षात्तयोरेव ग्रहणे केवलानित्येषु परिगणना न स्यात् । भूतपदेनाकाशव्यतिरिक्तभूतचतुष्टयमुच्यते । आकाशस्य तु व्याकृताव्याकृतरूपत्वेन नित्यानित्येषु

(गुर्वर्थदीपिका)

परिगणनां वक्ष्यति, **भौतिकानीति** ॥ घटपटादीनि । सपरिकरयोर्ग्रहणमित्यस्य सपरिकरयोः प्रागुक्तश्वासश्रद्धाख्यपरिकरसहितयोः । अनयोर्वायुभारत्योः । ग्रहणं, नित्यानित्यत्वप्रतिपादकश्रुतौ ग्रहणम् । तत्रापि परिकरयोरनित्यत्वमादाय प्रलयेऽपि विद्यमानत्वाख्यमनोवृत्तिरूपज्ञान-निष्ठपारिभाषिकं नित्यत्वं चादायोभयोरपि नित्यत्वानित्यत्वपरिभाषा । उपचितमनसः प्रलये नाशेऽपि लिङ्गदेहस्थसूक्ष्मभूतमनसः इतरजीववद्वायुभारत्योस्सुप्त्यभावेन प्रबुद्धत्वान्न तत्र ज्ञान-तिरोभाव इति ज्ञेयम् । प्राणादिष्वित्यस्य प्राणचतुष्क इत्यर्थः । न सर्वेषामनित्यत्वमेवेत्यस्य सर्वेषामनित्यत्वमेव न किंतु तत्रैव परिगणितयोः प्राणश्रद्धयोर्विवक्षाभेदेन नित्यानित्यकोटावपि प्रवेशोऽस्तीत्यर्थः ।

## भावबोधः

ननु पुरुषप्रकृतिकालानां देहोत्पत्त्याद्युत्पत्तेः सत्त्वेन कथं नित्यत्वोक्तिरित्यत आह– **पुरुपादि-पदैरिति** ॥ प्राणश्रद्धयोर्जीवचैतन्यस्य सकलजीवचैतन्यग्राहकपुरुषपदेनैव नित्यवर्गे गृहीतत्वाद्देहादेश्च भौतिकानीत्यनित्यवर्गे ग्रहणात् किमर्थं पृथग्ग्रहणमित्यत आह– **पुरुपपदेनेति** ॥ नित्यवर्गे गृहीतयोरप्यनयोः प्राणादिषु न सर्वेषामनित्यत्वमेवोच्यत इति वक्ष्यमाणानुसारेण नित्याऽनित्यवर्ग-प्रवेशादधिकमपि नित्यत्वमस्तीत्युक्तम् ॥ **सपरिकरयोरिति** ॥ प्राणश्रद्धापद प्रवृत्तिनिमित्त-भूतपरिकरविशिष्टयोर्नित्यानित्यत्वपरिकररूपधर्माणां मध्ये कस्यचिन्नित्यत्वं विनानुपपन्नमिति परिकरभूतमनोवृत्तिज्ञानविशेषस्य नित्यत्वं देहादेरनित्यत्वं सपरिकरयोर्ग्रहणेन ज्ञापितं भवतीत्यर्थः ।

ननु प्राणश्रद्धाकाशशब्दार्थानां सर्वेषामप्युक्तरीत्योत्पत्त्यभावाद्भागश इति कथमुक्तमित्यत आह– **बहुभागैरिति** ॥ **कैश्चिदिति** ॥ प्राणश्रद्धाचैतन्यस्याव्याकृताकाशतदभिमानिभूताभिमानि स्वरूपाणां स्वरूपोत्पत्त्यभावादिति भावः । **तत्प्रकारश्चेति** । चतुष्टयात्मकाकाशश्चतुर्भिर्भागै-रुत्पद्यते। उक्ताया उत्पत्तेश्चतुर्ष्वपि सत्त्वात् । आकाशतदभिमानिस्वरूपभागेन नोत्पद्यत इति प्रागेवोक्त इत्यर्थः ।

## भावदीपः

सूत्रे चशब्द अनुक्तसमुच्चय इति भावेनाह ॥ **न केवलमिति** ॥ नित्यवर्गे गृहीतयोः प्राणश्रद्धयोरनित्यवर्गेऽप्युक्तिः किमर्था कथं च युक्तेत्यत आह ॥ **पुरुषपदेनेति** ॥ **अधिकमिति** ॥ मनोवृत्तिज्ञानाख्यमित्यर्थः ॥ **दर्शयितुमिति** ॥ अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति चेत्यादि-वाक्येनेति भावः । अयुक्ततां निराह ॥ **सपरिकरयोरिति** ॥ देहादिरूपपरिकरयुक्तयोरित्यर्थः ॥ **बहुभागैरिति** ॥ चतुष्टयात्मकाकाशश्चतुर्भिर्भागैरुत्पद्यते । प्रागुक्तोत्पत्तेश्चतुर्ष्वपि सत्वात् प्राणादि-पदोक्तो भूतमुख्यामुख्यतदभिमानिरूपत्रितयात्मको वायुरपि त्रिभिरपि भागैरुत्पद्यते । स्वरूपतो देहद्वारा चोत्पत्तेस्त्रिषु सत्वात् ॥ **कैश्चिदिति** ॥ अवकाशस्वरूपाभिमानिचैतन्यस्वरूपैश्च नोत्पद्यत इत्यर्थः ॥ **उक्त इति** ॥ सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्थेत्यत्रेति भावः ॥ **वक्ष्यत इति** ॥ त्रिभिरपि भागैरुत्पद्यते । चैतन्यं स्वरूपांशेन नोत्पद्यत इति वक्ष्यत इत्यर्थः । यद्यपीदं तत्र भाष्यटीकयोर्न व्यक्तम् । तथाप्यभिप्रेतं मैवमित्यादिना सूच्यते चेति भावः ।

## अभिनवचन्द्रिका

**न केवलमुक्तव्यवस्थेति** ॥ अनादित्वश्रुतेर्न मुख्यानादित्वपरत्वं किन्तु गौणानादित्वपरत्वमिति व्यवस्था असम्भवयुक्तिसिद्धा इत्येव न, अपि तु अथ ह वाव' इति श्रुतिसिद्धा चेत्यर्थ-प्रतिपादकमित्यर्थः ।

ननु श्रुतौ पुरुषप्रकृतिकालानां नित्यत्वप्रतिज्ञा अनुपपन्ना । तेषामनित्यत्वात् चित्प्रकृतेरग्रहणात् । न्यूनत्वाच्चेत्यत आह – **पुरुषादिपदैरिति** ॥ **श्रद्धा तत्पत्नीति** ॥ इतः परं टीकायां श्रूयमाणं 'पुरुषपदेन गृहीतयोरप्यनयोः चैतन्यमात्रादधिकमपि नित्यमस्तीति दर्शयितुं पुनः सपरिकरयोर्ग्रहणम्' इति वाक्यं नात्रत्यं, किंतु 'तस्मान्नित्यानित्यानीति शेषः' इति वाक्यात्परं वाक्यं लेखकदोषादत्र पतितम् । अवश्यं चैतदेवं विज्ञेयम् । पुरुषपदेन गृहीतत्वात् नित्यत्वेनोक्तयोः अनित्यवर्गे ग्रहणेनाधिकनित्यत्वसूचनासम्भवात् । व्याख्यानं तु तत्रैव करिष्यामः ॥ **उक्तप्रतिज्ञेति** ॥ पुरुषादयो नित्याः, प्राणादयो नित्या इति प्रतिज्ञाद्वयसमर्थनायेत्यर्थः । **एवमनित्येष्वपीति** ॥ अनित्यत्वेन प्रतिज्ञातेषु प्राणादिष्वपि उपनयनिगमने द्रष्टव्ये इति सम्बन्धः । प्राणादीन्युत्पत्तिमन्तीति

(अभिनवचन्द्रिका)

उपनयप्रकारदर्शनं, तस्माल्लीयन्त इति निगमनप्रकारदर्शनम् । **प्राणादिषु न सर्वेषामिति** ।। अनित्यत्वहेतूपदर्शनमुखेनानित्यत्वमनूद्य नित्यत्वहेतूपदर्शनमुखेन नित्यत्वमुच्यत इति भावः । एतेन श्रुतौ अनित्यत्वमेव नेति पदाश्रवणात् अनित्यत्वमेव नेत्यच्यत इत्ययुक्तमिति परास्तम् । अनुवाद्येन सह विधेयं दर्शयति – **तस्मान्नित्यानित्यानीति शेष इति** ।। अत्रानित्यानीत्यनुवादः नित्यत्वं तु विधेयमिति विवेकः । अत्र लेखकदोषादुच्छिन्नं 'पुरुषपदेन' इति वाक्यमिह द्रष्टव्यम् । तद्व्याख्यायते ननु 'यान्यनित्यानि प्राणः श्रद्धाभूतानि भौतिकानि' इति वाक्ये, अनित्यत्वेनोक्तानामनित्यत्वमेव न किं तु नित्यत्वमप्यस्तीति प्रतिपादनाय प्रवृत्ते 'अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाकाश' इति वाक्ये आकाशस्यैव ग्रहणं न तु प्राणश्रद्धयोः तयोः 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल' इति वाक्ये पुरुषपदेन गृहीतत्वेन नित्यत्वस्य लब्धत्वादित्यत आह – **पुरुषपदेनेति** ।। जीवेषु चैतन्यमेव नित्यं प्राणश्रद्धयोस्तु ज्ञानमपि नित्यमस्तीति दर्शयितुं पुरुषपदेन गृहीतयोरपि पुनर्ग्रहणमित्यर्थः ।

ननु गृहीतयोः प्राणश्रद्धयोरेव नित्यत्वमुक्तं स्यात् न त्वनुपात्तज्ञानस्य नित्यत्वमित्यत उक्तम्– **सपरिकरयोरिति** ।। प्राणश्रद्धापदे ज्ञानादिविशिष्टयोः प्राणश्रद्धयोर्वाचके । ततश्च उपात्तस्य ज्ञानस्य नित्यत्वं वक्तुं शक्यमिति भावः । **तत्प्रकारश्चेति** ।। अव्याकृताकाशस्य पराधीनविशेष-रूपधर्मद्वारेणोत्पत्तिः न स्वरूपेण । भूताकाशस्य तु स्वरूपेणोत्पत्तिरिति तत्प्रकार उक्त इत्यर्थः।

अत्रैवम् 'अथ ह वाव' इति भाष्योदाहृतश्रुतियोजना – अथेति ह वाव' इति निपातसमुदायः श्रोतुरवधानार्थः । नित्यान्युच्यन्ते । तान्युदाहरति पुरुषः प्रकृतिरात्मा काल इति । **पुरुषः** चैतन्यम्, **प्रकृतिः** चेतनाचेतना, **आत्मा** परमात्मा, **कालः** कालप्रवाहः । अथ नित्यनिरूपणानन्तरं यान्यनित्यानि तान्युच्यन्ते । तान्युदाहरति प्राणःश्रद्धाभूतानि भौतिकानीति । **प्राणो** मुख्यवायुः **श्रद्धा** तत्पत्नी, **भूतानि** आकाशादीनि, **भौतिकानि** देहाः, घटाद्याश्च । अनित्यत्वे उत्पत्तिमत्त्वं हेतुरित्यभिप्रेत्य व्याप्तिमाह **यानि ह वा इति** । ह वा इति निपातोऽवधारणे । अनित्यानि भवन्त्येवेत्यर्थः । नित्यत्वेऽनुत्पत्तिमत्त्वं हेतुरित्यभिप्रेत्य व्याप्तिमाह – **यानि ह वा इति** । निगमनमाह – **न लीयन्त इति** । उपनये एतानीत्युक्तानुदाहरति – **पुरुषःप्रकृतिरात्मा काल** इति । एवमनित्यत्वानुमानेऽपि उपनयनिगमने द्रष्टव्ये । अथ यान्यनित्यानीति वाक्ये अनित्य-त्वेनोक्तानां प्राणादीनामनित्यत्वमेव न किंतु नित्यत्वमप्यस्तीति भावेनाह– **अथेतानीति** ।

(अभिनवचन्द्रिका)

एतानीत्युक्तानुदाहरति – **प्राणःश्रद्धाकाश इति** । अत्र प्राणश्रद्धापदाभ्यां ज्ञानादिसहितयोः प्राणश्रद्धयोर्ग्रहणम् । यद्यपि पुरुषपदेनैव नित्यत्वमुक्तं, तथापि तयोर्विज्ञानमपि नित्यमिति द्योतनाय पुनर्ग्रहणम् । उत्पत्तिमत्त्वानुत्पत्तिमत्त्वयोः विरोधं परिहर्तुं व्यवस्थामाह **भागशो ह्युत्पद्यन्त इति** ॥ कैश्चिद्भागैर्नोत्पद्यन्त इत्यपि ग्राह्यमिति ।

## वाक्यार्थमुक्तावली

न केवलमुक्तव्यवस्थासम्भवयुक्तिसिद्धा किं नाम शब्दाच्चानादित्वश्रुतिर्गौणी । उत्पत्तिश्रुतिर्मुख्यार्थेति व्यवस्थेति सूत्रार्थं वदन्नवतारयति ॥ **न केवलमिति** ॥ ननु प्राणश्रद्धाभूतभौतिकानामनित्यत्वमुत्सर्गत उक्त्वा अथैतान्युत्पत्तिमन्त्यनुत्पत्तिमन्ति च प्राणः श्रद्धाकाश इति प्राणश्रद्धयोरपवादेन नित्यानित्यत्वमुच्यते । तथा च यान्यनित्यानि प्राणः श्रद्धेत्यत्र तयोरनित्यत्वं नित्यानित्यत्वमिति पर्यवस्यति । तत्र चैतन्यरूपेण नित्यत्वं शरीररूपेणानित्यत्वमिति विवक्षायां चैतन्यस्य पुरुषपदेनैव नित्यत्वस्योक्तत्वात् । तद्देहादेश्च भूतानि भौतिकानीत्यनित्यवर्गे ग्रहणात् प्राणश्रद्धयोः सपरिकरयोः पुनर्नित्यानित्यत्वाभिप्रायेण पुनर्ग्रहणं किमर्थमित्यत आह ॥ **पुरुषपदेन गृहीतयोरिति** ॥ चैतन्यमात्रादधिकं वृत्तिज्ञानरूपमित्यर्थः ॥ **सपरिकरयोरिति** ॥ प्राणश्रद्धापदप्रवृत्तिहेतुभूतदेहादिरूपपरिकरविशिष्टयोरित्यर्थः । नित्यानित्यत्वं परिकररूपधर्माणां मध्ये कस्यचिन्नित्यत्वं कस्यचिदनित्यत्वं विनाऽनुपपन्नमिति परिकररूपमनोवृत्तिज्ञानविशेषस्य नित्यत्वं देहादेरनित्यत्वं सपरिकरयोर्ग्रहणेन ज्ञापितं भवतीत्यर्थः ॥ **अनित्यत्वमेवेति** ॥ किन्तु प्राणश्रद्धाकाशानां नित्यत्वमप्यस्तीत्युच्यत इति भावः ॥ **बहुभागैरिति** ॥ चतुष्टयात्मकाकाशश्चतुर्भिः पादैरुत्पद्यते । पराधीनविशेषलाभस्य सर्वत्र यथायोग्यं सत्वात् । प्राणश्रद्धापदोक्तमुख्यवायुतत्पत्न्यौ, चैतन्यतच्छरीर, तदभिमन्यमानतद्वृत्तिज्ञानरूपैर्बहुभिः भागैः पराधीनविशेषावास्योत्पद्यत इत्यर्थः ॥ **कैश्चिदिति** ॥ आकाशशब्दार्थेऽव्याकृततदभिमानिरूपभागद्वयेन प्राणश्रद्धापदार्थे तदुभयचैतन्यतद्वृत्तिज्ञानप्रवाहरूपभागद्वयेनेत्येवं कैश्चिद्भागैरित्यर्थः ॥ **आकाशस्योक्त इति** ॥ गौण्यसम्भवादित्यत्रेत्यर्थः ॥ **प्राणस्योपरीति** ॥ श्रेष्ठश्चेत्यत्र सौक्ष्म्येण ह वैष प्राणोऽवतिष्ठते स्थूलत्वेनोदेति प्रकृतितः सूक्ष्मोऽन्यतः स्थूल इति श्रुत्युदाहरणपूर्वमुत्तरपादे वक्ष्यत इत्यर्थः ।

## तत्त्वसुबोधिनी

ननु पुरुषप्रकृतिकालानां देहोत्पत्त्याद्युत्पत्तेः सत्वेन कथं नित्यत्वोक्तिरित्यत आह ॥ **पुरुषादिपदैः इति** ॥ ननु जीवचैतन्यभूतयोः प्राणशब्दयोः सकलजीवचैतन्यग्राहकपुरुषपदेनैव नित्यवर्गे गृहीतत्वात् देहादेश्च भौतिकानीत्यनित्यवर्गे ग्रहणात् किमर्थं पृथक् ग्रहणमित्यतः आह **पुरुषपदेनेति** ॥ अनित्यवर्गे गृहीतयोरप्यनयोः प्राणादिषु न सर्वेषामनित्यत्वमेवेत्युच्यत इति वक्ष्यमाणापवादानुसारेण नित्यानित्यवर्ग इति प्रवेशादनित्यमस्तीत्युक्तम् । अत्राधिकमपि नित्यमस्तीत्येव मूलपाठः । तच्च वृत्तिज्ञान रूपमित्यर्थः ॥ **सपरिकरयोरिति** ॥ प्राणश्रद्धापद-प्रवृत्तिनिमित्तभूतपरिकरेण विशिष्टयोः श्रद्धाप्राणयोः नित्यानित्यत्वपरिकररूपधर्माणां मध्ये कस्यचिन्नित्यत्वम्, कस्यचिदनित्यत्वमिति सपरिकरयोर्ग्रहणेन ज्ञापितम् भवति ॥

ननु प्राणश्रद्धाकाशशब्दार्थानां सर्वेषामप्युक्तरीत्या उत्पत्त्यभावः भागशः इति कथमुक्तम् इत्यत आह **बहुभागैः इति** ॥ **कैश्चिदिति** ॥ प्राणश्रद्धास्वरूपचैतन्यस्याव्याकृताकाशतदभिमानि-भूताभिमानिस्वरूपाणाम् स्वरूपोत्पत्त्यभावादित्यर्थः ॥ **तत्प्रकारश्चेति** ॥ चतुष्टयात्मकाकाश-श्चतुर्भिरपि भागैरुत्पद्यते इत्युक्तायाः उत्पत्तेः चतुर्ष्वपि सत्वादिति सर्वविषयत्वादुत्पत्तिश्रुतिमुख्ये-त्यत्रोक्तमित्यर्थः ॥ **प्राणस्येति** ॥ भूततन्मुख्यामुख्याभिमानिरूपत्रितयात्मको वायुः । त्रिभिरपि भागैः उत्पद्यते इत्युत्तराधिकरणे वक्ष्यते इत्यर्थः ।

## वाक्यार्थविवरणम्

**असम्भवयुक्तीति** ॥ उत्पत्तिश्रुतिबाहुल्यासम्भवरूपयुक्तीत्यर्थः । पुरुषादिपदैरित्यत्रादिपदेन प्रकृतिकालपदग्रहणम् ॥ **तदभिमानीति** ॥ तेषामभिमानिनीत्यर्थः ॥ **प्रकृतिः** रमा । 'पुरुषा-व्यक्तकालानां रमैवैकाभिमानिनी' इत्युक्तेः ।

ननु प्राणश्रद्धयोरनित्यत्वं 'अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च' इत्युत्तरवाक्येनैव ज्ञातुं शक्यम् । अतः 'अथ यान्यनित्यानि' इति वाक्ये प्राणश्रद्धयोर्ग्रहणं व्यर्थमिति चेदुच्यते । अथैतानीत्युत्तरवाक्ये प्राणादिषु न सर्वेषामनित्यत्वमेवेत्यपवादः क्रियते । स च प्राप्तिपूर्वकः । तथा च प्राणश्रद्धयोः प्राप्तिकथनाय 'अथ यानि' इति वाक्ये प्राणश्रद्धाग्रहणमिति । ननु पुनः 'अथ

(वाक्यार्थविवरणम्)

यान्यनित्यानि' इति वाक्ये प्राणश्रद्धाग्रहणं व्यर्थम् । न च प्राप्त्यर्थमित्युक्तमिति वाच्यम् । 'अथ ह वाव नित्यानि' इति वाक्ये चैतन्यमात्रवाचिपुरुषपदेनैव तयोः प्राप्तिसम्भवादिति चेत् न तत्र सामान्यतश्चित्त्वेनैव प्राप्तावपि विशिष्य प्राणत्वश्रद्धात्वरूपप्राणश्रद्धापदप्रवृत्तिनिमित्तविशिष्टतया प्राप्तिर्वाच्या । उत्तरत्र तथा विधयोरेवानित्यत्वापवादात् । न हि सा पुरुषपदेन युक्ता । अतस्तथा प्राप्त्यर्थं 'अथ यान्यनित्यानि' इति वाक्ये प्राणश्रद्धयोर्ग्रहणमिति द्रष्टव्यम् । तथा सपरिकरयो-र्ग्रहणम् अनित्यप्राप्त्यर्थमित्यर्थः ॥ **अधिकं** मनोवृत्तिरूपम् । सपरिकरयोः । प्राणत्वश्रद्धात्व-रूपप्राणश्रद्धापदप्रवृत्तिनिमित्तविशिष्टयोः । यथोक्तम् । ''एवं प्रलयकालेऽपि प्रतिभातपरावरः । मुख्यवायुर्नित्यसमः' इति । उक्तः । तथा हीत्यादिनेति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

**असम्भवयुक्तीति** ॥ अनादित्वे उत्पत्तिश्रुतिबाहुल्याद्यसम्भवयुक्तीत्यर्थः ॥ **ॐ शब्दाच्च ॐ** ॥ अथ ह वावेति श्रुतेश्चानादित्वश्रुतिर्गौणी उत्पत्तिश्रुतिर्मुख्यार्थेत्यर्थः । ननु पुरुषप्रकृतिकालानां देहोत्पत्त्याद्युत्पत्तेः सत्वेन कथं नित्यत्वोक्तिरित्यत आह ॥ **पुरुषादिपदैरिति** ॥ प्राणश्रद्धयोर्जीव चैतन्यस्य सकलजीवचैतन्यग्राहकपुरुषपदेनैव नित्यवर्गे गृहीतत्वाद्देहादेश्च भौतिकानीत्यनित्यवर्गे ग्रहणात्किमर्थं पृथग्ग्रहणमित्यत आह ॥ **पुरुषपदेनेति** ॥ अधिकमनोवृत्तिज्ञानं तस्य प्रलयेऽप्य-परिलोपादिति भावः । पृथग्ग्रहणे नापि ज्ञाननित्यत्वं कथं ज्ञापितमित्यत उक्तम् । **सपरिकरयोरिति** ॥ देहज्ञानादिपरिकरविशिष्टयोरित्यर्थः । प्राणश्रद्धापदप्रवृत्तिनिमित्तभूत परिकर-विशिष्टयोर्नित्यानित्यत्वं परिकररूपधर्माणां मध्ये कस्यचिन्नित्यत्वं कस्यचिदनित्यत्वं विनानु-पपन्नमिति परिकरभूतमनोवृत्तिज्ञानविशेषस्य नित्यत्वं देहादेरनित्यत्वं परिकरयोर्ग्रहणेन ज्ञापितं भवतीत्यर्थः ॥ **उक्तप्रतिज्ञाद्वयेति** ॥ पुरुषादयो नित्याः प्राणादयोऽनित्या इति प्रतिज्ञाद्वयेत्यर्थः ॥ **तत्प्रकारश्चेति** ॥ चतुष्टयात्मकआकाशश्चतुर्भिरपि भागैरुत्पद्यते उक्ताया उत्पत्तेश्चतुर्ष्वपि सत्वात् अवकाशतदभिमानिस्वरूपभागेन नोत्पद्यत इति प्रागेवोक्त इत्यर्थः । **उपरि** उत्तराधिकरणे ।

## सूत्रभाष्यम्

**॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ५ ॥**

(सूत्रभाष्यम्)

**स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्यत्वापेक्षया । यथा ब्रह्मशब्दः ।**

**'अथ कस्मादुच्यते परं ब्रह्मेति बृहति बृंहयति च'** (अथर्वशिरः)

**इति श्रुतेः परे ब्रह्मणि मुख्योऽपि गौणत्वेन विरिञ्चादिष्वपि वर्तते । अत एवाब्रह्मत्वं च तेषाम् । एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ।**

## तत्त्वप्रदीपिका

अनित्यानीत्युक्तत्वात्प्राणश्रद्धयोः प्रलयेऽपि परावरप्रतिभानाद्भागश एवोद्भवाभिधानम् । आकाशे त्वव्याकृतस्य प्रदेशशब्दशब्दितस्यानादित्वादुत्पत्तिमन्ति चानुत्पत्तिमन्ति चेति कथमित्यत आह– ॐ **ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ** । स्यादेकस्यैव चोत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं चाविरोधेन । उत्पत्तिमत्त्वं मुख्यं गौणमितरदिति । यथा ब्रह्मशब्दस्य परब्रह्मैव मुख्यार्थः । तथाऽपि तद्गुणयोगेन विरिञ्चादिषु वर्तते । अत एवाब्रह्मत्वं तेषां विरिञ्चादीनां मुख्यम् । ब्रह्मत्वं चास्ति गौणम् । एवमनुत्पत्तिमच्छब्दोऽपि परब्रह्मणि मुख्यार्थः सिद्धः । अन्यथा मुख्यब्रह्मत्वायोगात् । गुणबृंहितत्वं हि ब्रह्मत्वम् । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा' इति हि श्रुतिः । आकाशादावपि तद्गुणयोगेन गौणार्थ इष्यते । एकदेशनित्यत्वं गुणयोगः । अत एवोत्पत्तिमत्त्वमेतेषां मुख्यम् । युज्यते चोत्पद्यमानभागबाहुल्यात् । उत्पद्यते तावद्भूताकाशस्तद्देवशरीरं च । अव्याकृताकाशोऽपि मूर्तद्रव्यसम्बन्धं पराधीनविशेषं प्राप्नोति । पराधीनविशेषाविर्जनिरुच्यते । प्राणश्रद्धयोश्शरीरं तदभिमानो विशेषश्च पराधीन उत्पद्यत इति ।

## तत्त्वप्रकाशिका

भवेदाकाशस्य गौणमनादित्वमुत्पत्तिर्मुख्यत इति व्यवस्था यद्यनादित्वश्रुतिर्भाक्ता भवेत् । नैतदस्ति । 'न जायते म्रियते' इत्यादावनुत्पत्तिमच्छब्दस्य मुख्यार्थत्वदर्शनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्यादिति** ॥ एकस्यैवाकाशस्य गौणमुख्यत्वापेक्षयानुत्पत्तिमत्वमुत्पत्तिमत्वं चेत्युक्तव्यवस्था युक्तैव । अनुत्पत्तिमच्छब्दस्य ब्रह्मणि मुख्यार्थस्याप्याकाशे ब्रह्मशब्दवदमुख्यत्वोपपत्तेरिति भावः । ब्रह्मशब्दः परे ब्रह्मणि कुतो मुख्य इत्यत उक्तम् ॥ **अथेति** ॥ शब्दप्रवृत्तिनिमित्तसद्भावादिति भावः । विरिञ्चादिष्वमुख्यता कुत इत्यत उक्तम् ॥ **अत एवेति** ॥ ब्रह्मशब्दस्य तत्रामुख्यत्वादेव हि तेषामपूर्णत्वमन्यथा तन्न स्यादित्यर्थः ।

## गुर्वर्थदीपिका

अनुत्पत्तिमच्छब्दस्येत्यस्य नञा यत इत्यत्रार्थतः प्राप्तानुत्पत्तिमच्छब्दस्येत्यर्थः । आकाशे ब्रह्मशब्दवदित्यस्य यथा ब्रह्मशब्दः परमात्मनि मुख्योऽपि विरिञ्चादिष्वमुख्यस्तथाऽनुत्पत्तिशब्दोऽप्याकाशेऽमुख्य इत्यर्थः । यद्यपि 'अस्ति तु' इति सूत्रे भूताकाशस्योत्पत्तिरुक्ता तथाऽप्यव्याकृताकाशानादित्वगौणतायां न सा हेतुर्भवति । व्यधिकरणत्वात् । अतः 'प्रतिज्ञाहानिः' इति सूत्रारम्भ इति ज्ञेयम् ।

## भावबोधः

न जायत इति अस्य मन्त्रस्य गीताभाष्ये जीवपरत्वेन व्याख्यातत्वेऽपि अयं ना परमपुरुष इत्यादिना गीतातात्पर्ये परमात्मपरत्वेनापि व्याख्यातत्वात् तदुदाहरणं युक्तमिति ज्ञातव्यम् । सौत्र'श्च'शब्दोऽवधारणार्थक इत्यभिप्रेत्य स्यादेवेत्युक्तं भाष्ये । तस्यैक इत्यत्रापि सम्बन्ध इत्यभिप्रेत्याह– **एकस्यैवेति** ॥ **यथा ब्रह्मशब्द इति** ॥ एवमत्राप्यनुत्पत्तिमच्छब्द इति भाष्यं व्याचष्टे– **अनुत्पत्तिमच्छब्दस्येति** ॥ **परब्रह्मणीति** ॥ **कारणसद्भावादिति** ॥ विरिञ्चादिषु गुणपूर्णत्वरूपप्रवृत्तिनिमित्ताभावलक्षणकारणसद्भावादित्यर्थः ।

## भावदीपः

**अनुत्पत्तिमच्छब्दस्येति** ॥ अनुत्पत्तिमदर्थकशब्दस्येत्यर्थः ॥ **मुख्यार्थत्वदर्शनादिति** ॥ यद्यप्येक एवशब्दः प्रयोगभेदेन प्रवृत्तिनिमित्तवति मुख्योऽन्यत्रामुख्यश्च दृष्टः । तथापीह शब्दैकगम्ये शब्दादेव प्रवृत्तिनिमित्तस्यापि कल्प्यत्वादनेकार्थत्वस्यान्याय्यत्वाच्च । ब्रह्मण्यनुत्पत्त्यर्थकशब्दप्रवृत्तौ यन्निमित्तं तदेवान्यत्रापि वाच्यमिति भावेनेयं शङ्केति ध्येयम् । सौत्रश्चकारोऽवधारणार्थ इति भाष्योक्तैवकारान्वयं द्वेधा दर्शयन् स्यादेवेत्यादिभाष्यं व्याचष्टे ॥ **एकस्यैवेति** ॥ पूर्वं सौत्रमेकपदम् आकाशपरं मत्वा स्यादेवेत्यादिभाष्यं व्याख्यायेदानीमनुत्पत्तिमच्छब्दपरं मत्वा यथेत्यादिभाष्यभावमाह ॥ **अनुत्पत्तिमच्छब्दस्येति** ॥

## अभिनवचन्द्रिका

ननु भवेदाकाशस्य गौणानादित्वेन व्यवस्था यद्यनादित्वश्रुतिर्गौणार्था भवेत्, न चैतदस्ति। बाधकं विना प्रतीतार्थत्यागायोगात्। अन्यथा 'न जायते न म्रियत' इत्यादावपि मुख्यार्थत्वं न स्यादिति भावेन शङ्कते– **भवेदाकाशस्येति** ॥ इयं चाशङ्का 'गौण्यसम्भवात्' इति सूत्रस्थ 'गौणी' इति प्रतिज्ञाश्रवणानन्तरमुत्पन्ना। तत्परिहारस्तु 'गौण्यसम्भवात्' इति सूत्रोक्तहेतुना जातोऽपि **'स्याच्चैकस्य ब्रह्मशब्दवत्, प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य'** इति सूत्राभ्यामपि भवतीति सूत्रद्वयनिवर्त्यत्वेनाऽऽशङ्काऽत्रोक्ता। एतेन अनादित्वश्रुतेर्मुख्यार्थपरित्यागे असम्भवादित्यनेन हेतोरुक्तत्वात् पुनः शङ्कानुदय इति परास्तम्। अस्याः शङ्काया हेतूपन्यासात् पूर्वमेव जातत्वात् ॥ **अनुत्पत्तिमच्छब्दस्येति** ॥ 'न जायत' इति श्रुतेर्ब्रह्मणि मुख्यार्थत्वेऽपि अनादिर्वा अयमाकाश इति श्रुतेः आकाशेऽमुख्यार्थकत्वमुपपद्यते। तद्यथा ब्रह्मशब्दस्य परब्रह्मणि मुख्यार्थत्वेऽपि चतुर्मुखादावमुख्यत्वं तद्वदिति भावः। 'ब्रह्मशब्दवत्' इति दृष्टान्तोक्त्या बाधक-सद्भावादमुख्यार्थत्वमित्यभिप्रैति।

## वाक्यार्थमुक्तावली

**भाक्तेति** ॥ अमुख्येत्यर्थः ॥ **न जायत इत्यादाविति** ॥ इत्यादौ वाक्येऽनुत्पत्तिमत्व-प्रतिपादकस्य न जायत इति पदद्वयस्य ब्रह्मणि मुख्यानादित्वसंसर्गबोधकत्वदर्शनादित्यर्थः। यद्यप्ययं मन्त्रो गीताभाष्ये जीवपरत्वेन व्याख्यातः। तथापि तात्पर्ये भगवत्परत्वेन व्याख्यातत्वा-त्तदनुसारेणेयमुक्तिः। सूत्रे चोवधारणे। स्यादेवेत्येकस्यैवेति चेत्युभयत्र सम्बन्ध्यत इति भावेन स्यादेवेत्यादिभाष्यमेकस्यैवेत्यस्य विशेष्यप्रदर्शनपूर्वकं व्याचष्टे ॥ **एकस्यैवेति** ॥ ननु कथमेकस्यैवा-काशस्य गौणमनादित्वं मुख्यमुत्पत्तिमत्वं च। अनुत्पत्तिबोधक शब्दस्य न जायत इत्यादौ मुख्यत्वस्य दर्शनादित्यत एकस्यैवानुत्पत्तिमच्छब्दस्य ब्रह्मणि मुख्यत्वं गगनादावमुख्यत्वं ब्रह्मशब्दवदेव स्यादित्यर्थान्तरपरम्। यथा ब्रह्मशब्द इत्यादि भाष्यं व्याचष्टे ॥ **अनुत्पत्ति-मच्छब्दस्येति** ॥

## तत्त्वसुबोधिनी

'न जायते' इत्यस्य मन्त्रस्य गीताभाष्ये जीवपरतया व्याख्याततत्वेऽपि अयं न परमपुरुषः इत्यादिना गीतातात्पर्ये परमात्मपरत्वेनापि व्याख्यातत्वात् तदुहारणमिति ज्ञेयम् ॥ **अनुत्पत्तिमच्छब्दस्येति** ॥ तथा च अनादिशब्दस्य अनुत्पत्तिमच्छब्दस्य चैकार्थत्वाद्विष्णावनुत्पत्तिमच्छब्दस्य मुख्यार्थत्वं आकाशेऽपि अनादिशब्दस्य मुख्यार्थत्वम् वक्तव्यमित्यर्थः । सौत्रश्चशब्दः अवधारणार्थकः इत्यभिप्रेत्य स्यादेवेत्युक्तं, भाष्ये तस्यैकस्ये(ये)त्यपि सम्बन्धः इत्यभिप्रेत्याह ॥ **एकस्यैवेति** ॥ यथा ब्रह्मशब्दः एवमनुत्पत्तिमच्छब्दः इति । भाष्यांशां व्याचष्टे ॥ **अनुत्पत्तिमच्छब्दस्येति** ॥

## वाक्यार्थविवरणम्

इत्यादौ । इत्यनन्तरं भगवतीति शेषः ॥ **मुख्यार्थत्वदर्शनादिति** ॥ ततश्चाकाशेऽपि मुख्यस्तद्दृष्टान्तेनेति वाक्यशेषः । आकाशेऽमुख्यत्वोपपत्तेरित्यन्वयः । तत्र ब्रह्मशब्दवदिति दृष्टान्तः ॥ **अमुख्यत्वादेव हीति** ॥ तथा च विरिञ्चाद्या न मुख्यतो ब्रह्मशब्दवाच्याः । निरुपचरितप्रवृत्तिनिमित्तशून्यत्वादित्यनुमानं द्रष्टव्यम् ॥ **एकस्येति** ॥ एवं चोत्पत्तिश्रुतिविरोधेन अनादित्वश्रुतेरमुख्यत्वार्थत्वमवश्यं वाच्यमिति भावः ।

## वाक्यार्थमञ्जरी

**मुख्यार्थत्वदर्शनादिति** ॥ न हि परमात्मनो मुख्योत्पत्तिरस्ति येन तत्रानुत्पत्तिमच्छब्दस्य मुख्यार्थः स्यादिति भावः ॥ **ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ** ॥ यथैकस्यैव ब्रह्मशब्दस्य हरौ मुख्यत्वमन्यत्रामुख्यत्वं तथैकस्यैवानुत्पत्तिवाचिशब्दस्य विष्णौ मुख्यत्वेऽप्यन्यत्रामुख्यत्वं स्यादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥**

(सूत्रभाष्यम्)

ब्रह्मणोऽन्यस्य नित्यत्वे 'स इदं सर्वमसृजत'(तै.उ.२-६) इत्यादि प्रतिज्ञाहानिः । आकाशस्यापि सर्वस्मादव्यतिरेकात् । आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.उ.१-१) 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां.उ.६-२-१) 'इदं वा अग्रे नैव किञ्चनादि'(तै.आ.२-२-९)त्यादिश्रुतिभ्यः ॥

## तत्त्वप्रदीपिका

प्रकृत्यादीनां नित्यत्वश्रुतेः देहाद्युत्पत्त्यभावाच्च किमिति नानुत्पत्तिरित्यत आह– **प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥** ब्रह्मणोऽन्यस्य कस्यचिदपि नित्यत्वं सर्वसृष्टिप्रतिज्ञानान्न युक्तम् । अत आकाशस्यापि सर्वशब्दार्थेऽन्तर्भावान्नानुत्पत्तिमत्त्वम् । अपिशब्दादव्यक्तादीनामपि ।

'एको नारायणस्त्वासीत्प्रलये रमया सह ।
नित्याततगुणत्वात्स आत्मेति श्रुतिपूदितः ॥
इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा ।
अग्र एव समस्तेशस्तद्वशत्वाद्रमाऽपि सा ॥
विद्यमानाऽपि नाग्रस्था गुणैरूना ततो यत' इत्यैतरेयसंहितायाम् ॥

'एकमेवाद्वितीयं तत्समाधिकविवर्जनात् ।
स्वगतानां च भेदानामभावाद्ब्रह्म शाश्वतम्' इति भाववृत्ते ॥

'भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ।
समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा ॥
भेदाभेदेऽप्येकशब्दो यतोऽवयविनि स्थितः ।
एकमेवेत्यतः प्राह नारायणमियं श्रुतिः ॥
समे द्वितीयशब्दस्स्यादद्वितीयोऽसमत्वतः ।
अधिकः कुत एव स्यादित्याह परमा श्रुतिः' इति सामसंहितायाम् ॥

'सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ।
संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लयेष्वभूत्' इति ब्रह्मतर्के ॥

## तत्त्वप्रकाशिका

युक्तं ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वम् । कारणसद्भावात् । न च प्रकृते कारणमुपलभ्यत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **प्रतिज्ञेति** ॥ यदि ब्रह्माकाशयोरुभयोरप्यनुत्पत्तिमच्छब्दो मुख्योऽङ्गीक्रियते तर्हि 'ब्रह्मेदं सर्वमसृजत' इति प्रतिज्ञाविरोधः स्यात् । अतो ब्रह्मण्येव मुख्योऽनुत्पत्तिमच्छब्दोऽन्यत्रामुख्यः । न च वाच्यमत्राकाशशब्दाश्रवणात्तस्य मुख्यानुत्पत्तावपि न प्रतिज्ञाहानिरिति । आकाशस्यापि सर्वमध्यपतितत्वात् । सङ्कोचे कारणाभावात् । तथाप्यत्राकाशब्रह्मणोः सादित्वानादित्वे स्फुटं न प्रतीयते इति चेन्न । आत्मेत्यादि श्रुतीनां स्पष्टं तद्वाचकानां सद्भावात् । बहुश्रुतिविरोधे चैकस्या अमुख्यत्वं नियतमिति भावः । अनेनासम्भवादित्युक्तमेव विवृतं भवति । इदमस्येत्यर्थः ।

## गुर्वर्थदीपिका

बहुश्रुतिविरोध इत्यत्र एकस्य बहुश्रुतिविरोध इति सम्बन्धः ।

## भावबोधः

ननु 'गौण्यसम्भवात्' इत्यत्रासम्भवादित्यनेनैव उत्पत्तिश्रुतिबाहुल्यस्य 'लाभाच्छब्देभ्य' इत्येतत् पुनरुक्तमित्यत आह– **अनेनासम्भवादित्युक्तमेवेति** । असम्भवप्रतियोगिनः श्रुतिबाहुल्यस्य 'शब्देभ्य' इत्यनेनोक्तेस्तस्य तद्विवरणरूपत्वम् । अत एव भाष्ये तत्र श्रुतीरनुदाहृत्यात्र उदाहृता इति भावः ।

## भावदीपः

**कारणेति** ॥ प्रवृत्तिनिमित्तपौष्कल्यभावाभावरूपकारणेत्यर्थः । ब्रह्मान्यप्रकृत्यादिनित्यत्वस्य सिद्धान्तेऽपि भावात्कथं भाष्ये ब्रह्मणोऽन्यस्य नित्यत्व इत्यापादकोक्तिरित्यतो व्याचष्टे ॥ **यदीति** ॥ आकाशस्यापीत्युपर्युक्तेरन्यशब्दस्याकाशोऽर्थ उक्तः । स तपस्तप्त्वा इदं सर्वमसृजतेति प्रकृत-तच्छब्दार्थोक्तिर्ब्रह्मेति । **भाष्यशेषमवतार्य व्याचष्टे** ॥ **न च वाच्यमित्यादिना** ॥ इत्यादि श्रुतिभ्य इतिबहुवचनतात्पर्यमाह ॥ **बहुश्रुतीति** ॥ अपौनरुक्त्यायाह ॥ **अनेनेति** ॥ सूत्रेणेत्यर्थः । गौण्यसम्भवादित्यत्रोक्तोत्पत्तिश्रुतिबाहुल्यासम्भवादित्युक्तमेवेत्यर्थः ॥ **विवृतमिति** ॥ कथमाकाश-

(भावदीपः)

स्यानुत्पत्तिमत्त्वे स इदं सर्वमसृजतेत्याद्युत्पत्तिश्रुतिविरोधः । तत्राकाशस्याश्रवणात् । सम्भूतवाक्ये श्रवणेऽपि तस्यैकत्वेन दुर्बलत्वादित्याशङ्कानिवृत्त्यर्थं तद्विवरणं कृतमत्र सूत्र इति भावः । इदमग्रे आत्मैवासीदिति भ्रमनिरासायाह ॥ **इदमिति** ॥ समग्रश्रुत्यर्थस्तु ऐतरेयभाष्यादौ व्यक्त इति भावः ।

## अभिनवचन्द्रिका

'ब्रह्मशब्दवत्' इति दृष्टान्तोक्त्या सूचितं मुख्यार्थपरित्यागे कारणं बाधकं ज्ञातुमशक्तस्य प्रागुक्तशङ्का न निवृत्तेति उत्तरसूत्रनिवर्त्यत्वेन तामेव शङ्कामनुवदति **युक्तं ब्रह्मशब्दस्येति** ॥ एतेन 'भवेदाकाशस्य' इत्यनेनैवाऽस्याः शङ्कायाः कृतत्वात् पुनराशङ्काऽनुपपन्नेति परास्तम् । ननु 'गौण्यसम्भवात्' इति सूत्रेणैवाऽस्याः शङ्कायाः परिहृतत्वात् सूत्रद्वयं व्यर्थमित्यत आह– **अनेनेति** ॥ अनेन सूत्रद्वयेनेत्यर्थः । उत्तमाना 'मसम्भवात्' इत्यनेनैवोक्तशङ्कापरिहारः । मध्यमानां 'स्यात्' इति सूत्रेण । अधमानां 'प्रतिज्ञाहानिः' इति सूत्रेणेति बोध्यम् । 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादि श्रुतिगतमिदं शब्दमनूद्यैतद्विभक्त्यर्थमाह – **इदमस्येत्यर्थ इति** ॥

## वाक्यार्थमुक्तावली

**कारणसद्भावादिति** । प्रवृत्तिनिमित्तपौष्कल्यापौष्कल्यलक्षणकारणसद्भावादित्यर्थः । ब्रह्मणोऽ-न्यस्य नित्यत्व इत्यध्याहारपरभाष्यस्य ब्रह्मणोऽन्यस्य ब्रह्मवन्मुख्यनित्यत्वमित्यर्थमभिप्रेत्य व्याचष्टे **यदीति** ॥ सतपस्तप्त्वेति पूर्ववाक्यप्रकृततच्छब्दार्थो ब्रह्मेति स्पष्टम् । **तद्वाचकानामिति** ॥ आत्मा एक एव सदेव एकमेवेत्येकस्यैवावस्थानमुक्त्वा इदं वाऽग्रेनैव किञ्चनेति तदतिरिक्तस्य सर्वस्य निषेधात् स्पष्टं ज्ञेयम् । **अनेनासम्भवादित्युक्तमेवेति** ॥ अन्यथा तत्रैवोत्पत्तिश्रुतिबाहुल्य-स्योक्तत्वाच्छब्देभ्य इति पुनरुक्तिरिति निरस्तमिति भावः । 'आत्मा इदमेक एवाग्र आसीत्' इत्यादौ जगदग्रे आत्मैवाभूदित्यन्यथाप्रतीतिनिरासायाह ॥ **इदमस्येति** ॥

## तत्त्वसुबोधिनी

**कारणसद्भावादिति** ॥ परब्रह्मणि विरिञ्चादिषु गुणपूर्णत्वरूपप्रवृत्तिनिमित्तभावाभावलक्षण-कारणसद्भावादित्यर्थः । अस्तु उत्पत्तिप्रतिपादकश्रुतिविरोधः ततः किं इत्यत आह ॥ **बहुश्रुतीति** ॥ ननु गौण्यसम्भवादित्यनेनैवोत्पत्तिश्रुतिबाहुल्यस्य लाभात् शब्देभ्यः इत्येतत् पुनरुक्तमित्यत आह

(तत्त्वसुबोधिनी)

॥ **अनेनेति** ॥ असम्भवप्रतियोगिनः श्रुतिबाहुल्यस्य शब्देभ्यः इत्येतेनैवोक्तः तद्विवरणरूपत्वं, अत एव भाष्ये तत्र श्रुतीरनुदाहृत्यात्र ता उदाहृता इति भावः ॥ **इदमस्येत्यत्र इति** ॥ अन्यथा 'आत्मा इदं जगत् अग्रे पूर्वं आसीत्' इति (प्रतिपत्तौ) प्रतीतौ ब्रह्मजगतोः न सिद्ध्यतीति भावः ।

## वाक्यार्थविवरणम्

अनेन । प्रतिज्ञाहानिरिति सूत्रेण शब्देभ्य इति सूत्रखण्डेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

**कारणेति** ॥ पूर्णरूपप्रवृत्तिनिमित्तभावाभावरूपेत्यर्थः ॥ **ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ** ॥ आकाशेऽप्यनुत्पत्तिवाचिशब्दस्य मुख्यत्वे इदं सर्वमसृजत' इति प्रतिज्ञाविरोधः स्यात् कुतोऽव्यतिरेकादाकाशस्य सर्वमध्यपतितत्वादित्यर्थः । आत्मा वेत्यादि स्पष्टं सादित्वप्रतिपादक-शब्देभ्य इत्यर्थः । ननु गौण्यसम्भवादित्यत्रासम्भवादित्यनेनैव श्रुतिबाहुल्यस्य लाभाच्छब्देभ्य इत्येतत्पुनरुक्तमित्यत आह ॥ **अनेनेति** ॥ असम्भवप्रतियोगिनः श्रुतिबाहुल्यस्य शब्देभ्य इत्यनेनोक्ते तद्विवरणरूपत्वमिति भावः । इदमित्यनुवादः ।

## सूत्रभाष्यम्

**॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ ७ ॥**

**विभक्तत्वाच्च विकारित्वं युक्तम् । विकारिण एव हि विभक्ता लोके दृश्यन्ते ।**

**'एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते ।**
**प्रकृतिः पुरुषः कालस्त्रय एते विभागतः ॥**
**चतुर्थस्तु महान्प्रोक्तः पञ्चमाऽहङ्कृतिर्मता ।**
**तद्विभागेन जायन्त आकाशाद्याः पृथक्पृथक् ॥**
**यो विभागी विकारः स, सोऽविकारः परो हरिः ।**
**अविभागात्परानन्दो नित्यो नित्यगुणात्मकः ।**
**विभागो ह्यल्पशक्तित्वं न तदस्ति जनार्दन' इति बृहत्संहितायाम् ।**

॥ इति वियदधिकरणम् ॥ १ ॥

## तत्त्वप्रदीपिका

अनुमानाच्चैतत्सिद्ध्यतीत्याह– **यावद्विकारं तु विभागो लोकवत्** । अल्पशक्तित्वाच्च प्रकृत्यादिनां विकारित्वं युक्तम् । प्रकृतिः पुरुषः काल इति भूश्रीदुर्गाः । परमपुरुषशब्देनाग्रोदितत्वाद्विष्णोः ।

## तत्त्वप्रकाशिका

अनुमानेनापि ब्रह्मण एवानादित्वमन्येषां सादित्वमनुत्पत्तिश्रुतेर्मुख्यामुख्यत्वसिध्यर्थं साधयत्सूत्रमुपन्यस्य प्रतिज्ञाहेतू बहिरेव दर्शयित्वा व्याप्तिप्रदर्शनपरतया व्याचष्टे ॥ **यावदिति** ॥ अत्रेमौ प्रयोगौ भवतः । वियदुत्पत्तिमद्विभक्तत्वाद्घटादिवत् । ब्रह्म नोत्पत्तिमदविभक्तत्वाद् व्यतिरेकेण घटादिवदिति । विकारिण एव विभक्ता दृश्यन्ते न त्वविकारिणोऽतो विभक्तत्वस्य न विपक्षवृत्तितेति भावः । अत्रैव स्मृतिसंमतिं चाह ॥ **एक इति** ॥ विष्णुरविभक्तः प्रकृत्यादयस्त्रयो विभागवत्वेन प्रोक्ताः । महानपि तथा प्रोक्तः । अहंकृतिरपि विभक्तत्वेन मता । यद्येवं किं तर्हीत्यत आह ॥ **तदिति** ॥ स चासौ विभागश्चेति तथोक्तस्तेन हेतुना आकाशाद्याः पृथक्पृथगिति परम्परया नैकस्मात् । विभागत्वेऽपि कुतो जन्मेति तत्राह ॥ **य इति** ॥ विष्णुरविभक्तश्चेत्ततः किमित्यत्राह ॥ **स इति** ॥ द्रव्यत्वादविभागादित्यसिद्धमित्यत आह ॥ **विभाग इति** ॥ न चास्य प्राचीनश्रुतिविरोधः । तत्र स्वरूपत एवोत्पत्तेरभावस्योक्तत्वात् । अनेन वियत्पदमनादित्वेन प्रसिद्धानां प्रकृत्यादीनामुपलक्षणार्थमिति सूचितं भवति । अतः श्रुत्यविरोधेन भगवदितरस्योत्पत्तिसिद्धेर्युक्तः सर्वकारणे ब्रह्मणि श्रुतिसमन्वयः इति सिद्धम् ।

## गुर्वर्थदीपिका

विभक्तत्वेन प्रोक्ता इति वदता विभज्यन्त इति विभागाः भावप्रधानो निर्देश इति सूचितम् । 'विभागो ह्यल्पशक्तिः स्यात्' इति वचनात् शक्तिसमुदायादेकदेशरूपाल्पशक्तिरेव सर्वत्र विभागः । विभक्तत्वादिति तु हेतोः पक्षधर्मतासिध्यै सर्वत्र स्मृतेस्तात्पर्यकथनं कृतमिति ज्ञेयम् । स चासौ विभागश्चेत्यत्र स प्रसिद्धः विभज्यते शक्तिसमुदायादेकदेशरूपविभागवान् क्रियत इति विभागः अल्पशक्तिमान् स च भावप्रधानः विभक्तत्वेनेत्यर्थः । एतेन वियदुत्पत्तिमत् विभक्तत्वादित्यनुमाने

(गुर्वर्थदीपिका)
मत्स्यकूर्माद्यवतारेण विभक्ते जीवाद्विभक्ते च परब्रह्मणि व्यभिचार इति शङ्का गर्भस्रावेणैव गतेति ज्ञेयम् । तेन विभक्तत्वेन हेतुना साध्यसाधनभावो द्रष्टव्यः । द्रव्यत्वादविभागादित्यसिद्धमित्यत्र विभागो हि सामान्यगुणः तदभावश्च द्रव्यत्वेनाभिमतेऽसिद्ध इत्यर्थः । 'विभागो ह्यल्पशक्तिः स्यात्' इत्यत्र अल्पा शक्तिर्यस्य सोऽल्पशक्तिरिति कर्मणि व्युत्पन्नविभागशब्दस्यार्थकथनम् । भावप्रधानश्च निर्देशः । तद्विभक्तत्वं नास्तीत्यर्थः ।

## भावबोधः

'यो विभागी विकारः स सोऽविकारः परो हरिः'

'अविभागात्' इति स्मृत्यनुसारेण विभक्तत्वाच्च विकारित्वं युक्तमिति भाष्येऽर्थसिद्ध-मनुमानमाह– **ब्रह्म नोत्पत्तिमदिति** ॥ सूत्रे यावदवधारणे इति । यावद्विकारमित्यव्ययीभावः । 'तु' शब्दो हेत्वर्थक'हि' शब्दार्थको विभागो दृश्यते इत्यक्षरयोजनायामवधारणार्थकयावदित्यनेन विभागस्य विभागेन व्यभिचाराभावोक्तौ सूत्रेण व्याप्तिरेवोक्ता भवतीत्यभिप्रेत्य विकारिण एव हि विभक्ता दृश्यन्त इति भाष्यं प्रवृत्तम् इत्याशयेनाह– **न त्वविकारिण इति** ॥ 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः' इति प्रकृत्यादीनां त्रयाणां नित्यत्वस्योक्तेः कथं तद्विभागेन जायन्त इत्युत्पत्तिरुच्यत इत्याशङ्क्य परिहरति– **न चास्य प्राचीनेति ॥ अनेनेति** ॥

'प्रकृतिः पुरुषः कालस्त्रय एते विभागतः'

इति प्रमाणेन प्रकृत्यादीनां प्रत्यक्षत्ववचनेनाकाशाद्या इत्याद्यग्रहणेन चेत्यर्थः ।

अत्राद्ये– वियत अनुत्पत्तौ प्रमाणाभावोक्तिः । तदुत्पत्तौ प्रमाणाभावे तदनुपलब्ध्यैव तदभावसिद्धेर्न पृथगनुत्पत्तौ प्रमाणं वक्तव्यमित्याशङ्कानिरासाय द्वितीये तदुत्पत्तौ प्रमाणोक्तिः । तस्यानुभवादिविरोधपरिहारायोत्पत्तिश्रुतिबाहुल्यासम्भवयुक्त्या, तृतीयेऽनुभवादीनां सावकाशत्वोक्तिः । चतुर्थे– तेषामेव युक्त्युपोद्बलकव्यवस्थाप्रतिपादकश्रुत्या च सावकाशत्वोक्तिः । पञ्चमे– अनुत्पत्ति श्रुतेः सावकाशत्वे बाधकोद्धारः । षष्ठे– अनुत्पत्तिश्रुतेः गौणानादित्वपरत्वेन सावकाशत्वानङ्गीकारे उत्पत्तिप्रतिपादकश्रुतिरूपबाधकोक्तिः । सप्तमे– तत्रैव श्रुत्युपोद्बलकोत्पत्तिसावकाशानुमानरूप-बाधकान्तरोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**अनुमानेनापीति** ॥ भाष्ये विभक्तत्वाच्चेति चः समुच्चये । सूत्रे तुशब्दश्चार्थे इति सूचितम् । अनादित्वाद्युक्तेर्वैयर्थ्यनिरासायोक्तम् अनुत्पत्तीत्यादि । एको विभक्त इत्यादि स्मृत्यनुरोधाद्भाष्यमुपलक्षणं मत्त्वाह ॥ **अत्रेमाविति** ॥ व्याप्तिपरतां भाष्यस्य व्यनक्ति ॥ **विकारिण एवेति** ॥ सूत्रे यावदवधारण इत्यव्ययीभावनिर्देशलब्धार्थोक्तिरेवेति । तद्व्यावर्त्योक्तिर्नेत्विति ॥ **द्रव्यत्वादिति** ॥ विभागरूपगुणस्य द्रव्यधर्मत्वादिति भावः ॥ **न चास्येति** ॥ प्रकृतिः पुरुषः कालस्त्रय एते विभागिन इत्यादिवचनस्याथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति नित्यत्वबोधकप्रागुक्तश्रुतिविरोध इत्यर्थः ॥ **तत्र स्वरूपेति** ॥ अभूत्वा भवनरूपोत्पत्तेरित्यर्थः । अत्र तु पराधीनविशेषावाप्तिरूपोत्पत्तिरुच्यत इति भावः ॥ **अनेनेति** ॥ तद्विभागेन जायन्त इति प्रकृत्यादीनां विभागेन हेतुना जन्मकथनेनेत्यर्थः । वियत्पदं सूत्रस्थमिति योज्यम् । अश्रुतेरित्याद्युक्तहेतूनां साम्यात्पराधीनविशेषावाप्तिरूपोत्पत्तेः स्वरूपानादित्वाविघातकत्वादिति भावः । एवं विप्रतिपन्नस्य सर्वस्यात्रैवोत्पत्तिसिद्धावपि एतेनेति ज्ञोऽत एवेति चाधिकरणद्वयमभ्यधिकाशङ्कया प्रवर्तिष्यते । सा चोत्तरनये स्पष्टैव । ज्ञोऽत इत्यत्र तु जन्मश्रुतीनां पराधीनविशेषावाप्तिरूपोत्पत्त्यर्थकत्वे अनुत्पत्तिश्रुतीनामुक्तरूपोत्पत्त्यभावपरत्वमेव स्यात् । न तु स्वरूपोत्पत्त्यभावपरत्वम् । तथा च जन्माजन्मश्रुतीनामन्योन्यविरोधस्तदवस्थ एवेत्येवंरूपेण विशेषाशङ्का ध्येया विवरिष्यते च तत्रैवास्माभिः ॥ **अत इति** ॥ गौणमुख्यत्वाभ्यां व्यवस्थायाः सम्भवादित्यर्थः ।

## अभिनवचन्द्रिका

**विभक्तत्वादिति** ॥ अल्पशक्तित्वादित्यर्थः ।

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वं युक्तम् । 'अनादिर्वा अयमाकाशः' इति श्रुतेः आकाशस्याऽनादित्वेनाऽऽकाशकारणत्वाभावात् । न च– 'आत्मन आकाशः सम्भूत' इति श्रुत्या आत्मन आकाशकारणत्वमुपपद्यत इति वाच्यम् । अनुभूतियुक्तबहुवाग्विरुद्धत्वेन तस्याः श्रुतेरप्रमाणत्वात् । न च सम्भूतश्रुतेरर्थान्तरपरत्वेन अप्रामाण्याभावः । वाय्वादावपि अन्यार्थतापातात् । न हि यत्र शब्दः श्रूयते तत्राऽमुख्यः । यत्राकृष्यते तत्र मुख्य इति सम्भवति । तस्मादाकाशोत्पत्तिश्रुतेरप्रामाण्यादयुक्तं श्रुतिसमन्वयेनाकाशकारणत्वं ब्रह्मण इति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु –** युक्तमेव विष्णोर्जगत्कारणत्वम् । आकाशानुत्पत्तौ श्रुत्यभावादाकाशस्याप्युत्पत्तिमत्त्वेनाकाशकारणत्वे बाधकाभावात् । ननु उत्पत्तौ प्रमाणाभावादेव वियतः अनुत्पत्तिमत्त्वसिद्धिः स्यादिति चेत्, न । 'आत्मन आकाशः सम्भूत' इति श्रुतिसद्भावात् । नानया श्रुत्या उत्पत्तिः सिध्यति 'अनादिर्वा अयमाकाशः' इति श्रुतिविरुद्धत्वादिति चेत्, न आनादित्वश्रुतेर्गौणत्वात् । तत् कुतः सिद्धमिति चेत्, उत्पत्तिश्रुतिबहुल्यान्यथानुपपत्त्येति ब्रूमः । 'अथ ह वाव नित्यानि' इति भाल्लवेयश्रुतेश्च । एतेनाऽनुभवादिविरोधोऽपि परास्तः । ननु कुतोऽनादित्वश्रुतेर्गौणत्वं मुख्यार्थे बाधकाभावात् । अन्यथा 'न जायते न म्रियत' इत्यादावपि गौणार्थत्वं स्यादिति चेत्, स्यादन्यत्र मुख्यार्थस्याप्यनुत्पत्तिमच्छब्दस्याऽऽकाशे गौणत्वम् । मुख्यार्थस्याकाशे बहुलोत्पत्तिश्रुतिबाधितत्वात् । ब्रह्मणि मुख्यस्यापि ब्रह्मशब्दस्य बाधकवशात् विरिञ्चादिष्वमुख्यत्वदर्शनात् । अन्यथा 'इदं सर्वमसृजत' इति प्रतिज्ञाहानिः स्यात् । न च अत्र आकाशमसृजत' इत्यनुक्तत्वात् न प्रतिज्ञाहानिरिति वाच्यम् । सर्वशब्देनैवाकाशस्य ग्रहणात्, सङ्कोचे कारणाभावात्, 'आत्मा वा इदमेक एवाग्र आसि' इत्यादिश्रुतेश्च । आकाश उत्पत्तिमान् अल्पशक्तित्वात् घटादिवदित्यनुमानाच्च आकाशोत्पत्तिसिद्धेरनादित्वश्रुतिर्गौणी । अतः श्रुत्यविरोधेन भगवदितरस्योत्पत्तिसिद्धेर्युक्तः सर्वकारणे ब्रह्मणि श्रुति समन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**व्याप्तिप्रदर्शनपरतयेति ॥** वियत्पक्षकानुमानेऽन्वयप्रदर्शनपरतया, ब्रह्मपक्षे व्यतिरेकप्रदर्शनपरतयेत्यर्थः ॥ **विभक्तत्वाच्चेति ॥** भाष्ये चशब्देनाविभक्तत्वादविकारित्वं ब्रह्मण इति समुच्चिनोति भगवान् भाष्यकार इति भावेन ब्रह्मपक्षकानुमानमाह ब्रह्म नोत्पत्तिमदिति । एवं प्रतिज्ञाहेतू बहिरेव प्रदर्श्य यद्भाष्यं व्याख्याय व्याप्तिप्रदर्शकसूत्रे व्याख्यापरं विकारिण एवेति भाष्यं व्याचष्टे विकारिण एवेति । सूत्रे विकार इति कर्मणि घञ् । यावदवधारण इति भावः । विभागपदेन कर्मार्थकथनम् । तेनाल्पशक्तिमानुच्यते । तुशब्दश्चशब्दार्थः । अनुमानेनापीति टीकायामल्पशक्तित्वाच्चेति तत्त्वप्रदीपे विभक्तत्वाच्चेति भाष्ये तदवगमात् । ततश्च यावद्विकारं विक्रियमाणं स एवार्थो विभागो विभक्तोऽल्पशक्तिमान् लोकवत् घटादिवदित्यर्थः । तेन वियत्पक्षकानुमानेन वह्निमत एव धूमवत्वमित्युक्ते व्यभिचारवारणमुखेन यत्र धूमस्तत्र वह्निरिति व्याप्तिप्रदर्शनवद्यत्र विभक्तत्वं तत्र विकारित्वमिति व्याप्तिरुपपादिता भवति । ब्रह्मपक्षे तु यत्राविकारित्वं नास्ति विकारित्वमेव घटादौ

(वाक्यार्थमुक्तावली)

तत्राविभक्तत्वाभावः । प्रत्युत विभक्तत्वमिति व्यतिरेकव्याप्तिः प्रदर्शितेति ज्ञेयम् ॥ **नैकस्मादिति** ॥ जायन्त इति शेषः । विभागशब्दस्य गुणपरत्वभ्रान्त्या शङ्कते ॥ **द्रव्यत्वादिति** ॥ विभागस्य गुणस्य द्रव्यधर्मत्वादिति भावः ।

ननु अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा, काल, इति पुरुषादीनां नित्यत्वेनोक्तत्वा-त्प्रकृत्यादीनां जन्युक्तौ विरोध इत्याशङ्क्याह ॥ **न चास्य प्रतीतेति** ॥ **स्वरूपोत्पत्तेरिति** । भूताकाशवद्धर्मिण एव धर्म्यन्तरात्मना परिणामलक्षणोत्पत्तेरित्यर्थः । अत एव प्राक् पुरुषादि-पदैर्जीवचैतन्यप्रकृतिस्वभावरूपकालप्रवाहा उच्यन्त इत्युक्तमिति ज्ञेयम् । अत्र तु पराधीन-विशेषलाभलक्षणोत्पत्तेर्विवक्षितत्वादित्युपस्कर्तव्यम् ॥ **अनेनेति** ॥ प्रकृतिः पुरुषः कालस्त्रय इत्यत्र प्रकृत्यादीनां पक्षत्ववचनेन आकाशाद्या इत्याद्यग्रहणेन चेत्यर्थः । ननु वियदादीनां मूर्तसम्बन्धा-द्युत्पत्तावपि तदुत्पत्तिः कथमिति चेदत्रोक्तं सुधायां अपूर्वविशेषोपजनेर्हि विशिष्टाकारोऽवश्यम्भावी विशिष्याकारश्च वस्तुस्वरूपाभिन्न इति तस्यैवासावुपजनो भवतीति । अत्राद्ये वियतोऽनुत्पत्तौ प्रमाणाभावस्य द्वितीयेऽनुपलब्धिरेवाभावनिश्चायकेति वदन्तं प्रत्युत्पत्तौ प्रमाणस्य, तृतीये उत्पत्तिश्रुतेरनादित्वश्रुतिविरोधमाशङ्क्य व्यवस्थायाः चतुर्थे नकेवलमुक्तव्यवस्थासम्भवयुक्तिसिद्धा किं तु श्रुत्यापीति व्यवस्थासाधकश्रुतेः पञ्चमे अनादित्वश्रुतेः गौणानादित्वपरत्वं न सम्भवतीत्युक्त-व्यवस्था नुपपत्तिमाशङ्क्य ब्रह्मशब्ददृष्टान्तेन परिहारस्य षष्ठे व्यवस्थाकारणाभावमाशङ्क्य कारणस्य सप्तमे व्यवस्थासिध्यर्थमनुमानेन ब्रह्मणोऽनादित्वस्यान्येषां सादित्वस्य चोक्तेरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

यो विभागीति स्मृत्यनुसारेण विभक्तत्वाच्च विकारित्वं युक्तमिति भाष्येऽर्थसिद्धमनुमानं आह ॥ **ब्रह्मेति** ॥ सूत्रे यावदवधारण इति यावद्विकारमित्यव्ययीभावः । तुशब्दो हेत्वर्थबहिःशब्दार्थः । विभागी दृश्यते इत्यक्षरयोजनायां अवधारणार्थकयावदित्यनेन विभागस्य विकारेण व्यभिचारोक्तौ सूत्रेण व्याप्तिरेवोक्तं भवतीत्यभिप्रेत्य विकारिण एव हीति भाष्यं प्रवृत्तमित्याशयेनाह– **न त्वविकारिण इति** ॥ आकाशाद्याः पृथिवीत्यत्र एकस्मात् आकाशा(द्या)उत्पन्ना इति प्रतीयते(त)पृथगिति एतत् व्याचष्टे ॥ **परम्परयेति** ॥ अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः इति प्रकृत्यादीनां त्रयाणां नित्यत्वस्योक्तेः कथं तद्विभागेन जायते इत्युत्पत्तिरुच्यते इत्याशंक्य परिहरति (हारयति) **न चास्य प्राचीनेति** ॥ **अनेनेति** ॥ प्रकृतिः पुरुषः कालः त्रय

(तत्त्वसुबोधिनी)
एते विभागतः इति प्रमाणेन प्रकृत्यादीनां पक्षत्ववचनेनाकाशाद्याः इत्याद्यग्रहणेन चेत्यर्थः । तत्राद्ये सूत्रे वियतः अनुत्पत्तौ प्रमाणाभावोक्तिः । द्वितीये च तदुत्पत्तौ प्रमाणोक्तिः । तृतीयेऽनुभवादीनां सावकाशत्वोक्तिः । चतुर्थे तेषां श्रुत्या च सावकाशत्वोक्तिः । पञ्चमेऽनुत्पत्तिश्रुतेः सावकाशत्वे बाधकोद्धारः । षष्ठे सावकाशत्वानङ्गीकारे उत्पत्तिप्रतिपादकश्रुतिरूपबाधकोक्तिः । सप्तमे तत्रैवानुमानरूपबाधकान्तरोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**नाविकारिण** इति ॥ येन विभक्तत्वहेतोर्विपक्षवृत्तित्वं स्यादिति भावः । विभागतः प्रोक्ता इत्यस्यार्थः ॥ **विभागत्वेनेति** ॥ **तेनेति** ॥ तथा च तद्विभागेनेत्यस्य तेन प्रसिद्धेन विभागाख्यहेतुनेत्यर्थः । **आकाशाद्या इति** ॥ आकाश एव आद्यो येषां ते आकाशाद्या वाय्वादय इत्यर्थः ॥ **परंपरयेति** ॥ आकाशस्यैव साक्षाद्धरेः सकाशादुत्पत्तिरन्येषां परंपरयेत्यर्थः ॥ **असिद्धमिति** ॥ हरेरपि द्रव्यत्वेन विभागलक्षणसामान्यगुणवत्वादनुत्पत्तिमत्त्वसाधकोऽविभागाख्यो हेतुरसिद्ध इत्यर्थः । ननु कथं तद्विभागेन जायन्त इत्युच्यते । 'अत्र ह वा व नित्यानि' इति प्रकृत्यादीनां नित्यत्वोक्तस्तद्विरोध इत्याशङ्क्य परिहरति ॥ **न चास्येति** ॥ स्वरूपत एवेति ॥ अत्र पुनर्भागत एवोत्पत्तिरभिधीयत इत्यविरोध इति भावः । अनेन 'प्रकृतिः पुरुषः कालस्त्रय एते विभागत' इति प्रमाणे प्रकृत्यादिसर्वपदार्थानामुत्पत्तिवचनेन ॥ **सूचितमिति** ॥ अत एव अनुव्याख्याने 'तथापि मूर्तसम्बन्धपरतन्त्रविशेषयुक्' इत्यादिना भगवदितररमादिसर्वपदार्थानामपि पराधीनविशेषावाप्तिरूपोत्पत्तिः समर्थितेति ध्येयम् ।

## वाक्यार्थमञ्जरी

यावदित्यवधारणे यावद्विकारं विक्रियमाण एवार्थो विभागो विभक्तः । अल्पशक्तिमान् लोकवत् घटवदित्यर्थः । आकाशेत्यनुवादः परम्परयेति व्याख्या आकाशाद्वायुरित्युक्तपरम्परयेत्यर्थः ॥ **असिद्धमिति** ॥ द्रव्यत्वस्य संयोगविभागाविनाभावादिति भावः । नन्वथ ह वाव नित्यानि पुरुषः प्रकृतिरात्माकाल इति प्रकृत्यादीनां त्रयाणां नित्यत्वस्योक्तेः कथं तद्विभागेन जायंत इत्युत्पत्ति-रुच्यत इत्याशङ्क्य परिहरति ॥ **न चास्येति** ॥ **अनेनेति** ॥ प्रकृत्यादेरपि विकारित्व-साधकविशेषप्रमाणोदाहरणेनेत्यर्थः ।

॥ इति वियदधिकरणम् ॥ १ ॥

## २. अथ मातरिश्वाधिकरणम्

### सूत्रभाष्यम्

'अथ ह नित्याश्चानित्याश्च तेजोऽबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते' 'अथ ह चेतनाश्चाचेतनाश्च तेजोऽबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि विज्ञायन्ते'। 'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन्। ते वायवे मनवे बाधितायाऽऽवासयन्नुपसं सूर्येण' (ऋ.सं. ७-९१-१)। 'सा वा एषा देवताऽनादिर्योऽयं पवत' इति। 'यस्यानाऽदिर्न मध्यं नान्तो नोदयो न निम्लोच' इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिरित्यतो ब्रवीति–

**॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ ८ ॥**

एतेन मुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वाच्च वाय्वनुत्पत्तिश्रुतिरपि व्याख्याता।

'नित्यः परमनित्यश्च तथाऽनित्यः परस्तथा।
चतुर्धैतज्जगत्सर्वं परानित्यं तु पार्थिवम्।'

अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः। परस्तु नित्यः पुरुषः प्रकृतिः काल एव च।

'एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः।
प्रतिव्यूह्य व्यूह्य चासावतीत्य च जनार्दनः।
धारयत्यनिशं देवो नित्यानन्दैकलक्षणः' इति कौर्मे॥

॥ इति मातरिश्वाधिकरणम्॥

### तत्त्वप्रदीपिका

तेजोऽबन्नान्याकाश इत्यत्र भूताकाशः। एतेन मातरिश्वा व्याख्यातः। परब्रह्मणि मुख्याऽनुत्पत्तिरुच्यते, अन्यत्रामुख्या, अत एवोत्पत्तिर्मुख्येत्येतेन कारणेनाल्पशक्तित्वहेतोर्विकारात्, अन्यथा सर्वसृष्टिप्रतिज्ञाहानेश्च वाय्वनुत्पत्तिश्रुतिरप्यल्पभागविषयत्वेन गौणीति व्याख्याता।

(तत्त्वप्रदीपिका)

उत्पत्तिश्रुतीनां बाहुल्यान्मुख्यार्थतोपपत्तेः । 'आकाशाद्वायुः' 'खं वायुः' 'प्राणाद्वायुरजायत' इत्यत्रापि भूतवायोरुत्पत्तिः । प्रधानवायोर्देहोत्पत्तावप्यनुत्पत्तिश्रुतिर्ज्ञानानुत्पत्त्या युक्तिमती । भूतनेतृत्वेन च नित्यत्वोपपत्तिः । सर्वज्ञत्वेन च मुख्यचेतनत्वोपपत्तिश्च । अनित्यानि तु भूतानीति पञ्चभूतानि । नित्यो वायुः प्रधानः । एतच्चतुष्टयं विष्णुः धारयति । तत्र कानिचिद्व्यूह्य कानिचित्प्रतीपतया व्यूह्य स्वरूपेण चानन्तबलेन तत्सर्वमतिशय्य । अथवा केषुचिन्निजरूपाणि व्यूह्य तत्प्रतिकूलकर्तृतयाऽन्येषु रूपान्तराणि प्रतिव्यूह्य स्वशक्त्या च तान्यतीत्य । अथवा प्रतिविम्बभूताञ्जीवान्प्रति प्रति निजरूपं व्यूह्य जीवेषु च व्यूह्य गुणैस्तानतीत्य ।

## तत्त्वप्रकाशिका

अत्रेश्वरे वेदसमन्वयसिद्धये मुख्यवायूत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सर्वोत्पादको हरिरित्यभिहितम् । तत्र मुख्यवायोरुत्पत्त्यभावे तदयुक्तं स्यादिति तदुत्पत्तिः समर्थनीया । मुख्यवायुर्विषयः । उत्पत्तिमान्न वेति सन्देहः । तासां वायुर्वत्सः 'सा वा एषा देवतानाऽदिर्योऽयं पवत' इति श्रुतिविगानं सन्देहबीजम् । सयुक्तिकं पूर्वपक्षयति ॥ **अथेति** ॥ वायोरनुत्पत्तिरेव । 'वायुर्वाव नित्यः सा वा एषा देवताऽनादिः' इत्यादिश्रुतेः । न चाकाशानुत्पत्तिश्रुतिवद् गौणार्थत्वम् । तथा सत्याकाशादिवन्मुख्यवायोरुत्पत्त्यनुत्पत्तिमत्त्वे तेजोऽबन्नाकाशानामनित्यत्वमुक्त्वा वायोर्नित्यत्वोक्तिरयुक्ता स्यात् । न चाकाशपदेन भूतमेवोच्यत इत्यत्र नियामकमस्ति । किं च वायोरनुत्पत्तिर्गौणीति स्वरूपमात्रविषयेति वक्तव्यम् । तथा सति तस्य सर्वचेतनसाम्येनातिशयितचेतनत्वमयुक्तं स्यात् । सर्वदेवतोपास्यता च नोत्पत्तिमत्त्वे घटते । तस्योदयनिम्लोचाभावे च कुतो जन्मसम्भवः । एवंविधस्य चोत्पत्त्यङ्गीकारेऽनुभवव्याकोपः स्यात् । अतोऽत्यन्तमनुभूतियुक्तिबहुवाग्विरोधेन वायोरुत्पत्त्ययोगादुत्पत्तिश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति भावः ।

एवमभ्यधिकाशङ्कया पूर्वपक्षितेऽतिदेशेन सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ मुख्यवायुरप्युत्पत्तिमानेव । अनुत्पन्नत्वेनाश्रुतत्वात् । 'प्राणाद्वायुरजायत' इत्यादावुत्पन्नत्वेन श्रुतत्वाच्च । न चोदाहृतश्रुतिविरोधः । तस्याः स्वरूपविषयत्वेनाकाशानुत्पत्तिश्रुतिव्याख्यानेनैव व्याख्यातत्वात् । उत्पत्ति श्रुतेः पुनः शरीरविषयत्वाद् व्यवस्थोपपत्तेः । न चैवं व्यवस्थाभ्युपगमे

(तत्त्वप्रकाशिका)

कारणाभावः । अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाकाश इति भागशो ह्युत्पद्यन्त इति वायोर्मुख्यामुख्योत्पत्त्यनुत्पत्त्यभिधायकवचनात् । अनुत्पत्तिश्रुतिर्ब्रह्मण्येव मुख्यान्यत्रामुख्येत्यस्य स्याच्चैकस्येत्यादिना कथितत्वाच्च । विभक्तशक्तित्वाच्च । वायोर्मुख्यानुत्पत्त्यनुपपत्तेः । किं च वायोरनुत्पत्तिं वदन् प्रष्टव्यो जायते । किं वायुरेवानादिरीशोऽपि वा । नाद्यः । प्रमाणविरोधेन वायोरेवानुत्पत्त्यनुपपत्तेः । न द्वितीयः । द्वयोरपि स्वातन्त्र्यापातात् । पराधीनविशेषलाभो ह्युत्पत्तिः । न च स्वातन्त्र्यं द्वयोर्युक्तम् । अन्योऽन्यानुरोधाननुरोधयोर्विरोधात् । अतो वायोर्मुख्यानुत्पत्तौ बाधकसद्भावाद्युक्तैवोक्तव्यवस्थेति भावः ।

वायोर्मुख्यानुत्पत्त्यभावे वियदादिभ्य उत्पत्त्यनुत्पत्तिमभ्यो विशेषेणानुत्पत्तिश्रुतिर्मुख्य-चेतनत्वादियुक्तिश्च विरुणद्धीत्याशङ्कां परिहर्तुं स्मृतिमुदाहरति ॥ **नित्य इति** ॥ परः परानित्यः एतद्व्यूह्य स्वात्मानं च तत्र प्रतिव्यूह्य स्वगुणैस्तदतिक्रम्य धारयतीत्यर्थः । तत्र वायोः परात्परनित्यत्वं स्वातन्त्र्यलक्षणं परनित्यत्वं देहादेरपि नित्यत्वं च नास्त्येव । तथापि सम्यगनित्यताशून्येभ्यो नित्येभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेन नित्यतोच्यते । अतः श्रुत्यविरोधेन वायोरुत्पत्तिसिद्धेर्युक्तो ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् । नन्वत्राकाशानन्तरं भूतवायोः प्राप्तिर्न मुख्यस्येति । मैवम् । वायुशब्देन खलु भूतं तदमुख्यमुख्याभिमानिनौ चोच्येते । तत्र मुख्यवायुविषय एव विवादप्राप्तेः । न हि भूतादिविषये श्रुतिविरोधोऽस्ति । तैत्तिरीय-श्रुतावाकाशाद्वायुरिति श्रूयते । छन्दोग श्रुतौ तु तेजः पूर्वैव सृष्टिरिति चेन्मैवम् । उक्त्यनुक्त्यो-र्विरोधाभावात् । किं च नित्यविभुवियदुत्पत्तौ निर्णीतायां वायुभूतविषये शङ्कासाम्यस्याप्य-भावेनाधिकाशङ्का प्रागेव नास्तीत्युक्त एव सूत्रार्थ इति ।

## गुर्वर्थदीपिका

वायोरनुत्पत्तिर्गौणीत्यत्र पूर्वसूत्रबलाद्विष्णोरन्यत्रानुत्पत्तिर्गौणीति हेतोः तस्य वायोरनुत्पत्तिरपि स्वरूपमात्रविषया न तु बाह्यदेहरहितस्वरूपविषया । तथा सति भागश उत्पद्यन्त इत्युक्तभाक्तत्वा-योगादिति भावः । तस्योदयनिम्लोचाभाव इत्यत्र कदाचिदुदयः कदाचिदस्तमय इति द्विविधधर्मा-भावेन सदोदितत्वे सतीत्यर्थः । जन्मपदेन चाजहत्स्वार्थलक्षणया प्रागुक्तादिमध्यान्ता गृह्यन्ते । एवं च 'नादिर्न मध्यं नान्त' इति पूर्वोक्तार्थत्रयमुत्तरवाक्येन विव्रियत इति भावः । 'वाय्वनुत्पत्तिश्रुतिः'

(गुर्वर्थदीपिका)

इति भाष्येण सूत्रे विषयपदेन विषयिण उपलक्षणमिति सूचितम् । अन्योन्यानुरोधाननुरोधयो-रित्यत्रान्योन्यानुरोधे उभयोरस्वातन्त्र्याख्यविरोधप्रसङ्गः । अननुरोधे उभयोः स्वतन्त्रतया परस्पर-कलहे सति जगत्सृष्ट्याद्यभावप्रसङ्ग इत्यर्थः । अनित्यानि तु भूतानीत्यत्र भूतपदेनाजहत्स्वार्थ-लक्षणयाऽहङ्कारादीनि तत्त्वानि तदभिमानिदेवाश्च गृह्यन्ते । अन्यथा जडमात्रनित्यताया इदानीन्तनज्ञानमादाय चेतनमात्रे सम्भवाद्वायोरेव नित्यत्वकथनमसङ्गतं स्यात् । तत्र देवानां स्वरूपेण नित्यत्वं देहस्य च ज्ञानस्य च प्रलये नष्टत्वादनित्यत्वम् । जडानां तु सूक्ष्मरूपेण नित्यत्वं स्थूलरूपेणानित्यत्वम् । नित्यानित्ययोर्नित्यपदवाच्येभ्य एतेभ्यो वायोरतिशयेन नित्यत्वम् । अन्यथा जडमात्रनित्यताया बाह्यज्ञाननित्यत्वमादायेति स्मृतेस्तात्पर्यम् । परस्तु नित्यः पुरुष इत्यत्र पुरुषपदेन सकलजीवचैतन्यमुच्यते । प्रकृतिपदेनाविकृतप्रकृतिस्वरूपं तदभिमानिनी लक्ष्मीश्च गृह्यते । कालपदेन कालप्रवाहस्तदभिमानिनी लक्ष्मीश्च गृह्यत इत्यर्थः । तत्र चेतनस्य प्रकृतिकालपदवाच्य-लक्ष्म्याश्च स्वरूपतश्चिन्मयदेहतश्च नित्यत्वात्परनित्यत्वम् । जडयोरविकृतप्रकृतिस्वरूपकालप्रवाहयोः कदाऽपि विकाराभावात्परनित्यत्वमिति ज्ञेयम् । अत एव परनित्यत्वं देहादेरपि नित्यत्वमित्युक्तम् । उत्त्यनुत्त्योरित्यत्र तेजः प्रभृतिसृष्टिप्रतिपादकश्रुतावाकाशवाय्वोरनुक्तिरित्यर्थः ।

## भावबोधः

**मुख्यवायूत्पत्तिविषयेति** ॥ अत्र 'आकाशाद्वायुः' इति श्रुतौ भूतवायुमुख्याभिमानि-मुख्यवायोरपि वायुशब्देन प्रतिपादनेन श्रुतिक्रमात् पूर्वोक्तसिद्धान्तन्यायातिदेशात् वानन्तर-सङ्गतिरिति भावः ॥ **उत्पत्तिमान्न वेति** ॥ अत्र मुख्यवायुरनुत्पत्तिमानुतोत्पत्तिमानिति चिन्ता । तदर्थमुत्पत्तिश्रुतिर्बहुवाग्युक्त्यनुभवविरुद्धा भवत्युत न भवतीति । तदर्थमनुत्पत्तिश्रुत्यादेः सावकाशत्वं नास्त्युतास्तीति । तदर्थं श्रुत्यादेः सावकाशत्वप्रापकं नास्त्युतास्तीति । तदर्थं सावकाशत्वप्रापिका वायोर्मुख्यानुत्पत्त्यनुपपत्तिर्न सम्भवत्युत सम्भवतीति । तदर्थं तस्योत्पत्त्यङ्गीकार उत्पत्त्यनुत्पत्ति-मद्भ्यो वियदादिभ्यो वायोर्विशिष्य नित्यत्वोक्तिर्न घटते उत घटत इति । तदर्थं वायोर्विशिष्य नित्यत्वोक्तिः पराधीनविशेषलाभाभावरूपस्वातन्त्र्यलक्षणनित्यत्वेन वा स्वरूपातिरिक्तमनोवृत्ति-ज्ञानमात्रनित्यत्वेन वेति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । इत्यादि श्रुतेरित्यनेन न्यायविवरणोक्तबहुवाग्विरोधो दर्शितो भवति । वायोर्नित्यत्वोक्तिरयुक्तेत्यनेन अभ्यधिकाशङ्का-

(भावबोधः)

प्रदर्शनाय ततोऽधिकमिति न्यायविवरणोक्तं वियदनुत्पत्तिश्रुतिभ्यो वाय्वनुत्पत्तिश्रुतीनामाधिक्यमुक्तं भवति ।

ननु भाष्योदाहृतश्रुतीनामाकाशादिपदैर्भूतान्येवोच्यन्ते । तेभ्यश्च मुख्यवायोः स्वरूपनित्यत्वमेव विशेष इति नेत्यह– **न चात्र आकाशपदेनेति** ॥ न्यायविवरणे अनुभूत्यादीत्यादि पदोक्तयुक्तिप्रदर्शनपरतया भाष्योदाहृतश्रुतीर्व्याचष्टे– **किं चेत्यादिना** ॥ बहुयुक्तिकथनेन न्यायविवरणोक्तयुक्तेराधिक्यमुक्तं भवति । नन्वनुभवायोग्यवायूत्पत्तौ कथं न्यायविवरणे तद्विरोध उक्त इत्यतस्तमुपपादयति– **एवंविधस्येति** ॥ नित्यत्वव्याप्तोक्तबहुहेतुमत उत्पत्तिरनुभवबाधितेत्यर्थः । सौत्रेणैतेनेत्यनेन पूर्वाधिकरणोक्तः सर्वोऽपि हेतुर्विवक्षित इत्याशयवानाह– **अनुत्पन्नत्वेन अश्रुतत्वादित्यादिना** ॥ भाष्ये मुख्यामुख्येत्यनन्तरमुत्पत्तीत्यध्याहृत्य तद्भाष्यं व्याचष्टे– **अनुत्पत्तिश्रुतिरपीति** ॥ भाष्योक्तहेतूनां साध्यप्रदर्शनपरतया वायोरेवानुत्पत्त्यनुपपत्तेरित्यादिना । सर्वैश्वर्यमित्यन्तं न्यायविवरणं योजयितुं विकल्पेन पृच्छति– **किं चेत्यादिना** ॥ आद्यपक्षदूषणत्वेन अवधारणसहितन्यायविवरणमनुवदति ॥ **वायोरेवेति** ॥ द्वितीयपक्षदूषणत्वेन पराधीनविशेषवत्त्वं ह्युत्पत्तिस्तदभाव उभयोः स्वातन्त्र्यं विरुद्धमेवेति न्यायविवरणमाकाङ्क्षाक्रमेण योजयति । द्वयोरपीत्यादिना ॥ **द्वयोर्युक्तमिति** ॥ सर्वोत्तमत्वानुपपत्तेरिति भावः । कथं सर्वोत्तमत्वानुपपत्तिरित्यतस्तदुपपादनपरमुभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधेऽननुरोधे तु न सर्वैश्वर्यमिति न्यायविवरणं तात्पर्यतो व्याचष्टे– **अन्योन्यानुरोधाननुरोधयोरिति** ॥ **मुख्यानुत्पत्तौ बाधकसद्भावादिति** ॥ अनेनानुपपत्तिस्तु तत्रापिकेति न्यायविवरणमुक्ततात्पर्यकं भवति । स्मृतौ पर इत्यस्य श्रूयमाणानित्यपदेनैवान्वये त्रैविध्यप्राप्त्या चतुर्धेत्यनुपपन्नम् । द्वितीयस्तथाशब्दोऽप्यनुपपन्नः । 'अनित्यानीह भूतानि' इत्येतच्चायुक्तं स्यादित्यतोऽनित्य इति पदानुवृत्त्याह– **परः परानित्य इति** ॥ कथमनेन स्मृतिवचनेन श्रुतियुक्तिविरोधपरिहार इत्यत आह– **तत्रेति** ॥ **स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणेति** ॥ अनेन ज्ञानाविस्मृत्या वायावपि व्यवस्थेत्यतिदेश इति न्यायविवरणमुक्ततात्पर्यकं भवति । अतिशयेन नित्यतोच्यत इत्युपलक्षणम् । अतिशयितचेतनत्वं सर्वदेवोपास्यत्वं, वृत्तिज्ञानप्रवाहोदयनिम्लोचनाभावेन तस्योदयनिम्लोचनाभावश्चोच्यत इति न युक्तिविरोधोऽपीति ग्राह्यम् ।

## भावदीपः

**वेदसमन्वयसिद्धय इति** ।। विरोधापरिहारे वायूत्पत्तिश्रुतेरनुत्पत्तिश्रुतिविरोधेनाप्रामाण्येऽन्यत्राप्यनाश्वासेन समन्वयो न सिध्येदिति भावः ।। **मुख्यवाय्विति** ।। मुख्यवायूत्पत्तिविषये यः सा वा एषा देवताऽनादिरित्यादिश्रुतिविरोधस्तस्य परिहारादित्यर्थः । भूतवायूत्पत्तिविषये आकाशाद्वायुरित्युत्पत्तिश्रुतिवदनुत्पत्तिश्रुत्यभावे विरोधशङ्काया एवानुदयादुदये वा पूर्वन्यायेन सुपरिहरत्वादेतेनेति सौत्रातिदेशोपयुक्ताभ्यधिकाशङ्काया भूतवायौ सुतरामभावात् भूतवायुमुख्याभिमानिनि मुख्यवायावेव वक्ष्यमाणदिशा तदुभयसम्भवादिति भावः । पूर्वसङ्गतिमाह ।। **सर्वेति** ।। एवमग्रेऽपि । भाष्येऽनुक्तेः छान्दोग्यतृतीयाध्यायस्थां श्रुतिं स्वयमाह ।। **तासामिति** ।। तस्य प्राची दिग्जुहूः' इत्यादिपूर्ववाक्योक्तचतुर्दिगवस्थितदिङ्नामकभगवद्बाहूनां वत्स इति भगवद्बाहुजातत्वमुच्यते । यद्यप्यत्राकाशाद्वायुरित्येव जन्मश्रुतिर्वाच्या तत्र वायुशब्दस्य भूततदमुख्यमुख्याभिमानिरूपत्रितयपरत्वस्योपरि व्यक्तत्वात् । प्राणस्योपरि वक्ष्यत इति पूर्वत्रोक्तत्वेनैतदेवोदाहृत्य वायुजन्मश्रुतेस्त्रिभिरपि भागैर्वायूत्पत्तिपरत्वस्य वर्णनीयत्वात् । तथाप्यस्य पूर्वोक्तदिशा व्यक्तत्वादत्र केवलमुख्यवायोरेव विशेषशङ्कया चिन्ता नान्यस्येति सूचनाय केवलमुख्यवायुजन्मपरश्रुतिरेवोक्ता । भाष्यस्थप्रतिज्ञांशमाकाशादाविव गौणमुख्यापेक्षयोत्पत्त्यनुत्पत्तिमत्त्वनिरासाय सावधारणं व्याचष्टे ।। **वायोरनुत्पत्तिरेवेति** ।। भाष्योक्त श्रुतिमाह ।। **वायुरिति** ।। भाष्ये बहुवचनोक्तावपि श्रुतेरित्येकवचनोक्तिरितरश्रुतीनामनुत्पत्तावतिशयितचेतनत्वसर्वदेवोपास्यत्वोदयाद्यभावरूपयुक्तिसूचनपरत्वाशयया । एतेन ततोऽधिकमेतत्सर्वमनुभूत्यादिविरुद्धत्वं वायूत्पत्ताविति न्यायविवरणस्थादिपदोक्तबहुवाग्विरोधो विवृतः । पूर्वेण गतार्थत्वं शङ्कते ।। **न चेति** ।। **गौणार्थत्वमिति** ।। अभिमानिचैतन्यस्वरूपरूपभागपरत्वाख्यं गौणार्थत्वमित्यर्थः । अतिदेशात्वसिद्धये भाष्योक्तमभ्यधिकाशङ्काचतुष्टयं विवृण्वानोऽथ ह नित्याश्चेति श्रुत्युक्तमाह ।। **तथा सतीति** ।।

ननु तत्त्वप्रदीपे तेजोऽबन्नान्याकाश इति श्रुतौ भूताकाश इत्युक्तत्वात्ततो मुख्यवायोः स्वरूपनित्यत्वमेव विशेष इत्यतो नेत्याह ।। **न चाकाशपदेनेति** ।। **अत्र** तेजोऽबन्नान्याकाश इति श्रुतौ । किं त्वव्याकृताकाशस्याप्यस्ति ग्रह इति भावः । अथ ह चेतनाश्चेति श्रुत्युक्तशङ्कामाह ।। **किं चेति** ।। कुविदंगेति श्रुत्युक्तामाह ।। **सर्वदेवेति** ।। ते जन्मादिदोषित्वे तदयोगादिति भावः ।

(भावदीपः)

मन्त्रार्थः शब्दादेवेत्यत्र उक्तः । यस्येति वाक्योक्तामाह ॥ **तस्येति** ॥ एवं न्यायविवरणस्थादिपदोपात्त श्रुतियुक्तिविरोधं भाष्योक्तश्रुतितात्पर्यविवरणेन विवृत्य युक्तीनां विपक्षे बाधकत्वेन तत्रोक्तानुभवविरोधमपि योजयति ॥ **एवं विधस्येति** ॥ नित्यत्वव्याप्तोक्तबहुहेतुमत इत्यर्थः । उक्तं सर्वं न्यायविवरणारूढं कुर्वन्नुपसंहरति ॥ **अत इति** ॥ उक्तानेकश्रुतेर्भावादित्यर्थः । तत्रत्याधिकशब्दार्थोऽत्यन्तमिति । आकाशादेरनित्यत्वमुक्त्वा वायोर्नित्यत्वाद्युक्तिराकाशादधिकेत्यर्थः । उत्पत्तिश्रुतिः तासां वायुर्वत्स इति श्रुतिः । भाष्ये सौत्रैतच्छब्देन शब्दाच्च यावद्विकारमिति च सूत्रद्वयोक्तश्रुतियुक्तिपरामर्शित्वप्रतीतावपि सौत्रमातरिश्वपदस्य तदुत्पत्त्यनुत्पत्तिश्रुतिलक्षणां विनैव मातरिश्वा मुख्यवायुरुत्पत्तिमान्व्याख्यात इति यथाश्रुतयोजनायामश्रुतेरित्यादिहेतवोऽप्यन्वीयन्त इति मत्त्वा विभक्तत्वाच्चेति भाष्यस्थ चशब्दानुसारात्सर्वोऽपि प्राचीनहेतुरेतेनेत्यनेन विवक्षित इति भावेनाह ॥ **अनुत्पन्नत्वेनेति** ॥ पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वाभावेनाश्रुतत्वादित्यर्थः । उत्पन्नत्वेनेत्यत्राप्येवं ध्येयम् । अस्ति त्वित्युक्तमाह ॥ **श्रुतत्वाच्चेति** ॥ इत्यादावित्यादिपदेन वायुपदोपेतोत्पत्तिवाक्यानामेवात्र ग्रहः । न तु स प्राणमसृजत' इत्यादिप्राणपदोपेतस्य तस्याध्यात्मविषयत्वात् । एतेनासम्भवात् शब्देभ्य इति सूत्रद्वयोक्तहेतुरप्युक्तो भवति । वाय्वनुत्पत्तीति भाष्यवाक्यमवतार्य व्याचष्टे ॥ **न चोदाहृतेति** ॥ वायुर्वाव नित्य इत्यादिश्रुतीत्यर्थः ॥ **स्वरूपेति** ॥ अभिमानिस्वरूपेत्यर्थः । अपि शब्दार्थव्यक्तिराकाशानुत्पत्तीति । भाष्येऽनुत्पत्तिश्रुतिरित्युपलक्षणं मत्त्वाह ॥ **उत्पत्तिश्रुतेरिति** ॥ मुख्यामुख्येत्यादिभाष्यमवतार्य व्याचष्टे ॥ **न चैवमिति** ॥ भाष्येऽनुत्पत्त्युक्तिमुपलक्षणं मत्त्वाऽऽह ॥ **उत्पत्त्यनुत्पत्त्यभिधायकेति** ॥ कैश्चिद्भागैर्नोत्पद्यन्त इत्यस्योपलक्षकत्वेन श्रुतेः पूर्वं व्याख्यानादिति भावः ॥ **वचनादिति** ॥ तृतीयापञ्चम्योर्हेतुरूपैकार्थत्वाद्वचनेनेत्यस्य वचनादित्यर्थ उक्तः । स्याच्चैकस्येतिसूत्रोक्तं च हेतुमाह ॥ **अनुत्पत्तीति** ॥ अनेन भाष्यस्य ब्रह्मतदन्ययोर्मुख्यामुख्यानुत्पत्तिवचनेनेत्यर्थान्तरं दर्शितम् । विभक्तत्वाच्चेति भाष्योक्तहेतोर्वायोरेवानुत्पत्त्यनुपपत्तेरिति न्यायविवरणोक्तं साक्षात्साध्यं भाष्ये पूरयति ॥ **वायोरिति** ॥ पराधीनविशेषावाप्त्यभावरूपानुत्पत्त्यनुपपत्तेरित्यर्थः । नन्वस्तूक्तश्रुतियुक्त्यनुभवबलाद्वायोरुक्तरूपानुत्पत्तिः तथा चाल्पशक्तित्वरूपविभक्तशक्तित्वाच्चेत्युक्तहेतुर्विपक्षे बाधकाभावेनाप्रयोजक इत्याशङ्क्य वायोरेवानुत्पत्त्यनुपपत्तेरित्यादिवाक्यमत्र योजयितुमाह ॥ **किञ्चेति** ॥ **प्रमाणेति** ॥ प्रतिज्ञाहान्यादिसूत्रे

(भावदीपः)

भाष्योक्तप्रमाणविरोधेनेत्यर्थः । पराधीनविशेषमात्रं ह्युत्पत्तिः । तदभावे उभयोः स्वातन्त्र्यं विरुद्धमेव। सर्वोत्तमत्वानुपपत्तेरिति न्यायविवरणार्थमाह ॥ **द्वयोरपीति** ॥ कुतो न युक्तमित्यत उभयोरपि पराधीनत्वप्राप्तेश्चान्योऽन्यानुरोधे अननुरोधे तु न सर्वैश्वर्यमिति न्यायविवरणोक्तयुक्तिं सङ्गृह्णाति ॥ **अन्योन्येति** ॥ **अत इति** ॥ द्वयोः स्वातन्त्र्यायोगादित्यर्थः ॥ **अनुत्पत्तिश्रुतिरिति** ॥ वायुर्वावनित्य इति श्रुतिरित्यर्थः । पर इत्यनुवादः परानित्य इति व्याख्या । तत्र जगति । प्रतिव्यूह्य प्रतिव्यूहशः कृत्वा । कथं स्मृत्युक्त्योक्तशङ्कानिरास इत्यतः ज्ञानाविस्मृत्या वायावपि व्यवस्थे-त्यतिदेश इति न्यायविवरणानुरोधेन भावमाह ॥ **तत्र वायोरिति** ॥ **नित्यतेति** ॥ नित्यत्वमुख्यचेतनत्वादिकमुच्यत इत्यर्थः । भाष्ये स्मृत्या एतच्छङ्कानिवृत्युक्तावपि न्यायविवरणेऽ-नुपपत्तिस्तु तत्रापिकेति विशिष्य नित्यत्वचेतनत्वाद्युक्त्यन्यथानुपपत्त्यैवैतच्छङ्कानिरास उक्तः ॥ **अत इति** ॥ वायावपि व्यवस्थासम्भवादित्यर्थः । परकीयसूत्रप्रमेयं स्वमते असाङ्गत्यं च व्युदसितुमाह ॥ **नन्वत्रेति** ॥ मायावाद्युक्तं शङ्कते ॥ **तैत्तिरीयेति** ॥ **छन्दोगेति** ॥ 'तदैक्षत बहु स्यां प्रजायेय' इति। तत्तेजोऽसृजत' इति तेजसः प्रथमं सृष्टिरित्यर्थः ॥ **विरोधाभावादिति** ॥ छान्दोग्ये क्रमानुक्तावपि तैत्तिरीयोक्तस्य स इदं सर्वमसृजत' इत्यादिवद्ग्राह्यत्वात् । श्रुत्यन्तरोक्तोपसंहारस्य च सर्ववेदान्त-नयसिद्धत्वादिति भावः । ननु आकाश इव भूतवायावनुत्पत्तिशङ्कायां तन्निरास-स्त्वावश्यक इत्यस्त्विदं भूतवायुपरमित्यत आह ॥ **किञ्चेति** ॥ **अधिकेति** ॥ यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयादिति भावः ।

## अभिनवचन्द्रिका

**तथा सतीति** ॥ यद्यपि आकाशस्यैवोत्पत्त्यनुत्पत्तिमत्त्वम्, तथापि छत्रिन्यानेनाकाशादिवदिति उक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । अनुत्पत्तिश्रुतेर्गौणार्थत्वे आकाशवत् मुख्यवायोरुत्पत्त्यनुत्पत्तिमत्त्वं स्यात् । तस्मिंश्च सति तेजोऽबन्नादिष्वाकाशं निक्षिप्याऽनित्यत्वमुक्त्वा वायोर्नित्यत्वोक्तिरयुक्ता स्यात् । वाय्वाकाशयोर्नित्यानित्यत्वे वैषम्येणोक्तेः कारणाभावादिति भावः । ननु नित्या-नित्यात्मकस्याऽव्याकृताकाशस्य न तेजोऽबन्नाद्यनित्यवर्गे निवेशः । यस्य तु भूताकाशस्य निवेशः नासौ नित्यानित्यः । ततश्च नित्यानित्यस्यापि वायोर्नित्यत्वोक्तिर्नानुपपन्नेत्यत आह– न **चाकाशपदेनेति** ॥ भूतमेवात्रेत्यतः परं 'विवक्षितम्' इति शेषः । इतिशब्दात्परं 'अत्र' इति

(अभिनवचन्द्रिका)
शेषः । भाष्ये 'अथ ह चेतनाश्चाचेतनाश्च' इत्यादि श्रुत्युदाहरणमयुक्तम्, अनुत्पत्ति-प्रतिपादकत्वाभावादित्यतस्तदभिप्रायमाह – **किञ्चेत्यादिना** ॥ वायोरनुत्पत्तिः अनुत्पत्तिप्रतिपादिका श्रुतिः । न्यायविवरणाभिप्रेतमुत्पत्तिपक्षेऽनुभवविरोधमाह – **एवंविधस्य चेति** ॥ नित्यत्व-व्याप्तोक्तानेकहेतुमतोऽपि उत्पत्तिमत्त्वेऽनुभवव्याकोपः स्यात् । यत् यत्साधकहेतुमत् तत् तद्वत् इत्यनुभवादित्यर्थः ॥ **अनुत्पन्नत्वेनाश्रुतत्वादिति** ॥ नन्वसिद्धोऽयं हेतुः 'सा वा एषा देवताऽनादिः योऽयं पवते, यस्य नादिर्न मध्यं नान्तः' इत्यादिना अनुत्पत्तेः श्रुतत्वादिति चेत्, न । श्रूयमाणापि श्रुतिर्नार्थसाधिका गौणत्वादिति भावेन तथोक्तत्वात् । अत एव 'आकाशानुत्पत्तिश्रुतिव्याख्यानेनैव व्याख्यातत्वात्' इत्यनेन स्वाभिप्रायमुत्तरत्र व्यक्तीकरिष्यति । **अन्योन्यानुरोधाननुरोधयोरिति** ॥ अनुरोधे पराधीनविशेषप्राप्त्या स्वातन्त्र्यहानिः । अननुरोधे तु परस्परप्रतिरोधेन कार्यासिद्ध्या कर्तुमकर्तुमन्यथाकर्तुं शक्तत्वाख्यसर्वैश्वर्यहानिरिति भावः । भाष्ये 'परस्तु नित्यः पुरुषः प्रकृतिः काल एव च' इति ॥ पुरुषपदेन जीवचैतन्यं, प्रकृतिपदेन महालक्ष्मीः, कालपदेन श्रीभूदुर्गा उच्यन्ते ।

ननु वायोर्मुख्यनित्यत्वाभावे विशेषेणानुत्पत्तिश्रुतिः मुख्यचेतनत्वाद्युक्तिश्च विरुणद्धीत्याशङ्का न परिहृतेत्यत आह– **तत्र वायोरिति** ॥ उच्यत इत्यत परम् 'इति भावः' इति शेषः । तत्रेत्यस्य उच्यत इत्यनेन सम्बन्धः । यद्यपि पूर्वपक्षिणा शङ्कितं परात्परनित्यत्वं परनित्यत्वं च नास्त्येव, तथापि सम्यगनित्यताशून्येभ्योऽनित्येभ्य उत्पत्त्यनुत्पत्तिमद्य इति यावत् एतादृशेभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण अतिशयेन नित्यता । तत्र 'अथ ह नित्याश्चानित्याश्च' इति श्रुतौ 'वायुर्वाव नित्य' इत्यनेनोच्यते । उपलक्षणमेतत् । 'अथ ह चेतनाश्चाचेतनाश्च' इत्यादि श्रुतौ ज्ञाननित्यत्वाभिप्रायेणैव मुख्यचेतनत्वादिकमुच्यत इति भाव इत्यर्थः ॥ **अमुख्यस्येतीति** ॥ भूतवायुविषयतयेदं सूत्रं योजनीयमिति शेषः ॥ **वायुशब्देन खल्विति** ॥ यद्यपि वायुवाचकेनान्यत्र भूतादित्रयमुच्यत इति भूतस्य प्रतिपाद्यत्वप्रसक्तिरस्ति, तथापि न भूतपरतया सूत्रं योजनीयम् । तत्र विवादाभावात् । मुख्यवायावेव विवादसद्भावादिति भावः ।

पूर्वपक्षस्तु – न विष्णोर्जगत्कारणत्वं युक्तम् । 'वायुर्वाव नित्यः, सा वा एषा देवताऽनादिर्योऽयं पवत' इत्यादिश्रुतेर्वायोरुत्पत्त्यभावेन तत्कारणत्वाभावात् । न च

(अभिनवचन्द्रिका)

आकाशानुत्पत्तिश्रुतिवत् इयं श्रुतिः गौणीति वाच्यम् । 'अथ ह नित्याश्चानित्याश्च । तेजोऽबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते' इति श्रुत्या आकाशस्यानित्यत्वमुक्त्वा, वायोर्नित्यत्वोक्तेः । अन्यथा वायोर्विशिष्य नित्यत्वोक्तिरयुक्ता स्यात् । किं च यदि वायुरुत्पत्तिमान् स्यात् तदा सर्वापेक्षयाऽतिशयितचेतनत्वं सर्वदेवोपास्यत्वं च न स्यात् । 'यस्य नादिर्न मध्यं नांतमित्यादिश्रुत्या अनादित्वमुक्त्वा उदयनिम्लोचाभावस्याप्युक्तेः । न चोदयनिम्लोचशून्यस्योत्पत्तिः सम्भावयितुं शक्या । साधकवतः साध्य(वत्ता)दर्शनेनानुत्पत्तिसाधकवतोऽप्युत्पत्तिमत्वाङ्गीकारेऽनुभवव्याकोपः स्यात्ः । अतः वायोरुत्पत्त्यभावेनोत्पत्तिश्रुतेरप्रामाण्यात् न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति ।

सिद्धान्तस्तु – युक्तं विष्णोर्जगज्जन्मादिकारणत्वम् । वायोरप्युत्पत्तिमत्वात् । न च तत्र प्रमाणाभावः । 'प्राणाद्वायुरजायत' इत्युत्पत्तिश्रुतेः । न चाऽनुत्पत्तिश्रुतिविरोधः । तस्याः स्वरूपानुत्पत्तिपरत्वेन गौणत्वात् । ननु वायोर्मुख्यानुत्पत्तिमत्त्वाभावे आकाशस्यानित्यत्वमुक्त्वा वायोर्विशिष्यनित्यत्वोक्तिः अतिशयेन चेतनत्वोक्तिः, देवोपास्यत्वोक्तिश्चाऽनुपपन्ना स्यादिति चेत्, न स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणाऽतिशयनित्यत्वाद्युक्तिसंभवात् । अतः श्रुत्यविरोधेन वायोरुत्पत्तिसिद्धेः युक्तं ब्रह्मणि श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**मुख्यवायूत्पत्तिविषयेति** ॥ अत्राकाशाद्वायुरिति श्रुतौ मुख्यवायोरपि वायुशब्देन प्रतिपादन-श्रुतिक्रमात्पूर्वोक्तसिद्धान्तन्यायातिदेशाद्वाऽनन्तरसङ्गतिरिति भावः । मुख्यवायुग्रहणेनैव न भूतवायु-विषयमिदं सूत्रं तत्राधिकाशङ्काभावात् । अत एव नावान्तराभिमानिविषयं किं नाम तत्परमाभि-मानिविषयमेवेति सूचयति ॥ **उत्पत्तिमानिति** ॥ वायुरुत्पत्तिमानुतानुत्पत्तिमानिति । तदर्थं सा वा एषा देवता अनादिर्योऽयं पवत इति तदनादित्वश्रुतिर्मुख्या उत गौणीति । तदर्थं तस्याः गौणत्वे तेजो बन्नानामनित्यत्वमुक्त्वा वायोर्नित्यत्वोक्तिर्न घटत उत घटत इति । तदर्थमनित्येभ्यस्तेजोऽ-बन्नेभ्यः वायोर्विशेषः किं स्वातन्त्र्यादिरूपेण, परात्परनित्यत्वेन किं वा स्वरूपातिरिक्त-ज्ञाननित्यत्वमात्रेणेति । तासां वायुर्वत्स इति तस्य प्राची दिक् जुहुर्नामेति पूर्ववाक्ये प्रकृतानां दिङ्नामकभगवद्बाहूनामित्यर्थः ॥ **सयुक्तिकमिति** ॥ अतिशयितनित्यत्वातिशयितचेतनत्व

(वाक्यार्थमुक्तावली)
सर्वदेवोपास्यत्वोदयनिम्लोचाभावरूपयुक्तिपूर्वकं सा वा एषा देवताऽनादिरिति श्रुतिविरोधेन पूर्वपक्षयतीत्यर्थः । **गौणार्थत्वमिति** ॥ पराधीनविशेषलाभाभावरूपमुख्यमनादित्वं परित्यज्याभिमानिचैतन्यरूपमुख्यानादित्वपरत्वेन गौणार्थत्वमित्यर्थः । कुत इत्यतोऽतिदेशत्वसिद्धये भाष्योक्तमभ्यधिकाशङ्काचतुष्टयं विवृणोति तथा सतीत्यादिना । अयुक्ता स्यादिति । विशेषाभावादिति भावः ।

ननु भाष्योदाहृतश्रुतावाकाशादिपदेन भूतान्येवोच्यन्ते । तेभ्यश्च मुख्यवायोः स्वरूपानित्यत्वमेव विशेष इत्यत आह ॥ **न चाकाशपदेनेति** ॥ अभिमानिदेवतानामपि तत्र ग्रहणसम्भवादिति भावः । अधिकमनुभूत्यादिविरुद्धत्वमिति न्यायविवरणे आदिशब्दोक्तं पूर्वपक्षहेतुं भाष्यारूढं कर्तुं इत्यादि श्रुतिभ्य इति भाष्यं युक्तिघटितश्रुतिभ्य इति व्याख्याय उपलक्षणत्वेनानुभवविरोधमप्याह– **एवं विधस्येति** ॥ नित्यत्वव्याप्योक्तबहुहेतुमत उत्पत्तिरनुभवबाधितेत्यर्थः । सौत्रेणतेनेत्यनेन पूर्वाधिकरणोक्तः सर्वोऽपि हेतुर्विवक्षित इत्याशयेन तद्विवरणपरं मुख्यामुख्येतिभाष्यं व्याचष्टे ॥ **मुख्यवायुरित्यादिना** । अमुख्यानुत्पत्तिवचनेनेत्यस्य मुख्यानुत्पत्तिवचनाभावेनेत्यर्थं मत्वा प्रथमसूत्रोक्तहेतुमतिदिशति । **अनुत्पन्नत्वेनेति** ॥ मुख्योत्पत्तिवचनेनेति बुध्या विवेकेन भाष्यान्वयं मत्वा द्वितीयसूत्रोक्तमतिदिशति ॥ **प्राणादिति** ॥ आकाशानुत्पत्तिश्रुत्युत्पत्तिश्रुत्योर्मुख्यामुख्योत्पत्त्यनुत्पत्तिपरत्वव्याख्यानेन वाय्वनुत्पत्तिश्रुतिरपि शब्दानुत्पत्तिश्रुतिश्च गौणीत्युक्तव्यवस्थया व्याख्यातेति भाष्यार्थं मत्वा तृतीयसूत्रोक्तमतिदिशति ॥ **तस्याः स्वरूपेति** ॥ वायुचैतन्यस्य परात्परनित्यत्व व्यावृत्तगौणानादित्वपरत्वेनेत्यर्थः ॥ **शरीरेति** ॥ शरीराभिमाननिमित्तकपराधीनविशेषलाभरूपोत्पत्तिविषयत्वेनेत्यर्थः । **शब्दाच्चेति** ॥ चतुर्थसूत्रोक्तव्यवस्थाकारणातिदेशकत्वेन भाष्यं व्याचष्टे ॥ **न चैवमित्यादिना** ॥ एकस्यैवानुत्पत्तिमच्छब्दस्य मुख्यामुख्यानुत्पत्तिपरत्वं ब्रह्मशब्दवदिति । स्याच्चैकस्येत्यत्र वचनेनेति भाष्यार्थं मत्वा पञ्चमोक्तमतिदिशति ॥ **अनुत्पत्तिश्रुतिरिति** ।

अनुत्पत्तिश्रुतिर्ब्रह्मण्येव मुख्या । अन्यत्र तु प्रतिज्ञाहान्यादिबाधकादमुख्येति वचनेन वाय्वनुत्पत्तिश्रुतिरमुख्यार्था व्याख्यातेति भाष्यार्थं मत्वा षष्ठोक्तमतिदिशति ॥ **इत्यादिना कथितत्वाच्चेति** ॥ सप्तमोक्तमतिदेष्टुं विभक्तत्वाच्चेति भाष्यम् । चशब्दाद्विष्णोरविभक्तत्वाच्चेति

(वाक्यार्थमुक्तावली)

लभ्यते । तथा चानुमानेन सोऽविकारः परो हरिः' इत्यादिवचनेन च विरोधात् । वायो-र्मुख्यानुत्पत्त्युपपत्तेः । वाय्वनुत्पत्तिश्रुतिः स्वरूपपरेति व्यवस्थया व्याख्यातेति मत्वा व्याचष्टे ॥ **विभक्तत्वाच्चेति** ॥ वायोरेवानुत्पत्त्यनुपपत्तेरित्यादिन्यायविवरणोक्तमनुपपत्तिरित्युक्त सिद्धान्तन्यायं विभक्तत्वाच्चेति चशब्दाभिप्रायेणाह ॥ **किञ्चेत्यादिना** ॥ द्वयोः स्वातन्त्र्यं कुत इत्यत आह ॥ **पराधीनेति** ॥ अतस्तद्भावे द्वयोरपि स्वातन्त्र्यमवर्जनीयमिति भावः । न च स्वातन्त्र्यमिति । सर्वोत्तमत्वानुपपत्तेरिति भावः । तत्कथमित्यत आह ॥ **अन्योन्येति** ॥ वायुविष्ण्वोरुभयो-रन्योऽन्यानुसारेणोभयोरपि पराधीनत्वप्राप्तेः । अननुरोधे तु वायोरीश्वरनियामकत्वाभावादीश्वरस्य वायुनियामकत्वाभावान्न तयोः सर्वैश्वर्यमित्यर्थः । स्मृतौ पर इत्यस्यानित्य इत्यनेनान्वये त्रैविध्यप्राप्तेश्चतुर्थेत्यनुपपन्नमित्याशङ्क्यानित्य इति पदमावृत्य योजयति ॥ **परः परानित्य इति** ॥ नित्य इत्यादि तु समस्तश्रुतेरयमर्थः । जगच्चतुर्विधम् । नित्यं, परनित्यम्, अनित्यं, परानित्यमिति । तत्र पार्थिवं संसृष्टमण्डादि परानित्यम् । भूतानि त्वनित्यानि । उपचयमात्रनाशात्तदभिमानिनां देहादिमात्रनाशात् । न च प्रागाकाशस्य नित्यानित्यत्वोक्तिविरोधः । परानित्यात्पार्थिवा-न्नित्याद्वायोश्च व्यावृत्तत्वेन तथोक्तिसम्भवात् । वायुर्नित्यः स्वरूपातिरिक्तप्रातिभज्ञानस्यापि नित्यत्वात् । न च प्राङ्नित्यानित्यत्वोक्तिविरोधः । शरीरसहितस्य तदविरोधात् । परनित्याच्छ्री-तत्वादनित्यादाकाशादेश्च व्यावृत्तत्वाच्च । पुरुषादिपदाभिहितश्रीभूदुर्गाभिधा, रमा परनित्या । देहस्यापि नित्यत्वात् । विष्णुः परात्परनित्यः स्वतन्त्रत्वात् । स चैतज्जगद्व्यूह्य तत्प्रतिनियामक-त्वेनात्मानं विभज्य धारयतीति तत्र वायोः परनित्यत्वादि कुतो नेत्यत आह ॥ **तत्र वायोरिति** ॥ तत्र वायुर्वाव नित्य इत्येतत्कथं युज्यत इत्यत आह ॥ **तथापीति** ॥ पार्थिववत्सम्यग-नित्यत्वशून्येभ्यो नित्येभ्यो वियदादिभ्योऽतिशयेन निमित्तेन नित्यतोच्यतेति योजना । कोऽय-मतिशय इत्यतो भाव उक्तः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणेति । अथवा नित्यो वायु-रुदाहृतः । परस्त्वित्यत्र पर इत्यस्य नित्य इत्यनेनान्वयः । तथा च वायुः परनित्य इत्यर्थः । महालक्ष्मीरूपाणि पुरुषपदेनोच्यन्ते । सौकर्यक्रमेण नित्य इत्यादिक्रमोल्लङ्घनम् । कीदृशं वायोः परनित्यत्वमित्यतस्तत्र दर्शयितुं सम्भावितं प्रतिक्षिपति परनित्यत्वदेहादेरपीति । तत्र परनित्यत्व-मनूद्य देहादेरपि नित्यत्वमिति विवरणम् । तर्हि केनाभिप्रायेण परनित्यत्वमित्यत आह **तथापीति** ॥ आदिपदेन पुरुषादिसङ्ग्रहः । नित्यतेत्युपलक्षणम् । अतिशयितचेतनत्वं, सर्वदेवोपास्यत्वं, वृत्तिज्ञानप्रवाहोदयनिम्लोचाभावेनोदयाद्यभावश्चोच्यत इति न युक्तिविरोधोऽपीति ग्राह्यम् । भौतादि-

(वाक्यार्थमुक्तावली)
विषये श्रुतिविरोधमुपपादयन् केषाञ्चिद्व्याख्यानमाशङ्क्य निराह ॥ **तैत्तिरीयेति** ॥ सदेव सौम्येदमग्र आसीत्तत्तेजोऽसृजत तत्तेज ऐक्षत, तदपोऽसृजतेति, छान्दोग्ये वायोर्भूतस्याश्रवणात् । तैत्तिरीये तच्छ्रवणाद्विरोध इति. चेदित्यर्थः ।

## तत्त्वसुबोधिनी

**अत्रेति** ॥ आकाशाद्वायुरिति श्रुतौ मुख्याभिमानिमुख्यवायोरपि वायुशब्देन प्रतिपादनेन श्रुतिक्रमात् पूर्वोक्तसिद्धान्तन्यायातिदेशाद्वाऽनन्तरसङ्गतिरिति भावः । तासां दिशां वत्सः पुत्रः एषा वाय्वाख्यादेवता अनादिः उत्पत्तिरहिता वायोरनुत्पत्तिप्रतिपादिकां श्रुतिं तावदाह **वायुरिति** ॥ अतिदेशत्वसिद्धये भाष्योक्तं अतिशयितनित्यत्वं अतिशयितचेतनत्वं देवोपास्यत्वं उदय-निम्लोचाभावश्चेत्यभ्यधिकाशङ्काचतुष्टयं विवृणोति ॥ **तथा सतीत्यादिना** ॥ ननु भाष्योक्तश्रुतौ आकाशादिशब्दैर्भूतान्येवोच्यन्ते तेभ्यश्च मुख्यवायोः स्वरूपनित्यत्वमेव विशेषः इति नेत्याह ॥ **न चेति** । तथा च चेतनस्यापि ग्रहणसम्भवात् न स्वरूपनित्यत्वरूपो विशेषो वक्तुं शक्यते इति भावः । युक्तिविरोधमाह ॥ **किञ्चेति** ॥ श्रुतिविरोधयुक्त्या अनुभवविरोधमपि आह ॥ **एवं विधस्येति** ॥ नित्यत्वव्याप्तोक्तबहुहेतुमत उत्पत्तिरनुभवबाधितेत्यर्थः ॥ **अत्यन्तमिति** ॥ आकाशादेरनित्यत्वमुक्त्वा वायोर्नित्यत्वाद्युक्तिराकाशादधिका इत्यर्थः । कुविदङ्गेति श्रुत्यर्थस्तु ईशानाधिकरणे उक्त इति दृष्टव्यः । सौत्रेणैतेनेत्यनेन पूर्वाधिकरणोक्तः सर्वोऽपि हेतुर्विवक्षित इत्याह ॥ **अनुत्पन्नत्वेनाश्रुतत्वादित्यादिना** ॥ **न चोदाहृतेति** ॥ उत्पत्त्यभावेऽनुत्पत्तिमते च उदाहृते-त्यर्थः । व्यवस्थया परिहारमाह ॥ **तस्या इति** ॥ भाष्ये मुख्यामुख्येत्यनन्तरं उत्पत्तीत्यध्याहृत्य भाष्यं व्याचष्टे । ॥ **अथैतानीति** ॥ तदनध्याहारेण यथा श्रुतमपि व्याचष्टे ॥ **अनुत्पत्तिश्रुतिरिति** ॥ दूषणान्तरं चाह ॥ **किञ्चेति** ॥ द्वयोरनादित्वेऽपि द्वयोः स्वातन्त्र्यं कुत इत्यत आह ॥ **पराधीनेति** ॥ तथाचानादित्वाङ्गीकारे पराधीनत्वरूपोत्पत्त्यभावात् स्वातन्त्र्यं स्यादित्यर्थः । अस्तु उभयोरपि तदित्यत आह ॥ **न चेति** ॥ सर्वोत्तमत्वानुपपत्तेरिति भावः । कथं सर्वोत्तमत्वानुपपत्तिरित्यतः तामुपपादयति ॥ **अन्योन्येति** ॥ तथाचाऽन्योन्यानुरोधेन उभयोरपि परार्थितत्वप्राप्तिः । अननुरोधे तु न सर्वैश्वर्यमिति भावः । स्मृतौ पर इत्यस्य श्रूयमाणानित्य-पदेनैवान्वयत्रैविध्यशक्त्या चतुर्थेऽनुपपन्नं द्वितीयस्तथाशब्दोऽप्यनुपपन्नः । अनित्यानीह

(तत्त्वसुबोधिनी)
भूतानीत्येतच्चायुक्तमित्यत अनित्य इति पदानुवृत्त्याह परः परानित्यः इति । व्यूह्यव्यूहाकारेण कृत्वा प्रतिव्यूहनियामकत्वेन स्थापयित्वा । कथमनेन स्मृतिवचनेन श्रुतियुक्तिविरोधपरिहारः इत्यतः आह ॥ **अत्रेति** ॥ सम्यगित्यादि आकाशादिपदेन चेतनस्यापि ग्रहणात् इति भावः ॥ **अतिशयेनेति** ॥ उपलक्षणमेतत् । अतिशयितचेतनत्वं सर्वदेवोपास्यत्वं वृत्तिज्ञानप्रवाहोदयनिम्लोचाभावेन तस्योदयानिम्लोचाभावश्चोच्यते इति न युक्तिविरोधोऽपीति ग्राह्यम् । तैत्तरीयछन्दोगश्रुत्योः परस्परविरोधः इति शङ्कते ॥ **तैत्तरीयेति** ॥

## वाक्यार्थविवरणम्

अतिदेशो नाम शङ्काया आधिक्ये सति परिहारसाम्यम् ॥ **गौणार्थत्वम्** ॥ एकदेशानुत्पत्ति-परत्वम् ॥ **तथा सतीति** ॥ एवं नित्यानित्यत्वप्राप्तौ सत्यामित्यर्थः । ननु तेजोऽवन्नानीत्यादिश्रुतौ आकाशादिशब्दैराकाशादिभूतानामेव वाच्यत्वात् 'वायुर्वाव' इत्यत्र च वायुपदेन देवताया एव वाच्यत्वादाकाशादिभूतापेक्षया वायुदेवताया एव विशिष्य नित्यत्वोक्ति-र्युक्तैवेत्यत आह ॥ **न चेति** ॥ **भूतमेवेति** ॥ एवञ्चाकाशादिदेवताया अप्याकाशादिपदेन वाच्यत्वसम्भवात् तदपेक्षया वायुदेवतायाः पुनर्विशिष्य नित्यत्वोक्तिरयुक्तेति भावः ॥ **तस्य** ॥ स्वरूपोत्पत्त्यभावस्य ॥ सर्वदेवतोपास्यता ॥ 'कुविदङ्ग' इत्यादिनोच्यमाना । एवं विधस्य । उदयादिशून्यतया प्रमितस्य । न्यायविवरणस्थततोऽधिकशब्दार्थकथनमत्यन्तेति । तदुपपादयति ॥ **परेति** ॥ तथा चोभयोरप्यनादिनित्यत्वे पराधीनविशेषलाभरूपोत्पत्त्यभावेनोभयोः स्वातन्त्र्यमेव प्राप्तमिति भावः । अस्तु स्वातन्त्र्यं को दोष इत्यत आह ॥ **न चेति** ॥ न हीत्यर्थः । अन्योन्यानुरोधे । अन्योन्याधीनत्वे उभयोरपि पराधीनत्वप्राप्तेः स्वव्यतिरिक्तसर्वोत्तमत्वायोगेन न स्वातन्त्र्यमिति भावः । अन्योन्याननुरोधे तु न सर्वोत्तमत्वम् । एकस्यापराधीनत्वेन तदुत्तमत्वायोगेन सर्वोत्तमत्वा-योगादिति भावः । विशेषेणानुत्पत्तिश्रुतिः । ''वायुर्वाव नित्य'' इति श्रुतिः । व्यवहितत्वादन्वयं दर्शयति ॥ **एतद्व्यूह्येति** ॥ एतच्चतुष्टयं व्यूह्य समूहीकृत्य स्वात्मानमिति शेषोक्तिः । तत्र । नित्यादिचतुष्टये नियामकत्वेन रूपव्यूहं कृत्वा ।

ननु अनेनातिशयेन नित्यत्वोक्तेः परमचेतनत्वोक्तेश्च कोऽभिप्राय उक्त इत्यत आह ॥ **अत्रेत्यादिना** ॥ परात्परनित्यत्वस्य व्याख्यानं स्वातन्त्र्यलक्षणमिति । इदं भगवन्निष्ठम् ।

**(वाक्यार्थविवरणम्)**

परमनित्यत्वस्य व्याख्यानं देहादेरपि नित्यत्वमिति । इदं श्रीतत्त्वनिष्ठम् । नास्त्येव । बाधादिति भावः । सम्यगनित्यताशून्येभ्यो नित्येभ्य इति । एवञ्च पार्थिवपदार्थानां परानित्यत्वं नाम सम्यगनित्यत्वम् । आकाशादिभूतानामनित्यत्वं तु भौतिकपदार्थवत्सम्यगनित्यताशून्यत्वादित्युक्तं भवति । सम्यक्त्वादिकं चेत्थम् । उत्तरत्र क्रमाद्विकार एव जननमिति उपचयाधिक्यक्रमाद्विकारो जननमित्युच्यते । एवं चोपचितात्पभागापगमाद् भूतानामनित्यत्वमात्रं, पार्थिवपदार्थानां तूपचित-बहुभागापगमात् परानित्यत्वमिति ज्ञेयम् । नित्यतोच्यत इत्युपलक्षणम् । सर्वदेवतोपास्यत्वादिकं चोच्यत इति वक्तव्यम् । 'परस्तु नित्यः पुरुषः प्रकृतिः काल एव च' इत्यत्र पुरुषादिशब्दैः रमैवोच्यते । 'पुरुषाव्यक्तकालानां रमैवैकाभिमानिनी' इत्युक्तेः । तस्याः परमनित्यत्वं नाम देहतोऽपि नित्यत्वं ज्ञातव्यम् । भूतवायोरमुख्याभिमानी प्रवहः । भूतविषये श्रुतिविरोधं शङ्कते ॥ **तैत्तरीयेति** ॥ तेजःपूर्वेवेति । 'तत्तेजोऽसृजत' इत्युक्तेरिति भावः ॥ **उक्त्यनुक्त्योरिति** ॥ तथा च छान्दोग्येऽनुक्तिरेवास्त्यत आकाश वायुद्वारा तत्तेजोऽसृजतेति व्याख्यानेन विरोधोऽस्तीत्याशयः । प्रागेव । दूरत इत्यर्थः ।

## वाक्यार्थमञ्जरी

**तासामिति** ॥ प्राच्यादिदिक्स्थितपरमात्मबाहुविशेषाणां धर्मज्ञानादिरूपप्रधानवायुपुत्र इत्यर्थः । योऽयं पवते वीजते सैषा देवतानादिरित्यर्थः । गौणार्थत्वं स्वरूपानादित्वरूपम् ।

ननु भाष्योदाहृतश्रुतावाकाशादिपदैर्भूतान्येवोच्यन्ते तेभ्यश्च मुख्यवायोः स्वरूपनित्यत्वमेव विशेष इत्यत आह ॥ **न चाकाशपदेनेति** ॥ निम्लोचोऽस्तमयः ॥ **एवं विधस्येति** ॥ नित्यत्व-व्याप्तोक्तबहुहेतुमत उत्पत्तिरनुभवबाधितेत्यर्थः ॥ **ॐ एतेन मातरिश्वा व्याख्यातः ॐ** । एतेनाश्रुते-रित्यादिप्रागुक्तहेतुसमुदायेन मातरिश्वा वाय्वनुत्पत्यादिपरशब्दोऽपि गौणत्वेन व्याख्यात इत्यर्थः । एतेनेत्यनेन परामृष्टहेतुसमुदायं क्रमेणाह अनुत्पन्नत्वेनाश्रुतत्वादिना मुख्यानुत्पत्त्यनुपपत्तेरित्यन्तेन ॥ **प्रमाणविरोधेनेति** ॥ न जायते म्रियत इत्यादीश्वरस्यानादित्वप्रतिपादकप्रमाणविरोधेनेत्यर्थः । कुत इत्यत आह ॥ **पराधीनेति** ॥ तथा चोत्पत्तेः पारतन्त्र्यरूपत्वेन तदनङ्गीकारे स्वातन्त्र्यमनिवार्यमिति भावः ॥ **द्वयोर्युक्तमिति** ॥ तथात्वे द्वयोरपि सर्वोत्तमत्वप्राप्तेरिति भावः । तदप्यस्त्वित्यत आह

(वाक्यार्थमञ्जरी)

॥ **अन्योन्येति** ॥ परस्पराधीनत्वानधीनत्वयोरित्यर्थः । वायोः सर्वोत्तमत्वे विष्णुस्तदधीन इत्यङ्गीकार्यम् । विष्णोः सर्वोत्तमत्वे वायुस्तदधीन इत्यङ्गीकार्यम् । एकस्यैवोच्चत्वं नीचत्वं विरुद्धमिति भावः । व्यूह्य समूहीकृत्य स्वात्मानं नियामकत्वेन कथमनेन स्मृतिवचनेन श्रुतियुक्तिपरिहार इत्यत आह ॥ **अत्रेति** ॥ परात्परनित्यत्वमित्यस्य व्याख्यानं स्वातंत्र्यलक्षणमिति परनित्यत्वमित्यस्य देहादेरपि नित्यत्वमिति ॥ **सम्यगनित्यतेति** ॥ पार्थिवादिवद्बहूपचयापचय-शून्येभ्य इत्यर्थः । अतिशयेन नित्यतोच्यत इति । उपलक्षणमेतत् । अतिशयितचेतनत्वं सर्वदेवोपास्यत्वं वृत्तिज्ञानप्रवाहोदयनिम्लोचाभावेन तस्योदयनिम्लोचाभावश्चोच्यत इति न युक्तिविरोधोऽपीति ग्राह्यम् । अमुख्यमुख्याभिमानिनौ प्रवहप्रधानवायू विरोधं शङ्कते ॥ **तैत्तिरीयेति** ॥ **तेजः पूर्वैवेति** ॥ तत्तेजोऽसृजतेत्युक्तेरिति भावः । प्रागेव मूलत एव ।

॥ इति मातरिश्वाधिकरणम् ॥

# ३. अथ असम्भवाधिकरणम्

**॥ ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ९ ॥**

'असद्वा इदमग्र आसीत् । ततो वै सदजायत' (तै.उ.२-७) 'असतः सदजायत' (ऋ.सं. १०-७२-२) इत्यादि श्रुतिभ्यः सतोऽप्युत्पत्तिरिति चेन्न । अनुत्पत्तिरेव सतः । तुशब्देनोक्तव्यवस्थामपाकरोति । न ह्यसतः सदुत्पद्यते । अदृष्टत्वादनुपपत्तेः । 'तद्वा एतद् ब्रह्माहुर्वृहति बृंहयति चेति । तद्वा एतदसदाहुः न ह्यासादयति कश्चनेति । तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यत' इति श्रुतेरसच्छब्दो ब्रह्मवाची । 'देवानां पूर्वे युगेऽसतः सदजायतेति ब्रह्म वा असत् सद्वाव प्राणः प्राणो वाव महान् सह ओजो वलमित्याचक्षत' इति पैङ्गिश्रुतिः ।

'त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः ।
ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन् करवाम किं त' इति भागवते ॥

'अजायमानो बहुधा विजायत' (तै.आ. ३-१३) इति च ।

'प्रत्यक्षत्वं हरेर्जन्म न विकारः कथञ्चन ।
पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ॥
विकार एव जननं पुरुषे तद्विशेषणम् ।
परतन्त्रविशेषो हि विकार इति कीर्तित' इति (च) पाद्मे ॥

'अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः ।
विकारहेतुकं सर्वं कुरुते निर्विकारवान् ॥
शक्तिशक्तिमतोश्चापि न विभेदः कथञ्चन ।
अविभिन्नाऽपि सेच्छादिर्भेदैरपि विभाष्यते' इति भागवततन्त्रे ॥

॥ इति असम्भवाधिकरणम् ॥

## तत्त्वप्रदीपिका

असम्भाव्यमानोत्पत्तिकयोर्वियत्पवनयोः कथञ्चिदुत्पत्तावुक्तायामत्यन्तासम्भाव्यामपि ब्रह्मण उत्पत्तिं प्रत्यतिशङ्कामुन्मूलयितुमयमारम्भः । असम्भवस्तु सतोऽनुपपत्तेः । अनुत्पत्तिरेव परब्रह्मणः ।

(तत्त्वप्रदीपिका)

न भागोत्पत्तिरपि । नापि पराधीनविशेषः । अतो नात्र पूर्वोक्तव्यवस्था । न ह्यसतः सदुत्पद्यते । अदृष्टत्वात् प्रमाणतस्तदुत्पत्तेः । वृहति वर्धते । नित्यवृद्धस्याप्ययं व्यपदेश आत्माऽस्तीतिवत् ।

'पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ।
विकार एव जननं पुरुषे तद्विशेषणम्'' ॥ इत्यत्र प्रकृत्यादयो जडा उच्यन्ते ।

चेतनानां पुरुषशब्दार्थान्तर्भावादयुक्तेः । जडप्रकृतेर्विकारः परिणामः । कालस्योत्पत्तिरेव । 'अहानि पूर्वीरुषसो जरन्त' 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति हि श्रुतिः । महदादीनां च । पुरुषे तद्विशेषणं चेतने तद्विशेषणं जननमित्यर्थः । तत्र चित्प्रकृतेः सिसृक्षुत्वादिः पराधीनो विशेषः । तथा चोक्तं– 'स एव भूयो निजवीर्यचोदिताम्' इत्यादि ॥ सर्वचेतनेषु विकारो विशेषणम् । विकारविशिष्टत्वं विकारिवस्त्वभिमानेन ।

कः पुनरयं विकारो नाम ? यः प्रत्यक्षतप्रत्यक्षते प्राप्नुवति स्रष्टृत्वादिविस्पष्टविशेषशालिनि द्वैधतद्विलयविश्वग्रासोद्गारगमनादिमति भगवति कथञ्चिदपि नास्तीत्युक्तः । यश्च नित्येषु प्रकृत्यादिषु भवत्येव । कथं च व्याप्तस्याविकारिणो गत्यादिकं युज्येत । अप्राप्तं हि गम्यते, गमने च स्थितिदेशाद्वियुज्यते । संयोगविभागयोरसमवायिकारणत्वात्तत्कर्मण इत्यत आह । **परन्त्रविशेषो हि विकार इति कीर्तित इति** । नात्र परिणाममात्रं विकारो विवक्षित इत्यर्थः । अविकारोऽपि भगवानित्यादि च व्याप्तस्यापि गत्यादिकं श्रूयते । 'जवनो गृहीत' इत्युक्त्वा 'तमाहुरग्र्यं पुरुषं महान्तम्' इत्याह । 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति, सप्राणमसृजत'' इत्यादि च । प्राप्तमेव च रूपान्तरेण गम्यते । वियुज्यमानदेशे च रूपान्तरमस्ति वहुरूपत्वादित्यदोषः । 'अनेजदेकं मनसो जवीयः' इत्यादि श्रुतेश्चैवमुपपत्तिः । एष्टव्यमेव चानेकरूपत्वमेकत्रेश्वरस्येश्वरवादिनाम् । आत्मनो वा घटज्ञातृपटज्ञात्रित्याद्येकमेव रूपं घटादिकं जानाति सृजति चेति चेत्तर्हि तज्ज्ञातृत्वमेतज्ज्ञातृत्वं तत्स्रष्टृत्वमेतत्स्रष्टृत्वमित्यादयो विशेषास्तस्य स्युः । विशेषबहुत्वेऽपि विशेष्येक एवेति चेदत्रापि गन्तृत्वं स्थायित्वमित्यादयस्तस्यैकस्य विशेषाः । युगपदेकस्य तदुभयं विरुद्धमिति चेन्न । पूर्वदेशस्थितिपरमाण्वादिनयनयोरप्येकस्यैव विरोधेन तदसम्भवात् ।

ननु नायं गच्छन्नयति स्थित एव स्वेच्छया । एवं च स्वावस्थानेच्छा तदपवाहेच्छेति विरोध इच्छायाम् । न च लोके कश्चित्स्वयमचलन्नन्यं देशान्तरं नयन् दृश्यते । तत्स्थायिनः सा निनीषा

(तत्त्वप्रदीपिका)
मुधा स्यात् । अतस्सर्वशक्तित्वेनेश्वरस्य सर्वमेतन्निर्वोढव्यम् । न च तत्तज्ज्ञातृत्वस्रष्टृत्वादिकमौपाधिकमिति वाच्यम् । तज्जन्यत्वे तद्गम्यत्वे च तत्सत्यत्वानिवारणात् । स्वरूपादिविकल्पासहत्वाच्च । स्वरूपत्वे तस्य मुधोपाधिः । उपाधिजन्यत्वे च तन्नाशे नाश इति न स्वरूपत्वम् । न च भेदः, सम्बन्धासम्भवात् । अथोक्तदोषमुमुक्षया तदौपचारिकमिति मतं, तदपि न चातुर्यमाधत्ते । सर्वज्ञत्वादेरभावार्थत्वादुपचारपदस्य । तस्मात्स्वाभाविका विशेषा ज्ञातृत्वस्रष्टृत्वादयः अस्तित्वेश्वरत्वादिवत् ।

ननु तवापि सर्वसंहार ईश्वरस्य तत्तज्ज्ञातृत्वस्रष्टृत्वादिकं नास्तीति कथं स्वरूपत्वम् ? मैवम् । तदाऽपि तच्छक्तिमत्त्वात् । तदेव हि शक्तिरूपेण तिष्ठति । व्यक्तता च न शक्तितोऽन्या, शक्तिरेव हि व्यक्ता भवति, तौ च विशेषौ ज्ञानादेः स्वरूपभूतौ । न चैवंविधं स्वाभाविकं विशेषमन्तरेण नित्यज्ञानेच्छावादिनां निर्वाहः स्यात् । नित्यसामान्यादिवादिनां च विशेषाद्यभावसमये न तत्सामान्यत्वादिकं स्यात् । औपाधिकविशेषस्य पूर्वमेव निरस्तत्वात् । न चाक्रियस्येच्छामात्रेण लोके कर्तृत्वं दृष्टम् । न च चेतनप्रेरितस्याचेतनस्य प्रवृत्तिमत्त्वम् । शवशरीरस्यापि तत्प्रसङ्गात् । प्रयत्नवदात्मसंयोगाच्छरीरस्य कर्तृत्वं चेत्क्रियावत्त्वमात्मन इष्टं स्यात् । तद्व्यतिरेकेण प्रयत्नानिरूपणात् । न चाप्रवृत्तस्य प्रवर्तकत्वम् । अतः कर्ता चेदात्माक्रियावानिष्यताम् । कर्ता न करोतीति च विप्रतिषिद्धम् । अहो खलु चास्य कृतिलक्षणं प्रयत्नं नित्यमभ्युपगच्छतो नित्यकर्मणा किमपराद्धम् । नाममात्रभेदात् । न चेश्वरस्य क्रियावत्त्वेऽपि श्रमाद्यापातः, परमैश्वर्यात् । सर्वज्ञत्वेऽपि विक्षेपहर्षशोकाभाववत्तदभावोपपत्तेः । अक्रियस्यैवेच्छामात्रेण स्रष्टृत्वशक्तिं प्रविजानन्नविकारेण करण एव तां किमिति नानुजानीयात् । अशक्तिवादी चेदक्रियस्य स्रष्टृत्वमिच्छन्न विक्रियस्य सृष्टिक्रियामिच्छेदेव । तथा च 'सत्यं ह्येवेदं विश्वमसौ सृजते' ''नित्यं ह्येवासौ कुरुते' 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादि श्रुतयस्सङ्गृहीता भवन्ति । अतस्सुष्ठूक्तं–

'अविकारोऽपि भगवान्सर्वशक्तित्वहेतुतः ।
विकारहेतुकं सर्वं कुरुते निर्विकारवानि' ॥ इति ।

विकारवान्धर्मोऽप्यस्य नास्तीति निर्विकारवान् ।

## तत्त्वप्रकाशिका

अत्र सर्वजगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तदुत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सकलजगत्कारणं ब्रह्मेत्युक्तम् । तस्य चोत्पत्तिमत्त्वे कारणत्वानुपपत्ते-स्तन्निराकार्यमेव । ब्रह्मात्र विषयः । उत्पत्तिमन्न वेति सन्देहः । 'असतः सदजायत' 'सदेव सोम्येद-मग्र आसीत्' इति श्रुतिविरोधः सन्देहबीजम् । तत्र सूत्रमेवोदाहृत्य पूर्वपक्षं तावद्वहिराह ॥ **असम्भवस्त्विति** ॥ अस्त्येवोत्पत्तिर्ब्रह्मणः 'सदजायत' इति श्रुतेः । न च ब्रह्मणः सर्वकारणस्योत्पत्तौ कारणाभावः । असतस्तत्कारणतया श्रुतत्वात् । न चानादित्वेऽपि श्रुतिरस्तीति वाच्यम् । असम्भवदुद्भवयोर्न भोनभस्वतोरुत्पत्तावनादितया समस्य ब्रह्मणोऽनुत्पत्तिरयुक्तेति जन्मश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । अनुत्पत्तिश्रुतिस्तु सर्वात्मनाऽनुत्पत्तिवादिनीत्यभिमान-श्चेत्तर्ह्यप्रमाणमेव । न चेदाकाशादाविव व्यवस्था स्यात् । अतो ब्रह्मणोऽप्युत्पत्तिमत्त्वान्न तत्राशेषकारणतया श्रुतिसमन्वयो युक्त इति भावः । सिद्धान्तयत्सूत्रं व्याचष्टे ॥ **नेति** ॥ मयापि वियदादिवद् व्यवस्थाया ब्रह्मणोऽनुत्पत्तेरङ्गीकृतत्वात् सिद्धार्था प्रतिज्ञेत्यत आह ॥ **तुशब्देनेति** ॥ न व्यवस्थया ब्रह्मणोऽनुत्पत्तिः सूत्रे प्रतिज्ञायते येन सिद्धार्था प्रतिज्ञा स्यात् । किं तु सर्वात्मना-नुत्पत्तिरेवेति भावः । अत एव तुशब्दमेवेति व्याचष्टे । अस्यां च प्रतिज्ञायां सत इत्यनेनैव स्वातन्त्र्याख्यो व्यतिरेकी हेतुः सूचितः । तेनैव पूर्वपक्षयुक्तेर्गतिश्चोक्ता भवति । गगनपवनादीना-मस्वातन्त्र्यादेवोत्पत्तिरिति ।

नन्वसतः सदजायत' इत्यादिश्रुतौ ब्रह्मणोऽप्युत्पत्तिश्रवणात्कथं सर्वात्मनानुत्पत्तिरुच्यत इत्याह ॥ **न हीति** ॥ नानया श्रुत्या ब्रह्मणो जनिः सिद्ध्यति । असतः सकाशात्पदार्थोत्पत्तेरदृष्टत्वेन प्रातीतिकार्थस्याप्यनुपपन्नत्वादिति भावः । तर्ह्येतच्छ्रुतेरप्रामाण्यप्रसङ्ग इत्यतः श्रुत्यन्तरेण तां सम्यग्व्याचष्टे ॥ **तदिति** ॥ तद्वा एतदसदाहुः । न ह्यासादयति कश्चनेत्यस्यैवात्रोपयोगित्वेऽपि तस्य ब्रह्मपरत्वज्ञापनायान्यांशोदाहरणम् । असच्छब्दस्य ब्रह्मपरत्वेऽपि कः समस्तश्रुत्यर्थः इत्यत आह ॥ **देवानामिति** ॥ कथं प्राणः सदिति महत्वादिसद्गुणत्वादित्याह ॥ **प्राण इति** ॥ एतच्छ्रुत्यैवोक्तार्थसिद्धावप्यसच्छब्दस्य ब्रह्मणि निर्वचनार्थं पूर्वश्रुत्युदाहरणम् । सच्छब्दवाच्यस्य वायोर्ब्रह्मजातत्वे स्मृतिं चाह ॥ **त्वमिति** ॥ रामकृष्णादिरूपेण हरेर्जायमानत्वात् कथं जन्माभाव इत्यत आह ॥ **अजायमान इति** ॥ अजायमानस्य कीदृशं जन्मेत्यत आह ॥ **प्रत्यक्षत्वमिति** ॥

(तत्त्वप्रकाशिका)

**क्रमादित्युपचयाधिक्यक्रमात्** । पुरुषस्य चेतनत्वात्कथं विकार इत्यत आह ॥ **पुरुष इति** ॥ तेन विकारेण विशेषितत्वं भवतीत्यर्थः । तर्हि तस्य नोत्पत्तिरित्यत आह ॥ **परतन्त्रेति** ॥ जगत्कारणत्वात् परमेश्वरस्य कथमविकारित्वमित्यत आह ॥ **अविकारोऽपीति** ॥ सर्वशक्तित्वेन सर्वं करोतीत्यनेन निमित्तमित्युक्तं भवति । विकारहेतुकं प्रकृत्याद्युपादानकं निर्विकारवानिति तद्धर्मादेरविकार उच्यते । शक्त्या चेज्जगत्कारणत्वं तद्विनाशे तदभावः स्यादित्यत आह ॥ **शक्तीति** ॥ इच्छाज्ञानप्रयत्नानां कर्तृत्वोपयोगित्वात्कथं शक्त्या तदित्यत आह ॥ **अविभिन्नापीति** ॥ एकैवेत्यर्थः । एतेनेच्छादिपूर्वककारणत्वं नोपादानस्येत्युक्तं भवति । अतः श्रुत्यविरोधेन ब्रह्मणोऽनादित्वसिद्धेर्युक्तः श्रुतिसमन्वयस्तत्रेति सिद्धम् ।

## गुर्वर्थदीपिका

प्रलये महालक्ष्मी वेदाव्याकृताकाशादिषु सत्स्वपि सदेवेति विशिष्य ब्रह्मणस्सत्पदेन ग्रहणं स्वातन्त्र्येण स्थितिमादायैव भवेदिति भावेनोक्तं **सत इत्यनेनैवेति** ॥ यद्वा सीदत्यवसीदति सर्वं जगद्यस्मात्सीदति निषीदत्यस्योदरे सूक्ष्मं जगदिति वा । पारतन्त्र्यादिदोषरहितत्वाद्वा सत् स्वतन्त्र इति भावः । परतो हि तदुदीक्ष्यत इत्यत्र भावप्रधानो निर्देशः । परतया तदुदीक्ष्यते ब्रह्मादिभिरित्यर्थः । हि यस्मात्परतयोदीक्ष्यते अतः परमाहुरिति योजना । नन्वधिभूतविचाराय प्रवृत्तेन सूत्रकृता भूतद्वयविचारानन्तरं भूतत्रयविचारात्पूर्वमकस्मान्मध्ये ब्रह्मविचारायैकमधिकरणं कस्मात्कृतमिति चेत्सत्यम् । अनुत्पन्नत्वेन प्रसिद्धयोर्वियन्मरुतोरुत्पत्तिसमर्थने अनेनैव न्यायेनानादितया प्रसिद्धब्रह्मणोऽप्युत्पत्तिः स्यादिति शङ्कायां स्मृतस्य ब्रह्मानुत्पादस्योपेक्षानर्हत्वात् । प्रसङ्गसङ्गत्या निरूपणमिति समाधानसम्भवात् ।

## भावबोधः

**तदुत्पत्तिविषयश्रुतीति** ॥ अत्र यदि नभोनभस्वतोरुत्पत्तिश्रुत्यवष्टम्भेनोत्पत्तिरिष्यते, तर्हि सतो ब्रह्मणोऽप्युत्पत्तिश्रुतिसामान्यात् स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति ज्ञातव्यम् ॥ **उत्पत्तिमदिति** ॥ अत्र ब्रह्मोत्पत्तिमन्न वेति चिन्ता । तदर्थं 'मसतः सदजायत' इति श्रुतिर्ब्रह्मोत्पत्तिप्रतिपादिका भवत्युत न भवतीति । तदर्थमाकाशाद्युत्पत्तिश्रुतेः पराधीनविशेषलाभ-

(भावबोधः)

लक्षणोत्पत्तिपरत्वेन व्यवस्थाव'दसत' इति श्रुतेस्तत्परत्वेन व्यवस्था सम्भवत्युत नेति । तदर्थं ब्रह्मणः पराधीनविशेषः किं सम्भवत्युत नेति । तदर्थं तस्यानादितया किमाकाशादिसाम्यमेवोत सर्वथाऽनुत्पत्तिसाधकं स्वातन्त्र्याख्यं ततो वैलक्षण्यमस्तीति । तदर्थं स्वातन्त्र्याङ्गीकारे 'असत' इति श्रुतेरप्रामाण्यं प्रसज्येत न वेति । तदर्थमसतः सदिति श्रुतिस्थौ सदसच्छब्दौ किं ब्रह्मशून्यपरौ किं वायुविष्णुपराविति । तदर्थं सदसच्छब्दयोर्ब्रह्मवायुपरत्वेऽसतो जनकत्वादृष्टिरूपबाधकं वायुविष्णुपरत्वे प्रमाणं च न स्त उत स्त इति ॥ **अस्त्येवोत्पत्तिरिति** ॥ पराधीनविशेषलाभ-लक्षणेत्यर्थः । अनेन सतः पराधीनविशेषवत्त्वमिति न्यायविवरणमपि व्याख्यातं भवति । असत-स्तत्कारणतया श्रुतत्वादिति । पूर्वोक्ताच्छादनेनैवेदमुक्तम् । तेनासतः कारणत्वस्य 'प्रतिषेध-मात्रत्वात्' 'नासतो दृष्टत्वात्' इति पूर्वमेव निराकृतत्वात् कथं पूर्वपक्षोत्थानमिति शङ्कानवकाशः । अत एव सिद्धान्तेऽदृष्टत्वादनुपपत्तेरिति पूर्वोक्तहेत्वतिदेशेनासतः कारणत्वं निराकरिष्यते ।

ननु तथापि असतः कारणत्वनिरासपरतया अधिकरणद्वयेनास्य गतार्थतेति चेत्, न; तत्र प्रतिषेधमात्रत्वादृष्टत्वाभ्यां जगत्प्रत्यसतः कारणत्वं न सम्भवतीत्युक्तम् । अत्र तु तद्धेत्वतिदेशेनैव ब्रह्म प्रति कारणत्वं न सम्भवतीत्युच्यमानत्वेन भेदादिति ज्ञातव्यम् । 'सतः साम्यम्' इत्यनु-व्याख्यानोक्तयुक्तिमुपपादयति– **असम्भवदुद्भवयोरिति** ॥ अनेन ब्रह्मोत्पत्तिमत् तदविरोध्य-नादित्वकत्वादिति युक्तिरुक्ता भवति । न च विशेषणवैयर्थ्यम्; विरोधनिरासकव्याप्त्यौपयिकत्वात् ॥ **न चाप्रसिद्धिः** ॥ आकाशादावेव प्रसिद्धत्वादिति । तद्वा एतदसदाहुरिति श्रुत्युदाहरणानु-रोधेनाह– **अनुत्पत्तिश्रुतिस्त्विति** ॥ 'तु'शब्देनोक्तव्यवस्थामपाकरोतीति भाष्यानुरोधेनाह– **न चेदिति** ॥ स्वातन्त्र्यादिति न्यायविवरणानुसारेण सत इति भाष्याभिप्रायमाह– **सत इत्यनेनैवेति** ॥ 'सत्त्वं स्वातन्त्र्यमुद्दिष्टम्' इति भारतोक्तेरिति भावः ॥ **गतिरिति** ॥ सोपाधिकत्वमित्यर्थः । साध्यव्यापकत्वरूपप्रयोजकत्वमेव दर्शयन्नुपाधिमेवाह– **गगनेति** ॥ अविकार इत्यनेन पौनरुक्त्य-परिहारार्थमाह– **तद्धर्मादिरिति** ॥ शक्तिमता भगवताऽविभिन्नापीति न विभेद इत्युक्तानुवाद इति प्रतीयते । तन्न युज्यते । भगवदभिन्ना अपि भगवतः शक्तिरिति तत्सम्बन्धित्वेन व्यवहारादि-रूपभेदकार्यस्यानुक्तेः । शक्तेरिच्छाद्यभेदालाभाच्चेति आशयवान् व्याचष्टे– **एकैवेत्यर्थ इति** ॥ अनेना'पि'रवधारणार्थ इत्युक्तं भवति ।

## भावदीपः

**असतः सदजायतेति** ॥ एतेन सर्वे इत्यत्रासदादिशब्दस्य ब्रह्मपरत्वोक्तावपि असदिति चेदित्यत्र भाष्योक्तदिशा अन्यप्रापकत्वादिति भावः । सूत्रार्थभ्रान्तिं निराह ॥ **वहिराहेति** ॥ भाष्यस्थप्रतिज्ञाहेतू आकाङ्क्षाक्रमेणाह ॥ **अस्त्येवोत्पत्तिरिति** ॥ पराधीनविशेषावाप्तिरूपेत्यर्थः । न च सतः पराधीनविशेषवत्त्वमिति न्यायविवरणोक्तिः भाष्ये श्रुतिभ्य इत्युक्तबहुत्वस्य पूर्वपक्ष-युक्तित्वभ्रमनिरासाय इति श्रुतेरित्युक्तम् । असद्वेति वाक्यमसतो लयवर्तित्वाद्युक्त्या कारणत्वो-पपादकमिति भावेन शङ्कापूर्वं तदर्थमाह ॥ **न च ब्रह्मण इति** ॥ असदिति चेदित्यत्रासतो विश्वप्रागभावस्य विश्वकारणत्वं शङ्कितमत्रासत एव ब्रह्मकारणत्वमाशङ्क्यत इति भेदः । अनादित्वश्रुतितो जन्मश्रुतेः प्राबल्याय चित्प्रकृतेश्च सममेवेत्यन्यत्रोक्तपूर्वपक्षयुक्तिं शङ्कापूर्वं व्यनक्ति ॥ **न चेति** ॥ **श्रुतिरस्तीति** ॥ सदेव सोम्येत्यादिरूपेत्यर्थः ॥ **अनादितया समस्येति** ॥ देहानादित्वादिना चित्प्रकृतिसमस्येत्यर्थः । तर्हि का गतिः श्रुतेरित्यत आह ॥ **अनुत्पत्तिश्रुति-स्त्विति** ॥ सौत्रतुशब्दव्यावर्त्यमाह ॥ **व्यवस्थेति** ॥ तत्स्वरूपादिपरानादित्वश्रुतिः । जन्मश्रुतिस्तु पराधीनविशेषावाप्तिपरेत्यर्थः ॥ **अत इति** ॥ सयुक्तिकोत्पत्तिश्रुतिभावादनादित्वश्रुतेः स्वरूपानादिपरत्वेनाऽविरोधकत्वाच्चेत्यर्थः । उत्पत्तिमत्त्वात्पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वा-दित्यर्थः । उत्पत्त्यसम्भव इत्यनुवृत्त्यानुत्पत्तिरिति लाभेऽपि तस्य न वियदिति नञन्वितत्वा-त्सूत्रेऽसम्भव इति पुनरप्युक्तस्यानुत्पत्तिरिति व्याख्येति भावेनाह ॥ **सूत्रं व्याचष्ट इति** ॥ भाष्ये विष्णोरित्यनुक्त्वा सत इति यथाश्रुतानुवादस्य भावमाह ॥ **अस्यां चेति** ॥ **स्वातन्त्र्याख्य इति** ॥ 'सत्त्वं स्वातन्त्र्यमुदिष्टं तच्च कृष्णे न चापरे । अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारतेति एकादशस्कन्धतात्पर्योदाहृतभारतोक्तेरिति भावः । एतेन स्वातन्त्र्यादित्यन्यत्रोक्तो हेतुः सूत्रारूढो'' दर्शितः । गतिमेव व्यनक्ति ॥ **गगनेति** ॥ उत्पत्तिः पराधीनविशेषावाप्तिरूपेत्यर्थः ॥ **महत्त्वादि-सद्गुणत्वादिति** ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते इति गीतोक्तेरिति भावः ॥ **स्मृतिं चाहेति** ॥ स्मृत्यर्थस्तु हे देव त्वं कविः अजश्च तथापि भवान् शक्त्यां भार्यायां गुणानां कर्मणामदृष्टानां योनौ हेतावजायां चिदचित्प्रकृतौ रेतो गर्भम् आदधे । ततः तस्याः प्रकृतेः वयं सत्प्रमुखाः यदर्थं यत्प्रयोजनाय आत्मन् स्वामिन् बभूविम तत्किं करवाम ते तवेति तृतीयस्कन्धे

(भावदीपः)

देवानां वाक्यम् । यद्यपि तत्र सत्प्रमुखाः महदादय इति तात्पर्यं तथापि वायुरपि महत्तत्वाभिमानीत्यविरोधः ॥ **विकारेणेति** ॥ देहेन विशिष्टत्वमित्यर्थः । अविकारोऽपीत्यनेनापौनरुक्त्याह ॥ **निर्विकारवानितीति** ॥ विकारान्निर्गता निर्विकारा धर्मास्तद्वानित्यर्थः ॥ **एकैवेत्यर्थ इति** ॥ यद्यभिन्नेत्यस्य भेदहीनेत्यर्थः स्यात्तर्हि तत्प्रति समर्पकस्य भेदैरपि विभाष्य(व्य)त इत्यस्य भेदार्थः स्यात् । न च तद्युक्तम् । निर्भेदत्वात् । भेदैरिति बहुवचनायोगाच्च । एकेत्यर्थे तु भेदैरित्यस्यापि द्वित्वादिसङ्ख्याभिरित्यर्थो भवति । तथा च निर्भेदेऽपि द्वित्वादिसंख्यानां सत्त्वान्न दोष इति भावः ॥ **एतेनेति** ॥ तथा चेश्वरे (रस्येच्छा) च्छापूर्वककारणत्वान्नोपादानत्वमिति भावः ॥ **अत इति** ॥ क्वाप्यदर्शनेनासतः कारणत्वानुपपत्त्या विष्णोः स्वातन्त्र्येण पराधीनविशेषावाप्तिरूपजन्मानुपपत्त्या च श्रुतेर्ब्रह्मकारणत्वपरत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**न चानादित्वेऽपीति** ॥ अनादित्वेऽपि श्रुतिसद्भावात् तया प्रतिरुद्धया नोत्पत्तिः सिद्ध्यतीति न वाच्यमिति भावः । **असम्भवदुद्भवयोरिति** ॥ अनादित्वेनासम्भवदुद्भवयोर्नभोनभस्वतोः उत्पत्तौ सिद्धायां समस्य नभोनभस्वद्भ्यां अविशिष्टस्य, ब्रह्मणोऽनुत्पत्तिरयुक्तेति युक्तिसाहित्येन जन्मश्रुतेः प्राबल्यादित्यर्थः । अनादित्वेनोक्तत्वं तु नभोनभस्वतोरपि सद्भावेन नोत्पत्तिवारकमिति भावः । अनेन च ब्रह्मोत्पत्तिमदविशिष्टत्वात्, यो येनाऽविशिष्टः स तद्धर्मवान्, यथा सम्प्रतिपन्न इत्यनुमानं सूचितं भवति । का तर्हि अनादित्वश्रुतेर्गतिरिति वदन्तं तटस्थं प्रत्याह– **अनुत्पत्तिश्रुतिश्चेत्यादिना** ॥ यदि अनुत्पत्तिश्रुतिः सर्वात्मनानुत्पत्तिपरेत्यभिमानेन पृच्छसि, तर्हि अप्रमाणमेवेत्युत्तरम् । न चेदभिमानः तत्त्वं चेत् पृच्छसि तदा आकाशादाविव व्यवस्थेत्युत्तरमिति विवेकः । ऐतन अनादित्वेऽपि श्रुतिरस्तीति शङ्कमानस्य सर्वथाऽनुत्पत्तिवादिनीत्यभिमानस्य सिद्धत्वात् अभिमानश्चेत् अप्रमाणम्, न चेत् व्यवस्थेत्युक्त्ययोग इति परास्तम् । ननु सूत्रोक्ता प्रतिज्ञा अनुपपन्नेत्याशंकते – **मयापीति** ॥ एतेन अनुत्पत्तिरेवेति सावधारणं प्रतिज्ञातत्वात् सिद्धार्था प्रतिज्ञेति शङ्कानुदय इति परास्तम् । ननु भाष्योक्ता प्रतिज्ञाऽनुपपन्नोत्सूत्रत्वादित्यत आह– **अत एवेति** ॥ **तेनैवेति** ॥ स्वातन्त्र्यसूचनेनैव नभोनभस्वद्भ्यामविशिष्टत्वरूपपूर्वपक्षयुक्तहेतोर्गतिरसिद्धिश्चोक्ता भवतीत्यर्थः । असिद्धिं दर्शयति – **गगनपवनादीनामिति** ॥ अस्वातन्त्र्यात्तेषामुत्पत्तिः, ब्रह्मणस्तु स्वातंत्र्यमिति अविशेषो नेति भावः ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु – न विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तं तस्योत्पत्तिमत्त्वेन जगत्कारणत्वायोगात् । न च तत्र प्रमाणाभावः 'असतः सदजायत' इति श्रुतिसद्भावात् । न चाऽनादित्वश्रुतिप्रतिरुद्धत्वान्न तयोत्पत्तिः सिद्ध्यतीति वाच्यम् । ब्रह्मोत्पत्तिमदविशिष्ट-त्वादित्युत्पत्तिश्रुतेः सयुक्तिकत्वेन प्रबलत्वात् । न च कारणाभावादनुत्पत्तिः । असत एव तत्कारणत्वात् । अतो ब्रह्मणोऽप्युत्पत्तिमत्त्वादशेषकारणतया न श्रुतिसमन्वय इति ।

सिद्धान्तस्तु – युक्तमेव विष्णोर्जगत्कारणत्वम् । असतः सदुत्पत्तेः काप्यदर्शनेन असतः सकाशात् उत्पत्त्यनुपपत्तेः का तर्हि 'असतः सदजायत' इति श्रुतेर्गतिरिति चेत् उच्यते – 'ब्रह्म वा असत् सद्वाव प्राण' इति श्रुतेः ब्रह्मणः सकाशाद्वायोरुत्पत्तिः श्रुत्यर्थ इति ॥ तदुक्तम्–

'त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कवि रादधेऽजः ।
ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन् करवाम किं ते ॥ इति । (भा.३.६.२८)

ननु – रामकृष्णादिरूपेण हरेर्जायमानत्वात् कथं न जन्मेति चेत्, रामकृष्णादेः प्रादुर्भूतत्वेनाऽनुत्पन्नत्वात् । तदुक्तं–

प्रत्यक्षत्वं हरेर्जन्म न विकारः कथंचनेति ।

अतः श्रुत्यविरोधेन ब्रह्मणोऽनादित्वे सिद्धे युक्तं तत्र श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

असम्भाव्यजन्मनोर्गगनपवनयोः श्रुत्यवष्टम्भेनोत्पत्तौ श्रुतिसाम्याद्ब्रह्मणोऽप्युत्पत्तिः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । अत्र ब्रह्मोत्पत्तिमन्नवेति चिन्ता । तदर्थमसतः सदजायतेति श्रुतौ सदसच्छब्दौ ब्रह्मशून्यपरौ किं वायुविष्णुपराविति चिन्ता । तदर्थं ब्रह्मपरत्वे बाधकं नास्ति उत अस्तीति चिन्ता ॥ **सूत्रमेवेति** ॥ सङ्गत्यादिजिज्ञासाजननायेति पूरणीयम् ॥ **बहिरेवेति** ॥ न तु सूत्रार्थतयेति भावः । सतोऽपीत्यपिशब्देनानुभूतियुक्तिबहुवाग्विरोधेनासम्भवदुत्पत्तिकस्यापि गगनपवनवदुत्पत्तिरिति सूचितम् । सतः साम्यमित्युक्तन्यायमाह ॥ **न चानादित्वेऽपीत्यादिना** ॥ अनेन ब्रह्म, अनुत्पत्तिमत्, उत्पत्तिमदवशिष्टत्वात्, यो येनावशिष्टः स तद्धर्मवानित्यनुमानं सूचितं

(वाक्यार्थमुक्तावली)

भवति । का तर्हि अनादित्वश्रुतेः गतिरिति वदन्तं तटस्थं प्रत्याह ॥ **अनुत्पत्तिश्रुतिश्चेति** ॥ सौत्रतुशब्दव्यावर्त्यमाह ॥ **न चेदिति** ॥

ननु 'एतेन सर्वे व्याख्याता, इति असच्छब्दस्य हरौ समन्वितत्वादसदिति चेन्न प्रतिषेध-मात्रत्वात्, नासतोऽदृष्टत्वादित्यसतः कारणत्वस्य प्रतिक्षिप्तत्वात्कथमत्र पूर्वपक्षोदय इति चेदसच्छब्दस्य ब्रह्मपरत्वे स्वस्य कारणत्वापातेनेत्युक्ताक्षेपात् । अधिकरणद्वये प्रतिषेधमात्रत्वा-दृष्टत्वाभ्यां जगत्प्रत्यसतःकारणत्वं निषिद्धम् । अत्र तु तद्धेत्वतिदेशेन ब्रह्म प्रत्यसतः कारणत्वं निषिध्यत इति भेदात् । प्रतिज्ञासूत्रोक्तप्रतिज्ञानुपपन्नेति शङ्कते ॥ **मयेति** ॥ तेन भाष्ये सावधारणं व्याख्यातत्वात्कथं शङ्केति निरस्तम् । भाष्यं तूत्सूत्रमिति भावः । अत एव वक्ष्यति । अत एव तुशब्दमेवेति व्याचष्टे इति ।

ननु ब्रह्मणोऽसम्भवस्तु सतोऽनुत्पत्तिरेवेति प्रतिज्ञायते नत्वसतः सकाशाद्ब्रह्मण उत्पत्तिर्नेति ॥ अस्यांच प्रतिज्ञायां नानुपपत्तेरित्येतत् सर्वथाऽप्युत्पत्यभावमुपपादयितुमलं कारणविशेष प्रतिषेधेऽप्युत्पत्तिसामान्यप्रतिषेधायोगादित्यत आह ॥ **अस्याश्चेति** ॥ **स्वातन्त्र्याख्य इति** ॥ स्वातन्त्र्यमित्यनुव्याख्याने सिद्धान्तन्यायतयोक्त इत्यर्थः । सत्वं स्वातन्त्र्यमुद्दिष्टमिति भारतोक्तेरिति भावः । अनुपपत्तेरित्युक्तहेतुः किमर्थमित्यत आह ॥ **न त्वित्यादिना** ॥ यद्यपि प्रसक्तकारण निरासादन्यस्याप्रसङ्गात्कारणाभावस्यैवासिद्धेरुत्पत्तिरेव नास्तित्यनुपपत्तेरित्युक्तहेतुरेव पूर्यते तथापि हेत्वन्तरसूचनाय सत इत्युक्तमिति सुधानुसारेण बोध्यम् ॥ **गतिश्चोक्तेति** ॥ अस्वतन्त्रत्व-लक्षणोपाधिग्रस्तत्वं वेत्यर्थः ॥ **अन्यांशोदाहरणमिति** ॥ पूर्वांशोदाहरणमित्यर्थः । बृंहति वर्धते । परतः परत्वेन । पूर्वे युगे आदिकाले देवानां मध्ये असतः सदजायतेति योजना ॥ **महत्वादि-सद्गुणत्वादिति** ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इति गीताभाष्योक्तेरिति भावः । हे देव कविरजश्च त्वं, गुणकर्मणां योनौ हेतौ शक्त्यां भार्यायाम् अजायां च प्रकृतौ रेतः गर्भं आदधे । ततः प्रकृतेः सत्प्रमुखाः महदादयो वयं ब्रह्मवायुप्रभृतयो वयं यदर्थं यत्प्रयोजनाय बभूविम । हे आत्मन् स्वामिन् ते तव किं करवामेति स्मृत्यर्थः । पुरुषः प्रकृतिः काल इत्यत्र प्रकृत्यादयो जडा उच्यन्ते । अत एव टीकायां पुरुषस्य चेतनत्वादित्युक्तम् ॥ **उपचयाधिक्येति** ॥ प्रकृतिकालयो-र्नित्यानित्यत्वसाम्येऽपि तत्वसङ्ख्यानटीकायां स्वरूपेणोत्पत्याद्यभावेऽपि अवस्थागमापायवत्व-

(वाक्यार्थमुक्तावली)

लक्षणमित्युक्तरीत्याऽव्यक्तस्यापि किञ्चित्स्थूलत्वकर्तुरित्येकादशतात्पर्योक्तरीत्या च सूरणबीजादीनां काले किंचित्स्थूलीभाववत्तूलपिण्डस्य प्रचयेनेवोपचयकारणं विना स्वत एव स्थूलीभूतायाः सत्व-रजस्तमोगुणात्मिकायाः साम्यावस्थां गतायाः प्रकृतेः सृष्टिकाले वैषम्यावस्थापत्याल्प एवोपचयः । कालस्य तु प्रवाहरूपेणोत्पत्याद्यभावेऽपि प्रवाहिणां क्षणादीनां घटादिवदुत्पाद एवेति प्रकृतित उपचयाधिक्यमसंसृष्टानाम् । महत्वस्य तु स्वसूक्ष्मैर्जन्यगुणत्रयैश्चोपचयः । अहंकारस्य तु स्वसूक्ष्मै-र्महत्तत्वेन गुणैश्चोपचय इत्युपचयाधिक्यक्रमादित्यर्थः ॥ **तेन विकारेणेति** ॥ विकारित्वाभिमानेन विकारविशिष्टत्वं भवतीत्यर्थ इति, तत्त्वप्रदीपोक्तेरिति भावः ॥ **तद्धर्मादिरिति** । निर्गतो विकारो येभ्यस्ते निर्विकारास्ते अस्य सन्तीति निर्विकारवानिति तद्धर्माणां तच्छरीरस्य चाविकारित्व-मुच्यतेऽतोऽविकारोऽपीत्यनेननपौनरुक्त्यमिति भावः । एकैवेत्यर्थ इति । एकैव शक्तिः इच्छाज्ञान-प्रयत्नप्रभेदैर्विभाव्यते, श्रूयत इत्यर्थः ।

तथा च श्रुतिः । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । अभिन्नेत्यस्य भेदरहितेत्यर्थोक्ते तु प्रतियोगित्वेनेच्छादिभिरित्यध्याहारो दोषः । अध्याहाराभाव-वचनविभेद इत्यस्यानुवाद इति प्रतीतिप्रसङ्ग इति ज्ञेयम् ।

## तत्त्वसुबोधिनी

**अत्रेति** ॥ यदि नभो नभस्वतोरुत्पत्तिश्रुत्यवष्टम्भादिहोत्पत्तिरिष्यते तर्हि सतो ब्रह्मणोऽपि उत्पत्तिश्रुतिसाम्यादुत्पत्तिः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **अस्त्वेवेति** ॥ पराधीनविशेषलक्षणेत्यर्थः ॥ **असम्भवदुद्भवयोरिति** ॥ अनेन न ब्रह्मोत्पत्तिमत् तदविरोध्य-नादित्वकत्वादिति युक्तिरुक्ता भवति । न च विशेषवैय्यर्थ्यं विरोधनिरासकतया व्याप्तौपयिकत्वात् ॥ **न चाप्रसिद्धिः आकाशादावेव प्रसिद्धत्वादिति** ॥ **अनादितया समस्येति** ॥ देहानादित्वादिना चित्प्रकृति समस्येत्यर्थः ॥ किञ्च अनुत्पत्तिश्रुतिः सर्वथानुत्पत्तिवादिनी वा कथञ्चिदुत्पत्तिवादिनी वा ॥ नाद्य इत्याह ॥ **अनुत्पत्तिश्रुतिश्चेति** ॥ द्वितीयं प्रत्याह ॥ **न चेदिति** ॥ **अत एवेति** ॥ अनुत्पत्तिमत्वस्य प्रतिज्ञातत्वादेवेत्यर्थः ॥ **सत इत्यनेनैवेति** ॥ सत्वं स्वातन्त्र्यमुद्दिष्टमिति भारतोक्तेरिति भावः । तर्हि पूर्वपक्ष्युक्तयुक्तेः का गतिरित्यत आह ॥ **तेनैवेति** ॥

(तत्त्वसुबोधिनी)

स्वातन्त्र्याख्यहेतुनैवेत्यर्थः ॥ **गतिश्चेति** ॥ सोपाधिकत्वमित्यर्थः । उपाधिमेवाह ॥ **गगनेति** ॥ तथा चास्वातन्त्र्य उपाधिरिति भावः ।

ननु तद्वा एतदसदाहुः इत्यनेनैवाभीष्टसिद्धेः ब्रह्माहुः परमाहुरित्यंशद्वयोदाहरणमनर्थकमित्यतः आह **तद्वा एतदिति** ॥ **महत्वादिसद्गुणत्वादिति** ॥ सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते इति गीतोक्तेरिति भावः । त्वं दैवेत्यस्यायमर्थः । हेदेवत्यङ्कविरतिक्रान्तदर्शि अजश्चासि भवान् शङ्क्यां भार्यायां सत्वादिगुणानां कर्मणां अदृष्टानां योनौ कारणभूतायां अजायां जन्मरहितायां चिदचित्प्रकृतौ रेतो गर्भे आदधे इत्यन्वयः । तु शब्देन उभयेषां विशेषं सूचयति । प्रकृते वयं सत्प्रमुखा महत्तत्वप्रमुखा बभूविम ततः किं तदु यदर्थं इति आत्मन् यदर्थे यत्प्रयोजनाय बभूविम तदर्थं ते तव किं करवाम वियुक्ताः अस्वतन्त्रा इति यस्मात् तस्मादिति अविकार इत्यनेन पौनरुक्त्यपरिहारार्थमाह ॥ **तद्धर्मदिरिति** । शक्तिमता भागवताभिन्नापीति न विभेद इत्युक्तानुवाद इति प्रतीयते तत्र युज्यते भगवदधीनापि भगवतः शक्तिरिति तत्सम्बन्धित्वेन व्यवहारादिरूपभेदकार्यस्यानुक्तेः शक्तेरिच्छाद्यभेदालाभाच्चेत्याशयवान् व्याचष्टे **एकैवेत्यर्थः इति** ॥ अनेन अपिः अवधारण इति उक्तं भवति । एतेन सर्वशक्तित्वेन सर्वं करोतीत्यनेनेत्यर्थः ।

## वाक्यार्थविवरणम्

**उत्पत्तौ** । समर्थितायां सत्यामिति शेषः । **अनादितया समस्येति** । 'ब्रह्म देहतः उत्पत्तिमत् । तदविरोध्यनादित्वात् । नभो नभस्वद्वत् ॥' इत्यनुमानमुक्तं भवति ॥ **अशेषेति** ॥ स्वोत्पादकं प्रति कारणत्वाभावादिति भावः । ननु उक्तव्यवस्थाऽपाकरणं कथं तुशब्दो न लब्धमित्यतस्तस्यावधारणार्थत्वादित्याशयनाह ॥ **अत एवेति** ॥ उक्तव्यवस्थापाकरणार्थमेवेत्यर्थः ॥ **स्वातन्त्र्याख्य इति** ॥ यथोक्तम् । '**स्वतन्त्रत्वात् परात्मनः** । नैवोत्पत्तिः कथमपि न' इति ॥ **पूर्वपक्षयुक्तेरिति** ॥ यदि असम्भवदुद्भवतयाऽनादिनोर्नभोनभस्वतोरुत्पत्तिरुच्यते तर्हि तद्वदेव ब्रह्मणोऽप्युत्पत्तिः स्यात् । तदविरोध्यनादित्वादिति जन्मसाधकयुक्तेरित्यर्थः । तामेव गतिं दर्शयति ॥ **गगनेति** ॥ इति गतिरित्यन्वयः । तथा चोक्तयुक्तावस्वातन्त्र्यमुपाधिरिति भावः ॥ **उक्तार्थेति** ॥ असच्छब्दस्य ब्रह्मपरत्वरूपेत्यर्थः ॥ **पूर्वेति** ॥ तत्र न ह्यासादयति'' इति असच्छब्दस्य निरुक्तत्वादिति भावः । 'त्वं देव' इति तत्त्वाभिमानिनां देवानां वाक्यम् । तत्र 'सत्प्रमुखा' इत्यस्य 'वायुप्रमुखा' इत्यर्थो

(वाक्यार्थविवरणम्)

निश्चितोऽस्तीति भावः ॥ **विकारेण** ॥ भूतादिविकारेण देहादिनेत्यर्थः ॥ **परतन्त्रतेति** ॥ तथा च देहलाभ एव तस्य परतन्त्रविशेषलाभ इति युक्ता तस्योत्पत्तिरिति भावः । जगत्कारणत्वात् । जगदुपादानकारणत्वादित्यर्थः ॥ **करोतीत्यनेनेति** ॥ कर्तृत्ववचनेनेत्यर्थः । निमित्तम् । नोपादान-कारणमित्यर्थः ॥ **तद्धर्मादेरिति** ॥ अन्यथा पुनरुक्तिः स्यादित्याशयः । न विद्यते विकारो येषां ते निर्विकारास्तद्धर्मास्ते अस्य सन्तीति व्युत्पत्तिः ॥ **कथं शक्त्या तदिति** ॥ कर्तृत्वमित्यर्थः । सर्वशक्तित्वहेतुतः सर्वं कुरुत इति शक्तेः कथं कर्तृत्वोपयोगित्वमित्यर्थः । भगवता 'अविभिन्नाऽपि' इति योजनायां शक्तेरिच्छाद्यभेदालाभेनोक्तशङ्काया अपरिहारादविभिन्नापीत्यस्य अर्थमाह ॥ **एकैवेति** ॥ तथा चाविभिन्नापि एकैव सा शक्तिरिच्छादिप्रभेदैर्विशेषबलेन विभाष्यत इति प्रमाणार्थः । एवं सति ब्रह्मणो जगत्कारणत्वात् कथमविकारित्वमिति नाशङ्कनीशयमित्याह ॥ **एतेनेति** ॥ शक्तेरिच्छाद्यात्मकत्वात् सर्वशक्तित्वतः सर्वं करोतीतीच्छापूर्वककारणत्ववचनेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

**सत्** ब्रह्म । **सौम्य** इति सम्बुद्धिः । **इदम्** अस्य ॥ **ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ** । **सतो** ब्रह्मणः । असम्भवस्त्वनुत्पत्तिरेव । कुतः । अनुपपत्तेः । असतः सकाशात्सज्जन्मनो क्वाप्यदर्शनेनानुपपत्तेरित्यर्थः । तर्हि तस्याः का गतिरित्यत आह ॥ **अनुपपत्तिश्रुतिश्चेति** ॥ व्यवस्थास्वरूपानादित्वरूपा ॥ **सिद्धेति** ॥ सिद्धार्थेत्यर्थः । अत एव उक्तव्यवस्थाया-व्यवच्छेद्यत्वादेव । **सत इत्यनेनैवेति** ॥ सत्वं स्वातन्त्र्यमुद्दिष्टमिति भारतोक्तेरिति भावः । तेनैव सच्छब्देन गतिः अस्वतन्त्ररूपोपाधिः एतदेवाह ॥ **गगनेति** ॥ कथं प्राणः सदिति प्रश्नोत्तरमाह ॥ **महत्वादिति** ॥ स्मृतिं चाहेति । हे देव त्वं कविः सर्वज्ञोऽजश्च तथापि भवान् शक्त्यां भार्यायां, गुणानां कर्मणाम् अदृष्टानां, योनौ हेतावजायां प्रकृतौ रेतोगर्भं आदधे स्थापितवान् । ततस्तस्याः प्रकृतेः सत्प्रमुखा वायुप्रधाना वयं यदर्थे यत् प्रयोजनाय बभूविम ते तव किं करवामेत्यर्थः ॥ **उपचयेति** ॥ उत्तरोत्तरमुपचयोधिक इत्यर्थः । विशेषितत्वं विशिष्टित्वं विकारवद्देह सम्बन्ध एव तस्य न स्वतो विकार इति भावः । कारणत्वात् उपादानत्वात् ॥ **तद्धर्मादेरिति** ॥ अतो नाविकार इत्यनेन पुनरुक्तमिति भावः । भगवदभिन्नत्वानुवादप्रतीतिनिरासायाह ॥ **एकैवेति** ॥ तथात्वे इच्छाद्यभेदेनोक्तः स्यादिति भावः । अविभिन्नेत्यादेः प्रयोजनांतरमाह ॥ **एतेनेति** ॥

॥ इति असम्भवाधिकरणम् ॥

## ४. अथ तेजोऽधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ तेजोऽतस्तथा ह्याह ॐ ॥ १० ॥**

'वायोरग्निः' (तै.उ. २-१) इत्यादेर्नान्यत उत्पत्तिर्ग्राह्या । अत एव परात्तदपि जायते । तत्तेजोऽसृजतेति ह्याह । कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपि शब्दोक्तत्वात्पुनरुक्तिरुभय-कारणत्वनिवृत्त्यर्थम् ॥ इति तेजोऽधिकरणम् ॥

### तत्त्वप्रदीपिका

एवं वाय्वाकाशयोरुत्पत्तिरुक्ता । तेजसस्तु कुत उत्पत्तिरिति विचार्यते । वायोरिति पूर्वपक्षः । 'वायोरग्निः'' इत्यादिश्रुतिबलात्परमात्मनोऽन्यतस्तेजस उत्पत्तिर्न ग्राह्या । अपि तु यतो वियद्वायू जातौ ततोऽत एव परात्तदपि जायते । वायोरग्निरित्यादेरत एव च प्रमाणात् । अपिशब्दाद्भूतवायुरपि परादेव जायत इति साधितमिति सूचयति । 'आकाशाद्वायुः' इत्युक्तेऽप्युक्तं हि 'कारणत्वेन चाकाशादिषु' इत्यत्राऽकाशादिभूतस्थ आकाशादिशब्दमुख्यार्थः पर एव वाय्वाद्युत्पत्तिकारणमिति तथा च पुनरुक्तिरित्यत आह– **कारणत्वेनेति** ॥ यद्यपि विष्णुरेव मुख्यार्थः । तथाऽप्याकाशा-दीनामप्यमुख्यार्थतया शब्दोक्तत्वाङ्गीकाराथ ''आकाशाद्वायुर्वायोरग्निः'' इत्यादावुभयकारणत्वाशङ्का स्यात् । तन्निवृत्त्यर्थं च पुनरुक्तिरिति फलवती । तेत्तेजोऽसृजतेति प्रत्यक्षश्रुत्युपन्यासार्थत्वाच्च । उभयकार्यत्वाशङ्का व्युदस्ता पुरस्तादेव । पररूपस्य व्यक्तिमात्रोक्तेः । कार्यत्वापादकस्य कार्यशब्द-मुख्यार्थत्वमिति च विस्तृतम् ।

### तत्त्वप्रकाशिका

एवं सर्वस्यापि ब्रह्मेतरस्योत्पत्तौ सिद्धायां वियदादीनां च परमात्मनो जन्मेत्यत्र विवादाभावेऽत्र ब्रह्मणि श्रुतिसमन्वयसिध्यर्थं तेजोजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सकल-जगत्कारणं ब्रह्मेत्युक्तम् । तत्र तेजसो वायुजातत्वे तदभावप्रसङ्ग इति तन्निरसनीयमेव । वायो-रनन्तरप्राप्तं तेजोऽत्र विषयः । किं वायोर्जायते ब्रह्मणो वेति सन्देहः । वायोरग्निः । 'तत्तेजोऽसृजत' इति श्रुतिविरोधः सन्देहबीजम् । वायोर्जायत इति पूर्वः पक्षः । 'वायोरग्निः' इति श्रुतेः । न च तेजसो

(तत्त्वप्रकाशिका)

वायुद्वारा परमात्मजातत्वाभिधायकत्वं श्रुतेर्वाच्यम् । किं ब्रह्म वायुद्वारमन्तरेण तेजः स्रष्टुमीष्टे न वा । आद्ये व्यर्थं वायुद्वारा सर्जनम् । द्वितीये सिद्धं नः समीहितं यावताऽस्माभिरप्युभय-कारणत्वमेवोच्यते । न च तत्तेजोऽसृजत इति श्रुतिविरोधः । तस्या उभयकारणत्वेऽप्यविरोधात् । ब्रह्ममात्रकारणत्वाभिधायकत्वे निरवकाशैतच्छ्रुतिविरोधेनाप्रामाण्यापातात् । अतो न जगत्कारणत्वेन ब्रह्मणः सर्वश्रुतिवेद्यतेति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **तेज इति** ॥ न 'वायोरग्निः' इत्यादि श्रुत्या तेजसो वायोरुत्पत्तिर्ग्राह्या । किं तु ब्रह्मणः सकाशादेव तेजो जायते । 'तत्तेजोऽसृजत' इति श्रुतेः । न च वायोरग्निरित्यादिश्रुतिविरोधः । तत्र वायुद्वारा तेजसो ब्रह्मजातत्वोक्तेः । न च द्वारवैयर्थ्यादुभयकारणत्वं वाच्यम् । वाय्वादेरकारणत्वेऽपि वाय्वादिद्वारमनुसृत्य ब्रह्मणः स्वेच्छयैव लीलया तेजः प्रभृतिकारणत्वस्य श्रुत्यादिसिद्धत्वात् । श्रुत्यादिकं चोत्तराधिकरणे दर्शयिष्यत इति भावः ।

ननु 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इत्यधिकरणे वाय्वादिशब्दानां ब्रह्मणि समन्वयस्योक्तत्वेन तेजसो ब्रह्मजातत्वस्य सिद्धत्वात् किं पुनरुक्त्येत्यत आह ॥ **कारणत्वेनेति** ॥ कारणत्वेनेत्यत्रैव ब्रह्मणस्तेजःकारणत्वसिद्धावपि तस्य पुनरुक्तिर्युक्ता उभयकारणत्वनिवृत्त्यर्थत्वात् । न च तत्तेन निरस्तं भवति । तत्र वाय्वादीनामप्यमुख्यतया वाय्वादि शब्दवाच्यत्वस्याङ्गीकृतत्वे-नोभयकारणत्वाविरोधादिति भावः । अतः श्रुत्यविरोधेन तेजसो ब्रह्मकारणत्वे सिद्धे युक्तो ब्रह्मणि वेदसमन्वय इति सिद्धम् । स्यादेतत् । एतत् श्रुतीनामुपादाननिमित्तविषयतया स्वत एव व्यवस्थित-त्वात् किमेतेनायासेनेति । मैवम् । वायुप्रभृतीनां देवतात्वादुपादानशक्तेश्च परमात्माधीनत्वादिति ।

## गुर्वर्थदीपिका

न तु तेजोऽधिकरणे 'वायोरग्निः' 'तत्तेजोऽसृजत' इति वाक्यद्वयात्तेजस उभयकारणत्व-शङ्कावद्वायोरपि 'आकाशाद्वायुः' 'स इदं सर्वमसृजत' इति वाक्यद्वयाद्वायोरप्युभयकारणत्व-शङ्काप्राप्तिरस्त्येव । लीलया वायुं द्वारीकृत्य परमात्मनैव तेजसस्सर्जनान्नोभयोस्समकारणत्वमिति समाधानवदाकाशं द्वारीकृत्य परमात्मनैव वायोस्सर्जनान्नोभयोस्समकारणत्वमिति समाधानस्यापि साम्यात् । भूतवायोरेवाधिकरणान्तरं कुतो न क्रियत इति चेत्सत्यम् । अधिभूतपञ्चकविषये अधिकरणपञ्चकं चिकीर्षुस्सूत्रकारः आकाशवायुविषयतयाऽधिकरणद्वयस्य कृतत्वात्क्रमप्राप्ततेजो-

(गुर्वर्थदीपिका)

विषयेऽप्येकमधिकरणमेवाकरोत् । अनयैव दिशा वायुजनने आकाशस्य द्वारतामाकाशजननेऽहङ्कारस्य द्वारतां चासूचयत् । न तु विचारितवायोरेव पुनर्विचाराय मतिं चक्र इति विवेकसम्भवात् । जगत्कारणं ब्रह्मेत्यत्र कारणत्वमात्रस्य पूर्वपक्षिणाऽप्यङ्गीकृतत्वात्स्वतन्त्रकारणं ब्रह्मेत्युक्तमिति शङ्कितुरभिप्रायः । उभयकारणत्वमेवोच्यत इत्यस्य स्वातन्त्र्येणोभयकारणत्वमित्यर्थः । तच्च वायुं विना भगवतः करणसामर्थ्यं नास्तीति सिद्धान्तिनाऽप्यङ्गीकृतं चेदिष्टापत्तिरिति भावः । तत्तेजोऽसृजतेति श्रुतेरिति वदता असृजतेति कर्तृप्रयोगाद्ब्रह्मणः स्वतन्त्रकारणत्वं लभ्यत इति सूचितम् । वायुब्रह्मणोरुभयोरपि साम्ये तद्ब्रह्म वायोरसृजतेत्यवक्ष्यत् । अत एव यथा स्वातन्त्र्यं स्यात्तथाऽऽहेति सूत्रमिति भावः । वाय्वादेरकारणत्वेऽपीत्यत्र स्वातन्त्र्येणाकारणत्वेऽपीत्यर्थः । तत्र वाय्वादीनामप्यमुख्यतयेत्यत्र वाय्वादीनां शब्दवाच्यतामात्रस्यामुख्यत्वेन कथनेऽपि कारणतामुख्यतायाः सूत्रमर्यादयाऽलाभादिति भावः । नन्वेवमपि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यधिकरणे ब्रह्मणोऽन्यस्य स्वतन्त्रकारणताया अपि निवारितत्वात्किमनेनेति चेत्सत्यं तत्रोदाहृतश्रुतौ 'यतो भूमिम्' इति भूमात्रजनने कारणान्तराक्षेपात्तेजोवारिणोर्विषये नेति मन्दाशङ्कापरिहारार्थं पुनरारम्भ इति ज्ञेयम् ।

## भावबोधः

अनन्तरसङ्गतिमाह– **एवं सर्वस्यापीति** ॥ उत्पत्तेरेवासिद्धौ कारणविशेषचिन्ताया अनवसरग्रस्तत्वेनाद्यद्वितीयाभ्यां सर्वस्योत्पत्तौ साधितायां जनकीभूतस्य ब्रह्मणोऽप्यन्यजन्यत्वे पुनस्तत उत्पत्तिर्न सम्भवतीति शङ्कायां तृतीयाधिकरणेन परिहृतायां सर्वस्यापि ब्रह्मेतरस्याविवादेनोत्पत्तौ सिद्धायामेतच्चिन्तावसर इति भावः ॥ **विवादाभावेनेति** ॥ अधिकरणद्वयप्रतिपादितवियत् मातरिश्वादीनां ब्रह्मान्यजन्यत्वप्रापकाभावाद् विवादाभावेन न तदर्थमधिकरणान्तरं कर्तव्यमिति भावः । यद्वा, पूर्वाधिकरणे सत इत्युक्तस्य ब्रह्मणोऽत्र 'अतः' इति परामर्शादनन्तरसङ्गतिर्द्रष्टव्या । श्रुतिक्रमेणाप्यनन्तरसङ्गतिं दर्शयन् विषयमाह– **वायोरनन्तरप्राप्तमिति** ॥ 'असम्भवस्तु' इत्यनेनोक्तरीत्या व्यवधानं न दोष इति भावः ॥ **किमिति** ॥ अत्र तेजः किं वायोर्जायते ब्रह्मणो वेति चिन्ता । तदर्थं ब्रह्मजातत्वश्रुतिः वायोरग्निरिति श्रुतिविरुद्धा न वेति । तदर्थं सा श्रुतिर्वायोर्मुख्यकारणत्वप्रतिपादकत्वेन निरवकाशोत द्वारपरत्वेन सावकाशेति । तदर्थं

(भावबोधः)

ब्रह्मणो द्वारतया वायुग्रहणं किं तद्रहितस्याशक्त्योत शक्तस्यापि लीलयेति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । वायोरग्निरित्यादेर्नान्यत् उत्पत्तिर्ग्राह्येति भाष्यानुसारेण पूर्वपक्षमाह– **वायोरिति** ॥ विष्णोरेव तेजस उत्पत्तौ द्वारकारणवैयर्थ्यमिति न्यायविवरणोक्तयुक्तिं वक्तुमाह– **न चेति** ॥ विष्णोरेवेत्येवशब्दानुरोधादाह– **वायुमन्तरेणेति** ॥ आद्यपक्षोत्तरत्वेन न्यायविवरणं योजयति– **आद्ये व्यर्थमिति** ॥ उभयकारणत्वनिवृत्त्यर्थमिति भाष्यानुसारेण द्वितीये दोषमाह– **द्वितीय इति** ॥ तत्तेजोऽसृजतेति श्रुतिर्ब्रह्मकारणत्वमात्रपरा वा ब्रह्ममात्रकारणत्वपरा वेति विकल्पं हृदि निधाय क्रमेण पक्षद्वये दोषमाह– **तस्या इत्यादिना** ॥ सूत्रे 'अत' इत्येतत्पूर्वसूत्रस्थ 'स'च्छब्दोक्त परमात्मपरामर्शकं सावधारणं च । 'तथा' शब्दो वियदादिसमुच्चयार्थः । 'हि'शब्दो हेत्वर्थः । असम्भव इत्युक्तप्रकृत्यर्थमात्रस्य विवक्षितप्रत्यययोगेनानुवृत्तिरित्यभिप्रेत्यप्रवृत्तस्य वायोरग्निरित्यादि-भाष्यस्याभिप्रायमाह– **न वायोरित्यादिना** ॥ द्वारमनुसृत्यैव विष्णोः प्रवृत्तिरिति न्यायविवरणाभि-प्रायमाह– **वाय्वादेः अकारणत्वेऽपीति** ॥ अनेनानुसृत्यैवेत्येवशब्दाध्याहृतेन लीलयेत्यनेन सम्बन्धो वा शक्तोऽपि स्वेच्छामनुसृत्यैवेत्यभिप्रायो वा उक्तो भवति ।

ननु 'वायोरग्निः' इति श्रुतेर्भूतवायोरग्निं प्रत्युपादानत्वमात्रप्रतिपादकत्वं 'तत्तेजोऽसृजत' इति श्रुतेस्तु ब्रह्मणः कर्तृत्वप्रतिपादकत्वम् । सति चैवं श्रुत्योर्विरोधाभावादधिकरणमेवेदं व्यर्थमिति दूरे उभयकारणत्वनिवृत्त्यर्थेति अभ्यधिकचिन्तावसर इत्याशयेन शङ्कते **स्यादेतदिति** ॥ **देवता-त्वादिति** ॥ तथा च श्रुतिद्वयस्यापि निमित्तपरत्वेन विरोधप्राप्तौ 'वायोरग्निः' इति श्रुतेर्देवता-द्वारत्वमात्रपरत्वेन व्यवस्थां वक्तुमायास इति भावः ॥ **उपादानशक्तिश्चेति** ॥ 'तत्तेजोऽसृजत' इति श्रुतेर्ब्रह्मणो भूतवाय्वनुप्रवेशेन तद्गतोपादानत्वशक्तिप्रेरकत्वेनापि कारणत्वप्रतिपादकत्वमभिप्रेतम् । 'वायोरग्निः' इति श्रुतेर्ब्रह्मनैरपेक्ष्येणोपादानत्वप्रतिपादकत्वे विरोधप्राप्तौ ब्रह्मप्रेरितोपादानत्व शक्तियुक्तत्वरूपद्वारत्वप्रतिपादकत्वेन 'वायोरग्निः' इति श्रुतेर्व्यवस्थां वक्तुमायास इति भावः ।

## भावदीपः

अत्र तेजसो ब्रह्मान्यस्मात्स्वतन्त्राज्जन्मास्ति न वेति विशेषविचारस्यावसरप्राप्तिरूपसङ्गतिमाह ॥ **एवमिति** ॥ **सिद्धायामिति** ॥ वियन्मातरिश्वनयाभ्यामिति भावः । वियन्नये अनादित्वेनाभि-

(भावदीपः)

मतस्य सर्वस्योपलक्षणं वियत्पदमिति व्याख्यानात् । तत्र विशेषशङ्कायां मातरिश्वनयस्याग्रे ज्ञोऽत इति नयस्य च प्रवृत्तेः । उत्पत्तिः पराधीनविशेषावाप्तिरूपा ध्येया । परतन्त्रविशेषो हि विकार इति कीर्तित इत्युक्तेः । अत्र ब्रह्मेतरस्येत्युक्त्या ब्रह्मणः पराधीनविशेषावाप्त्यभावरूपानुत्पत्तौ सिद्धायाम् इति लभ्यते । तर्हि वियदादावियं चिन्ता कुतो न कृतेत्यत आह ॥ **वियदादीनामिति** ॥ स इदं सर्वमसृजत । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी' इत्यादिश्रुत्या विकारहेतुकं सर्वं कुरुते निर्विकारवानित्यादिस्मृतिभिरीश्वरजातत्वस्य सिद्धत्वात् । अन्यजातत्वबोधकविपरीतश्रुत्यभावाच्च विवादाभाव इति भावः । यद्यप्याकाशाद्वायुरित्यस्ति वायावन्यजातत्वबोधिका विवादहेतुभूतश्रुतिः । तथाप्यतिव्यवहितस्य तेजसो ब्रह्मजातत्वसाधके-तन्नयन्यायेनैवाव्यवहितवायोस्तत्सिद्धेः पृथग्विवादाभाव इति भावः । तथा च वक्ष्यति आप इत्यत्र अत्र न्यायप्राप्तभूतवाग्वित्यादि । अत्र वायुरतस्तथा ह्याहेत्युक्तावप्येतन्न्यायेनैवान्यजातत्वेन श्रुतीनां तेजःप्रभृतीनामीश्वरादेव जन्म नान्यस्मात्स्वतन्त्रादिति सिध्यति । तथापि वायौ मुख्यदेवतामादायैव विचारस्य कृतत्वादुदाहरणदारिद्र्याभावाद्वायुमपि विषयीकुर्वतो विचारान्तरस्यापि व्यवहिते तेजसि कृते वायौ कैमुत्यसिद्धिलाभाच्च तेजोऽत इत्येवोक्तिरिति तात्पर्यं ध्येयम् ॥ **श्रुतिसमन्वयेति** ॥ सर्वकारणतयेति योज्यम् ॥ **श्रुतिविरोधेति** ॥ श्रुत्योर्विरोधेत्यर्थः । यद्वा अन्यतो जन्मविषयिण्या वायोरग्निरिति श्रुत्या यो विरोधः कारणत्वेनोक्तसमन्वयस्य तत्परिहारादित्यर्थः ॥ **वायुजातत्व इति** ॥ वायुशब्दोऽत्र भूतवायुतद्देवतारूपोभयपरः । एवं तेजःशब्दोऽपि । अभिमानिव्यपदेशस्तु शरीररूपकविन्यस्तगृहीतेरिति च नयद्वयोक्तन्यायद्वयात् । स्वातन्त्र्येणेति योज्यम् ।

ननु वायुदेवतागतकर्तृत्वशक्तेः भूतवायुगतोपादानशक्तेश्च स्वातन्त्र्येऽपि न ब्रह्मणो जगत्कारणत्वाभावप्रसङ्गः । कारणत्वेन चेति नये ब्रह्मणोऽपि स्वातन्त्र्येण तेजःप्रभृतिसर्वकारण-त्वोक्तेः । तथा च तेजसो वायुशब्दितब्रह्मतद्देवतारूपोभयकर्तृत्वेऽपि स्वातन्त्र्येण भूतवायू-पादानकत्वेऽपि न क्षतिरिति चेन्न । सर्वस्वातन्त्र्येण जगत्कारणत्वस्य जन्मादिसूत्रे विवक्षितस्या-भावप्रसङ्ग इति तात्पर्यात् ॥ **वायोरनन्तरेति** ॥ आकाशाद्वायुः वायोरग्निरिति श्रुतावित्यर्थः । वायोरेकरूपेण प्राग्विचारितत्वादिति भावः ॥ **किमिति** ॥ अयमर्थः । तेजोभूतं किं वायुभूतादीशा-प्रेरितोपादानशक्तिकाज्जायते तथा तेजोभूतं तद्देवता च वायुदेवतात ईशवत् स्वतन्त्रकर्तृशक्तिमत्वाः

(भावदीपः)

जायते किं वा सर्वस्वतन्त्राद् ब्रह्मणः क्रमाद् द्विविधवायुद्वारा जायते । अन्यगतकर्त्रुपादान-शक्त्योरपि प्रेरकं ब्रह्मेति यावदिति ॥ **श्रुतिविरोध इति** ॥ उभयत्रापि स्वातन्त्र्येण कारणत्वोक्तावित्यर्थः । वायोरग्निरित्यादिभाष्यं नञ्परित्यागेन व्याकुर्वन्नाह ॥ **वायोर्जायत इति** ॥ सन्देहग्रन्थे अभिहितोऽर्थोऽत्राप्यनुसन्धेयः । विष्णोरेव तेजस उत्पत्तौ द्वारकारणवैयर्थ्य-मित्यन्यत्रोक्तयुक्तिं शङ्कापूर्वमाह ॥ **न च तेजस इति** ॥ शक्तस्य द्वारवैयर्थ्यमित्येव वाच्ये विकल्पमुखेनोक्तिरुभयकारणत्वेति भाष्यविवरणाय ॥ **यावतेति** ॥ यस्मादित्यर्थः । ईश्वरकारणत्वं द्विरूपवायुकारणत्वं चेत्युभयकारणत्वमित्यर्थः । स्वातन्त्र्येति योज्यम् । श्रुतिः किं ब्रह्मकारणत्वपरा अन्यकारणत्वनिषेधपरा वा आद्ये आह ॥ **तस्या इति** ॥ अन्त्ये आह ॥ **ब्रह्मेति** ॥ **एतत् श्रुतीति** ॥ वायोरग्निरिति श्रुतीत्यर्थः ॥ **अत इति** ॥ द्वारपरत्वायोगेन निरवकाशान्यकारणत्व-श्रुतिभावात्तत्तेज इति श्रुतेश्चोभयकारणत्वेऽप्युपपन्नत्वादित्यर्थः ॥ **सर्वेति** ॥ यद्यपि वायोरग्नि-रित्यस्योभयकारणत्वपरत्वेऽपि अन्यस्येवास्ति ब्रह्मणोऽपि वेद्यता । तथाप्यन्यस्यापि स्वातन्त्र्येण तेजःकारणत्वप्राप्तावितरासाधारणकारणत्वेन तद्वेद्यता न प्राप्तेति सर्वश्रुतिवेद्यता नेत्युक्तम् । सूत्रे पूर्वस्मात्तुशब्दानुवृत्तिमुपेत्य भाष्ये अत एवेति सौत्रपदमनूद्य परादिति व्याख्यातम् । तत्रावधारण-व्यावर्त्योक्तिपरं वायोरित्यादि भाष्यमिति दर्शयन् भाष्यं व्याचष्टे ॥ **न वायोरिति** ॥ **वायोरुत्पत्तिरिति** ॥ जडाजडाख्याद्विरूपाद्वायोर्द्विरूपतेजस इत्यर्थः । स्वातन्त्र्येणेति योज्यम् । हिर्हेताविति मत्त्वोक्तमिति श्रुतेरिति । एवं सूत्रभाष्यं व्याख्याय द्वारमनुसृत्यैव विष्णोः प्रवृत्तेरित्य-न्यत्रोक्तमत्र संयोज्य व्याकर्तुं प्रागुक्तशङ्कामनुवदति ॥ **न च वायोरिति** ॥ **वायुद्वारेति** ॥ अन्यथा तत्तेज इति श्रुतिविरोधादिति भावः । नन्वथापि वायोरग्निरिति श्रुतिर्वायुद्वारा अग्नेरीशजत्वमाह । तत्तेज इति तु साक्षादेवेति पुनर्विरोधतादवस्थ्यम् । न च तत्तेज इत्यत्रापि वायुद्वारेति मतम् । तथात्वे तेजोभिमानिनी लक्ष्मीः प्राणस्त्वभिमानवानिति स्मृत्या श्रीदेव्या वायुद्वारा जन्मायोगात् । प्राथम्याच्च तेज आद्या लक्ष्म्यादय इति सिद्धमिति तद्भाष्यविरोधादिति चेन्न । सृष्टिभेदेनाविरोधात् । न चैवं छान्दोग्ये क्रमानुक्तावापि तैत्तिरीयोक्तस्य स इदं सर्वमसृजत इत्यादाविव ग्राह्यत्वेना-विरोधादिति वियदधिकरण चन्द्रिकावाक्यविरोधः । तस्याभ्युपगमवादत्वात् । छान्दोग्यभाष्य-स्यार्थान्तरत्वमुपेत्य प्रवृत्तत्वाद्वा पररीत्या वा न दोष इत्याहुः ॥ **अकारणत्वेऽपीति** ॥ स्वतन्त्र-कारणत्वाभावेऽपीत्यर्थः ॥ **श्रुत्यादिकं चेति** ॥ एतस्माज्जायत इत्यादीत्यर्थः

(भावदीपः)

॥ **उभयकारणत्वेति** ॥ ब्रह्मवद्वायुरपि स्वतन्त्रकारणमिति शङ्कानिवृत्त्यर्थत्वादित्यर्थः ॥ **न च तत्तेन निरस्तमिति** ॥

नन्वथापि तदनन्यत्वनये विष्णोरन्यस्य स्वतन्त्रसाधनत्वं निरस्तमित्युभयकारणत्वमपि निरस्तमिति चेन्न । तत्र युक्तिप्राप्तस्यैवान्यस्वातन्त्र्यस्य निरासादत्र पुनः श्रुतिप्राप्तस्य निरास इति तात्पर्यात् ॥ **अमुख्यतयेति** ॥ हरौ परममुख्यत्वापेक्षयैतदुक्तिः । समाकर्षादिति न्यायात् । अन्यथा कल्पनासूत्रविरोधात् ॥ **अत इति** ॥ वायोरग्निरिति श्रुतेर्द्वारपरतया सावकाशत्वात्तत्तेज इति श्रुतिबलाच्चेत्यर्थः । सूत्रभाष्ययोरयुक्ततामाशङ्क्याधिभूताधिदैवेति पादादिस्थभाष्यानुरोधेन समाधिमाह ॥ **स्यादेतदिति** ॥ एतच्छ्रुतीनां वायोरग्निः तत्तेजोऽसृजतेत्येवं रूपश्रुतीनामित्यर्थः ॥ **देवतात्वादिति** ॥ तथा च वायुदेवताया अपीशवत्स्वातन्त्र्येण तेजः प्रतिनिमित्तकारणत्वं प्राप्तमिति श्रुत्योर्विरोधः प्राप्त इति तन्निरासायासः सफल इति भावः । वाय्वादिशब्देषु भूतपरत्वस्यापि सत्त्वात् । तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन्नित्यग्रे वक्ष्यमाणस्मृत्यनुरोधेनाह ॥ **उपादानशक्तेश्चेति** ॥ न केवलं देवतागतकर्तृशक्तेरित्यर्थः । तथा च कारणत्वेनेत्यन्यत्रोक्तन्यायेन वाय्वादौ स्थितो भगवान्वाय्वादिशब्दित भूततद्देवतागतोपादानकर्तृशक्तीः प्रेरयंस्तेजःप्रभृतिकार्यं करोतीति वक्तुमयमारम्भ इत्यर्थः । नन्वथापि कर्तेति नये परात्तु तच्छ्रुतेरिति गुणसूत्रे जीवगत-कर्तृत्वशक्तिरपि ईश्वरायत्तेति वक्ष्यमाणत्वात्तन्यायेन वाय्वादिदेवतास्थितकर्तृत्वशक्तिरपि ईश्वरायत्ता सेत्स्यति किमनेनेति चेन्मैवम् । तेन विनापि कर्तुं शक्तिसत्त्वे द्वारोक्तिवैयर्थ्येनान्यगत-कर्तृत्वादिशक्तेः स्वातन्त्र्यस्य श्रुतिप्रापितत्वादुभयकारणत्वं श्रौतमिति शङ्कायां लीलया द्वारोपादानेनैवेश्वरेण सृष्टिकारणात्तस्यैव च श्रुतावुक्त्युपपत्तेरीशाधीनैव कर्तृत्त्वादि शक्तिरन्यगतेत्यत्र कथनादिति भावः । यत्तु तत्तेज इति श्रुतौ साक्षात्तेजसः सृष्टिः वायोरग्निरित्यत्र वायुद्वारा । तथा च विरोध इति चोद्यं तत्सूक्त्यनुक्त्योर्विरोधाभावादिति प्रागेव निरस्तप्रायमिति भावः ।

## अभिनवचन्द्रिका

**एवमिति** ॥ उत्पत्तौ सिद्धायामित्यन्तमवसरसङ्गतिसूचनार्थम् । ननु प्राथमिकत्वाद्वियद्विचार एव कर्तव्यः, न तेजोविचार इत्याशङ्कापरिहाराय 'वियदादीनां च परमात्मनो जन्मेत्यत्र

(अभिनवचन्द्रिका)

विवादाभावेन' इत्यन्तं वाक्यं प्रवृत्तम् । अत्राऽऽदिशब्दः प्रक्षिप्तः वियतश्चेत्येव पाठः । वायोरत्रधिकरणे विचार्यमाणत्वात् विवादसद्भावाचादिशब्दसङ्ग्रहाभावात् । ततः परं 'वियद्विचारं परित्यज्य' इति शेषः । अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमित्याद्यन्तर्भावसङ्गतिनिरूपणार्थम् । वायुविचारपरित्यागेन, प्रथमं तेजोविचारस्तु क्वचित् तेजः पूर्वसृष्टेः श्रवणात् तत्प्राधान्यविवक्षयेति बोध्यम् ॥ **तदभावप्रसङ्ग इति** ॥ स्वातन्त्र्येण जगत्कारणत्वाभावप्रसङ्ग इत्यर्थः ॥ **तस्या इति** ॥ उभयकारणत्वेऽपि तस्याः श्रुतेः अविरोधात् । निरवधारणत्वेनोपपन्नत्वादित्यर्थः । सर्वं वाक्यं सावधारणम्' इति न्यायेन 'तत्तेजोऽसृजत' इति श्रुतिरवधारणतात्पर्यवतीत्यत आह – **ब्रह्ममात्रेति** ॥ **व्रीह्यादेरकारणत्वेऽपीति** ॥ वाय्वादीन् विना स्रष्टुं शक्यत्वेऽपीति भावः । **वायुप्रभृतीनां देवतात्वादिति** ॥ वायुप्रभृतीनां देवतात्वेन 'वायोरग्निः' इति श्रुतेः निमित्तपरत्वस्यापि सद्भावेन विरोधसद्भावादायासः सार्थक इति भावः । 'उपादानशक्तेश्च परमात्माधीनत्वात्' इति वाक्यं प्रक्षिप्तम् न टीकावाक्यमिति बोध्यम् ।

पूर्वपक्षस्तु – न श्रुतिसमन्वयेन विष्णोरसाधारण्येन जगत्कारणत्वं वाच्यम् । तेजसः वायुजातत्वे श्रुतिसद्भावेन विष्णुवत् वायोरपि अग्निकारणत्वेन विष्णोर्विशेषाभावात् । न च वायुद्वारा तेजसः परमात्मजातत्वाभिधायकत्वं श्रुतेर्वाच्यम् । किं ब्रह्म वायुद्वारमन्तरेण तेजः स्रष्टुमीष्टे, न वा । आद्ये द्वारवैयर्थ्यम् । द्वितीये तु साम्यं तयोरवर्जनीयम् । अतो न जगत्कारणत्वेन सर्वश्रुतिसमन्वयो युक्त इति ।

सिद्धान्तस्तु – युक्तमेव तत्र सर्वश्रुतिसमन्वयेन जगत्कारणत्वं 'तत्तेजोऽसृजत' इति श्रुतेरग्नेर्विष्णुजातत्वात् । न च 'वायोरग्निः' इत्यादिश्रुतिविरोधः । तत्र वायुद्वारा तेजसो ब्रह्मजातत्वोक्तिः । न च द्वारवैयर्थ्यानुपपत्त्या उभयोरपि कारणत्वं वाच्यम् । शक्तस्यापि ब्रह्मणः स्वेच्छयैव द्वारमनुसृत्य कारणत्वस्य प्रमाणसिद्धत्वात् । अतः श्रुत्यविरोधेन तेजसो ब्रह्मजातत्वे सिद्धे सर्वश्रुतिसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

भगवतः स्वतन्त्रत्वाद्वायुद्वारमन्तरेण स्रष्टुं समर्थस्यापि स्वेच्छयैव वायुद्वारानुसरणमिति इह सिद्धान्तस्य वर्तिष्यमाणत्वेन, अनुसारितेत्येदधिकरणसिद्धान्तन्यायस्य स्वातन्त्र्यरूपपूर्वाधिकरण-

(वाक्यार्थमुक्तावली)

सिद्धान्तन्यायावष्टम्भेन प्रवृत्तेरव्यवहितसङ्गतिः । अत एव सूत्रे तेजोत इति तत्परामर्श इति ज्ञेयम् ॥ **वियदादीनामिति** ॥ नन्वस्त्येवादिपदोपात्तस्य वायोःपरमात्मजातत्वे, आकाशाद्वायुः एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च खं वायुर्जोतिराप इति श्रुतिविवादः । अत एवा-बधिकरणटीकायां ब्रह्मण एवाबादिसृष्टिरिति भाष्यस्थादिपदं मूलीकृत्य टीकायां सौत्रापशब्दस्योप-लक्षणत्वं वक्ष्यतीति चेन्न । टीकायामादिपदेन प्रकृतिकालादयो गृह्यन्ते न तु वाय्वादयः तेषामपि विप्रतिपत्तिविषयत्वात् । तर्हि प्रथमातिक्रमे कारणाभावाद्वायुरतस्तथाहेति सूत्रयितव्यम् अप्पदेनोप-लक्षणमयुक्तमिति चेन्न । अतिव्यवहितानामपां ब्रह्मजत्वसाधकतदधिकरणन्यायेनैकव्यवहितस्य वायोस्तत्सिद्धिरिति कैमुत्यद्योतनायाप्शब्देनोपलक्षणसम्भवात् । नन्वेवं सति तेजोत इति व्यर्थम् आप इत्यनेन वायोरिव तेजसोऽप्युपलक्षणसम्भवात् । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति तदधिकरणोपात्तश्रुतौ तेजसोऽपि ब्रह्मजातत्वाभिधानादिति चेन्न ।

सिद्धान्ते 'तत्तेजोऽसृजत' इत्यसाधारणश्रुत्युपन्यासायैतदधिकरणोपपत्तेः । यद्यपि तत्रैव सौत्रतेजः शब्दस्यान्योपलक्षकत्वमङ्गीकृत्यादिपदं भाष्ये प्रयोक्तुमुचितं प्रथमातिक्रमे कारणाभावात् । तथापि तदपोऽसृजत तदिदं सर्वमित्यत्राद्भिः सह वाय्वादिसर्वसृष्ट्युक्तेस्तत्रैवोपलक्षणा कृता । किं चैतदधिकरणद्वयार्थे उदाहरणीये प्रमाणे वाय्वादीनां ग्रहणात्तत्रैवोपलक्षणाभिप्रायेणादिपदप्रयोगः । तत्त्वप्रदीपे तु, तेजःशब्दो वायूपलक्षकः अत एव भाष्ये तदपीत्यपिपदमुक्तं वायोरनन्तरप्राप्तमिति । एतेन श्रुतिक्रमेणाप्यनन्तरसङ्गतिरुक्ता भवति । असम्भवस्त्वित्यनेन व्यवधाने कारणं तूक्तम् । किमिति । तेजः किं वायोर्जायते ब्रह्मण एवेति चिन्ता । तदर्थं वायोरग्निरिति श्रुतिः वायोर्मुख्य-कारणत्वपरा उत द्वाराकारणत्वपरेति । तदर्थं किं ब्रह्मणो द्वारोपादानं अशक्त्या, उत लीलयेति । सूत्रे सतः स्वातन्त्र्यादिति सत्परामर्शलब्धं विष्णोः स्वतन्त्रकारणत्वं, वायोर्द्वारकारणत्वं चाशङ्क्य द्वारवैयर्थ्यमित्युक्तं न्यायं सङ्गमयति । सूत्रे सत्परामर्शात्तथा ह्याहेति सूत्रखण्डं प्रतिक्षिपति न चेति । कुतो वाच्यमित्यतस्तत्तेजोऽसृजतेति श्रुतिर्ब्रह्ममात्रकारणत्वपरा वेति विकल्पं हृदि निधाय क्रमेण पक्षद्वये दोषमाह ॥ **तस्या इत्यादिना** ॥ उभयकारणत्वनिवृत्यर्थमिति वक्ष्यमाणस्याक्षेपोऽयम् । **उभयकारणत्वेऽपीति** ॥ अत एव परादिति सिद्धान्तानुसारेण ब्रह्ममात्रकारणत्वेति सूत्रे अत इति सत्परामर्शः । पूर्वसूत्राचुरनुवर्तते । स चावधारणेऽप्यर्थे च । अवधारणस्यात इत्यनेनान्वयः ।

(वाक्यार्थमुक्तावली)

अपेस्तु नेज इत्यनेनान्वयः । न केवलं वियदादिरित्यर्थः । हिर्हेतौ ॥ **यस्मात्तथा श्रुतिराहेति** ॥ जायत इति शेषः इत्यभिप्रेत्य प्रवृत्तं भाष्यं व्याचष्टे ॥ **न वायोरित्यादिना** ॥ सूत्रे सत इति भाष्ये परादिति स्वातन्त्र्योक्त्या वायोर्द्वारत्वमवसीयत इत्याह ॥ **तत्र वायुद्वारेति** ॥ **न च द्वारवैयर्थ्यादिति** ॥ तथा चात एवेत्यवधारणायोग इति भावः । कुतो न वाच्यमित्यतः अपि वाय्वादेः स्वतः कारणत्वाभावेऽपि स्वातन्त्र्यादेव परात् वायुद्वारैव तज्जायते कुतः अत एव परात्तत्संकल्पादेव हि यस्मादुदाहरिष्यमाणश्रुतिस्तथा हेति सूत्रभाष्ययोरर्थं मत्वाऽनुसारितेति सिद्धान्तन्यायं दर्शयन् व्याचष्टे ॥ **वाय्वादेरिति** । अस्मिन् व्याख्याने तत्तेजोऽसृजतेति श्रुत्युदाहरणं परित्यज्य वक्ष्यमाणमनुसन्धेयम् ॥ **श्रुत्यादीति** ॥ खं, वायुर्ज्योतिराप इति तेजःकारणवायोरपि ब्रह्मजातत्वमुक्त्वा पुनस्तेजसोऽपि ब्रह्मजातत्वप्रतिपादनाद्वायोर्द्वारकारणत्वमवसीयते । वामनपुराणे लीलयैव द्वारानुसरणं प्रतीयत इति भावः ॥ **उभयकारणत्वेति** ॥ उभयोरपि स्वतन्त्रकारणत्वनिवृत्त्यर्थत्वादित्यर्थः ॥ **अमुख्यतयेति** ॥ 'भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः । हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव तु' इत्यनुव्याख्यानोक्तेरिति भावः । तदधीनत्वादर्थवदिति न्यायेन वायोरग्निरित्यत्र वायुगताग्निकारणत्वस्य तदायत्तत्वेन वायोरिति कारणत्वपरपञ्चम्यन्तशब्दवाच्यत्वस्य, यथाव्यपदिष्टोक्तेरित्यनेन लब्धत्वात्स्वातन्त्र्येणोभयकारणत्वशङ्कैव नोदेतीति चेन्न । ईश्वरस्य स्वातन्त्र्येणान्यस्य पारतन्त्र्येणेत्युभयकारणत्वे द्वारवैयर्थ्यमिति तदाक्षेपोपपत्तेः ॥ **स्वत एवेति** ॥ वायोस्तेजः प्रत्युपादनत्वस्य प्रसिद्धत्वात्तदैक्षत, तत्तेजोऽसृजतेति ईक्षया श्रुत्या ब्रह्मणो निमित्तत्वस्य स्पष्टं प्रतिभासादित्यर्थः ॥ **देवतात्वादिति** ॥ 'भूतं भूताभिमानी च' इत्युक्तदिशा देवतात्वस्यापि भावात् । चेतनस्योपादानत्वाभावेन च निमित्तत्वश्रुत्योः विरोधप्राप्तौ, देवताद्वारव्यवस्थया विरोधः परिहार्य एवेति भावः । वायोरग्निरित्यत्र वायुशब्दस्याचेतनपरत्वेऽपि तत्तेजोसृजत' इत्यत्र तेनास्तिविरोधः । तथा हि । तदैक्षत तत्तेजोऽसृजतेत्यत्र तद्ब्रह्मतेजसो यदुपादानं वायुतेजःसूक्ष्मतामसाहङ्काररूपं यच्च निमित्तं कालादि तत्सर्वमैक्षतेतीक्षितृत्वाच्च तदुपानत्वशक्तिः प्रबोध्य तेजोऽसृजन्तेति विवक्षितम् । ततश्चोपादानत्वशक्तेः परमात्माधीनत्वाद्वायोरग्निरित्यत्र साक्षाद्वायुभूतादेव तेजोभूतपरिणामप्रतीतेर्विरोधे प्राप्ते तत्परिहारयामासेति भावेनाह ॥ **उपादानत्वशक्तेरिति** ॥ तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र कारणान्तरस्य युक्तिप्राप्तं स्वातन्त्र्यं निरस्तम् । अत्र तु श्रुतिप्राप्तमिति भेदः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिमाह ॥ **एवमिति** ॥ एवं ब्रह्मान्यस्य सर्वस्योत्पत्तौ, ब्रह्मणश्चानुत्पत्तौ सिद्धायां इदानीं कार्यविशेषकारणविशेषविप्रतिपत्तिर्निरस्यते इति संगतिः ॥ यदा पूर्वाधिकरणे सतः इत्युक्तस्य ब्रह्मणः अत्रात इति परामर्शात् अनन्तरसंगतिरिति भावः ॥ **विवादाभावे इति** ॥ यद्यपि आकाशाद्वायुः एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरिति श्रुत्योः विवादोऽस्ति तथापि अतिव्यवहितस्य तेजसो ब्रह्मजत्वसाधके तदधिकरणन्यायेनैवाव्यवहितस्य वायोः तत्सिद्धेः अर्थे विवादाभावादिति भावः ॥ श्रुतिक्रमेणास्य अनन्तरसङ्गतिं दर्शयन् विषयमाह ॥ **वायोरनन्तरमिति** ॥ असम्भवस्त्वित्यनेन व्यवधानं तु न दोषः । उक्तरीत्या संगतिलाभेन तस्य मध्ये उक्तत्वादिति भावः । वायोरग्नि इत्यादेः नान्यत उत्पत्तिः ग्राह्या इति भाष्यानुसारेण पूर्वपक्षमाह ॥ **वायोरिति** ॥ विष्णोरेव तेजसः उत्पत्तौ द्वारकारणवैय्यर्थ्यमिति न्यायविवरणोक्तां युक्तिं वक्तुमाह ॥ **न चेति** ॥ विष्णोरेवेत्येवशब्दानुरोधेनाह **वायुद्वारमन्तरेण इति** ॥ आद्यपक्षोत्तरत्वेन न्यायविवरणं योजयति ॥ **आद्य इति** ॥ उभयकारणत्वमन्तरेणेति भाष्यानुसारेण द्वितीये दोषमाह ॥ **द्वितीय इति** ॥ कथं समीहितं सिद्धमित्यतः आह **यावतेति** ॥ नन्वेवं तेजसः साक्षात् ब्रह्मजातत्वप्रतिपादकतत्तेज इत्यादीत्यत आह ॥ **न चेति** ॥ 'तत्तेजोऽसृजत' इति श्रुतिः ब्रह्मकारणत्वमात्रपरा वा ब्रह्ममात्रकारणत्वपरा वेति विकल्पं हृदि निधाय क्रमेण पक्षद्वये दोषमाह ॥ **तस्या इत्यादिना** ॥ सूत्रे अत इत्येतत् पूर्वसूत्रस्थसच्छब्दोक्तं परमात्मपरामर्शकं सावधारणं तथाशब्दो वेदादिसमुच्चयार्थ हि शब्दो हेत्वर्थः । असम्भव इत्यस्य प्रकृतार्थपरत्वेनानुवृत्तिः इति अभिप्रेत्य प्रवृत्तस्य वायोरग्निरित्यादिभाष्यस्याभिप्रायमाह ॥ **न वायोरित्यादिना** ॥

ननु परमात्मनोऽतिसमर्थत्वेन द्वारमन्तरेणैव सर्जनसमर्थत्वात्तेजआदिसर्जने वाय्वादिरूपद्वारानुसरणं अनर्थकं इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ वाय्वादेरकारणत्वेऽपि स्वतन्त्रकारणत्वाभावेऽपीत्यर्थः । किञ्च श्रुत्यादिकमित्यत आह ॥ **श्रुत्यादिकं चेति** ॥ पौनरुक्त्यमाशङ्कते **नन्विति** ॥ **उभयकारणत्वनिवृत्त्यर्थत्वादिति** ॥ ब्रह्मवत् वायुरपि स्वतन्त्रकारणमिति शङ्कानिवृत्त्यर्थत्वादिति भावः । ननु कारणत्वेनेत्यनेनैवोभयकारणत्वस्य निरासादधिकरणानर्थक्यं तदवस्थमेवेत्यत आह **न चेति** ॥ ननु वायोरग्निरिति श्रुतेर्भूतवायोरग्निप्रत्युपादानत्वमात्रप्रतिपादकत्वं

(तत्त्वसुबोधिनी)
तत्तेजोऽसृजतेति श्रुतेस्तु ब्रह्मणः कर्तृत्वप्रतिपादकं सति चैवं श्रुत्योर्विरोधाभावादधिकरणमेवेदं व्यर्थमिति दूरे उपादानकारणत्वनिवृत्त्यर्थमिति अभ्यधिकाचिन्तानवसर इति शङ्कते **स्यादेतदिति** ॥ **देवतात्वादिति** ॥ तथा च श्रुतिद्वयस्यापि निमित्तपरत्वेन विरोधप्राप्तौ वायोरग्निरिति श्रुतेर्देवता-द्वारत्वमात्रपरत्वेन व्यवस्थां वक्तुं आयास इति भावः । वायोरग्निरिति श्रुतेर्ब्रह्मनैरपेक्ष्येण वायोरुपादानत्वप्रतिपादनत्वप्रतिपादकत्वे तत्तेज इति श्रुतिविरोधः स्यादित्याह ॥ **उपादानशक्ते-श्चेति** ॥ तत्तेजोऽसृजतेति श्रुतेः ब्रह्मणो भूवाय्वनुप्रवेशेन तद्गतोपादानत्वशक्तिप्रेरकत्वेनापि कारणत्वप्रतिपादकत्वमभिमतम् । वायोरग्निरिति श्रुतेर्ब्रह्मनैरपेक्ष्येणोपादानत्वप्रतिपादकत्वे विरोध-प्राप्तौ ब्रह्मप्रेरितोपादानशक्तियुक्तत्वरूपद्वारत्वप्रतिपादकत्वेन वायोरग्निरिति श्रुतेर्व्यवस्थां वक्तुमय-मायास इति भावः ।

## वाक्यार्थविवरणम्

अत्र किं तेजस उत्पत्तिविषये श्रुतिविरोधः परिह्रियते तदुत्पत्तिकर्तृविषये वा । नाद्यः । विवादाभावादित्याशयनोक्तम् । एवं सर्वस्यापि ब्रह्मेतरस्योत्पत्तौ सिद्धायामिति । द्वितीय आकाशाद्युत्पत्तिकर्तृविषये श्रुतिविरोधमपरिहृत्य तेजस उत्पत्तिकर्तृविषय एव तद्विरोधः कस्मात्परि-हरणीय इत्यत उक्तं वियदादीनां चेत्यादि । तेजोजन्मकर्तृविषये 'तेजोऽसृजत' 'वायोरग्निः' इति परस्परश्रुतिविरोधवदाकाशस्य 'आत्मन आकाशः सम्भूत इति परमात्मन एवोत्पत्तिश्रवणेन भगवदन्यस्मादुत्पत्तेरश्रुतत्वेन परस्परश्रुतिविरोधाभावादादौ तेजोजन्मकर्तृत्वविषय एव श्रुतिविरोधः परिह्रियत इत्यर्थः ॥ **श्रुतेरिति** ॥ वायोरग्निरितिश्रुतेरित्यर्थः । तथा चास्यापि परमात्मजातत्वाभि-धायकत्वेन विरोध इत्याशयः ॥ **सिद्धं न इति** ॥ वायुकारणकत्वस्य प्राप्तत्वादिति भावः । ननु परमात्मकारणकत्वस्यापि प्राप्तत्वात् कथं समीहितसिद्धिरित्यत आह ॥ **यावतेति** ॥ यस्मादित्यर्थः ॥ **अविरोधादिति** ॥ तदेवेत्यवधारणाभावादिति भावः ॥ **निरवकाशैतच्छ्रुतीति** ॥ वायोरग्निरिति श्रुतीत्यर्थः ॥ **अप्रामाण्यापातादिति** ॥ ब्रह्ममात्रकारणत्वप्रतिपादिकायास्तत्तेजोऽसृजतेति श्रुतेरित्यर्थः ॥ **अत इति** ॥ एतद्दृष्टान्तेन सर्वस्याप्यप्रामाण्यप्राप्त्येत्यर्थः । एवमुत्तराधिकरणेऽपि एवमेवाभिप्रायो द्रष्टव्यः ॥ **श्रुत्यादिकम्** ॥ 'तत्र तत्र स्थित' इत्यादिकम् । तदुभयकारणत्वम् । तेन कारणत्वेनेति सूत्रेण । कुत इत्यत आह– **तत्रेति** ॥ कारणत्वेनेति सूत्रे ।

## वाक्यार्थमञ्जरी

ननु तेज उत्पद्यते न वेत्यविचार्य परमात्मनो जायते अन्यतो वेति विशेषविचारकरणमयुक्त-मित्यत उक्तम् ॥ **एवमिति** ॥ तर्ह्याकाशाविषये तत्किं न विचार्यत इत्यत उक्तम् ॥ **वियदादीनां चेति** ॥ तद् ब्रह्म वायुद्वारेति वायुलक्षणावान्तरकारणव्यवधानेनेत्यर्थः ॥ **अविरोधादिति** ॥ अन्यनिषेधाभावादिति भावः ॥ ॐ **तेजोऽतस्तथा ह्याह** ॐ ॥ यथा वियदादि तथा तेजोऽप्यतः भगवत एवोत्पद्यते कुतः हि यस्मात्तत्तेज इति श्रुतिराहेत्यर्थः ॥ **देवतात्वादिति** ॥ तथा च श्रुतिद्वयस्यापि निमित्तपरत्वेन विरोधप्राप्तौ वायोरग्निरिति श्रुतेर्देवताद्वारत्वमात्रपरत्वेन व्यवस्थां वक्तुमयमायास इति भावः । ननु वाय्वादिशब्दानामुभयपरत्वे नोपादानत्वमात्रग्रहणे विरोधा-भावस्तदवस्थ एवेत्यत आह ॥ **उपादानशक्तिश्चेति** ॥ तत्तेजोऽसृजतेति श्रुतेः ब्रह्मणो भूतवाय्वनु-प्रवेशेन तद्भूतोपादानत्वशक्तिप्रेरकत्वेनापि कारणत्वप्रतिपादकत्वेन वायोरग्निरिति श्रुतेर्ब्रह्मनैर-पेक्षेणोपादानत्वप्रतिपादकत्वे विरोधप्राप्तौ ब्रह्मप्रेरितोपादानत्वशक्तियुक्तत्वरूपद्वारवत्वप्रतिपादकत्वेन वायोरग्निरिति श्रुतेर्व्यवस्थां वक्तुमयमायास इति भावः ।

॥ इति तेजोऽधिकरणम् ॥

## ५. अथ अवधिकरणम्

### सूत्रभाष्यम्

॥ ॐ आपः ॐ ॥ ११ ॥

'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत तदिदं सर्वम्' इति श्रुतेः 'अग्नेरापः' (तै.उ.२-१) इत्युक्तेऽपि ब्रह्मण एवाबादिसृष्टिः ।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मुं.उ. २-१-३) इत्यादि च ।

'कर्ता सर्वस्य वै विष्णुः एक एव न संशयः ।
इतरेषां तु सत्ताद्या यत एव तदाज्ञया' ॥ इति भविष्यत्पुराणे ॥

वामने च –

'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा' ॥ इति ।

धर्मात्स्वेदादिदृष्टेः पुनः प्रतिषेधः ।

### तत्त्वप्रदीपिका

अत एव परादापो जायन्ते । 'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत' इति ह्याह । 'अग्नेराप' इति वचनेऽपि ब्रह्मण एवाबादिसृष्टिः । उक्तन्यायेन 'तदपोऽसृजत' इत्युक्तेऽपि नाकाशादिक्रमपरित्यागो मन्तव्य इत्येतदर्थमाह । 'खं वायुर्ज्योतिरापः' इत्यादि सति चैवमुपादानाद्यसिद्धिर्ब्रह्मैव वा तदस्त्विति चेन्नैवम् । तत्सत्ताशक्त्यादिकमपि ब्रह्माधीनमित्येतदेवाऽकूतम् । आह च– 'कर्ता सर्वस्य वै विष्णुः' इत्यादिना । अत्र च सृष्टिक्रमप्रदर्शनं द्वारविशेषप्रकाशनं वाक्यान्तरोपसङ्ग्रह इति महत्प्रयोजनमित्यगतार्थत्वम् । अन्यच्च, आह हि भगवानाप इति सूत्रस्य विशेषशङ्कानिरासार्थत्वम्– **प्रत्यक्षत इति** ॥ प्रत्यक्षत एव घर्मभयशोकात्स्वेददृष्टिवाष्पादिदृष्टेः तन्निमित्ता शङ्का स्यादिति ।

## तत्त्वप्रकाशिका

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमपां जन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः। सकलकारणं ब्रह्मेत्युक्तम्। तत्रापां तेजोजातत्वे तद्विरुद्धं स्यादिति तन्निराकरणीयम्। तेजसोऽनन्तरप्राप्ता आपोऽत्र विषयः। किं तेजसो जायन्ते ब्रह्मणो वेति सन्देहः। 'अग्नेरापः' 'तदपोऽसृजत' इति श्रुतिविगानं सन्देहबीजम्। अग्नेरेवापो जायन्त इति पूर्वः पक्षः। 'अग्नेरापः' इति श्रुतेः। न चान्यश्रुतिविरोधः। विमता आपस्तेजसो जायन्ते अप्त्वात् स्वेदादिवदिति युक्तियुक्तत्वेन तेजोजातत्वश्रुतेः प्राबल्यात्। बलवदेतच्छ्रुतिविरुद्धायास्तस्या एवाप्रामाण्योपपत्तेः। तथा च श्रुत्यन्तरं 'तत्तेज ऐक्षत बहु स्यां प्रजायेय' इति तदपोऽसृजत। तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायन्त' इति। अतो न सर्वकारणे ब्रह्मणि श्रुतिसमन्वयसिद्धिरिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आप इति** ॥ अत्राप्यतस्तथा ह्याहेति ग्राह्यम्। नाग्नेराप इति श्रुतेरपामन्यत उत्पत्तिर्ग्राह्या किं त्वापोऽपि ब्रह्मण एव जायन्ते ब्रह्मैवेति श्रुतेरित्यर्थः। अत्र न्यायप्राप्तभूतवायुपृथिव्योषध्यादीनां ब्रह्मजातत्वज्ञापनार्थमादिपदं भाष्ये। सूत्रेऽप्पदमन्योपलक्षणम्। वाय्वादेः सर्वस्य ब्रह्मजातत्वं कुत इत्यत आह ॥ **एतस्मादिति** ॥

ननु विष्णोरिवान्येषामपि कारणत्वं किं न स्यात्तथा श्रुतेरिति। शक्त्यभावादित्याह ॥ **कर्तेति** ॥ उक्तयुक्त्युपेता श्रुतिः कथं तर्ह्युपपद्यत इत्यत आह ॥ **वामने चेति** ॥ महाशक्तिरपि हरिर्लीलयैवाग्न्यादिषु स्थित्वाऽबादिकं जनयतीति श्रुत्यादि तद्विषयमिति भावः। ननु कारणत्वे-नेत्यत्रैवापां ब्रह्मणो जन्मनः सिद्धत्वाद् व्यर्थमेवेदमधिकरणम्। अथोभयकारणत्वनिवृत्त्यर्थमुच्यते। तदपि पूर्वन्यायेन निवृत्तमित्यत आह ॥ **धर्मादिति** ॥ भवतु वायोरग्न्युत्पत्तौ द्वारत्वप्रतिपादकता तच्छ्रुतेः। अत्र पुनरग्नेः कारणत्वमेव प्रत्यक्षानुकूल्यादिति विशेषाकाङ्क्षानिवृत्त्यर्थमेतदधिकरणमिति भावः। तस्माच्छ्रुत्यविरोधेनापां ब्रह्मजातत्वसिद्धेर्युक्तो हरौ वेदसमन्वय इति सिद्धम्।

## गुर्वर्थदीपिका

अप्रामाण्योपपत्तेरित्यत्र स्वतन्त्रकारणतायामप्रामाण्योपपत्तेरित्यर्थः। अन्येषामपि कारणत्वं किं न स्यादित्यत्र कारणत्वं स्वतन्त्रकारणत्वमित्यर्थः। 'ता अन्नमसृजन्त' 'अद्भ्यो वा अन्नमुत्पद्यते'।

## भाववोधः

श्रुतिक्रमेणैवानन्तरसङ्गतिं दर्शयन् विषयमाह– **तेजसोऽनन्तरप्राप्ता इति ॥ किमिति ॥** अत्रापः किं तेजसो जायन्त उत ब्रह्मण एवेति चिन्ता । तदर्थं ब्रह्मजातत्वश्रुतिः' 'अग्नेराप' इति श्रुतिबाधितोताबाधितेति । तदर्थम् 'अग्नेराप' इति श्रुत्यनुग्राहिका घर्मात् स्वेदद्दष्टिरूपा युक्ति-स्तन्मूलभूता 'तस्माद्यत्र क्व' इति श्रुतिश्च किं निरवकाशा द्वारकारणत्वपरत्वेन सावकाशेति । अग्नेराप इत्युक्तेऽपीति भाष्यानुरोधेनाऽऽह– **अग्नेरेवेति** ॥ तेजस एवानुत्पत्त्यङ्गीकारे घर्मात् स्वेदद्दष्ट्यनुसार इति गुणाधिक्यमिति न्यायविवरणोक्तं तन्निवर्तनीयाशङ्कानिरासपूर्वकमाह– **न चेति** ॥ प्रत्यक्षव्याप्तिमूलकत्वेन युक्तेः प्राबल्यमुक्त्वा श्रुतिसंवादित्वेनापि तदाह– **तथा च श्रुत्यन्तरमिति** ॥ ब्रह्मैवेत्यादिभाष्यस्योत्सूत्रितत्वशङ्कानिरासार्थमाह– **अत्रापीति** ॥ ब्रह्मैवेति श्रुतेरित्यर्थ इति । उपलक्षणमेतत् । मुख्यार्थत्यागापत्तेरिति न्यायविवरणानुसारेण तदिदं सर्वमिति श्रौतसर्वशब्दमुख्यार्थत्यागापत्तेरित्यपि ग्राह्यम् । अन्यथा भाष्ये तत्रोदाह्रियेत' इति ज्ञेयम् । **न्यायप्राप्तेति ॥** यद्यपि पूर्वाधिकरण एव सौत्रतेजःपदस्यान्योपलक्षकत्वमङ्गीकृत्य 'आदि'पदं भाष्ये प्रयोक्तव्यम् । प्रथमातिक्रमे कारणाभावात् । तथाप्येतदधिकरणद्वयान्तेऽधिकरणद्वयार्थप्रमाणे उदाहरणीये, तत्र च वाय्वादीनां ग्रहणात्तदनुसारेणात्रैव 'आदि'पदप्रयोग इति भावः ।

## भावदीपः

**श्रुतीति** ॥ सकलकारणत्वेनेति योज्यम् ॥ **अपां जन्मेति** ॥ अपामन्यस्मा-ज्जन्मबोधकश्रुतीत्यर्थः । एवमन्यत्राप्यूह्यमिति भावेनाव्यवहितपूर्वसङ्गतिमाह ॥ **तेजसोऽनन्तरेति** ॥ अत्राप्यप्शब्देन भूतं देवता चोच्यते । तेजस इत्यनेनापि तेजोभूतं तद्देवता च तयोरब्जन्महेतुत्वं च यथायोगं परिणममानत्वं च ध्येयम् । तेजस एवेति वा स्वतन्त्रादिति वा योज्यम् ॥ **ब्रह्मण इति** ॥ ब्रह्मणः सकाशादेव नान्यस्मात्स्वतन्त्रादित्यर्थः ॥ **श्रुतिविगानमिति** ॥ श्रुतिद्वयेऽग्निब्रह्मणोः स्वातन्त्र्येणाब्जन्महेतुत्वप्रतीतेरिति भावः । अत्र पूर्वपेक्षया विशेषशङ्कासद्भावादग्नेरेवापो जायन्त इत्यवधारणोक्तिः । अग्नेराप इति भाष्योक्तहेतुमाह ॥ **अग्नेराप इति श्रुतेरिति** ॥ प्रत्यक्षत एव घर्मात्स्वेदादिदृष्टेरिति भाष्योक्तयुक्तिं वक्तुं शङ्कामाह ॥ **न चान्येति** ॥ तदपोऽसृजतेति

(भावदीपः)

भाष्योक्तश्रुतीत्यर्थः । विमतः सर्गाद्याः । एतेन तेजस एवापाम् उत्पत्त्यङ्गीकारे घर्मात्स्वेदादि-दृष्ट्यनुसारित्वमित्यन्यत्रोक्तं विवृतं ध्येयम् । अस्वहेतोरप्रयोजकताशङ्कानिरासाय प्रत्यक्षत एव घर्मात्स्वेदादिदृष्टेः । किमु घर्मात्स्वेदादिश्रवणादित्यवधारणसूचिता युक्तिमूलभूतश्रुतिमाह ॥ **तथा चेति** ॥ छान्दोग्ये षष्ठे । तेजःपदेनाभिमान्यधिकरणन्यायेन देवताया अप्युक्तेरैक्षतेति युक्तम् । शोचति अश्रु मुञ्चति । यद्वा शोचति घर्मवान् भवतीत्यर्थः ॥ **अत इति** ॥ सयुक्तिप्रबल-श्रुतिविरुद्धतया तदपोऽसृजतेति श्रुतेरप्रामाण्यादित्यर्थः । भाष्यस्योत्सूत्रत्वभ्रमनिरासायाह ॥ **अत्रापीति** ॥ अवधारणार्थतुशब्दानुवृत्तिरपि ध्येया । भाष्यस्थावधारणव्यावर्त्यं व्यञ्जयन् भाष्यसूत्रयोरर्थमाह ॥ **नाग्नेराप इति श्रुतेरिति** ॥ एतस्मादिति भाष्योक्तश्रुत्युपयोगायाह ॥ **न्यायप्राप्तेति** ॥ आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुषः इत्यन्यजातत्वश्रवणरूपपूर्वपक्षन्यायेन द्वारपरत्वरूपसिद्धान्तन्यायेन च प्राप्तानामित्यर्थः ॥ **तथा श्रुतेरिति** ॥ अग्नेराप इति श्रुतेरित्यर्थः ॥ **उक्तेति** ॥ विमता इत्यादिनोक्तेत्यर्थः । प्रकृतोपयोगाय भाष्यभावमाह ॥ **महाशक्तिरिति** ॥ इतिर्हेतौ ॥ **विशेषाकाङ्क्षानिवृत्त्यर्थमिति** ॥ निवृत्तिप्रकारश्च महाशक्तिरपीत्यादिना प्रागेवोक्त इति भावः ॥ **तस्मादिति** ॥ अन्यजातत्वश्रुतेर्द्वारपरत्वात्तदपोऽसृजतेति श्रवणाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

पूर्वपक्षस्तु – न हरेः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तम् । अपाम् 'अग्नेरापः' इति श्रुतिबलात्तेजोजातत्वात् । न च 'तदपोऽसृजत' इति श्रुतिविरोधात् प्रतीतार्थे तेजोजातत्वश्रुतेः अप्रामाण्यं वक्तुं युक्तम् । 'आपः तेजसो जायन्ते अस्वात् स्वेदादिवत्' इति युक्तियुक्तत्वेन प्राबल्यात् । तथा च श्रुतिः 'तत्तेज ऐक्षत बहुस्यां प्रजायेयेति । तदपोऽसृजत, तस्माद्यत्र क्व च शोचति, स्वेदते वा, पुरुषः तेजस एव तध्यापो जायंत' इति । ततश्च न ब्रह्मणः श्रुतिसमन्वयेन जगत्कारणत्वमिति ।

सिद्धान्तस्तु – युक्तमेव हरेरशेषकारणत्वम् । 'अग्नेरापः' इति श्रुतेः अपां परमात्मन उत्पत्तौ अग्निर्द्वारमित्येवंपरत्वात् । 'ब्रह्मैवेदमग्र आसीत् तदपोऽसृजत' इति श्रुतेः । ननु श्रुतिद्वयान्यथानुपपत्त्या ब्रह्मतेजसोः साम्येनैव कारणत्वं किं न स्यादिति चेत्, न–

(अभिनवचन्द्रिका)

कर्ता सर्वस्य वै विष्णुरेक एव न संशयः ।
इतरेषां तु सत्ताद्या यत एव तदाज्ञयेति ॥

वचनविरोधात् । तस्माच्छ्रुत्यविरोधेनाऽपां ब्रह्मजातत्वसिद्धेः युक्तं वेदसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमाह ॥ **तेजस इति** ॥ किं तेजस इति । आपः किं तेजसो जायन्ते ब्रह्मणो वेति चिन्ता । तदर्थं किमग्नेराप इति श्रुतिः प्रबला उत ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत' इति श्रुतिः प्रबलेति । तदर्थमग्नेराप इति श्रुत्यनुग्राहिका घर्मात्स्वेदादिदृष्टिरूपयुक्तिः किं तेजसोद्धारमात्रेण न युक्ता उत युक्तेति । अग्नेरापस्तदपोऽसजत' इति **श्रुतिविगानमिति** ॥ अग्नेर्देवतायाः जडस्य वा निमित्तत्वोपादानत्वप्रतिपादिकाया अग्नेराप इति श्रुतेः कर्तृत्वशक्त्या उपादानत्वशक्त्या च ब्रह्मणोऽप्सृष्टृत्वप्रतिपादिकायाः तदपोऽसृजत' इति श्रुतेश्च विगानं सन्देहबीजमित्यर्थः । अग्नेराप इत्युक्तेऽपीति भाष्येऽपिपदेन, घर्मात्स्वेदादिदृष्टेरिति भाष्ये वक्ष्यमाणलिङ्गसद्भावेति समुच्चीयत इत्यर्थं मत्वा, दृष्ट्युक्त्यनुसारित्वमित्युक्तन्यायं सङ्गमयति ॥ **विमता इत्यादिना** ॥ युक्तः प्राबल्याय तन्मूलभूतां श्रुतिमुदाहरति **तथा चेति** ॥ शोचति शोकाग्निनाऽश्रु मुञ्चति ॥ **अत्रापीति** ॥ उपलक्षणं चैतत् । अवधारणार्थकोऽप्यर्थकश्च तुशब्द अनुवर्तते इत्यपि ग्राह्यम् । ब्रह्मण एवादिसृष्टिरपीत्यपिशब्दसम्बन्धं मत्वा व्याचष्टे ॥ **नाग्नेरिति** ॥ **ब्रह्मैवेति श्रुतेरिति** ॥ ब्रह्मैवदमग्र आसीत्तदपोऽसृजत तदिदं सर्वमसृजत' इति श्रुतेरित्यर्थः । अन्यथा तदपोऽसृजत' इत्येतावता पूर्णत्वात्तदिदमित्युदाहरणं व्यर्थम् । अबादिसृष्टिरित्यादिपदोपात्तवाय्वादिसृष्टिरपि न प्रमिता स्यादिति ज्ञेयम् ॥ **न्यायप्राप्तेति** ॥ आकाशाद्वायुः, अद्भ्यः पृथिवी, एतस्माज्जायते प्राणः, 'खं वायुर्ज्योतिरापः पृथिवी' इति श्रुतिविरोधस्य पूर्वपक्षन्यायस्य, सिद्धान्तन्यायस्य च, भूतवाय्वादि-विषयेऽपि साम्यादित्यर्थः । **वाय्वादेः सर्वस्येति** । तदिदं सर्वमित्यत्र सर्वशब्दस्य वाय्वादीतर-विषयत्वेन सङ्कोचसम्भवादिति भावः । भाष्ये एतस्मादिति श्रुत्युदाहरणमुपलक्षणम् । बाधकं विना सर्वशब्दमुख्यार्थत्यागप्राप्तेरिति च ग्राह्यम् । मुख्यत्वस्यैव सिद्धान्तन्यायत्वादिति भावः । ननु कथं बाधकाभावः श्रुतेरेव सत्वादित्याशयेन शङ्कते ॥ **नन्विति** ॥ **शक्त्यभावादित्याहेति** ॥ अत एव

(वाक्यार्थमुक्तावली)

सूत्रे सतः स्वतन्त्रात्पूर्णशक्तेरिति सत्पदमनुवर्तितमिति भावः ॥ **श्रुत्यादीति** ॥ आदिपदेन प्रत्यक्षदृष्टव्याप्तिकं लिङ्गं गृह्यते । तद्विषयमिति द्वारं विना सृष्टुं समर्थस्य स्वतन्त्रस्यापि स्वेच्छयैव स्वीकृतद्वारकारणत्वविषयमित्यर्थः ।

## तत्त्वसुबोधिनी

श्रुतिक्रमेणैवानन्तरसङ्गतिं दर्शयन् विषयमाह ॥ **तेजसोरन्तरप्राप्ता इति** ॥ अग्नेराप इत्युक्तेऽपीति भाष्यानुरोधेनाह ॥ **अग्नेरेवेति** ॥ प्रत्यक्षमूलव्याप्तिकत्वेन युक्तेः प्राबल्यमुक्त्वा श्रुतिसंवादित्वेनापि तदाह ॥ **तथा च श्रुत्यन्तरमिति** ॥ ब्रह्म वेत्यादिभाष्यस्योत्सूत्रितत्व-शङ्कानिरासार्थमाह ॥ **अत्रापीति** ॥ न केवलं अतस्तथा ह्यहेयत्वस्य पूर्वत्रान्वयः । किन्तु आप इत्यत्रापीत्यपेरर्थः । ननु भाष्ये वादिसृष्टिरित्यत्र आदिशब्दः किमर्थमित्यत आह ॥ अत्र **न्यायप्राप्तेति** । ननु तर्हि सूत्रे किं ज्ञापकमित्यत आह ॥ **सूत्रपदमिति** ॥ सूत्रस्थाप इति पदमित्यर्थः । यद्यपि पूर्वाधिकरणे एव सौत्रतेजःपदस्यान्योपलक्षकत्वमङ्गीकृत्यादिपदं भाष्ये प्रयोक्तव्यम् । प्रथमातिक्रमे कारणाभावात् । तथापि एतदधिकरणद्वयात्तदधिकरणद्वयार्थे प्रमाणं उदाहरणीये तत्र च वाय्वादीनां ग्रहणात्तदनुसारेणात्रैवादिपदप्रयोग इति भावः ।

## वाक्यार्थविवरणम्

**विमताः** ॥ आदिकालीनाः ॥ **तस्मादिति** ॥ यस्मादादौ तेज आपोऽसृजत तस्मादित्यर्थः । अधुनापीति शेषः ॥ **यत्र** ॥ यदा ॥ **तत्** ॥ तदा । 'खं वायुरित्युत्तरभाष्यानुरोधादाह ॥ **अत्रेति** ॥ सूत्रे अप्पदम् । सूत्रस्थं अप्पदमित्यर्थः ॥ **अन्येषाम्** ॥ तेज आदीनाम् ॥ **कारणत्वम्** ॥ अब्रादिकारणत्वम् ॥ **तथेति** ॥ अपां तेजोजातत्वप्रतिपादकोक्तश्रुतेरित्यर्थः । इतीत्यस्यानन्तरं 'चेत् न' इत्यध्याहारः ॥ **शक्तीति** ॥ तेज आदेरब्रादिजनन इति शेषः ॥ **श्रुत्यादि** ॥ अग्नेराप इत्यादि ॥ **तद्विषयम्** ॥ अपाम् अग्निस्थहरिजातत्वप्रतिपादकम् । अग्न्यादिषु स्थित्वाऽब्रादिकं जनयती-त्युक्त्याऽस्वातन्त्र्यशङ्का प्राप्ता । तन्निरासाय महाशक्तिरित्यारभ्य जनयतीत्यन्तमुक्तमिति ध्येयम् ॥ **तदपि** ॥ चोद्यम् । इति वचनं वा ॥ **पूर्वन्यायेनेति** ॥ ब्रह्मण एवाग्न्युत्पत्तौ वायोर्द्वारवत् ब्रह्मण एवाबाद्युत्पत्तौ अग्नेरपि द्वारत्वेन उभयोः प्राधान्येन कारणत्वमिति पूर्वन्यायेन निवृत्तमित्यर्थः ॥

(वाक्यार्थविवरणम्)

**तद्वारत्वेति** ॥ तस्य हरेर्वायुर्द्वारभूत इत्येवंरूपेणेत्यर्थः ॥ **तच्छ्रुतेः** ॥ वायोरग्निरिति श्रुतेः ॥ **कारणत्वमेव** ॥ अपः प्रतीति शेषः । न द्वारत्वमित्येवार्थः ॥ **विशेषाकाङ्क्षेति** ॥ आकाङ्क्षा-विशेषेत्यर्थः ।

## वाक्यार्थमञ्जरी

प्रत्यक्षमूलव्याप्तिकत्वेन युक्तेः प्राबल्यमुक्त्वा श्रुतिमूलव्याप्तिकत्वेनापि तदाह ॥ **तथा च श्रुत्यन्तरमिति** ॥ **तत्तेज इति** ॥ तत्तेजो रमाख्यमैक्षत विचारमकरोत् ॥ **किमिति** ॥ अहं बहुरूपं स्यां तदर्थं जगदुत्पादयामीति इत्थं विचिंत्य तत्तेजोपोऽन्नामकप्राणसहितं तदभिमन्यमानमबाख्यं भूतमसृजत् यस्मादादौ तेजस एवापो जातास्तस्मादद्यापि पुरुषः यत्र कचिद्देशे काले वा शोचति रोदते स्वेदते प्रस्विद्यते वा तत्तत्रापस्तेजस एव जायन्त इति हि प्रसिद्धमित्यर्थः ॥ **ॐ आपः ॐ** ॥ आपोप्यत एव जायन्ते यस्माद्ब्रह्मैवेदमिति श्रुतिरस्तथाहेत्यर्थः । तर्ह्यसूत्रितत्वं स्यादित्यत आह ॥ **सूत्रेऽप्पदमिति** ॥ तद्विषयं तेजोगतभगवद्विषयम् । **पूर्वं न्यायेनैवेति** ॥ द्वारत्व-प्रतिपादकत्वन्यायेनेत्यर्थः ।

॥ इति अवधिकरणम् ॥

## ६. अथ पृथिव्यधिकरणम्

### सूत्रभाष्यम्

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त' (छा.उ. ६-२) इत्यद्भ्योऽन्नसृष्टिः श्रूयते । 'अद्भ्यः पृथिवी' (तै.उ. २-१) इति कुत्रचित्पृथिवीसृष्टिः । अतो विरुद्धत्वादप्रामाण्यमित्यतो वक्ति–

**॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ १२ ॥**

पृथिवी तत्रान्नशब्देनोच्यते । भूताधिकारत्वात् । कार्ष्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः । 'आपश्च पृथिवी चान्नम्' (ऐ.आ. २-३-१) । 'पृथिवी वा अन्नम् । (तै.उ. ३-९) । 'ता आपोऽन्नमसृजन्त पृथिवी वा अन्नम्' इत्यादिशब्दान्तराच्च । आदिशब्दाद्युक्तिः अपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादि । कौर्मे च–

'विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदेष्यते ।
यथा विरुद्धता न स्यात्तथार्थः कल्प्य एतयोः' इति ॥

'रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः ।
नाभिपद्माभिसम्बन्धात्पीता सेत्यभिधीयते ।
क्षत्ररक्ताभिसम्वन्धाद्रक्तोदकवहुत्वतः ।
शुक्लत्वमेत्येवमेव वर्णान्तरगतिर्भवेत् ॥
विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते ।
स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः' ॥

इति व्योमसंहितायाम् । ॥ इति पृथिव्यधिकरणम् ॥

### तत्त्वप्रदीपिका

'ता अन्नमसृजन्त' इत्यद्भ्योऽन्नसृष्टिः श्रूयते च्छन्दोगोपनिषदि । 'अद्भ्यः पृथिवी' इति तैत्तिरीयके पृथिवीसृष्टिः । अतो विरोधः । वस्तुनि विकल्पासम्भवात् । न च प्रत्यक्षप्रमित-

(तत्त्वप्रदीपिका)

व्यतिरेकयोरन्नभूम्योरेकतावकाशः । न च तुल्यबलयोर्वाक्ययोरन्यतरपरित्यागो न्याय्यः । न चात्र सावकाशनिरवकाशन्यायः । अतोऽप्रामाण्यमित्यतो वक्ति ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ । 'ता अन्नमसृजन्त' इति पृथिव्यन्नशब्देनोच्यते । 'तत्तेजोऽसृजत तदपोऽसृजत' इति भूतसृष्टिप्रकरणत्वादस्य । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इत्यन्नस्य कृष्णरूपवचनाच्च । पृथिवी वाऽन्नमिति तैत्तिरीयके अपौरुपेयत्वेनादोषस्य वाक्यद्वयस्या-प्रामाण्यासम्भवात्, अन्यस्य निरवकाशत्वाच्चान्नशब्देन पृथिव्येवोच्यत इति युक्तिः । न चाद्भ्यः पृथिवी' इत्यन्नमुच्यत इति वाच्यम् । प्रकरणविरोधात् । 'पृथिव्या ओपधयः ओपधीभ्योऽन्नम्' इत्यन्नस्य पृथगुक्तेश्च । कार्यशब्देन च कारणोक्तिर्युक्ता घृताब्धिम्' इतिवत् । परिहृतं च कार्यशब्दत्वं शब्दान्तरोपन्यासादेव । एवं चात्रान्नशब्दः सावकाशो योजनीयः । यथाऽविरुद्धता च स्यात् । यथा मिथो मानान्तरेण चाविरोधस्स्यादिति ।

## तत्त्वप्रकाशिका

एवं सर्वस्य साक्षादन्यद्वारा वा ब्रह्मजातत्वे सिद्धेऽत्रोक्तसमन्वयसिद्ध्यर्थं द्वारविषयश्रुतिविरोध परिहारादस्ति शास्त्रादिसङ्गतिः । वस्त्वन्तरद्वारा साक्षाद्वा ब्रह्म जगत्कारणमित्युक्तम् । तत्र द्वारकारण विषयश्रुतीनां विरोधेनप्रामाण्ये समन्वयासम्भवात्तन्निरासः कार्य एव । प्रकृता आप एवात्र विषयः । किमन्नस्य द्वारकारणम् उत पृथिव्या इति सन्देहः । किमस्य सन्देहस्य बीजं किं च तत्र प्राप्तमिति । तत्र श्रुतिविगानं सन्देहबीजं दर्शयन् पूर्वपक्षयति ॥ **ता इति** ॥ नापः पृथिव्याः कारणं नाप्यन्नस्य । श्रुतिद्वयस्य परस्परविरुद्धत्वात् । निरवकाशत्वेनान्यतरग्रहणायोगात् । न चान्नशब्दस्य पृथिव्यर्थत्वेनाविरोधः । अन्नश्रुतेः प्रसिद्धान्नपरत्वेन स्वीकारे बहुवाक्यानु-सारित्वगुणलाभात् । तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तद्ध्यन्नाद्यं जायते अन्नमशितं त्रेधा विधीयत इति प्रसिद्धान्नलिङ्गाच्च । न च पृथिवीपदेनान्नग्रहः । अद्भ्य एवान्नसृष्ट्यङ्गीकारे 'अद्भ्यः पृथिवी पृथिव्या ओपधयः ओपधीभ्योऽन्नम्' इति श्रुतिविरोधात् । नापि पृथिव्यन्नयोरद्भ्य एवोत्पत्तिः उक्तश्रुतिविरोधादेव । न चान्नस्यैवाद्भ्य इव ओपधीभ्योऽपि जन्म । बहुकल्पनापातात् । न चाद्भ्यः परम्परयान्नमुत्पद्यत इत्यविरोधः । मुख्यार्थत्यागे कारणाभावात् । अतः श्रुतिद्वयस्य परस्परविरुद्धत्वादप्रामाण्यमेवेति न श्रुतिसमन्वयो ब्रह्मणि युक्त इति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ नात्रापां द्वारकारणत्वानिर्णयात् श्रुतिद्वयस्याप्रामाण्यं

(तत्त्वप्रकाशिका)

कल्प्यम् । अपां पृथिवीकारणत्वात् । न च 'ता अन्नमसृजन्त' इति श्रुतिविरोधः । यतस्तत्र पृथिव्यन्नशब्देनोच्यत इत्यर्थः । कुतोऽसावन्नशब्दः पृथिवीपर इत्यत आह ॥ **भूतेति** ॥ 'तत्तेजोऽसृजत' 'तदपोऽसृजत' 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यादेरस्य प्रकरणस्य भूतविषयत्वादित्यर्थः ।

नन्वन्नश्रुतौ जाग्रत्यां कथं प्रकरणमात्रेण निर्णय इत्यत आह ॥ **कार्ष्ण्येति** ॥ 'यदग्ने रोहितं रूपं तत्तेजसो यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इत्यस्यां श्रुतावन्नस्य कृष्णरूपं प्रतीयते । तच्च प्राचुर्येण पृथिव्या एव लिङ्गम् । अतः प्रकरणलिङ्गाभ्यामुक्तश्रुतिबाध इति भावः । ननु कार्ष्ण्यस्य चान्नेऽपि सम्भवतः कथं पृथिवीलिङ्गत्वमित्यत आह ॥ **नेति** ॥ तथा विशेषः पृथिवीवत्कार्ष्ण्य-प्राचुर्यम् । न केवलं प्रकरणलिङ्गाभ्यामन्नश्रुतेरवाचिकाया एव पृथिवीपरत्वमुच्यते अपि तु पृथिव्यामपि तस्या विद्यते वाचकत्वशक्तिः श्रौतप्रयोगादिति भावेनाह ॥ **आपश्चेति** ॥ न च वृष्टिजत्वलिङ्गविरोधः । पार्थिवपदार्थानां वृष्ट्युत्पन्नार्थत्वेनोपपत्तेः । नाप्यन्नमशितमिति लिङ्गविरोधः । तेजोऽशितमितिवत्पार्थिवार्थत्वोपपत्तेः । किमन्नश्रुतेरर्थान्तरकल्पनया श्रुतिद्वयप्रामाण्यमेव किं नाभ्युपेयते इत्यत आह ॥ **आदीति** ॥ सूचितेति शेषः । अत्रायं प्रयोगः । वेदो नाप्रमाणम् अप्रामाण्यकारणदोषशून्यत्वात्प्रत्यक्षवदिति । न च हेतोरसिद्धिः । अपौरुषेयवाक्ये दोषासम्भवात् । आदिपदेनाप्तवाक्यानुसारित्वादिति । एवं युक्तिबलाद्वेदप्रामाण्यसिद्धौ विरोधावभासेऽन्यार्थतैव कल्प्या नाप्रामाण्यमिति भावः । अत्रैव स्मृतिमाह ॥ **कौर्मे चेति** ॥ यदुक्तं प्राचुर्येण कृष्णा पृथिवीति तत्र प्रमाणमाह ॥ रक्त इति ॥ एवमेवेत्युक्तमेव दर्शयति ॥ **विष्ण्विति** ॥ एवं श्रुत्यविरोधेनापां पृथिवीकारणत्वसिद्धेर्युक्तः श्रुतिसमन्वयो हराविति सिद्धम् ।

## गुर्वर्थदीपिका

'अद्भ्य एव तदन्नाद्यं जायते' इत्याद्यनेकवाक्यसिद्धत्वात् बहुवाक्यानुसारित्वेनेत्युक्तम् । नाप्यन्नमशितमिति लिङ्गविरोध इत्यस्य अशितत्वाख्यलिङ्गविरोध इत्यर्थः । अन्नमशितमित्य-न्नेऽशितत्वोक्तेर्मृद्रूपपृथिव्यां चाशितत्वादर्शनात्कथं साऽन्नपदवाच्येति भावः । तेजोऽशितमिति-वत्पार्थिवार्थत्वोपपत्तेरित्यत्र पार्थिवा एवार्थो यस्याः श्रुतेस्सा पार्थिवार्था । तस्य भावः पार्थिवार्थत्व-मित्यर्थः । यथा आतपादिरूपतेजसोऽशितत्वाभावेऽपि रक्तवर्णतया तेजःप्रधानानां मधुघृतादी-

(गुर्वर्थदीपिका)
नामशितत्वमेव तच्छ्रुतेरर्थः । तथा पार्थिवानां धान्यफलादीनामशितत्वमेव 'अन्नमशितम्' इति श्रुतेरर्थो भवतु । अतोऽन्नपदेन पृथिवीग्रहणेऽपि नानुपपत्तिरिति भावः ।

## भाववोधः

अवसरलक्षणामनन्तरसङ्गतिमाह– **एवं सर्वस्येति** ॥ 'न वियदश्रुतेः' 'एतेन मातरिश्वा व्याख्यातः' इत्यधिकरणाभ्यां नभोवाय्वादेः साक्षाद् ब्रह्मजातत्वे 'तेजोऽतस्तथा ह्याह' 'आपः' इत्यधिकरणाभ्यां च वाय्वादीनाम् आकाशादिद्वारा ब्रह्मजातत्वे सिद्धे इत्यर्थः । अन्यद्वारा ब्रह्मजातत्वानिश्चये द्वारविषयकश्रुतिविचारस्यानवसरग्रस्तत्वादिति भावः । अनन्तरसङ्गत्यन्तरं सूचयन् विषयमाह– **प्रकृता इति** ॥ **किमन्नस्येति** ॥ अत्र पृथिवीत्यनन्तरम् अनिर्णय उत पृथिव्या एवेति ज्ञेयः । अन्यथा नापः पृथिव्याः कारणं नाप्यन्नस्येति नात्रापां द्वारकारणत्वानिर्णयात् श्रुतिद्वयस्याप्रामाण्यं कल्प्यमिति पूर्वपक्षसिद्धान्तानानुगुण्यापत्तेः । अत्र 'ता अन्नमसृजन्त, ता आप ऐक्षन्त' इति श्रुतिद्वयं परस्परविरुद्धत्वेन, अप्रमाणमुत प्रबलानुरोधेन दुर्बलस्यार्थान्तरकल्पनया श्रुतिद्वयं प्रमाणं वेति चिन्ता । तदर्थमापः किमन्नस्य पृथिव्या वा द्वारकारणमित्यनिर्णय उत पृथिव्या एवेति निर्णय इति । तदर्थं ता 'अन्नमसृजन्त' इति श्रौतोऽन्नशब्दः किं प्रसिद्धान्नपरः किं वा पृथिवीपर इति । तदर्थं श्रौतान्नशब्दस्य प्रसिद्धान्नपरत्वसाधिका बहुवाक्यानुवृत्तित्ववृष्टिजत्वादियुक्तिः किं निरवकाशोत सावकाशेति । तदर्थं तद्युक्तिबाधकमन्नशब्दस्य पृथिवीपरत्वसाधकं च प्रमाणं नास्त्युतास्तीति । अतो विरुद्धत्वादप्रामाण्यमिति भाष्याभिप्रायमाह– **नापः पृथिव्या इत्यादिना** ॥

ननु वियदाद्यधिकरणवदन्यतरश्रुत्यप्रामाण्येन पूर्वपक्षेऽपि ब्रह्मणो जगज्जन्मादिकारणत्वाक्षेपसम्भवात् परस्परविरुद्धत्वेन उभयाप्रामाण्येन पूर्वपक्षः कुत इत्यत आह– **निरवकाशत्वेनेति** ॥ अद्भ्यो वा अन्नमुत्पद्यत इत्याद्युक्तप्रसिद्धान्नाख्यार्थाविरोधेन प्रसिद्धान्नस्वीकारे बहुवाक्यानुवर्तितेति गुणलाभः इति न्यायविवरणं ता अन्नमिति श्रुतेर्निरवकाशत्वोपपादकत्वेन योजयति– **अन्न श्रुतेरिति** ॥ न्यायविवरणे आदिपदागृहीतां लिङ्गप्रतिपादकश्रुतिमुदाहरति तस्मादिति । विरुद्धत्वादप्रामाण्यमिति भाष्यानुरोधेन न्यायविवरणमुपलक्षणीकृत्य अद्भ्यः पृथिवीति श्रुतेर्निरवकाशत्वं

(भावबोधः)

स्वयमुपपादयति– **न च पृथिवीपदेनेति** ॥ **उक्तश्रुतिविरोधादिति** ॥ 'ओषधीभ्योऽन्नम्' इति श्रुतिविरोधादित्यर्थः । **बहुकल्पनापातादिति** ॥ अन्नस्याब्जन्यत्वम् ओषधिजन्यत्वं पृथिव्या अब्जन्यत्वं चेति बहुकल्पनापातादित्यर्थः । मुख्यार्थत्याग इत्यर्थः ॥ **भूतविषयत्वादिति** ॥ अन्नस्य भौतिकत्वेन भूतत्वाभावात् । भूतशब्देन भौतिकमेव व्यावृत्य तेन भूताभिमानिदेवतापीति ज्ञातव्यम् । प्रकरणस्य भूतविषयत्वादित्यादिना पृथिवीवत् कार्ष्ण्यप्राचुर्यमित्यन्तेनाधिकारादीनां निरवकाशत्वाच्चेति न्यायविवरणमपि व्याख्यातं भवति । तत्रादिपदेन रूपाख्यलिङ्गस्यापौरुषेयत्वादियुक्तीनां च ग्रहणमिति बहुवचनोपपत्तिरिति च ज्ञातव्यम् । अन्नशब्दस्य प्रयोगबाहुल्यात् पृथिव्यामपि शक्तिमत्त्वादिति न्यायविवरणानुसारेण ता अन्नमित्यादि भाष्यमवतारयति । इदानीं पृथिव्यामपीति, बहुवाक्यानुरोधोऽप्यत्रैवेति न्यायविवरणानुसारेण पूर्वोक्तयुक्तेः सावकाशत्वमाह– **न च वृष्टिजत्वेत्यादिना** ॥ अद्भ्यो वा अन्नमुत्पद्यत इत्यादावन्नशब्देन पृथिव्यास्त'स्माद्यत्र क च शोचति' इत्यादावन्नशब्देन पार्थिवस्य ग्रहणमिति बहुवाक्यानुरोधेऽपि सिद्धान्त एवेति न्यायविवरणवाक्यार्थः ॥ **तेजोऽशितमितिवदिति** ॥ तत्र तेजस एव भक्षणासम्भवाद्यथा तेजश्शब्दस्तैजसपरस्तथा पृथिवीवाचकोऽन्नशब्दः पार्थिवपर इत्यर्थः ।

## भावदीपः

अधिकरणसङ्गतिमाह ॥ **एवं सर्वस्येति** ॥ वियन्मुख्यप्रमाणयोः साक्षात्तदन्यस्यान्यद्वारेत्यर्थः । यद्वा वाय्वादौ स्थितस्य भगवतो वाय्वादिस्थशक्तिप्रेरणया तद्द्वारा तेजः प्रभृतिकार्यस्य कृतिविषयत्वमिव साक्षादपि भगवत्कृतिविषयत्वमस्तीति सर्वस्य साक्षादित्युक्तम् । अन्यगतशक्तिप्रेरकत्वमप्यस्तीति भावेनान्यद्वारा वेत्युक्तम् । अत एवाग्रे वस्त्वन्तरद्वारा साक्षाद्ब्रह्मकारणमिति समुच्चयेनानुवादः । तथा च पूर्वं द्वारमनुसृत्यैवेत्युक्त्वा साक्षान्नेति कारयितृत्वमेवेश्वरस्य स्यान्न साक्षात्कर्तृत्वमिति जन्मादिसूत्रोक्तसर्वकर्तृत्वभङ्ग इति चोद्यानवकाश इति भावः । अयं च एतस्माज्जायते कर्ता सर्वस्य कुरुते सर्वमित्यादिपूर्वभाष्योक्तवचनलब्धस्यानुवादः । अन्यद्वारेत्यंशानुवादस्यैव प्रकृतोपयोगित्वेऽपि साक्षादित्यंशानुवाद उक्तदिशा शङ्कानिरासाय । अत्रेत्यस्य सङ्गतिपदेनान्वयः ॥ **श्रुतिविरोधेति** ॥ श्रुत्योरन्योन्यविरोधेत्यर्थः । चिन्ताफलमाह ॥ **वस्त्वन्तरेति** ॥ **इत्युक्तमिति** ॥ जन्मादिसूत्रे इत्यर्थः । आक्षेपसौकर्यायैवमनुवादः । तद्रूपां द्वारत्वश्रुतिविरोध-

(भावदीपः)

निरासे किं बीजमित्यत आह ॥ **प्रकृता आप इति** ॥ **किमन्नस्येति** ॥ अत्र पूर्वपक्षे सौत्रादि-पदव्यावर्त्यस्य श्रुतिद्वयाप्रामाण्यस्य सिद्धान्ते तत्प्रामाण्यस्य चोक्त्या तदनुरोधेन किं श्रुतिद्वयम-प्रमाणमुत नेति सन्देहे प्रदर्शनीयेऽप्येवं सन्देहोक्तिः पूर्वोत्तरपक्षयोः श्रुतिद्वयाप्रामाण्यबीजभूतयो-र्विरोधाविरोधयोः स्फोरणाय । अन्नपदेन पृथिव्यगृहीतिगृहीतिभ्यां विरोधाविरोधयोर्व्यक्तत्वात् ।

यद्वा किमन्नस्य द्वारकारणमित्यादि सन्देहेऽपि नोभयस्यापीत्येवंरूपेण चोद्यस्य सम्भवान्न पूर्वपक्षानानुगुण्यं संशयकोट्यन्यतरकोट्यवलम्बिनौ पूर्वोत्तरपक्षावित्यस्य प्रायिकत्वात् । विरुद्धत्वादप्रामाण्यमिति भाष्यमप्रामाण्यशब्दार्थं विवृण्वन्व्याचष्टे ॥ **नाप इत्यादिना** ॥ ननु विरुद्धत्वेऽपि पूर्वत्रेवान्यतराप्रामाण्यमेव स्यान्न तु द्वयोरित्यतो भाष्याभिप्रेतं हेतुमाह ॥ **निरवकाशत्वेनेति** ॥ श्रुतिद्वयस्येत्यनुकर्षः । अद्भ्यो वा अन्नमुत्पद्यत इत्याद्युक्तप्रसिद्धा-न्नस्यान्यार्थाविरोधेन प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तितेति गुण इत्यन्यत्रोक्तयुक्तिं तावदन्न-श्रुतेर्निरवकाशतोपपादकत्वेन शङ्कापूर्वं योजयति ॥ **न चेत्यादिना** ॥ **बहुवाक्येति** ॥ अभ्यो वा अन्नमुत्पद्यत इत्यादीति न्यायविवरणस्थादिपदोक्तबहुवाक्यानां प्रसिद्धार्थपरत्वरूपगुणलाभा-दित्यर्थः । न केवलं प्रसिद्धान्नपरत्वे बहुवाक्यानुसारिता । लिङ्गद्वयमप्यस्तीत्याह ॥ **तस्मा-दित्यादिना** ॥ छान्दोग्ये षष्ठे । यत्र क्व च वर्षतीति अन्नमशितमिति च वाक्यद्वयेन वर्षजत्वाश्य-मानत्वरूपलिङ्गाच्चेत्यर्थः । एवं न्यायविवरणरीत्यान्नश्रुतेरर्थान्तरपरत्वाभावरूपनिरवकाशतामुपपाद्य पृथिवीश्रुतेरपि तां विवरितुमद्भ्यः पृथिवीति प्रसिद्धपूर्वप्रकृतश्रुतिप्रतीकोक्त्या सूचितां युक्तिं शङ्कापूर्वमाह ॥ **न च पृथिवीति** ॥ ओषधीभ्योऽन्नमिति श्रुतिविरोधादित्येव वाच्ये अभ्य इत्याद्यंशोक्तिर्युक्तेर्भाष्यसूचितत्वसूचनायेत्येके । अन्नहेत्वोषधिजनकत्वविरोधात् पृथिवीपदेन नान्नस्य ग्रहणमिति युक्त्यन्तरसूचनायेत्यन्ये ॥ **उक्तश्रुतीति** ॥ ओषधीभ्योऽन्नमिति श्रुतीत्यर्थः ॥ **बहुकल्पनेति** ॥ पृथिवीपदस्यान्नार्थत्वं तस्य च अब्जन्यत्वमोषधिजन्यत्वं चेति बहुकल्पनेत्यर्थः । अन्नश्रुतेः प्रकारान्तरेण सावकाशत्वमाशङ्क्याभ्योऽन्न सृष्टिःश्रूयत इति भाष्यसूचितयुक्त्या निराह ॥ **न चाद्भ्य इति** ॥ **मुख्यार्थेति** ॥ साक्षाद्धेतुत्वरूपमुख्यार्थेत्यर्थः । एतेन न्यायविवरणे इति गुण इत्यनन्तरं न चाद्भ्य इति शङ्काध्याहारं मुख्यार्थपरित्यागप्राप्तेरिति पूर्ववाक्यानुकर्षणं च सूचयति ॥ **अत इति** ॥ उक्तरीत्यानन्यार्थतया निरवकाशत्वादित्यर्थः । प्रागुक्तशङ्कानिवर्तकत्वं व्यञ्जयितुं

(भावदीपः)

प्रतिज्ञाहेतू बहिरेवोक्त्वा तत्र श्रुतिविरोधनिरासे हेतुपरतया सूत्रभाष्ये व्याचष्टे ॥ **नात्रापामिति** ॥ ननु ता 'अन्नमसृजन्त' इत्यतः पूर्वं तत्तेजोऽसृजत 'तदपोऽसृजत' इति तेजोजलरूपभूतोपक्रमेऽपि प्रकरणमन्नपरमस्तु ह्ययाम्यग्निमित्युपक्रमेऽपि प्रकरणस्य सावित्रत्ववदित्यतो भूतपरमुत्तरवाक्यं चाह ॥ **तासां त्रिवृतमिति** ॥ तेजोबन्नानामित्यर्थः । भौतिकान्नान्नत्रिवृत्करणमस्तीति भावः । यथा कं ब्रह्म खं ब्रह्मेत्युपक्रमवाक्याद् ब्रह्मपरात्स एनान्ब्रह्म गमयतीत्युत्तरवाक्याच्च मध्ये स्थिताग्निप्रयुक्ताहं-शब्दरूपा श्रुतिर्ब्रह्मपरेत्युक्तमन्तरनये तथात्राप्युपक्रान्तस्याग्रेऽपि श्रवणेन भूतप्रकरणविच्छेदा-भावात्तन्मध्यपतितान्नश्रुतिरपि तत्परेति भावः ।

ननु या इमास्तिस्रो देवतास्तासां त्रिवृतमिति तेजोऽबन्नानां देवतात्वं श्रुतमभिमानिनयन्याय-सिद्धं च । देवतानां त्रिवृत्करणप्रकारश्च छान्दोग्यभाष्य एव षष्ठे व्यक्तः । तथा च कथं प्रकरणस्य भूतविषयत्वमिति चेत्सत्यम् । शरीररूपकविन्यस्तगृहीतेरिति न्यायेनाभिमन्यमानसहिता-नामेवाभिमानिनां तत्र गृहीतेः । अत एव वक्ष्यति मांसादिभौममित्यत्र यत्कठिनं सा पृथिवी यद्द्रवं तदाप इत्यादि ॥ **कथमिति** ॥ यद्यपि द्युभ्वादिनये जुष्टं यदा पश्यत्यन्यमीशमिति रुद्रप्रापकेशश्रुतेर्द्वे विद्ये वेदितव्ये इति प्रकरणेन प्रसिद्धार्थत्याग उक्तः । प्रकरणादिति सूत्रे आत्मा प्रकरणादित्यत्र च चतुर्थे 'य आत्मा अपहतपाप्मा इत्यादिब्रह्मप्रकरणेन परंज्योतिरुपसम्पद्य' इति ज्योतिः श्रुतेरा-दित्यादितेजसि प्रसिद्धाया बाधो वक्ष्यते तथात्रापि तत्र श्रुतेः सावकाशत्वं प्रकरणस्यानवकाशत्व-मुपेत्य बाध उक्तः । अत्र पुना रूपोक्तिस्वारस्याय तदनाश्रित्य जातिप्रयुक्तप्राबल्यादिमात्रं शब्दादेवेत्यत्रोक्तमुपेत्येयं शङ्का प्रवृत्तेत्यदोषः । अत एव नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारादित्यत्र व्याप्ता ह्यात्मान इत्यत्र बहुवचनश्रुतेरधिकारमात्रेण बाधायोगात्स्वशब्दोन्मानाभ्यां चेति श्रुति-लिङ्गोक्तिरग्रे स्पष्टा । रूपबोधकवाक्यस्य भाष्येऽनुक्तेः स्वयमाह ॥ **यदग्नेरिति** ॥ यत्कृष्णं तदन्नस्येत्येव वाच्ये यदग्नेरित्याद्युक्तिस्तत्रापि भौक्तिकान्नमेवास्त्विति शङ्काव्युदासाय भूतप्रायपाठ-विरोधं वक्तुमिति भावः । कार्ष्ण्येत्यादिभाष्यं योजयति ॥ **तच्चेति** ॥ **प्रकरणलिङ्गाभ्यामिति** ॥

ननु द्वाभ्यामपि दुर्बलाभ्यां कथं प्रबलश्रुतेर्बाधः । तयोः स्वभावो बलवानित्युक्तेरिति चेत्सत्यम् । अधिकारादीनां निरवकाशत्वाच्चेति न्यायविवरणोक्त्या निरवकाशेत्यपि योज्यम् । भूतविषयत्वादित्युक्त्यैव प्रकरणस्य निरवकाशत्वमुक्तं रूपस्य शङ्कापूर्वं तदाह ॥ **नन्विति** ॥

(भावदीपः)
यद्वात्र श्रुतेर्बाधो नाम नानार्थकस्य गोशब्दादेरर्थात्प्रकरणाल्लिङ्गादिति न्यायेन प्रकरणादिना वाच्यरूपार्थान्तरज्ञापनमेव न त्वत्यन्तास्वारस्यम् । तच्च लिङ्गप्रकरणाभ्यामपि सेत्स्यतीति तथैवोक्तम् । अन्यत्र निरवकाशत्वोक्तिरभ्युच्चयत्वेनेति भावः । अन्नशब्दस्य प्रयोगबाहुल्या-त्पृथिव्यामपि शक्तिमत्त्वादित्यन्यत्रोक्तरीत्यार्थं वदन्नापश्चेत्यादिभाष्यमवतारयति ॥ **एवं प्रकरणेति** ॥ भाष्ये बहुवाक्योदाहरणेन बहुवाक्यानुरोधोऽप्यत्रैवेति न्यायविवरणं विवृतं भवति । तेनैव लिङ्गबोधकवाक्यानुरोधोऽप्युक्त इति भावेनाह ॥ **न चेति** ॥ तस्माद्यत्र क्व च वर्षतीति प्रागुदाहृतवाक्योक्तेरित्यर्थः ॥ **तेजोऽशितमितिवदिति** ॥ तत्र तेजःशब्दो यथा तैजसपरः तेजोऽश-नासम्भवात्तथा पृथिवीवाचकोऽन्नशब्दः पार्थिवपरः इत्यर्थः ॥ **आप्तवाक्येति** ॥ विरोधो वाक्ययोरित्यानुरोधान्नाप्रामाण्यमिति वा ज्ञायते । ततोऽद्भ्य एवान्नं पृथिवी त्वन्नरूपिणीत्यादि छान्दोग्यभाष्याद्युक्तस्मृतिरूपाप्तवाक्यानुसारित्वान्नाप्रामाण्यमिति वा भाष्यस्यार्थः सूचितः ॥ **अत्रैवेति** ॥ विरोधेऽन्यार्थकल्पनेत्यत्रेत्यर्थः ॥ **एवमिति** ॥ अधिकारादिभिरन्नश्रुतः पृथिव्यर्थत्व-मित्युक्तप्रकारेणेत्यर्थः ।

## अभिनवचन्द्रिका

सन्देहबीजं पूर्वपक्षं च पृच्छति – **किमस्येति** ॥ सन्देहबीजं पूर्वपक्षं च भाष्यकार एव दर्शयतीत्याह– **तत्र श्रुतिविगानमिति** ॥ तत्र शङ्कायां सत्यामित्यर्थः ॥ **श्रुतिद्वयस्य परस्परविरुद्धत्वादिति** ॥ 'ता अन्नमसृजन्त' इति श्रुतिः, अन्नसृष्टेरबानन्तर्यं वक्ति । 'अभ्यः पृथिवी' इति श्रुतिस्तु पृथिव्या अबानन्तर्यं वक्ति । ततश्च अन्नस्याबानन्तर्यं विरुणद्धि, पृथिव्यास्तदानन्तर्यम् अन्नानन्तर्यं विरुणद्धीति श्रुत्योः परस्परविरुद्धत्वादित्यर्थः । एतेन अपामुभयकारणत्वसम्भवान्न विरोध इति परास्तम् । अन्नस्यैवाप्सृष्ट्यनन्तरं सृष्टिः पृथिव्यास्तु तदानन्तर्यम् । अथवा पृथिव्या एवाऽप्सृष्ट्यानन्तर्यम्, अन्नस्य तु तदानन्तर्यमित्यभ्युपगमे न विरोध इत्यत आह– **निरवकाशत्वेनेति** ॥ द्वयोरपि श्रुत्योर्निरवकाशत्वेन अन्यतरपक्षपाताऽयोगान्नैव विरोधः परिहर्तुं शक्य इति भावः । अविरोधमाशङ्क्य निषेधति **न चेति** ॥ प्रकारान्तरेणाऽविरोधमाशंक्य निषेधति **न चेति** ॥ सव्येतरविषाणवत् उभयोरप्यबानन्तर्यमाशंक्य निषेधति **नापीति** ॥ **उक्तश्रुतिविरोधादिति** ॥ 'ओषधीभ्योऽन्नम्'

(अभिनवचन्द्रिका)

इत्युक्तश्रुतिविरोधादित्यर्थः । पृथिवीजन्यौषधिजन्यत्ववचनात् नाऽन्नस्य पृथिव्या सहोत्पत्तिरिति भावः । आदिसृष्टौ परमात्मनः सकाशादुत्पन्नानां देवानां सृष्ट्यन्तरे कश्यपादुत्पत्तिवत् पृथिव्या सहोत्पन्नस्याप्यन्नस्य सृष्ट्यन्तरे ओषधिजन्यत्वं सम्भवतीत्याशङ्क्य निषेधति – **न चान्नस्यैवेति** ॥ **बहुकल्पनेति** ॥ अन्नस्य सृष्टिद्वयकल्पनम्, एकस्यां सृष्टौ पृथिव्या सहैव जन्मकल्पनम्, 'अद्भ्यः पृथिवी' इति श्रुतौ अन्नपरित्यागे 'ता अन्नमसृजन्त' इति श्रुतौ पृथिवीपरित्यागे च कारणं परिकल्पनीयमित्यनेककल्पनापातादित्यर्थः ॥ **न चेति** ॥ श्रुत्योर्द्वयोरपि निरवकाशत्वेऽपि 'गङ्गायां घोषः' इत्यादाविव 'ता अन्नमसृजन्ते'ति श्रुते र्मुख्यार्थत्याग इति भावः ॥ **कारणाभावादिति** ॥ गङ्गायां घोष इत्यादौ आप्तवाक्यत्वेन प्रामाण्यस्य सिद्धत्वान्मुख्यार्थ-त्यागोऽङ्गीक्रियते । न चात्र प्रामाण्यमस्तीति न मुख्यार्थस्त्याज्य इति भावः ।

पूर्वपक्षस्तु – न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तम् । द्वारकारणश्रुतीनां परस्परं विरोधेनाऽप्रामाण्यात् । तथा हि 'ता अन्नमसृजन्ते' इति अन्नसृष्टेरप्सृष्ट्यानन्तर्यमुच्यते । 'अद्भ्यःपृथिवी' इति पृथिवीसृष्टेः अप्सृष्ट्यानन्तर्यम् । न चोभयं सम्भवति विरोधात् । न च तत्रान्नशब्देन पृथिव्येव विवक्षितेति वाच्यम् । अन्नश्रुतेः प्रसिद्धान्नपरत्वे बहुवाक्यानु-सारित्वगुणलाभात् । 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति अन्नमशितं त्रेधा विधीयत' इति प्रसिद्धान्नलिङ्गाच्च । न च पृथिवीपदेनाऽन्नसंग्रहः अद्भ्य एव अन्नसृष्ट्यङ्गीकारे 'अद्भ्यःपृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्' इति श्रुतिद्वयस्य परस्परं विरुद्धत्वात् अप्रामाण्यमेवेति न श्रुतिसमन्वयेन ब्रह्मणो जगत्कारणत्वं युक्तमिति ।

सिद्धान्तस्तु– युक्तमेव विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वम् । श्रुत्योर्विरोधाभावात् । तथा हि 'ता अन्नमसृजन्त' इत्यत्राऽन्नशब्देन पृथिवी विवाक्षिता 'तत्तेजोऽसृजत तदपोऽसृजेत' इति भूतप्रकरणात् । यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपाम्, यत्कृष्णं तदन्यस्ये' इति अन्नस्य कार्ष्ण्यश्रवणाच्च । न चैवं लक्षणा 'आपश्च पृथिवी चान्नं, पृथिवी वा अन्नम्' इति शब्दान्तरे पृथिव्या अन्नशब्दाभिधेयत्वाभिधानात् । न च वृष्टिजत्वलिङ्गविरोधः, पार्थिवपदार्थानां वृष्ट्युत्पन्नत्वार्थत्वेनोपपत्तेः । ननु श्रुतेः किमर्थांतरकल्पनया । श्रुत्योर्विरोधेन अप्रामाण्यमेव किं न स्यादिति चेत्, न वेदो नाऽप्रमाणम् अप्रामाण्यकारणदोषशून्यत्वात् प्रत्यक्षवदित्यादियुक्ति-विरोधात् । एवं च विरोधाभावात् हरेः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अवसरलक्षणामनन्तरसङ्गतिमाह ॥ **एवं सर्वस्येति** ॥ अव्याकृताकाशादेर्मुख्यवायोश्च साक्षाद्द्वारवाय्वादिभूतानामाकाशादिद्वारेत्यर्थः ॥ अन्यद्द्वारा ब्रह्मकारणत्वानिश्चये द्वारविषय-श्रुतिविचारस्यानवसर इति भावः । अनन्तरसङ्गत्यन्तरं सूचयन् विषयमाह ॥ **प्रकृता इति** ॥ **किमन्नस्येति** ॥ अत्र पृथिव्या इतीत्यनन्तरम् अनिर्णय उत पृथिव्या एवेति निर्णय इति विशेषः । अन्यथा अनिर्णयेन पूर्वपक्षस्य पृथिव्या एवेति निर्णयेन सिद्धान्तस्य चायोगात् । तथाचापः-पृथिव्यन्नयोरन्यतरस्य द्वारकारणत्वमिति निर्णयो न घटते घटत इति चिन्ता । तदर्थं ता आप ऐक्षन्त ता अन्नमसृजन्त अद्भ्यः पृथिवीति, श्रुतिद्वयं परस्परं विरुद्धं सदप्रमाणमुतनेति चिन्ता । तदर्थमन्नमिति श्रुतौ अन्नशब्दः किं प्रसिद्धान्नपर उत प्रकरणादिना **पृथिवीपर इति** ॥ अतो विरुद्धत्वादप्रामाण्यमिति भाष्यस्य यत एवमुभयथा श्रुतिरस्ति अतो विरुद्धत्वादुभयमप्यप्रमाण-मित्यभिप्रायमाह ॥ **नापः पृथिव्या इत्यादिना** ॥

ननु वियदाद्यधिकरणवदन्यतरश्रुत्यप्रामाण्येन पूर्वपक्षेऽपि ब्रह्मणो जगत्कारणत्वाक्षेपसम्भवा-त्परस्पर विरोधेनोभयाक्षेपेण पूर्वपक्षःकुत इत्यतआह ॥ **निरवकाशत्वेनेति** ॥ अद्भ्यः पृथिवीति च क्वचित्पृथिवीसृष्टिरित्युक्त्या अन्नसृष्टिर्बहुवाक्ये प्रतिपाद्यत इति सूचितम् ॥ प्रसिद्धनामस्वीकारे बहुवाक्यानुसारितेत्युक्तन्यायं सङ्गमयति ॥ **नचान्नशब्दस्येत्यादिना** ॥ **बहुवाक्य इति** ॥ अद्भ्योवा अन्नं तस्माद्यत्र क्वचनेत्यादिबहुवाक्य इत्यर्थः । न केवलं प्रसिद्धान्नस्वीकारे बहुवाक्यानुसारित्वं किन्तु तत्र प्रतीतलिङ्गद्वयाच्चेत्याह ॥ **तस्मादिति** ॥ वृष्टिजन्यत्वमस्यमानत्वं चेति लिङ्गद्वयेनान्न-शब्दस्य निरवकाशत्वमुपपाद्य पृथिवीशब्दस्यापि तदाह ॥ **न च पृथिवीपदनेति** ॥

**अद्भ्य एवेति** ॥ पृथिवीपदेनान्नं विवक्षितत्वाद्भ्य एवान्नमित्यङ्गीकारे इत्यर्थः ॥ **विरोधादिति** ओषधीभ्योऽन्नमित्यनेन विरोधात् । ओषधीजनकस्यान्नस्यौषधीजन्यत्वविरोधाच्चेत्यर्थः । एतेनाद्भ्यः पृथिवीति क्वचिद्वाक्यविशेषेऽद्भ्य एवान्नसृष्टिरुच्यत इत्यङ्गीकारे अतो विरुद्धत्वादत एव वाक्यादस्यैव वाक्यस्य विरुद्धत्वादप्रमाणं स्यात् । अतोऽद्भ्यः पृथिवीति वाक्ये पृथिवीसृष्टिरेवोच्यते नान्नसृष्टिरिति रीत्यन्तरेण भाष्यार्थ उक्तो भवति ॥ **नापीति** ॥ अद्भ्यः पृथिवी ओषधीभ्योऽन्न-

(वाक्यार्थमुक्तावली)

मित्युक्तश्रुतिविरोधादुभयोरप्यब्भ्य उत्पत्तिर्नेत्यर्थः । एतेनाब्भ्यः पृथिवीत्यत उक्तश्रुतिविरुद्धत्वाच्छ्रुति-द्वयमुभयोरप्येकस्मादुत्पत्तौ न प्रमाणमिति भाष्यं व्याख्यातं भवति ।

ननु नोक्तश्रुतिविरोधः अन्नस्य पृथिव्या सहाब्भ्यः पश्चादोषधीभ्य इति द्विवारमुत्पत्त्युपपत्ते-रित्याशंक्य परिहरति ॥ **न चान्नस्यैवेति** ॥ **बह्विति** ॥ अन्नस्याब्जन्यमोषधिजन्यत्वं पृथिव्या अब्जन्यत्वमिति बहुकल्पनापत्तेरित्यर्थः । बुहश्रुतिलिङ्गप्राप्ताब्भ्य एवोत्पत्तिं विहायोषधीभ्योन्न-मित्येकवाक्यबलात् कल्पने कल्पनागौरवमिति भावः ॥ **परम्परयेति** ॥ ओषधीद्वारेत्यर्थः ॥ **मुख्यार्थेति** ॥ अपामन्नं प्रति साक्षात्कारणत्वलक्षणमुख्यार्थ इत्यर्थः । अत एव भाष्ये अब्भ्योन्नसृष्टिः श्रूयत इति उक्तमिति भावः । प्रागुक्तशंकापरिहाराय प्रतिज्ञाहेतू बहिरेवोक्त्वा तत्र श्रुतिविरोधनिरासहेतुतया सूत्रभाष्ये व्याचष्टे ॥ **नात्रापामित्यादिना** ॥ ननु ता 'अन्नमसृजन्त' इत्यतःपूर्वं तेजोजलरूपभूतोपक्रमेऽपि, ता आपो अन्नमसृजन्तेति वाक्यं प्रसिद्धान्नपरं भवत् पृथिव्या ओषधय इत्यत्र पूर्वं भूतोपक्रमेऽप्योषधिपदस्य पार्थिवौषधिपरत्वस्वीकारवदुपपत्तेरित्यतो भूतपरमुत्तर-वाक्यं चाह ॥ **तासां त्रिवृतमिति** ॥ तासां तेजोऽबन्नानामिति उत्तरत्रापि भूताभूतानुवृत्तेः प्रकरणविच्छेदाभावात् । प्रत्युतान्नस्य तेजोवत्समानकक्ष्यतया त्रिवृत्करणोक्तेरन्नश्रुतिरपि भूतपरेति भावः ।

ननु इमास्तिस्रो देवतास्तासां त्रिवृतमिति तेज आदीनां देवतात्वं श्रुतमभिमानिनयसिद्धम् । तथा च प्रकरणस्य भूतविषयत्वमिति चेन्न । तथापि शरीररूपकविन्यस्तगृहीतेरिति न्यायेनाभि-मन्यमानसहितानामेवाभिमानिनां तत्र गृहीतेः । अत एव मांसादिनये यत् कठिनं सापृथिवीत्यादि वक्ष्यति ॥ **भूतविषयत्वादिति** ॥ अन्नस्य भौतिकत्वेन भूतत्वाभावादिति भावः । भूतशब्देन भौतिकमेव व्यावर्त्यं नाभिमानिदेवतापीति ज्ञेयम् ॥ **कथं प्रकरणेति** ॥ यद्यपि द्युभ्वादिनये, प्रकरणादिति सूत्रे, निरवकाशप्रकरणस्यान्यमीशमिति, ईशश्रुतिबाधकत्वम् । तथा आत्मा प्रकरणादित्यत्र, निरवकाशप्रकरणस्य, परञ्ज्योतिरिति ज्योतिःश्रुतिबाधकत्वमुक्तम् । तथाप्यत्र पुनः रूपोक्तिस्वारस्याय तदनाश्रित्य जातिश्रुतिप्रयुक्तप्राबल्यमात्रं शब्दादेवेत्यत्रोक्तमुपेत्येयं शङ्केत्यदोषः । अत एव नाणुरतच्छ्रुतेरित्यत्र बहुवचनश्रुतेरधिकारमात्रेण बाधायोगात् स्वशब्दोन्मानाभ्यां चेति श्रुतिलिङ्गोक्तिरग्रे स्पष्टा ॥ **कार्ष्ण्यस्यान्नेऽपीति** ॥ कार्ष्ण्यप्राचुर्यस्येत्यर्थः । शक्तिमत्वमित्युक्त-

(वाक्यार्थमुक्तावली)

सिद्धान्तन्यायप्रदर्शकतया आपश्चेत्यादिभाष्यमवतारयति ॥ **एवं प्रकरणेति** ॥ अन्नश्रुतेः पृथिव्यां सावकाशत्वोक्तेरुपलक्षणत्वं मत्वा लिङ्गयोरपि सावकाशत्वमाह ॥ **न च वृष्टीति** ॥ **वृष्ट्युत्पन्नार्थत्वेनेति** ॥. पार्थिवानां वृष्ट्युत्पन्नार्थत्वाविवक्षायां ता आपोऽन्नमसृजंत पृथिवी वा अन्नमिति व्याख्यानमनुपपन्नं स्यात् । अन्नस्य वृष्टिजन्यत्वेनाब्जन्यत्वे बाधकाभावात् । व्याख्यातं चान्नपदं श्रुतौ पृथ्विपरतया तेन जानीमो वर्षजन्यमन्नं पार्थिवमेव न तु प्रसिद्धमिति भावः । अत एवात्र टीकायां लिङ्गविरोधोऽत्र निरस्त इति ज्ञेयम् । तेजोऽशितमिति तत्र तेजस एव भक्षणासम्भवाद्यथा तेजःशब्दः तैजसघृतादिपरस्तथा पृथिवीपरोऽन्नशब्दः पार्थिवपर इति भावः । भाष्ये एवमेव वर्णान्तरगतिः कृष्णवर्णातिरिक्तवर्णगतिरेवमेव निमित्तविशेषेणैवेत्युक्तम् । निमित्तविशेषान्तरमाह ॥ **विष्ण्विति** ॥ सूत्रेऽन्नमित्यध्याहारः । शब्देत्येव वाच्ये अन्तरेत्युक्तिः शाखान्तरस्य सूचनाय वा ता आपोऽन्नमसृजन्त पृथ्वी वा अन्नमित्येवं व्याख्यानरूपशब्द-विशेषद्योतनाय वेत्यवगन्तव्यम् ।

## तत्त्वसुबोधिनी

अवसरलक्षणमनन्तरसङ्गतिमाह ॥ **एवं सर्वस्येति** ॥ न वियदश्रुतेरेतेनेत्यधिकरणाभ्यां नभोवाय्वोः साक्षाद्ब्रह्मजत्वे तेजोऽतस्तथा ह्याह । आप इत्यधिकरणाभ्यां च वागादीनामाकाशादि-द्वारा ब्रह्मजातत्वे सिद्ध इत्यर्थः । अन्यद्वारा ब्रह्मजत्वानिश्चये द्वारविषयश्रुतिविचारस्यानवसर-ग्रस्तत्वादिति भावः । अनन्तरसङ्गत्यन्तरं सूचयन् विषयमाह ॥ **प्रकृत इति** ॥ अतो विरुद्धत्वादप्रामाण्यमिति मन्तव्यमित्यर्थः ।

भाष्याभिप्रायमाह ॥ **नाप इत्यादिना** ॥ अन्यतरश्रुत्यप्रामाण्येन पूर्वपक्षेऽपि ब्रह्मणो जगज्जन्मादिकारणत्वाक्षेपसम्भवात् परस्परविरोधेन उभयाप्रामाण्येन पूर्वपक्षः कुतः कृतः इत्यत आह ॥ **निरवकाशत्वेनेति** ॥ **अन्नश्रुतेः प्रसिद्धान्येति** ॥ अद्भ्यो वा अन्नमित्यादिबहुवाक्यानां प्रसिद्धार्थपरत्वरूपगुणलाभादित्यर्थः । न केवलं प्रसिद्धान्नपरत्वे बहुवाक्यानुसारिता किन्तु लिङ्गद्वयमप्यस्तीत्याह ॥ **तस्मादिति** ॥ अद्भ्यः पृथिवीति श्रुतेर्निरवकाशत्वमुपपादयति ॥ **न चेति** ॥ **उक्तश्रुतिविरोधादेवेति** ॥ ओषधीभ्योऽन्नमिति श्रुतिविरोधादेवेत्यर्थः ॥ **बहुकल्पनापातादिति** ॥

(तत्त्वसुबोधिनी)

अन्नस्याब्जन्यत्वमोषधीजन्यत्वं पृथिव्याश्चाब्जन्यत्वं चेति बहुकल्पनापातादित्यर्थः ॥ **मुख्यार्थत्याग इति** ॥ साक्षात्कारणत्वरूपमुख्यार्थत्याग इत्यर्थः ॥ **भूतविषयत्वादिति** ॥ अन्नस्य भौतिकत्वेन भूतत्वात् भूतशब्देन भौतिकमेव व्यावर्तते न तु भूताभिमानी देवतापीति भावः । पूर्वोक्तयुक्तेः सावकाशत्वमाह ॥ **न च वृष्टिजन्यत्वेति** ॥ **तेजोऽशितमितिवदिति** ॥ अत्र तैजस एव भक्षणासम्भवात् यथा तेजश्शब्दः तैजसपरः तथा पृथिवीवाचको अन्नशब्दः पार्थिवपर इत्यर्थः । सा पृथिवी पीतेत्यभिधीयते अत्र हेतुः नाभीति नाभिजात पद्मस्य पीतत्वेन तत्सम्बन्धात् पृथिव्याः अपि पीतत्वमिति भावः । पृथिवी रक्तेत्यभिधीयते तत्र हेतुः ॥ **क्षत्रेति** ॥ पृथिव्यामन्योन्यं क्षत्राणां युद्धे सति तदीयरक्तसम्बन्धादित्यर्थः ॥ **पृथिवी शुक्लत्वमेति** ॥ अत्र हेतुः **उदकबहुत्वत** इति ॥ उदकाय शुक्लत्वेन तत्सम्बन्धबाहुल्यात्तस्या अपि शुक्लत्वमित्यर्थः । उक्तन्यायमन्यत्रातिदिशति ॥ **एवमिति** ॥ वर्णान्तरमपि तत्सम्बन्धबाहुल्यादेव मन्तव्यमित्यर्थः ।

## वाक्यार्थविवरणम्

**द्वारविषयेति** ॥ आवान्तरकारणापरपर्यायद्वारकारणविषयेत्यर्थः ॥ **प्राप्तमिति** ॥ शङ्कायामित्यर्थः । ननु श्रुतिद्वयमध्ये अन्यतरश्रुतिः प्रमाणतया गृह्यत इति न विरोध इत्यत आह ॥ **निरवकाशत्वेनेति** ॥ श्रुतिद्वयस्यापीति शेषः । बहुवाक्यानुसारित्वमेव दर्शयति ॥ **तस्मादित्यादिना** ॥ यस्मादादौ अन्नमब्जन्यं तस्मात् । इदानीमपीति शेषः ॥ **प्रसिद्धान्नेति** ॥ 'अशितं' इत्युक्त्या अश्यत्वरूपप्रसिद्धान्नलिङ्गादित्यर्थः । न हीदं लिङ्गं पृथिव्यां सम्भवतीति भावः । पुनरविरोधमाशङ्क्य निषेधति ॥ **न चेति** ॥ **श्रुतिविरोधादिति** ॥ अन्नस्यौषधिजातत्वप्रतिपादकश्रुतिविरोधादित्यर्थः ।

ननु तथापि न विरोधः । उभयत्रापि श्रुतौ पृथिव्यन्नशब्दयोः प्रसिद्धपृथिव्यन्नपरत्वस्यैवाङ्गीकारात् । न च पुनर्विरोधानिस्तार इति वाच्यम् । पृथिव्यन्नयोरुभयोरपि अभ्य एवोत्पत्त्यङ्गीकारेणापां पृथिव्यन्नोभयोत्पत्तौ द्वारकारणत्वाङ्गीकारादित्याशङ्क्य निषेधति ॥ **नापीति** ॥ **उक्तेति** ॥ अन्नस्याब्जन्यत्वे । औषधीभ्योऽन्नमित्यन्नस्यौषधिजन्यत्वप्रतिपादकश्रुतिविरोधादेवेत्यर्थः । 'अभ्यः पृथिवी' 'ता अन्नमसृजन्त' इति श्रुत्योः पुनरविरोधमाशङ्क्य निषेधति

(वाक्यार्थविवरणम्)

॥ **न चेति** ॥ परम्परया ॥ पृथिव्यौषधिजननद्वारेत्यर्थः ॥ **मुख्यार्थेति** ॥ 'ता आप अन्नमसृजन्त' इति साक्षादब्जन्यत्वरूपमुख्यार्थेत्यर्थः ॥ **अस्य प्रकरणस्येति** ॥ 'ता आप ऐक्षन्त' इत्याद्यस्य प्रकरणस्येत्यर्थः ॥ **प्रकरणमात्रेणेति** ॥ श्रुत्यपेक्षया प्रकरणस्य दुर्बलत्वादिति भावः ॥ **अवाचकायाः** ॥ पृथिव्यवाचकायाः ॥ **पृथिवीपरत्वमिति** ॥ लक्षणादिना पृथिव्यां तात्पर्यं गङ्गाशब्दस्य तीर इवेत्यर्थः ॥ **तस्याः** ॥ अन्नश्रुतेः । वाचकत्वरूपा शक्तिः ॥ **लिङ्गेति** ॥ अश्यत्वरूपलिङ्गेत्यर्थः ॥ **आप्तेति** ॥ तथा च वेदो नाप्रमाणम् । विष्ण्वाद्याप्तवाक्यभूतपञ्चरात्राद्यनुसारित्वादित्यनुमानं द्रष्टव्यम् । आदिपदेन फलसंवादादिग्रहणम् । बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनां न प्रामाण्यस्य स्वतस्त्वभङ्गः । अत एव नाप्रमाणमित्यप्रामाण्याभाव एव साधित इति द्रष्टव्यम् । 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इत्येतद्धृदि कृत्वोक्तपरिहारप्रकारं दर्शयति । एवं युक्ति । कल्प्या । अन्नश्रुतेरिति शेषः । 'भाष्ये यत्रेत्यस्य यदेत्यर्थः । सा पृथिवी पीतेत्यभिधीयत इत्यन्वयः । रक्ता । इत्यभिधीयत इति वर्तते । भूयस्त्वादिति वक्ष्यमाणन्यायेनोदकबहुत्वतः शुक्लत्वमेतीत्यन्वयः । वर्णान्तरगतिः । स्वाभाविककृष्णवर्णापेक्षया यद्वर्णान्तरं पीतादि तद्गतिरेवमेव । निमित्तान्तरसमावेशेनेत्यर्थः ॥ **एवमेवेत्युक्तमेवेति** ॥ एवमेवेत्यनेनोक्तमेव निमित्तान्तरं दर्शयतीत्यर्थः । एवं 'च भुवः पीतत्वमिष्यत' इति यत्तन्न केवलं नाभिपद्माभिसम्बन्धात् किन्तु विष्णुवीर्याभियोगाच्चेति व्याख्येयम् । एवं च निमित्तान्तरप्रदर्शन एव भारो न वर्णान्तरविधौ, येनात्र वर्णान्तरं नोच्यते । किन्तु पूर्वोक्त एव पीतवर्णः कथ्यत इति कथमेतदिति चोद्यानवकाश इति ध्येयम् । केचित्तु वर्णान्तरस्य पीतादेर्गतिरेवमेव नाभिपद्माभिसम्बन्धादित्येवमादिप्रकारेणैवेत्यर्थः । तथा चैवमेवेत्युक्तमेव दर्शयतीति टीकाया एवमादीत्यादिशब्दोक्तं प्रकारं स्वयमेव दर्शयतीत्यर्थः । इत्याहुः ।

ननु विष्णुवीर्याभियोगेऽपि कुतो भुवः पीतत्वमित्यतस्तदुपपादयति ॥ **स्वर्णवीर्यो हीति** ॥ सुवर्णे च पीतरूपमस्तीति भावः । एतदुपलक्षणम् । नाभिपद्मक्षत्ररक्तबहूदकसम्बन्धेऽपि कुतो भुवः पीतत्वरक्तत्वशुक्लत्वानीति शङ्कापरिहाराय पीतं हि भगवन्नाभिपद्मं, रक्तवर्णं हि क्षत्ररक्तं, शुक्लं ह्युदकं प्रसिद्धमतस्तत्सम्बन्धाद्भुवोऽपि पीतत्वादि । जपाकुसुमसम्बन्धात् स्फटिके लौहित्यमिवेत्युपपादनं च द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

**साक्षादन्यद्वारा वेति** ॥ न वियदश्रुतेरेतेन मातरिश्वाव्याख्यात इत्यधिकरणाभ्यां महाकाशवाय्वोः साक्षाद्ब्रह्मजातत्वे तेजोतस्तथा ह्याह आप इत्यधिकरणाभ्यां भूतवाय्वादीनामाकाशादिद्वारा ब्रह्मजातत्वे च सिद्धे सतीत्यर्थः ॥ **द्वारविषयेति** ॥ अवान्तरकारणविषयेत्यर्थः । तत्र कोटिद्वयं किमस्येत्यादिप्रश्नद्वयोत्तरमाह ॥ **तत्र श्रुतीति** ॥ शङ्कायामित्यर्थः । सावकाशत्वादिना व्यवस्थास्त्वित्याह ॥ **निरवकाशत्वेनेति** ॥ श्रुतिद्वयस्येति वर्तते । अन्यतरसावकाशत्वमाशङ्क्य निराकरोति ॥ **न चेत्यादिना** ॥ **बहुवाक्येति** ॥ ता अन्नमसृजन्त ता आपोऽन्नमसृजन्त अद्भ्य एव तद्ध्यन्नाद्यं जायत इत्यादि बहुवाक्येत्यर्थः ॥ **तस्मादिति** ॥ तस्मादन्नस्याप्कार्यत्वादेव यत्र क्व च देशे वर्षति तत्रैव भूयिष्ठमन्नं भवति ॥ अन्यथासिद्धिं निरस्यति ॥ **अद्भ्य एवेति** ॥ तदन्नाद्यं प्रसिद्धान्नप्रभृतिपार्थिवमद्भ्य एव जायते नान्यस्मादित्यर्थः । अशितं भक्षितं त्रेधा पुरीषमांसमेदोरूपेण ॥ **लिङ्गादिति** ॥ वृष्टिजन्यत्वाद्यत्वपुरुषाद्यात्मना परिणामरूपादित्यर्थः । उक्तश्रुतिविरोधादिति पृथिवीजन्यौषधिजन्यत्वप्रतिपादकौषधीभ्योऽन्नमिति श्रुतिविरोधादित्यर्थः ॥ **बहुकल्पनापातादिति** ॥ अन्नस्याब्जन्यत्वमौषधिजन्यत्वं पृथिव्याश्चाब्जन्यत्वं चेति बहुकल्पनापातादित्यर्थः ॥ **मुख्यार्थेति** ॥ साक्षादब्जन्यत्वरूपेत्यर्थः ॥ **ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ** ॥ अन्नं पृथिव्यैव न प्रसिद्धान्नं कुतः अधिकारात्तत्तेजोऽसृजत' इत्यादिभूतप्रकरणात् । यत्कृष्णं तदन्नस्येति कृष्णरूपात् पृथिवी चान्नमिति शब्दान्तरात् वेदो नाप्रमाणमपौरुषेयत्वादिति युक्तेश्चेत्यर्थः । तासामिति तासां तेजो वन्नादिदेवतानां मध्ये एकैकदेवतां त्रिवृतं त्रिवृतं स्वाभिमन्यमानभूतेन सहान्योन्यप्रविष्टामकरोदित्यर्थः ॥ **भूतविषयत्वादिति** ॥ अन्नं च भौतिकमेव न भूतमिति भावः । ननु देवतानामन्योन्यप्रवेशे एकैकत्र कार्यं त्रयेण भाव्यं तत्कथमित्यतो यदग्नेरित्यादिवाक्यं प्राप्तं तस्यार्थः । अग्नेर्यद्रोहितं लोहितं रूपं तत्तेजसो रूपं तेजोऽभिमानिश्रीरूपसम्भवम् । अग्नेर्यच्छुक्लं रूपं तदपां रूपम् अन्नामकवायुरूपजन्यम् अग्नेर्यत्कृष्णं रूपं तदन्नाभिमानिरुद्ररूपसम्भवम् ॥ **जानीयादिति** ॥ **तेजोऽशितमितिवदिति** ॥ तत्र तेजस एव भक्षणासम्भवात् यथा तेजःशब्दः तैजसपदार्थ परस्तथा पृथिवीवाचकोऽन्नशब्दः पार्थिवपदार्थपर इत्यर्थः । प्रत्यक्षवत् साक्षिवत् पद्मस्वर्णगतपीतयोर्लोकेऽवान्तरविशेषदर्शनान्न भाष्ये पुनरुक्तिः शङ्क्या ।

॥ इति पृथिव्यधिकरणम् ॥

## ७. अथ तदभिध्यानाधिकरणम्

### सूत्रभाष्यम्

'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्व' (म.ना.उ. १६-२) इत्यादिनाऽन्यः संहर्ता प्रतीयत इत्यतो ब्रूते–

**॥ ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ १३ ॥**

'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.उ. ११०) इति वन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात्तत्कर्तृत्वं प्रतीयते, किमु सादेर्जगतः। इत्येतस्मादेव सर्वसंहारकर्ता विष्णुरिति प्रतीयते, किमु 'यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुपेऽत्तु देवः'। 'य इदं सर्वं विलापयति स हरिः परः परमात्मा' इत्यादि श्रुतिभ्य इति एवशब्दः।

'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः।
स्रष्टृत्वादिकमन्येषां दारुयोपावदुच्यते ॥
एकदेशक्रिया चात्र न तु सर्वात्मनेरितम्।
सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद्भवेत्' ॥ इति च स्कान्दे।

'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः।
हिरण्यगर्भश्शर्वश्च कालाख्यारूपिणस्तव' ॥ इति च भागवते।

'स ब्रह्मणा विसृजति स रुद्रेण विलापयति सोऽनुत्पत्तिरलय एक एव हरिः परः परानन्द' इति च महोपनिषदि ॥ इति तदभिध्यानाधिकरणम् ॥

### तत्त्वप्रदीपिका

न च स्वयमुत्पाद्य पालयितुर्विष्णोः जगत्संहरणं न्याय्यमिति युक्तेश्श्रुतेश्च विष्णोरन्यो जगत्संहर्तेत्यत आह– **तदभिध्यानादेव तु तल्लिङ्गात्सः ॥** तस्य विष्णोरभिध्यानाद्विश्व-मायानिवृत्तिः। कुतो जातात्? योजनात् तस्मिन्नेव मनोयोजनात्, भूयो भूयस्तत्त्वभावनया च। अन्तेऽपरोक्षज्ञाने जाते विश्वबन्धकमायानिवृत्तिद्वारको मोक्षो भवतीत्यर्थः।

(तत्त्वप्रदीपिका)

'स्वगुणाच्छादिका त्वेका परमाच्छादिकाऽपरा ।
स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः ।
व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम' ॥ इति महातत्त्वविवेके ।

अस्मिन् श्रुतिवाक्ये हरेरभिध्यानान्मुख्यप्रसादादिच्छया बन्धकमायानिवृत्तिवचनात्तस्माद्बन्धलयस्सिद्धः । ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः । उत्तमस्त्वेव मुक्तिद इत्याधस्तात्प्रास्तौत् । पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति ह्युपरि च सूत्रम् । यद्यपि तत्र स्वप्नतिरोधानमिच्छामात्रकृतं न च मुख्यप्रसादायत्तम् । तथाऽपि तस्यास्तं तं प्रति तदा तदेति विशेषभावात्सविशेषेच्छासूचकस्याभिध्यानपदस्यार्थवत्त्वमेव । यद्यपि नेदमभिध्यानपदस्य कृत्यं तत्र भगवान्निगदिष्यति । स्वयमेव खल्वब्रवीत्सविशेषेच्छां वैशेषिकवादनिरासे स्वत एव काले विभेदाङ्गीकृतेश्चेति । एवं सूत्रपदहृदयं तत्र तत्र भगवानुपक्षिपति । तुशब्दश्च विशेषवाची । तत्र पराभिध्यानस्य तत्तद्विषयभेदे तारतम्यं ब्रुवाणः ततो ह्यस्य बन्धविपर्याविति मोक्षप्रदायकत्वेन परामृश्यमानस्य सतोऽत्यर्थप्रसादात्मकत्वं च सामर्थ्याल्लक्षयति । अत्यर्थप्रसादो हि भगवतो मोक्षदोऽभिप्रेतो न च ज्ञानं विनात्यर्थप्रसाद इत्युक्तवत इत्यलमनेन सूत्रपदकृत्योक्तिसन्देहनिराकरणातिप्रसङ्गेन । प्रकृतमनुसरामः । अनादिबन्धलयकर्तुः सादिजगल्लायकत्वमस्तीति किमु वक्तव्यमित्येतस्माद्बन्धसंहर्तृत्वाल्लिङ्गादेव जगत्संहर्ता विष्णुरिति गम्यते । किमु श्रुत्या बलवत्यैकयाऽपि बहुभ्यस्तु किम्वेवेत्येवं कैमुत्यन्यायावतरणार्थमेवशब्दः प्रयुक्तः । निखिलनिगमतात्पर्यप्रसाधितजगत्कर्तृत्वादिना प्रस्तुतः स इति परामृश्यते । पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थं चेत्यत्राप्यनुप्रेक्षणीयम् । तदेव चोपसन्दर्शयामास– 'स्रष्टृत्वादिकमन्येषां दारुयोपावदिष्यत इति निमित्तमात्रमित्यादि च । ईशस्य तव विश्वसृष्टिसंहारयोः हिरण्यगर्भः शर्वश्च निमित्तमात्रमित्युक्ते द्वारमात्रमिति भवति । कालाख्यारूपिणस्तवेति हेतुगर्भम् । कालाख्यैव रूपं 'कालाख्यारूपम्' । रूपं रूपकं ज्ञापकं, वाचकत्वेन तद्वान् 'रूपी' ।

'कालः कलितसम्पूर्णसद्गुणत्वाज्जनार्दनः ।
संहारात्सर्ववित्त्वाद्वा सर्वविद्रावणेन वा' ॥ इति महावराहे ।

एवं बहुलश्रुतिस्मृतियुक्तिबलान्नान्यसंहारश्रुत्या लौकिकन्यायेन वा विरोधः । सा च ब्रह्मवादिनीति ह्यवादि ।

## तत्त्वप्रकाशिका

एवमधिभूताधिदैवोत्पत्तिविषयश्रुतिविरोधं पराकृत्यात्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तत्संहारविषय श्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्सृष्ट्यादिकर्ता हरिरित्यभिहितम् । तत्र संहारकर्तृत्वेऽन्यगते तदभावापातात्तन्निषेध्यमेव । प्रकृताधिभूताधिदैवानि विषयः । उत्पत्तिमत्त्वाल्लीयन्त इति सिद्धम् । किं भगवता लीयन्ते रुद्रेण वेति सन्देहः । 'यत्प्रयन्त्यभिसंविशन्ति' 'रुद्रो मा विशान्तकः' इति श्रुतिविरोधः सन्देहबीजम् । पूर्वपक्षयति ॥ **प्राणानामिति ॥** रुद्र एव संहारकः । श्रुतौ तस्यान्तकत्वश्रवणात् । न च वाच्यं रुद्रादिनाम्नां विष्णुपरत्वादियं श्रुतिस्तत्परा किं न स्यात् । रुद्रविषयत्वे वा रुद्रस्य संहारद्वारत्वाभिधात्री किं न स्यादिति । यथाकथञ्चिद्विष्णोः संहर्तृत्वाभ्युपगमे लोकदृष्टिविरोधात् । तस्य जगदुत्पादकत्वात् । लोके च पितुरन्यस्यैव मारकत्वदर्शनात् । न च रुद्रस्य संहर्तृत्वेऽत्यन्तसुप्रसिद्धेऽङ्गीकृते विरोधोऽस्ति । येन श्रुतेरन्यार्थता कल्प्यते । न च श्रुतिविरोधः । तस्या युक्तिसहितैतत् श्रुतिविरोधात् । न च भाक्तार्थत्वेनाविरोधः । युक्तिविरोधानिस्तारात् । अतो रुद्रस्यैव संहर्तृत्वादन्या श्रुतिरप्रमाणमेवेति न विष्णौ श्रुतिसमन्वयो युक्त इति भावः ।

रुद्र त्वं प्राणानामाश्रयोऽन्तकश्चासि । स त्वं मा मां विश । आहुतिरूपेणान्नेन दत्तेन निमित्तेन मामाप्यायस्वेत्यर्थः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** विष्णुरेव संहारकर्ता । तस्याभिध्यानादिति श्रुतौ संसारमोक्षो भगवदभिध्यानाद्भवतीति हि श्रूयते । किं चातः तदिच्छाधीनत्वलिङ्गेन तत्कृतोऽनुमीयते । एवं चानादेर्बन्ध(न)स्य लयकर्ता सुतरां सादेर्जगतः संहारकर्तेति सिध्यतीत्यर्थः । भगवति मनोयोजनाद् भूयो भूयो यथार्थध्यानाच्च जाताद्भगवदभिध्यानात् परिपाककाले विश्वबन्धकमायानिवृत्तिर्भवतीत्यर्थः । नन्वस्तु विष्णोरनादिभवभेत्तुर्विश्वसंहारे सामर्थ्यं संहर्तृत्वं कुत इत्यत आह ॥ **इत्येतस्मादिति ॥** उक्तादेतस्मादेव हेतोः संहारकर्ता विष्णुरिति प्रतीयते । शक्तस्यैव तत्सम्भवात् । अथैतावताप्यपरितोषे सुतरां स्पष्टश्रुतिभ्यो ज्ञायत इत्यर्थः । इत्यर्थमेवशब्दः सूचयतीति शेषः । विष्णोरेव संहर्तृत्वे प्रागुक्तश्रुतिविरोध इत्यत आह ॥ **स्पष्टेति ॥** अत्र परतन्त्रेऽपि । सृष्ट्यादिकमिति पूर्वत्र सम्बध्यते । परतन्त्रसंहर्तृत्वपरा श्रुतिरिति भावः । पारतन्त्र्यं च संहारद्वारत्वमिति भावेनाह ॥ **निमित्तेति ॥** काल इत्याख्यारूपे यस्यासौ तथोक्तः । रूपस्य कालत्वं संहर्तृत्वादिगुणसंपन्नत्वम् । स्मृतेर्मूलभूतां श्रुतिं चाह ॥ **स इति ॥**

(तत्त्वप्रकाशिका)

**न चोक्तयुक्तिविरोधः । ममत्वादिदोषराहित्येन लोकपितृवैलक्षण्याद्विष्णोर्लोकविरोधस्यादोपत्वात् । अतः श्रुत्यविरोधेन संहारस्य भगवत्कर्तृत्वसिद्धेर्युक्तस्तस्मिन् श्रुतिसमन्वय इति सिद्धम् ।**

## गुर्वर्थदीपिका

तत्संहारेत्यत्र तस्मात्परमात्मनो जायमानस्संहारस्तत्संहार इत्यर्थः । न च भाक्तार्थत्वेनेत्यत्र भाक्तत्वं द्वारतया संहर्तृत्वं वैकदेशसंहर्तृत्वं वेत्यर्थः । स एवेति तस्य संहर्तृत्वावधारणादेवकार इत्यादिश्रुतिभ्यः सिद्ध्यतीति किमु वक्तव्यमिति सूचयति । तुशब्देन रागादिदोषभरितलोकपितृतः परमात्मानं विशिनष्टि । 'तस्याभिध्यानात्' इति श्रुतावभिध्यानमिच्छा । परिपाककाल इत्यत्र ज्ञानोत्तरकालप्रारब्धकर्मणां भोगपरिपाककाल इत्यर्थः । संहर्तृत्वं कुत इत्यत्र सामर्थ्ये सत्यपि तत्कृतसंहारे प्रमाणाभावेन न तत्कर्तृत्वमङ्गीकर्तुं शक्यम् । ताडनसमर्थेऽपि पुरुषे सर्वदा ताडनकार्यादर्शनादिति भावः ।

## भावबोधः

अनन्तरसङ्गतिमाह **एवमिति** ॥ तत्संहारविषयश्रुतिविरोधपरिहारादिति । अधिभूतादि-संहारेत्यर्थः । सृष्ट्यनन्तरत्वेऽपि विष्णोः सर्वस्थितिकर्तृत्वस्य सर्वसंमतत्वेन विवादाभावात् संहर्तृत्वस्यान्यनिष्ठत्वे पितुरन्यस्य मारकत्वरूपयुक्तिवदत्र तादृशपूर्वपक्षयुक्त्यभावाच्च तदविचार्य संहारकर्तृत्वमेव विचार्यत इति भावः । यद्यपि 'प्रकृतैतावत्त्वम्' इत्यत्र विष्णोः स्थितिकर्तृत्वं विचार्यम् (ते)पाठान्तरं तथाप्यत्र सर्वसंहर्तृत्वस्य विष्णुनिष्ठत्वे विचारित एव संहारकर्तुः संहारादन्यरक्षाया अयोग इति पूर्वपक्षयुक्तेरुत्थाने संहारकत्वव्यतिरिक्तपालकत्वमेव तत्र समर्थ्यते; न तु पालकत्वस्य अन्यनिष्ठत्वं निवार्यत इति ज्ञातव्यम्– **किं भगवतेति** ॥ अत्र भूतादिकं किं रुद्रेण लीयते, उत विष्णुनेति चिन्ता । तदर्थं 'यत्प्रयन्ति' इति श्रुती 'रुद्रो मा विशान्तक' इति श्रुतिबाधितत्वेनाप्रमाणमुत प्रमाणमिति । तदर्थं 'रुद्रो मा विशान्तकः' इति श्रुतिः किं युक्तत्वेन रुद्रस्य स्वातन्त्र्येण संहर्तृत्वप्रतिपादकतया निरवकाशोत विष्णुकर्तृकसंहारे रुद्रस्य द्वारमात्रपरतया **सावकाशेति** ॥ तदर्थं विष्णुर्न संहर्ता तदुत्पादकत्वाल्लोकपितृवदिति युक्तिः किं व्याप्त्यादिमत्त्वेना-नाभासोत ममतादि दोषयुक्तत्वरूपोपाधिग्रस्तत्वेनाभासेति । समन्वयाध्यायोक्तरीत्या विशिष्य

(भावबोधः)

द्युभ्वाद्यधिकरणोक्तरीत्या च रुद्रादिशब्दानां मुख्यार्थत्वाभिप्राये तेनैव गतार्थता । 'तदधीनत्वादर्थवत्' इत्युक्तन्यायेनामुख्यार्थत्वाभिप्राये 'तेजोऽतस्तथा ह्याह' इत्यधिकरणेन गतार्थतेत्याशङ्क्य प्रतिषेधति– **न च वाच्यमिति** ॥ रुद्रादीनां लयकारित्वाङ्गीकारे पितुरन्यस्य मारकत्वदृष्टेर्लोकदृष्ट्यनुसारित्वमिति गुण इति न्यायविवरणोक्तामभ्यधिकाशङ्काहेतुभूतां युक्तिमाह– **यथा कथञ्चिदित्यादिना** ॥ **भाक्तार्थत्वेनेति** ॥ 'रुद्रो मा विशान्तक' इति श्रुतेः विष्ण्वसंहृतपदार्थसंहर्तृत्वरूपभागविषयत्वेनेत्यर्थः ॥ **युक्तीति** ॥ क्वचिदपि विष्णोः संहर्तृत्वाङ्गीकारे पितृत्वरूपयुक्तिविरोधानिस्तारादित्यर्थः । 'असि' 'आविश' इति मध्यमपुरुषानुरोधादाह– **रुद्र त्वम्' इति** 'मे'त्येतदस्मच्छब्दादेशरूपनिषेधार्थकं च तन्त्रेणोपात्तमिति भावेनाह– **मा मां विशेति** ॥ अन्यथा निषेधार्थकत्वे कर्मानुक्तिरस्मच्छब्दादेशरूपत्वेऽन्तकप्रवेशप्रार्थनानुपपत्तिरिति भावः । यद्वा, श्रुतौ सवर्णदीर्घाङ्गीकारे माम् आविशेति पदाभिप्रायेण मामाविशेत्युक्तम् । अस्मिन् पक्षे प्राणानां ग्रन्थिरसि इति हेतूक्तिस्तेनान्नेति प्रवेशफलोक्तिश्चेति ज्ञेयम् । आप्यायस्वेत्यत्र कर्मानुक्तेरस्मच्छब्दादेश रूपस्यानुवृत्तिरित्यभिप्रेत्याह– **मामाप्यायस्वेति** ॥ सूत्रेऽवधारणार्थक 'तु' शब्दान्वितेन 'स' इति तच्छब्देन 'तेजोऽत इति' सूत्रस्थातःशब्दोक्तः परमात्मा परामृश्यत इति भावेनाह– **विष्णुरेव संहारकर्तेति** ॥ सूत्रे तदभिध्यानादित्येतद्युक्तिप्रदर्शकं श्रुतिसूचकमपि भवतीति भाष्ये 'तस्याभिध्यानात्' इति श्रुत्युदाहरणमित्यभिप्रेत्याह– **तस्याभिध्यानादिति** ॥ **श्रुताविति** ॥ विष्णोर्जगत्संहर्तृत्वे एतच्छ्रुतिप्रतिपादितसंसारमोक्षस्य भगवदिच्छाधीनत्वं कथं हेतुरित्याशङ्कापरिहाराय नायं साक्षाद्धेतुः किं तु हेतुसाधकहेतुरित्याशयेन सूत्रे तल्लिङ्गादित्युक्तम् । तस्य च सूत्रांशस्य तस्माद्बन्धलयस्य भगवदिच्छाधीनत्वल्लिङ्गात् स परमात्मा बन्धलयकर्तृत्वेनानुमीयत इत्यर्थ इत्यभिप्रेत्य प्रवृत्तस्य बन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात् तत्कर्तृत्वं प्रतीयत इति भाष्याभिप्रायमाह– **किं चात इत्यादिना** ॥ भाष्ये यथाश्रुतहेतुसाध्ययोर्वैयधिकरण्यशङ्कापरिहारायाह– **तत्कृत इति** ॥ संसारान्मोक्ष इत्यनुवर्तते । अनेन भाष्ये कर्तृत्वं नाम कृतिमत्त्वं विवक्षितम् । बन्धलयस्येश्वरेच्छाधीनत्वलिङ्गेन तत्प्रयत्नाधीनत्वानुमानोपपत्तेरित्युक्तं भवति ।

ननु बन्धलयस्य भगवत्कर्तृत्वमपि कथं जगत्संहर्तृत्वहेतुरित्यतः सूत्रार्थलब्धाभिप्रायप्रदर्शनपरं किमु सादेर्जगत इति भाष्यं व्याचष्टे– **एवं चानादेरिति** ॥ तस्याभिध्यानादित्यस्य जीवकर्तृध्यान-

(भावबोधः)

परत्वे तत्त्वभावादित्यनेन पुनरुक्तेर्विश्वमायानिवृत्तेः सकृदेव जायमानत्वेन भूयश्चेत्यस्य तत्रान्वयासम्भवाच्च श्रुतिं यथावद् व्याचष्टे– **भगवति मनोयोजनादित्यादिना** ॥ भूयश्चेति चशब्दाद् वीप्सालाभाद् भूयोभूय इत्युक्तम् । तत्त्वभावादित्यस्य यथार्थध्यानाच्चेत्यर्थः । **भगवदभिध्यानादिति** ॥ भगवदिच्छायाः सकाशादित्यर्थः ॥ **स्पष्टश्रुतिभ्य इति** ॥ अत्र यमप्येतीति भाष्योदाहृतश्रुतिवत् 'न विष्णोर्विलयकृन्न विष्णोरन्यो विमुक्तिदः' इति न्यायविवरणोदाहृतापि श्रुतिर्ग्राह्या । अत एव सामान्येन स्पष्टश्रुतिभ्य इत्युक्तम् । स्मृतौ हरेरपि प्रकृतत्वादत्रेत्यस्य तत्परत्वभ्रमं वारयितुं परतन्त्रेऽपीति व्याख्यानं कृतम् । ईरितमित्यस्य नपुंसकलिङ्गत्वेनैकदेशक्रिया चेत्यस्यानुवृत्त्य-योगादाह– **सृष्ट्यादिकमिति** ॥ **पूर्वत्रेति** ॥ पूर्वत्रापीत्यर्थः । तेन समस्तमित्यस्य न विशेष्या-नुक्तिदोषः ।

नन्वनया स्मृत्या कथं श्रुतिविरोधपरिहार इत्यतस्तद्वाक्यानां सावकाशत्वादिति न्यायविवरणानुसारेण स्मृत्यभिप्रायमाह– **परतन्त्रसंहर्तृत्वपरेति** ॥ रुद्रस्य क्वचित् संहारद्वार-त्वेनैवेति न्यायविवरणानुसारेणोत्तरस्मृतिमवतारयति **पारतन्त्र्यं चेति** ॥ आख्यारूपे यस्यासाविति रूपिण इतीनेरेवार्थ उक्तो न बहुव्रीहिरिति ज्ञातव्यम् । लोकपितृवैलक्षण्याद्विष्णो-र्यथावाक्यमङ्गीकारोपपत्तेरिति न्यायविवरणाभिप्रायमाह– **ममत्वादिदोषराहित्येनेति** ॥ अनेन ममत्वादिदोषयुक्तत्वं साधनधर्मावच्छिन्नसाध्यव्यापकमुपाधिरित्युक्तं भवति ।

## भावदीपः

अधिकरणसङ्गतिमाह ॥ **एवमिति** ॥ **अधिभूताधिदैवेति** ॥ वियदादिशब्दानां भूततद्देवता-रूपोभयपरत्वादिति भावः । पराकृत्येत्यनन्तरं स्थितौ विवादाभावादित्यपि योज्यम् । चिन्ता-फलमाह ॥ जगदिति ॥ लयासिद्धौ केनेति विशेषविचारानवकाश इत्यत आह ॥ **उत्पत्तीति** ॥ अभिसंविशन्ति मुक्तौ स्वेच्छया प्रविशन्ति । अनादिबन्धलयरूपमुक्तिकर्तृत्वात्संहारकर्तृत्वं विष्णोर्युक्तमिति युक्तिसूचनार्थं सिद्धान्तानुगुणतयाभिसंविशन्तीति शेषोक्तिः । व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **रुद्र एवेति** ॥ रुद्रादीनां मारकत्वाङ्गीकारे पितुरन्यस्य मारकत्वदृष्टेर्लोक-दृष्ट्यनुसारित्वमिति गुण इत्यन्यत्रोक्तां भाष्यस्थादिपदोपात्तां युक्तिम् अत्र पूर्वपक्षश्रुतिप्राबल्याय

(भावदीपः)
योजयितुं गतार्थत्वशङ्कामाह ॥ **न च वाच्यमिति** ॥ **विष्णुपरत्वादिति** ॥ अन्तर्नयेऽधि-दैवगताशेषनाम्नां समन्वयस्योक्तेर्द्युभ्वादिनयभाष्ये रुजं द्रावयत इत्यादिना योगपौराणिक-रूढ्योरुक्त्या **प्रपञ्चनाच्चेति भावः** ॥ कल्पनोपदेशादिति न्यायेनामुख्यवृत्त्या अन्यवाचकत्व-स्याप्यङ्गीकारादाह ॥ **रुद्रविषयत्वे वेति** ॥ आप इत्यत्रोक्तवचनैरन्यस्य स्वतःशक्त्यभावादिति भावः । विष्णुर्न संहर्ता उत्पादकत्वात्पितृवदिति प्रयोगं हृदि कृत्वा हेतोरप्रयोजकत्वनिरासाय न्यायविवरणोक्तिसूचितविपक्षबाधकयुक्तिं विवृणोति ॥ **यथेत्यादिना** ॥ अन्तकत्वश्रुतेर्विष्णुपरत्वेन वाऽन्यपरत्वेन वा साक्षादन्यद्वारा वेत्यर्थः । अत्र पितुरन्यस्येति पितृपदेन न केवलं जनको विष्णुः किं तु रक्षकश्च न च रक्षकस्य संहर्तृत्वं युक्तमिति सूचितमिति चन्द्रिका । रुद्रः संहर्ता तथा लोकप्रसिद्धत्वात् य एवं स एवं यथा संमत इति प्रयोगमुपेत्य तस्य लोकदृष्ट्यनुसारित्वरूपानु-कूलतर्कं साक्षान्न्यायविवरणोक्तं व्यतिरेकमुखेन व्यनक्ति ॥ **न चेत्यादिना** ॥ श्रुते रुद्रो मेति श्रुतः ॥ **न च श्रुतीति** ॥ यत्प्रयन्तीति श्रुतीत्यर्थः ॥ **भाक्तेति** ॥ द्वारार्थत्वरूपेत्यर्थः । यद्वा कतिपयसंहर्तृत्वरूपेत्यर्थः ॥ **युक्तीति** ॥ पितृत्वान्न संहर्तेश्वर इति युक्तीत्यर्थः । पूर्वभाष्याद-प्रामाण्यपदमनुवर्त्य फलोक्त्या पूर्वपक्षभाष्यमुपसंहरति ॥ **अत इति** ॥ सयुक्तिकबलवच्छ्रुतिबला-दित्यर्थः । रुद्रोमाविशेत्यत्र रुद्र उमा आविशेति पदविभागमुपेत्यार्थमाह ॥ **रुद्रेति** ॥ उ इति सम्बुद्धिद्योतकः । त्वमिति शेषः । आत्मप्रवेशप्रार्थनाया बीजोक्त्यर्थं प्राणानामित्यादि पूर्वांशोक्ति-रिति भावेन तदर्थमाह ॥ **प्राणानामिति** ॥ ग्रन्थिराश्रयः अन्तकस्संहर्ता । त्वामौ द्वितीयाया इत्यस्मदादेशोऽयं माशब्द इति भावेन मामित्युक्तम् । आविश प्रविश मयि सन्निधिं कुर्वित्यर्थः । माशब्दानुकर्ष इति मत्त्वाऽऽह ॥ **मामाप्यायस्वेति** ॥ प्रवेशप्रार्थने बीजान्तरोक्त्यर्थमियं शेषोक्तिरिति भावः । भाष्यं व्याकुर्वन् संहारकर्ता विष्णुरिति प्रतिज्ञां पूर्वपक्षकोटिनिरासाय सावधारणं व्याचष्टे ॥ **विष्णुरेवेति** ॥ निमित्तत्वेत्यन्तभाष्यं व्याचष्टे ॥ **तस्येति** ॥ तस्याभिध्याना-दित्यस्येच्छावत्त्वरूपेऽभिध्यातृत्वे श्रुतित्वेऽपि जन्मादिसूत्रोक्ते प्रयत्नवत्त्वरूपकर्तृत्वे लिङ्गत्वात्सूत्रे लिङ्गशब्दो युक्त इत्युपेत्य तदिच्छाधीनत्वस्य तत्कर्तृत्वे लिङ्गादित्यादिभाष्योक्तं लिङ्गत्वं प्रश्नपूर्वमाह ॥ **किञ्चात इति** ॥ भाष्ये जगत इत्यनन्तरं तत्कर्तृत्वमित्यस्यानुषङ्गं मत्त्वाऽऽह ॥ **संहारकर्तेति** ॥ संहारकरणसमर्थ इत्यर्थः । पूर्वत्र फलोपधानपरस्यापि कर्तृशब्दस्येह शक्तिपरतयानुषङ्गो विवक्षाभेदान्न विरुद्धः । तत्वभावादित्यस्यार्थो यथार्थध्यानादिति ॥ **भगवदभिध्यानादिति** ॥

(भावदीपः)

प्रसादरूपादिच्छाविशेषादित्यर्थः । अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते । स्वगुणाच्छादिका ह्येका परमाच्छादिकापरा । स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः । व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम इति श्रुतिगीतातात्पर्योक्तदिशा मायानिवृत्तिर्बोध्या ।

ननु सादेर्जगत इति पूर्वभाष्येऽनुषक्तेन तत्कर्तृत्वं प्रतीयत इत्यनेनैव जगत्संहर्तृतोक्तौ सैव इत्येतस्मादेव संहारकर्तेत्युत्तरभाष्ये संहारकर्तृत्वे हेतुत्वेनोच्यते चेत्साध्याविशिष्ट्यमित्याशङ्क्य पूर्ववाक्ये शक्तिरेव विवक्षिता न तु प्रयत्नः । तया शक्त्योत्तरवाक्योक्तः फलरूपः प्रयत्नः साध्यते । अतो न दोष इत्याह ॥ **कर्ता विष्णुरित्यादि** ॥ किम्वित्यादेरर्थोऽथेत्यादि । अत्रेति भाष्यप्रतीकं तस्यार्थः परतन्त्रेऽपीति ॥ **पूर्वत्रेति** ॥ **पूर्वत्रापीत्यर्थः** । अन्यथा न तु सर्वात्मनेरितमिति पूर्वस्य विशेषणस्यैकदेशक्रिया चेति विशेष्ये(णा)मानन्दयादसङ्गतिः स्यात् उत्तरं च समस्तमिति विशेषणं विशेष्यसाकाङ्क्षत्वादनन्वितं स्यादिति भावः । रुद्रस्य क्वचित्संहारद्वारत्वेनैव तद्वाक्यानां सावकाशत्वादित्यन्यत्रोक्तेः कथं परतन्त्रसंहर्तृत्वपरेत्युक्तिरित्यत आह ॥ **पारतन्त्र्यं चेति** ॥ स्मृतौ निमित्तमित्युक्त्या द्वारमात्रमिति लाभाद्द्वारत्वमित्युक्तम् । कालाख्यारूपिण इति हेतुगर्भमिति भावेन कालत्वे रूपस्योक्ते नाम्नः स्वत एव सिध्यतीति भावेन रूपस्याह ॥ **रूपस्येति** ॥ कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची । कलबन्धने कलच्छेदने कलज्ञाने कलकामधेनाविति (हि) (च) पठन्तीत्येकादशे गीताभाष्योक्तेः । कालः कलितसम्पूर्णसद्गुणत्वा-ज्जनार्दनः । संहारात्सर्ववित्त्वाद्वा सर्वविद्रावणेन च' इति गीतातात्पर्योक्तस्मृतेः । संहर्ता भगवान्विष्णुः काल इत्यभिधीयते इत्यादिप्रथमस्कन्धतात्पर्योक्तस्मृतेश्चेति भावः । तत्वप्रदीपे तु कालाख्यैव रूपं रूपकं ज्ञापकं वाचकत्वेन तद्वानित्युक्तम् । लोकपितृवैरूप्याद्विष्णोरित्यन्यत्रोक्तां युक्तिमाह ॥ **ममत्वादीति** ॥ **अत इति** ॥ श्रुतिस्मृतिलिङ्गबलाद्रुद्रोमेत्यादिश्रुतेर्द्वारार्थत्वेन सावकाशत्वाल्लोकपितृवैलक्षण्येन युक्तिविरोधाभावाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**लोके च पितुरन्यस्यैवेति** ॥ ननु लोके उद्बंधशस्त्रगरळभृगुपातादिनाऽऽत्महन्तार आततायिनो दृश्यन्ते । तत्र काऽनुपपत्तिः पितुः पुत्रेषु स्नेहो गरीयान्, येन मातुः तद्धंतृत्वेऽपि पितुर्न स्यात्, दृश्यते चाऽजीगर्तः स्वपुत्रशुनःशेपवधाय प्रवृत्तः । तत्कथमुच्यते पितुरन्यस्यैव मारकत्वदर्शनादिति

(अभिनवचन्द्रिका)
चेत् न ब्रूमो वयं लोके पितुर्मारकत्वं नैव दृष्टमिति येनोक्तदोषः स्यात्, किं नाम लोके अन्यस्य पितुः प्राज्ञविलक्षणस्य मूढस्येति यावत् पुत्रमारकत्वं दृष्टमिति तदुक्तम्– 'अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्टेः प्रतिरूपमीहते' इति । एवं च उत्पादकस्यैव संहर्तृत्वे मौढ्यं स्यात् न च तद्युक्तमिति संहर्तृत्वमेवानभ्युपेयमिति ॥ **विरोध इति** ॥ बाध इत्यर्थः । **भाक्तार्थत्वेनेति** ॥ अन्तकवद्भयङ्करत्वार्थकत्वेनेत्यर्थः । 'रुद्रो माविशान्तक' इत्यत्र रुद्र, उमेति पदच्छेदमुपेत्याह **रुद्रत्वमिति** ॥ 'रुद्रस्त्वम्' इत्यपि कचित्पाठः । ननु सूत्रकृतोक्तस्य 'तदभिध्यानात्' इति लिङ्गस्य विश्वसंहारशक्तिमत्वसिद्ध्या सावकाशत्वात् । अनादिभवभेत्तुः संहारे सामर्थ्यमस्तु विश्वसंहर्तृत्वं तु कुतः प्रमाणात् प्रतिपत्तव्यं, सूत्रे तत्साधकप्रमाणानुपन्यासादित्याशयेन शङ्कते – **नन्विति** ॥ ईश्वरान्यस्य शक्त्यभावादस्यैव तदङ्गीकार्यमिति भावः ॥ **शक्तस्यैव तत्सम्भवादिति** ॥ अतः परं श्रूयमाणम् 'अथैतावता परितोष' इति वाक्यं न टीकावाक्यम्, अपि तु प्रक्षिप्तम् । अस्य भाष्योक्तकैमुत्यविरोधित्वात् । न हि पूर्वोक्तप्रमाणादर्थलाभप्रयुक्ता परितोषे प्रमाणान्तरप्रवृत्तिः कैमुत्यन्यायेन भवति । येनेदं वाक्यं प्रक्षिप्तं न स्यात् । 'एकदेशिक्रिया चात्र' इति भाष्यगतमत्रेति पदमनूद्य व्याकुर्वन् अप्यर्थकचशब्दसम्बन्धं सूचयति – **अत्र परतन्त्रेऽपीति सृष्ट्यादिकमितीति** ॥ **पूर्वत्र** ईरितमित्यत्र । अनेन परतन्त्रेऽपीरितसृष्ट्यादिकं सर्वात्मना नेति स्मृत्यर्थः सूचितः ॥ **ममत्वादिदोपराहित्येनेति** ॥ लौकिकपितुः ममतासद्भावेन मौढ्यं विना पुत्रहन्तृत्वमयुक्तम् । ईश्वरस्य तु ममताभावात् मौढ्यं विनापि हंतृत्वसंभवान्न मौढ्यप्रसङ्ग इति भावः ।

पूर्वपक्षस्तु – न विष्णुः संहर्ता अपि तु रुद्र एव । 'प्राणानां ग्रन्थिरसि' इति श्रुतेः । न च विष्णोः सर्वशब्दवाच्यत्वात् सा श्रुतिः विष्णुपरा, रुद्रपरत्वेऽपि तस्य द्वारकारणत्वाभिधात्री वा किं न स्यादिति वाच्यम् । लोकविरोधात् । लोके हि पिता न पुत्रमारकः । मारकोऽपि मूढ एव न प्राज्ञः । एवं च पितुरीश्वरस्य जगन्मारकत्वाङ्गीकारे मौढ्यमेव स्यात् । न च तद्युक्तमिति लोकविरोधो दुर्वारः । न च विष्णोः संहर्तृत्वेऽपि 'यत्प्रयन्ति' इति श्रुतिरस्तीति वाच्यम् । तस्याः बलवदेतच्छ्रुतिविरोधेनाप्रमाणत्वात् । अतो विष्णोर्न संहर्तृत्वमिति ।

सिद्धान्तस्तु – युक्तमेव विष्णोः संहर्तृत्वं 'तस्याभिध्यानाद्योजनात्' इति श्रुतौ तद्ध्यानजन्यप्रसादरूपेच्छाधीनत्वस्य बन्धनिवृत्तेरभिधानात् । किञ्चातः, तदिच्छाधीनत्वेन तत्कृतत्वमनुमीयते ।

(अभिनवचन्द्रिका)
एवं च अनादेर्बन्धस्य लयकर्ता, सुतरां सादेर्जगतः संहारकर्तेति सिध्यति । 'स इदं सर्वं विलापयति' इत्यादिश्रुतेश्च । न च रुद्रस्य संहारकत्वाभिधायकश्रुतिविरोधः । तस्या द्वारकारणत्वाभिधायकत्वात् । न च पितृत्वादीश्वरस्य विनाशकत्वे मौढ्यप्रसङ्गः । लौकिकपितॄणां ममतायुक्तत्वेन हन्तृत्वायोगात् । मौढ्यं विना संहर्तृत्वोपपत्तेः । अतः श्रुतिविरोधाभावेन विष्णोः संहारकर्तृत्वं सिद्धमिति ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमाह ॥ **एवमिति** ॥ स्थितेः सृष्ट्यनन्तरत्वेऽपि तृतीये, प्रकृतैतावत्त्वमित्यत्र तद्विचारादत्र संहार एव विचार्यते । संहारापेक्षया स्थितेः प्राथमिकत्वेन स्थितेः प्रथमं विचार्यत्वेऽपि, परमात्मनः स्रष्टृत्वे, मारकत्वं न स्यात् । लोके पितुरन्यस्यैव मारकत्वदर्शनादिति स्रष्टृत्वस्य, संहारकत्वाक्षेपवत् स्थापकत्वाक्षेपकत्वाभावात् संगतिविशेषवशादत्र संहर्तृत्वविचारः । किं चात्र संहर्तृत्वे विचारित एव संहारकर्तुरसंहारादन्यरक्षाया अभावात् न रक्षकत्वं पृथग्वाच्यमिति । तत्र पूर्वपक्षे असंहारकत्वव्यतिरेकेण पालकत्वस्य तत्र समर्थनेनैतदधिकरणमुपजीव्य तत्र पूर्वपक्षोदयादानंतर्योपपत्तेः ॥ **किं भगवतेति** ॥ किं भूतादि रुद्रो माविशान्तक, इति श्रुत्या रुद्रे विलीयते उत यत्प्रयन्ति' इत्यादेर्भगवतीति चिन्ता । तदर्थं रुद्रो मा विशतिश्रुतिः पितुरन्यस्य मारकत्वदर्शनयुक्त्युपोद्बलिता रुद्रस्यैव स्वातन्त्र्येण संहारकारणत्वपरा उत विष्णोर्ममताऽभावेन लोकपितृवैरुप्याद्युक्तिविरोधाभावाद्विष्णुपरा रुद्रपरत्वेऽपि द्वारकारणत्वपरा वेति ।

अन्यः संहारकर्ता प्रतीयते इति भाष्यस्य विष्णोरन्यो रुद्र इत्यर्थमाह ॥ **रुद्रेणैवेति** ॥ रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन, इति पौराणिकयोगेन सोऽन्तकः स रुद्रो यो हरिरित्यादिश्रौतरूढ्या च भगवति मुख्यत्वोक्तेः । तदधीनत्वन्यायेनान्यत्रामुख्यवृत्यङ्गीकारेऽपि तेषां द्वारकारणत्वस्य तेजोऽत, इत्यधिकरणन्यायसिद्धत्वाद्यतीतेत्याशङ्क्य निराह । न चेत्यादिना । पितुरन्य एव लोके संहर्ता प्रतीयते इति भाष्यखण्डस्यार्थान्तरं मत्वा लोकदृष्ट्यनुसारित्वमित्युक्तपूर्वपक्षन्यायं सङ्गमयितुमाह ॥ **यथाकथञ्चिदित्यादिना** ॥ **भाक्तार्थत्वेनेति** ॥ रुद्रो मा विशान्तक इति श्रुतेः विष्णुसंहृतपदार्थभिन्नपदार्थसंहर्तृत्वरूप भागविषयत्वेनेत्यर्थः । अन्तकवद्भयङ्करत्वमात्रेण गौणार्थत्वेनेतिवा ॥ **युक्तीति** ॥ विष्णोः संहर्तृत्वाङ्गीकारे पितृत्वरूपयुक्तिविरोधानिस्तारादित्यर्थः ॥ **आविवेशेति** ॥ मध्यमपुरुषानुसारेण रुद्र, उ इति पदविभागं मत्वा

(वाक्यार्थमुक्तावली)

व्याचष्टे ॥ **रुद्रत्वमिति** ॥ उ इत्यस्य तु हे इति सम्बुद्धिद्योतकत्वं वा उच्चेत्यर्थकत्वं वा त्वमेवेत्यवधारणार्थकत्वं वेति भावः । मेत्यस्मच्छब्दादेशरूपं द्वितीयैकवचनान्तम् । 'अमानोना प्रतिषेध' इति चादिगणपठितं निषेधार्थकमव्ययं च तन्त्रेणोपात्तमिति भावेनाह ॥ **मामाविशेति** ॥ अन्यथा निषेधमात्रार्थकत्वे कर्मानुक्तिः । अस्मच्छब्दादेशमात्ररूपत्वे त्वन्तकप्रवेशप्रार्थनानुपपत्तिरिति ज्ञेयम् । यद्वा मेति द्वितीयान्तमेव न निषेधार्थकमव्ययम् । मामाविशेति टीकायां माम् आविशेति पदच्छेदः । आप्यायस्वेत्यत्र कर्मानुक्तेर्मेत्यस्यावृत्तिरिति भावेन माम् आप्यायस्वेत्युक्तम् प्राणग्रन्थित्वात्प्राणधारणार्थमाविश । त्वमन्तक उ अन्तकोऽपि तेन मद्दत्तेन आहुतिरूपेणान्नेन माम् आप्यायस्व सुखयेति भावः ।

सूत्रे तुशब्दोऽवधारणे । तेजोऽत इत्यत्र प्रकृतसत्परामर्शकेन स इत्यनेनान्वयः (सम्बध्यते) । संहर्तेति योग्यतया लभ्यते । तदभिध्यानादिति श्रुतिसूचकम् । अभिध्या इच्छा तस्याः संजिहीर्षा । स्वरूपविशेषद्योतकश्च तुशब्दः । ततश्च तस्याभिध्यानादिति श्रुत्युक्तात् बन्धलयस्य सञ्जिहीर्षालक्षण तदिच्छाधीनत्वरूपात्तल्लिङ्गात् बन्धक्षयकर्तृत्वसाधकलिङ्गादेव संहारकर्ता विष्णुरेव नान्य इति प्रतीयते न तु प्रमाणान्तरमत्र वक्तव्यम् । यदा अनादिबन्धलयकरणे समर्थस्तदा सुतरां सादेर्जगत इति प्राप्तत्वात् । किं तस्य स्पष्टश्रुतेरिति सूत्रार्थः । तत्र तदभिध्यानादित्येतत् लिङ्गस्यासिद्धिपरिहाराय श्रौतत्वप्रतिपादकमिति भावेन प्रवृत्तस्य, विश्वमायानिवृत्तिरितीति भाष्यस्यार्थमाह ॥ **तस्याभिध्यानादिति** ॥

अस्त्वेतल्लिङ्गप्रमितमतः साध्यं किमिति शङ्कते ॥ **किञ्चात इति** ॥ तत्परिहाराय बन्धलयस्य तदिच्छाधीनत्वलिङ्गात्तत्कर्तृत्वमिति भाष्यं व्याचष्टे **तदिच्छाधीनत्वलिङ्गेनेति** ॥ ननु संसारमोक्षो भगवदभिध्यानाद्भवतीति श्रूयते चेद्भगवतः कर्तृत्वस्यागमेनैव प्राप्तत्वात् कथं श्रुतेन तदिच्छाधीनत्वलिङ्गेन तदनुमानमिति चेन्न । इच्छया ह्यत्र बन्धलयो भवतीत्युच्यते, न चासावुपपन्नः प्रयत्नविरहिणामिच्छामात्रेण कार्योत्पादायोगात् । अतः श्रौतं बन्धलयस्य तदिच्छाधीनत्वं जन्मादिसूत्रोक्तप्रयत्नवत्वरूपकर्तृत्वे लिङ्गं भवत्येवेति । व्यक्तमेतच्चन्द्रिकायाम् ।

ननु इच्छात्वं उक्तविधकर्तृत्वे लिङ्गं चेत् तदनुमापयत् । अनेन विष्णोर्जगत्संहर्तृत्वसिद्धिः कथमन्यथा धूमेन शब्दानित्यत्वसिद्धिप्रसङ्गादित्यतः प्रवृत्तस्यैवेत्यस्य विवरणपरं किमु सादेर्जगतरित्येतद्व्याचष्टे ॥ **एवं चानादेरिति** ॥

(वाक्यार्थमुक्तावली)

भूयश्चेति चशब्देन वीप्सालाभात् भूयो भूय इत्युक्तम् ॥ **भगवदभिध्यानादिति** ॥ प्रसादलक्षणेच्छाविशेषादित्यर्थः । संहर्तृत्वं च कुत इति प्रमाणादिति शेषः ॥ **उक्तादेतस्मादेवेति** ॥ कैमुत्यलब्धात्सर्वसंहारे शक्तिलक्षणादेव हेतोरित्यर्थः ॥ **शक्तस्यैवेति** ॥ शक्तस्यैव प्रयत्नरूप कर्तृत्वसम्भवात् नत्वशक्तस्य रुद्रादेरिति भावः । विमतः संहारः विष्णुकर्तृकः तदन्याशक्यत्वे सति कार्यत्वात् यथा रामादन्येनाशक्यं रावणहननं रामकर्तृकमिति प्रयोगो द्रष्टव्यः ॥ **अथैतावतेति** ॥ श्रुतिप्राप्तस्य रुद्रस्य संहारकारणत्वस्य न युक्तिमात्रेण निरासो युज्यत इत्यपरितोष इत्यर्थः । अत्र परतन्त्रेऽपीति पूर्वत्र सम्बध्यते पूर्वत्रापि सम्बध्यत इत्यर्थः । पूर्वत्रासम्बन्धे इतीरितमित्यस्य नपुंसकस्यैकदेशक्रियेत्यनेनानन्वयादसङ्गतिः स्यात् ॥ सृष्ट्यादिकमित्यस्य उत्तरत्रानन्वये समस्तमित्यस्य विशेष्याभावः स्यात् । ततश्च अत्र परतन्त्रजगदेकदेशविषयसृष्ट्यादिक्रियैव निविष्टा न तु सृष्ट्यादिकं सर्वात्मनेरितम् । समस्तं सर्वविषयं सृष्ट्यादिकं विष्णोरेव भवेदित्यन्वय इति भावः ॥ **परतन्त्र संहर्तृत्वपरेति** ॥ अत एवासम्भवस्तु सत इत्युक्तसतः सूत्रे स इति परामर्शः । सच्छब्दस्य स्वातन्त्र्यवाचित्वादिति भावः ॥ **काल इत्याख्यारूपे इति** ॥ आख्या नाम । कालपदमुभयत्रान्वेति । इनिप्रत्ययार्थमाह ॥ **यस्यासाविति** ॥ न तु बहुव्रीहिरिति भ्रमितव्यम् । ननु रूपस्य कालत्वं कालनामकत्वं चेत्पुनरुक्तिरित्यत आह **रुपस्येति** ॥ कलच्छेदने ॥ कलबन्धने, कलकामधेनौ, इति धातुव्याख्यानादिति भावः । कुतो न लोकविरोध इत्यतः सोऽनुत्पत्तिरप्रलयः परः लोकविलक्षण इति भाष्योपात्तश्रुतिसूचितं सूत्रे च स इति सत्परामर्शकतच्छब्देन सूचितं वैरूप्यमित्युक्तसिद्धान्तन्यायं संगमयति ममत्वादीति । सच्छब्दस्य निर्दोषवाचित्वादिति ज्ञेयम् ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिमाह ॥ **एवमिति** ॥ **तत्संहारश्रुतिविरोधेति** ॥ स्थितेः सृष्ट्यनन्तरत्वेऽपि विष्णोः सर्वस्थितिकर्तृत्वस्य सम्मतत्वेन विवादाभावात् । संहर्तृत्वस्यान्यनिष्ठत्वे पितुरन्यस्य मारकत्वदृष्टिरूपयुक्तिवत् अत्र तादृशपूर्वपक्षयुक्त्यभावेन तदविचार्य संहारकर्तृत्वमेव विचार्यत इति भावः । समन्वयाध्यायोक्तरीत्या रुद्रादिशब्दानां मुख्यार्थत्वाभिप्राये तेजोऽत इत्यनेन गतार्थतेत्या-शङ्कां निषेधति ॥ **न च वाच्यमिति** ॥ कुतो लोकविरोध इत्यतः तत्र हेतुमाह ॥ **तस्येति** ॥ उत्पादकत्वेऽप्यस्तु संहर्तृत्वमत आह ॥ **लोके चेति** ॥ अत्र पितृशब्देन केवलं जनको विष्णुरपि तु

(तत्त्वसुबोधिनी)
रक्षकश्च । न च रक्षकस्य संहर्तृत्वं युक्तमिति सूचितं इति चन्द्रिका । ननु लोकविरोधेन विष्णोः संहर्तृत्वासम्भवात् रुद्रस्यापि न संहर्तृत्वं लोकविरोधादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ तथा च रुद्रसंहर्तृत्वं लोकसिद्धत्वात् न तद्विरुद्धमिति भावः ॥ **भाक्तार्थत्वेनेति** ॥ रुद्रो माविशान्तकः इति श्रुतेर्विष्णुसंहृतपदार्थभिन्नपदार्थसंहृतत्वरूपभागविषयत्वेनेत्यर्थः ॥ **युक्तीति** ॥ क्वचिदपि विष्णोः संहर्तृत्वाङ्गीकारे पितृत्वरूपयुक्तिविरोधानिस्तारादित्यर्थः । असि आविश इति मध्यमपुरुषानुरोधादाह ॥ **रुद्र त्वमिति** ॥ मेत्येतत् अस्मच्छब्दादेशरूपं निषेधार्थकं च तन्त्रेणोपात्तमिति भावेनाह ॥ **मा मां विशेति** ॥ अन्यथा निषेधमात्रार्थकत्वे कर्मानुक्तिः । अस्मच्छब्दादेशरूपस्यानुवृत्तिमभिप्रेत्याह ॥ **मामाप्यायस्वेति** ॥ सूत्रे सावधारणतुशब्दान्वितेन स इति तच्छब्देन तेजोऽत इति सूत्रस्थातःशब्दोक्तः परमात्मा संहर्तृत्वेन परामृश्यते इति भावेनाह ॥ **विष्णुरेव संहारकर्तेति** ॥ सूत्रे तदभिध्यानादित्येतत् युक्तिप्रदर्शकं श्रुतिसूचकमपि भवतीति भाष्ये तस्याभिध्यानादिति श्रुत्युदाहरणमित्यभिप्रेत्याह ॥ **तस्याभिध्यानादिति श्रुताविति** ॥

ननु विष्णोः सर्वजगत्कर्तृत्वे सादिसर्वजगत्कर्तृत्वे एतच्छ्रुतिप्रतिपादितानादिबन्धलयस्य भगवदिच्छाधीनत्वं कथं हेतुरित्याशङ्कापरिहाराय नायं साक्षात्सादिजगत्संहर्तृत्वे हेतुः किन्तु सादिजगत्संहर्तृत्वे हेतुभूतानादिबन्धसंहर्तृत्वे हेतुरित्याशयेन तल्लिङ्गादिति सूत्रे उक्तम् । तस्य च सूत्रांशस्य तस्माद्बन्धलयस्य भगवदिच्छाधीनत्वाल्लिङ्गात् स परमात्मा बन्धलयकर्तृत्वेन नानुमीयत इति अभिप्रेत्य प्रवृत्तस्य बन्धलयस्य तदभिध्यानमिति तत्त्वलिङ्गात् तत्कर्तृत्वं प्रतीयत इति भाष्यस्याभिप्रायमाह ॥ **किञ्चात इत्यादिना** ॥ तस्याभिध्यानादित्यस्येच्छावत्वरूपे अभिध्यातृत्वे श्रुतत्वेऽपि जन्मादिसूत्रोक्ते प्रयत्नवत्वरूपे कर्तृत्वे लिङ्गत्वात् सूत्रे लिङ्गशब्दो युक्त इत्यभिप्रेत्य इच्छायाः प्रयत्नलिङ्गत्वं प्रश्नपूर्वकं दर्शयति ॥ **किञ्चात इत्यादिना** ॥ **तत्कृत इति** ॥ संसारान्मोक्ष इत्यनुवर्तते । अनेन भाष्ये कर्तृत्वं नाम कृतिमत्वं विवक्षितम् । बन्धलयस्येश्वरेच्छाधीनत्वलिङ्गेन तत्प्रयत्नाधीनत्वानुमानोपपत्तेरित्युक्तं भवति ।

ननु बन्धलयस्य भगवत्कृतत्वमपि कथं जगत्संहर्तृत्वे हेतुरित्यत सूत्रार्थलब्धाभिप्रायदर्शनपरं किमु सादेर्जगत इति भाष्यं व्याचष्टे ॥ **एवञ्चानादेरिति** ॥ तस्याभिध्यानादित्यस्य जीवकर्तृकध्यानपरत्वे तत्त्वभावादित्यनेन पुनरुक्तेर्विश्वमायानिवृत्तेः सकृदेव जायमानत्वेन भूयश्चेत्यस्य

(तत्त्वसुबोधिनी)

तत्रान्वयासम्भवाच्चेत्यतः श्रुतिं यथावद्व्याचष्टे ॥ **भगवतीत्यादिना** ॥ **भूयश्चेति** ॥ चशब्दाद्वीप्सालाभात् भूयो भूय इत्युक्तम् । तत्वभावादित्यस्य व्याख्या **यथार्थद्धयानादिति** ॥ ननु किमु सादेर्जगत इति पूर्वभाष्येऽनुषक्तेन तत्कर्तृत्वेनेत्यनेनैव जगत्संहर्तृतोक्तौ सैव इत्येतस्मादेव संहारकर्तेत्युत्तरभाष्ये संहारकर्तृत्वे हेतुत्वेन उच्यते । तद्युक्तं साध्याविशिष्टादित्याशङ्क्य पूर्ववाक्योक्तया शक्त्या उत्तरवाक्योक्तः प्रयत्नः साध्यते अतो दोष इत्याह ॥ **कर्ता विष्णुरिति** ॥ प्रतीयते शक्तस्यैव तत्सम्भवादिति । अत्रेति भाष्यप्रतीकं तस्यार्थः **परतन्त्रेऽपीऽति** ॥ **पूर्वत्र सम्बध्यत इति** ॥ पूर्वत्रापि सम्बध्यते इत्यर्थः । अन्यथा न तु सर्वात्मना ईरीतमित्यस्य पूर्वत्र विशेषणस्य नपुंसकत्वेन एकदेशक्रिया चेत्यनेन अनन्वयादसङ्गतिः स्यात् । उत्तरं च समस्तमिति विशेषणं विशेष्ये साकांक्षत्वादनन्वितं स्यादिति भावः ।

नन्वनया श्रुत्या कर्मश्रुतिविरोधपरिहार इत्यत तद्वाक्यात् स्मृत्यभिप्रायमाह ॥ **परतन्त्रेति** ॥ आख्यारूपे यस्यासाविति इत्यनेनैवार्थः उक्तः । न तु बहुव्रीहिरिति ज्ञातव्यम् ॥ **ममत्वादीति** ॥ अनेन विष्णुर्न संहर्ता पितृत्वादिति परोक्तानुमाने ममत्वादिदोषयुक्तत्वं रक्षकत्वरूपसाधनधर्मावच्छिन्नसाध्यव्यापकत्वमुक्तं भवति । सूत्राक्षरार्थस्तु सादिसर्वजगत्संहर्ता हरिरेव । कुतो हेतोः । अनादिबन्धसंहर्तृत्वसाधकतल्लिङ्गादित्यर्थः । तथा च हरिः अनादि बन्धसंहर्ता अनादिबन्धसञ्जीहीर्षावत्वादित्यनेनानादिबन्धसंहर्तृत्वे सिद्धे अनादिबन्धसंहर्तृत्वरूपहेतोः सादिजगत्संहर्ता स एवेत्यर्थः । तथा च यदा हरिः अनादिबन्धं संहरति सादिजगदपि संहरतीति भावः । स हरिः संहर्तेत्युक्तं सः कः । अनादिसृष्टृत्वेन प्रकृतः यश्च जनकत्वेन अमारकतया शङ्कितः यश्च 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति स्मृतौ तच्छब्दवाच्यत्वेनोक्तः स नो हरिरिति स्मृतौ उक्तः स इति तच्छब्देनोक्तः स एवेत्यर्थः । तुशब्दस्तु अभिध्यानगतस्य सञ्जीहीर्षावत्वरूपविशेषस्य द्योतकः । एवशब्दस्तु यदा अनादिबन्धसंहर्तृत्वमात्रेण सादिजगत्संहर्तृत्वं सिध्यति तदा किं वक्तव्यम् । यमप्येति भुवनं साम्पराय इत्यादिश्रुतिभ्यः सर्वजगत्संहर्तृत्वं सिध्यतीति कैमुत्यन्यायसूचक इति ।

## वाक्यार्थविवरणम्

ननु लये सिद्धे पश्चात् तत्कर्तृविचारः सङ्गतः । स एवासिद्धः । पूर्वमुत्पत्तिनिर्णयेऽपि लयस्यानिर्णीतत्वादिति चेत्तत्राह ॥ **उत्पत्तिमत्त्वादिति** ॥ उत्पत्तिमतो भावस्य लयनियमादिति भावः ॥ **यथाकथञ्चिदिति** ॥ साक्षाद्वा रुद्रद्वारा वेत्यर्थः ॥ **श्रुतेः** ॥ प्राणानामिति श्रुतेः ॥ **अन्यार्थता** ॥ नामानि सर्वाणीत्युक्तन्यायेन विष्णुपरतेत्यर्थः ॥ **श्रुतीति** ॥ यत्प्रयन्तीत्यादि-श्रुतीत्यर्थः ॥ **युक्तिः** ॥ पितृत्वरूपा ॥ **भाक्तार्थत्वेनेति** ॥ कस्मिंश्चिद्भागविशेषे विष्णुः संहर्ता । कस्मिंश्चिद्भागविशेषे रुद्र इत्येवं विभागेनोभयोः संहर्तृत्वाङ्गीकारात् 'यत्प्रयन्ति' 'प्राणानाम्' इति श्रुत्योरविरोध इत्यर्थः ॥ **युक्तिविरोधेति** ॥ यत्प्रदेशे विष्णोः संहर्तृत्वमङ्गीक्रियते तत्प्रदेशे पितृत्वयुक्तिविरोधः स्यादेवेत्यर्थः ॥ **स त्वं मा मांविशेति** ॥ स प्राणानामाश्रयस्त्वं माम् आविश मयि स्थित्वा प्राणान् धारयेत्यर्थः । सोऽन्तकस्त्वं मां मा आविश मयि आविष्टो माऽभूरित्यर्थः । अत्र मेत्यस्यावृत्तिः । सौत्रस्थ, तु इत्यस्यार्थो **विष्णुरेवेति** ॥ तदभिध्यानादित्यस्यार्थमाह ॥ **तस्येति** ॥ तथा स एव विष्णुर्जगत्संहारे समर्थः । बन्धलयस्य भगवदिच्छाधीनत्वेऽपि जगत्संहार-सामर्थ्यं कुत इत्यप्रयोजकत्वं शङ्कते ॥ **किश्चात इति** ॥ बन्धरूपस्य भगवदिच्छानिमित्तकत्वोक्तितो जगत्संहारे समर्थत्वं न प्राप्तमित्याशयः ॥ **तत्कृत इति** ॥ तथा च बन्धलयस्य भगवदिच्छा-धीनत्वश्रवणेन भगवत्कृतोऽनुमीयते । बन्धलयो भगवत्कृतः तदधीनत्वात् । यद्यदिच्छाधीनं तत्तत्कृतमिति नियमात् । एवं च भगवान् जगत्संहारे समर्थः । बन्धलयकर्तृत्वादित्यनुमानमुक्तं भवति ।

ननु हरेः बन्धलयकर्तृत्वेऽपि जगत्संहारसमर्थत्वं कुतो व्यधिकरणत्वादित्यतो अत्र कैमुत्यं नियामकमस्तीत्याह ॥ **एवं चेति** ॥ **अनादेर्बन्धस्य** ॥ अनादित्वेन संहारायोग्यस्येत्यर्थः । तथा च योऽशक्यमेकं करोति स सुकरमन्यत् करोत्येवेति प्रायो लोके दर्शनेनानादिकालतः अनुवृत्तं संहारायोग्यमपि बन्धं यदा संहरति, तदा सः आदिभूतेदानीन्तनजगत्संहारे समर्थ इति किं वाच्यमिति भावः ॥ **तत्त्वभावादिति** ॥ अस्यार्थो **यथार्थध्यानादिति** ॥ भगवदभिध्यानात् । इच्छाविशेषात् । अनेनानादिभवभेत्तृत्वाद्भगवान् जगत्संहारे समर्थ इति सूत्रपर्यवसितोऽर्थः । तदुपरि शङ्कते ॥ **नन्वस्त्विति** ॥ संहर्तृत्वम् । फलोपधानम् ॥ **उक्तादेतस्मादेवेति** ॥ अनादिभवभेत्तृत्वेन

(वाक्यार्थविवरणम्)

विश्वसंहारे समर्थत्वादेवेत्यर्थः । तथा च भगवान् जगत्संहारकर्ता । तत्समर्थत्वादिति । अप्रयोजकत्वं परिहरति ॥ **शक्तस्यैवेति** ॥ यदाऽनादिभवभेत्ता तदाऽतिशक्तो भगवान् जातः । अतस्तादृशसामर्थ्यवत एव तज्जगत्संहर्तृत्वं सम्भवति । नान्यस्येत्यर्थः ।

ननु शक्तस्यापि कथं तत्सम्भवः । पुत्रवधे समर्थस्यापि पितुः पुत्रवधकर्तृत्वादर्शनादित्यतः सौत्रैवकाराभिप्रायकथनरूपस्य किम्विति भाष्यस्याभिप्रायमाह ॥ **अथैतावताऽपीति** ॥ सूत्रार्थस्तु तदभिध्यानादिति श्रुतौ बन्धलयस्य भगवदिच्छाधीनत्वश्रवणात् तत्कृतोऽनुमीयते । तथा च तल्लिङ्गादनादिबन्धलयस्य भगवत्कृतत्वलिङ्गात् स भगवान् जगत्संहारे समर्थ इति ज्ञायते । कैमुत्यन्यायात् । तथा च तल्लिङ्गादनादिभवभेत्तृत्वे जगत्संहारेऽतिसमर्थत्वरूपाल्लिङ्गात् स एव जगत्संहर्तेति ज्ञायते । यदि पुत्रवधे समर्थस्यापि पितुस्तत्कर्तृत्वादर्शनेन परो यद्युक्तयुक्त्याऽपरितुष्टः स्यात्तदा तत्परितोषणाय एवेत्युक्तम् । तथा च यमप्येतीत्यादिस्पष्टश्रुत्या विष्णोः जगत्संहर्तृत्वं ज्ञात्वा परितोषं प्राप्नुहि इति ॥ **परतन्त्रेऽपीति** ॥ तथा चात्र परतन्त्रेऽपि ब्रह्मादिजगति ॥ **एकदेशक्रिया** ॥ एकदेशसर्जनादिक्रिया । जगदेष्टृकदेशस्रत्वादिकमेवास्तीति यावत् । आख्या नाम । रूपं स्वरूपम् ॥ **संहर्तृत्वादिगुणेति** ॥ 'कल च्छेदने', कल बन्धने कल ज्ञाने, कल कामधेनुरिति हि पठन्तीति गीताभाष्य उक्तत्वादित्यवधेयम् । तथा च संहर्तृत्वादिगुणसंपन्नत्वेन कालसंज्ञकं रूपं स्वरूपं यस्येत्यर्थोऽवगन्तव्यः ॥ **स्मृतेः** ॥ निमित्तमात्रमिति स्मृतेः । ननु भगवान् न संहर्ता । तदुत्पादकत्वेन तत्पितृत्वात् । लोकपितृवत् । न चाप्रयोजकता । लोके पितृत्वमेव न स्यात् । इत्यनुकूलतर्कसहितोक्तयुक्तिमाशङ्क्य तत्र ममत्वादिदोषवत्त्वमुपाधिमाह ॥ **न चोक्तेत्यादिना** ॥ न चासंहर्तरि घटादौ ममत्वादिदोषवत्त्वाभावात् साध्याव्यापकतेति वाच्यम् । पितृत्वरूपसाधनधर्मावच्छिन्नसाध्यव्यापकत्वाभ्युपगमादिति ध्येयम् ।

## वाक्यार्थमञ्जरी

**तदभावेति** ॥ आदिपदोक्तसंहारकर्तृत्वाभावेत्यर्थः । यथाकथञ्चित् उक्तप्रकारद्वयेनापि तदेव व्यनक्ति ॥ **तस्येति** ॥ **भाक्तार्थत्वेनेति** ॥ 'रुद्रो'माविशान्तक इति श्रुतेर्विष्णुसंहृतभिन्नपदार्थसंहर्तृत्वरूपविभागविषयत्वेनेत्यर्थः ॥ **युक्तीति** ॥ क्वचिदपि विष्णोः संहारकर्तृत्वेनाङ्गीकारेऽपि

(वाक्यार्थमञ्जरी)

पितृत्वरूपयुक्तिविरोधानिस्तारादित्यर्थः । असि आविशेति मध्यमपुरुषानुरोधेनाह ॥ **रुद्र त्वमिति** ॥ मेत्येतदस्मच्छब्दादेशरूपं निषेधार्थकं च तन्त्रेणोपात्तमिति भावेनाह ॥ **मा मां विशेति** ॥ मेत्यस्यानुवृत्तिं मत्वाह ॥ **मामाप्यायस्वेति** ॥ **ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ** ॥ स तु विष्णुरेव संहर्ता कुतः संसारमोक्षस्य तदभिध्यानात्तस्य भगवतोभिध्यानमिच्छा-तदधीनत्वात् । किं तत इति चेत् तल्लिङ्गात् । तस्मान्मोक्षस्य भगवदिच्छाधीनत्वलिङ्गात् स परमात्मा संहारकर्तृत्वेनानुमीयत इत्यर्थः । किं चात इति प्रश्नोत्तरमाह ॥ **तदिच्छेति** ॥ तत्कृत इत्यनन्तरं मोक्ष इत्यनुवर्तते भूयश्चेति चशब्दाद्वीप्सालोप इत्याशयेन भूयोभूय इत्युक्तम् । तत्वभावादित्यस्यार्थो यथार्थध्यानाच्चेति ॥ **शक्तस्यैवेति** ॥ प्रामाणिकत्वाल्लयस्तावदङ्गीकार्यः । स च कार्यत्वात्सकर्तृकः कर्ताच शक्त एव भवेच्छक्तश्च विष्णुरेवेति संहर्तेति भावः । ईरितमित्यस्य नपुंसकत्वे क्रियाशब्दवृत्त्ययोगादाह ॥ **सृष्ट्यादिकमिति** ॥ पूर्वत्रापीत्यर्थः । तेन समस्तमित्यस्य न विशेष्यानुक्तिदोषः । आख्यारूपे नामशरीरे यस्यासावितीन्प्रत्ययार्थः । संहर्तृत्वेति कलसंहरण इति धातोरिति भावः ॥ **ममत्वेति** ॥ अनेन ममत्वादिदोषयुक्तत्वाख्यसाधनधर्मावच्छिन्नसाध्यव्यापक-रूपोपाधिरुक्तो भवति ।

॥ इति तदभिध्यानाधिकरणम् ॥

## ८. अथ विपर्ययाधिकरणम्

### सूत्रभाष्यम्

'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते नासावुदेति नास्तमेति' इति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते ।

'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् ।
व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि' ॥

इति चतुर्वेदशिखायां व्युत्क्रमाल्लयः प्रतीयते । अत आह–

**॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ १४ ॥**

क्रमवचनमपि विपरीतक्रमापेक्षया ।

'कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च ।
यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यते' ॥

इत्यत एव भाल्लवेयश्रुतिवचनात् ।

'अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः ।
इति क्रमेण भगवान्सृष्टिसंहारकृद्धरिः' ॥ इति च पाद्मे ।

पूर्वेषां पूर्वेषां सामर्थ्याधिक्यादुपपद्यते च । वामने च –

'पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम् ।
सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ।
व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः' ॥ इति च ।

॥ इति विपर्ययाधिकरणम् ॥

## तत्त्वप्रदीपिका

अतः सृष्टिक्रमाद्विपर्ययेणैव लयस्य क्रम एष्टव्यः । कुतः? क्रमादुत्पद्यते क्रमाद्विलीयत इति क्रमवचनं विपरीतक्रमापेक्षयेति यतः । क्रममात्रं हि तत्रोक्तम् । तदक्रमव्यावृत्तये । न सृष्टिक्रमत्वा-पत्तये । विपरीतक्रमस्यापि क्रमत्वादतो लयेऽपि क्रमोऽस्ति । स तु सृष्टिक्रमाद्विशेषवान् । विपर्ययेणेति कुत एतदवगम्यते ? ''यः क्रमाद्व्युत्क्रमाच्चैवे''त्यत एव भाल्लवेयश्रुतिवचनात् । यतस्सृष्टिक्रमं लयेऽप्याशङ्कसे । नान्याऽपि श्रुतिः श्रुतिं विरुणद्धीति हि साम्प्रतं समभिदध्महे, किमुत स्वयमियं भाल्लवेयश्रुतिः स्वात्मानमित्यत एव भाल्लवेयश्रुतिवचनादित्युक्तम् । स्वयमेव हीयं सामान्योक्तं क्रमं विशेषयतीत्यर्थः ।

## तत्त्वप्रकाशिका

अत्रेश्वरे वेदसमन्वयसिद्ध्यर्थमधिभूतादिसंहारविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । सर्वं भगवता लीयत इत्युक्तम् । तद्विषय एव श्रुतीनां विरोधे समन्वयानुपपत्तेरवश्यनिरसर्नीयोऽसौ भवति । प्रकृताधिभूतादीनि विषयः । किमुत्पत्तिक्रमानुसारेण लीयन्ते व्युत्क्रमेण वेति सन्देहः । किमस्य बीजमिति श्रुतिविगानं दर्शयति ॥ **अत एवेति** ॥ उत्पत्तिक्रमेणैव लीयन्त इति पूर्वः पक्षः । अत एवेति श्रुतेः । न च पक्षान्तरेऽपि श्रुतिरस्तीति वाच्यम् । उत्पत्तिक्रमानुसारेणैव लयाङ्गीकारे लोकानुकूलत्वगुणेन क्रमश्रुतेः प्राबल्यात् । न च लोके व्युत्क्रमादपि लयो दृश्यत इति वक्तव्यम् । क्रमस्यैव प्रायिकत्वात् । क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैवोत्पत्तिर्विलयश्च क्रमेणैवास्योत्पत्ति-विलयावित्यादि बहुश्रुत्यनुसारित्वाच्च । अतो बलवत् श्रुतिविरुद्धासौ श्रुतिरप्रमाणमेवेति समन्वयानुपपत्तिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ उत्पत्तिक्रमवैपरीत्येनैव लयः । क्रमवाचिश्रुतेरप्युत्पत्तिक्रमविपरीतक्रमापेक्षत्वात् । कुतोऽर्थान्तरकल्पनं क्रमश्रुतेः । यस्यामेव श्रुतौ क्रमाल्लयः श्रूयते तस्यामेव व्युत्क्रमाल्लयस्य श्रुतत्वादित्यर्थः । श्रुतित्वाविशेषाद् व्युत्क्रमश्रुत्या क्रमश्रुतेः कुतोबाधोविपरीतमेव किं न स्यादित्यत आह **अनुरूप इति** ॥ अस्तिक्रमव्युत्क्रमयोः क्रमपदप्रवेशो न तु व्युत्क्रमपदप्रवेशः । अतो निरवकाशया व्युत्क्रमश्रुत्या सावकाशक्रमश्रुतिबाधो युक्त इति भावः । तथा च श्रुत्यन्तरम् । 'द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा । सृष्टावन्यो लये चान्य इति वेदविदो विदुः' इति । एतेन बह्वीनामपि श्रुतीनां विरोधः परिहृतः ।

(तत्त्वप्रकाशिका)

व्युत्क्रमाल्लयाङ्गीकारे लोकविरोधान्नासौ युक्त इत्यत आह ॥ **पूर्वेषामिति** ॥ लौकिकानां प्रायः सामर्थ्यसाम्यात्क्रमाल्लयेऽपि नासौ प्रकृते भवति । अत्र पूर्वोत्पन्नानां सामर्थ्याधिक्यात् । एवं च लोकविरोधस्यैव गुणत्वादिति भावः । ननु पूर्वोत्पन्नानां सामर्थ्याधिक्यमेव कुतो येन पश्चाल्लयः स्यादित्यत आह ॥ **वामने चेति** ॥ पूर्वे पूर्वोत्पन्ने । प्रथमा वा । सन्निधीयतेऽत्रेति सन्निधानं प्रतिमा । तस्मात् श्रुत्यविरोधेन व्युत्क्रमाल्लयसिद्धेर्युक्तो हरौ समन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

लोकानुकूलत्वगुणेनेत्यस्य प्रागुत्पन्नपितामहस्य प्राङ्मरणदर्शनान्मध्योत्पन्नपितुर्मध्ये मरणदर्शनादन्तोत्पन्नपुत्रस्यान्ते मरणदर्शनादित्यर्थः । लौकिकानां प्रायस्सामर्थ्यसाम्यादित्यत्र शतवर्षपर्यन्तं जीवनसामर्थ्यस्य पितामहे पितरि पुत्रे च साम्यात्प्राचीनपितामहस्याऽऽयुश्शतसमाप्तौ तदनन्तरोत्पन्नपितुरायुस्समाप्त्यभावात्प्राक् पितामहः नश्यति न तु पिता । प्रकृते तु पितामहपराख्यायुःप्रमाणस्य तदुत्पन्नरुद्रेऽभावेन रुद्रायुःप्रमाणस्येन्द्रेऽभावेन पूर्वपूर्वकालीनानां बहुकाले जीवित्वसामर्थ्यादुत्तरोत्तरेषां तदभावाच्च प्रतिलोम्नैव संहार इति भावः । लोकविरोधस्येत्यत्र लोके दृष्टस्य विरोधस्य शिशुत्वब्रह्माण्डोदरत्वादिविरोधस्येत्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिमाह– **सर्वं भगवतेति** ॥ पूर्वाधिकरणे इति शेषः । कर्तृविशेषनिर्धारणेन लये निर्धारित एव तत्र क्रमव्युत्क्रमरूपप्रकारविचारावसर इति भावः ॥ **किमिति** ॥ अत्राधिभूतादीनि किमुत्पत्तिक्रमेणैव लीयन्त उत तदपेक्षया व्युत्क्रमेणेति चिन्ता । तदर्थं व्युत्क्रमश्रुतिः क्रमश्रुत्यनुगृहीतत्वेन प्रबलोत नेति । तदर्थं बहुश्रुतिगतः क्रमशब्दः किमनुक्रमरूपक्रमपर उत व्युत्क्रमरूपक्रमपर इति । तदर्थं लोके पूर्वोत्पन्नानां पूर्वं लये पूर्वोत्पन्नत्वं प्रयोजकमुत सामर्थ्याभाव एव प्रयोजक इति । लोकानुसारित्वमिति न्यायविवरणोक्तयुक्तिमाह– **उत्पत्तिक्रमानुसारेणेति** ॥ न्यायविवरणोदाहृताः श्रुतीराह– **क्रमादुत्पद्यत इति** ॥ अवधारणार्थक तुशब्दस्य यथाश्रुत एव सम्बन्धः । लय इति सप्तम्यन्तपदाध्याहार इत्यभिप्रेत्य 'विपर्ययेण तु क्रम' इति सूत्रांशं प्रतिज्ञाप्रदर्शनपरतया तावत् स्वयं व्याचष्टे– **उत्पत्तिक्रमेति** ॥ क्रमस्तु विपर्ययेणेति सम्बन्धे 'अत एव ही'ति श्रुतिगति-

(भावबोधः)
प्रदर्शकश्च सूत्रांश इति प्रवृत्तं क्रमवचनमपि विपरीतक्रमापेक्षयेति भाष्यं व्याचष्टे ॥ **क्रमवाचिश्रुतेरपीति** ॥ अनेन क्रमवाक्यस्य सावकाशत्वादिति न्यायविवरणमपि व्याख्यातं भवति । अवधारणार्थकतुशब्दस्य अत इत्यनेनापि सम्बन्धमभिप्रेत्य प्रवृत्तमत एव भाल्लवेयश्रुतिवचनादिति भाष्यं व्याचष्टे– **यस्यामेवेत्यादिना** । यस्यामेव तस्यामेवेत्यनेन पूर्वपक्षिणा साधकत्वेनोदाहृता तत एव श्रुतिवचनादेवेति भाष्याभिप्राय उक्तो भवति । बहुप्रकारत्वं क्रमस्येति न्यायविवरणानुसारेण स्मृत्यभिप्रायमाह– **अस्ति क्रमव्युत्क्रमयोरिति** ॥ अनुक्रमव्युत्क्रमयोरित्यर्थः । न्यायविवरणोदाहृतश्रुतिमाह– **तथा च श्रुत्यन्तरमिति** ॥ **परिहृत इति** ॥ तत्रापि क्रमशब्दस्य व्युत्क्रमपरत्वादिति भावः । लौकिकानां सामर्थ्यसाम्यादिति । अनेन पूर्वोत्पन्नत्वहेतुः सामर्थ्याभावलक्षणोपाधियुक्त इत्युक्तं भवति । सन्निधानमिति पदस्वारस्यात् पूर्वोत्पन्न इति व्याख्यायैतेषामिति बहुवचनानुरोधेनाह– **प्रथमा वेति** ॥ पूर्वव्याख्याने तु वीप्सयैव बहुवचनोपपत्तिरिति भावः ।

## भावदीपः

**श्रुतीति** ॥ श्रुतीनां परस्परविरोधेत्यर्थः । अस्य समन्वयसिद्ध्यर्थत्वं पूर्वोक्तदिशा ध्येयम् । पूर्वसङ्गतिमाह ॥ **सर्वं भगवतेति** ॥ तद्विषय एव लयविषय एव । विपर्ययेणेति सौत्रपदव्यावर्त्यपूर्वपक्षमाह ॥ **उत्पत्तीति** ॥ श्रुतिप्राबल्याय लोकानुसारित्वमित्यन्यत्रोक्ता उपपद्यते चेति सौत्रपदव्यावर्त्यां युक्तिं शङ्कापूर्वमत्र योजयति ॥ **न चेति** ॥ क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैवोत्पत्तिर्लयश्च क्रमेणैवास्योत्पत्तिविलयावित्यादिलोकानुसारिबहुवाक्यानुरोधश्चेत्यन्यत्रोक्तयुक्त्यन्तरं चोपयोगोक्तिपूर्वमाह ॥ **न च लोक इत्यादिना** ॥ **अत इति** ॥ क्रमलयश्रुतेर्युक्तिद्वयसहितत्वादित्यर्थः ॥ **समन्वयेति** ॥ सर्वसमन्वयेत्यर्थः । यद्वैतच्छ्रुतिवदन्यत्राप्यनाश्वासापातादिति भावः । भाष्यस्थापिपदसूचितार्थमाह ॥ **उत्पत्तिक्रमेति** ॥ एतेन सूत्रे पूर्वप्रकृतो लयोऽन्वेति अतः शब्दश्च प्रकृतसृष्टिक्रमपर इति सूचितम् । न चैवं क्रमश्रुतिविरोध इत्यतो भाष्यं हेतुत्वेन व्यनक्ति ॥ **क्रमवाचीति** ॥ एतेन सूत्रे क्रमस्तु श्रौतक्रमस्तु अतः उत्पत्तिक्रमाद्विपर्ययेणेत्यपि योजना सूचिता । भाष्यस्थात एवेति पदस्योपयोगं दर्शयन्नर्थमाह ॥ **कुत इत्यादिना** ॥ **यस्यामिति** ॥ भाल्लवेयश्रुतावित्यर्थः । एतेन सौत्रातः पदमन्यथापि व्याख्यातं ध्येयम् ॥ इत्यत **आहेति** ॥

(भावदीपः)

ननु कथमनया स्मृत्या शङ्कानिरास इत्यतः क्रमवाक्यस्य सावकाशत्वादित्यन्यत्रोक्त्यनुरोधेन स्मृतितात्पर्यमाह ॥ **अस्तीति** ॥ अनुक्रमव्युत्क्रमयोः क्रमपदप्रवेश इत्यत्र न केवलं सम्भावनामात्रमिति भावेन न्यायविवरणोक्तश्रुतिमाह ॥ **तथा चेति** ॥ बहुश्रुत्यनुरोधश्च यथोत्पत्तिलये इत्यन्यत्रोक्तद्वितीय युक्तिंनिराह ॥ **एतेनेति** ॥ क्रमश्रुतेः सावकाशत्वोक्तिपरपाद्मवचनेनेत्यर्थः । अन्यत्रोक्ताद्ययुक्तिनिरासकतया सूत्रखण्डभाष्य मवतारयति ॥ **व्युत्क्रमादिति** ॥ कथमनेन लोकविरोधनिरास इत्यतो भावमाह ॥ **लौकिकानामिति** ॥ लयेऽप्येवं पूर्वे पूर्वे गुणाधिका इति ऋग्भाष्यानुरोधेनाह ॥ **प्रथमा वेति** ॥ तथा चैतेषामित्यग्रेतनबहुवचनोपपत्तिरिति भावः । पूर्वादिभ्यो नवभ्यो वेति सर्वनामसंज्ञाया विकल्पेन पूर्वे पूर्वे इत्यस्य पूर्वोत्पन्न इति सप्तम्यन्तत्वेन व्याख्यानपक्षे सन्निधानपदस्यान्वयेऽपि न प्रथमपक्षेऽन्वय इत्यत आह ॥ **सन्निधीयत इति** ॥ अधिकरणे ल्युडिति भावः ॥ **तस्मादिति** ॥ क्रमश्रुतीनां सावकाशत्वाद् व्युत्क्रमलयस्य श्रौतत्वात्सामर्थ्याधिक्येनोपपन्नत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**असौ श्रुतिरप्रमाणमेवेति** ॥ ननु अप्रमाणमेवेत्ययुक्तम् । अपौरषेयत्वेनाप्रामाण्यकारणीभूतपुरुषदोषशून्यस्य वेदवाक्यस्य अकारणकार्योत्पत्तिप्रसङ्गेनाऽप्रामाण्याऽयोगात् । न हि विरोधशतेनापि अप्रमाण्यकारणाभावे अप्रामाण्यं वक्तुं युक्तमिति चेत्, न । अप्रामाण्यव्याप्येन प्रमाणविरुद्धत्वेनाऽप्रामाण्यसिद्धौ कार्यबलात् पुरुषदोषसम्भवं तदतिरिक्तस्य नित्यदोषस्य कल्पयितुं शक्यत्वात् । न हि पीनस्य दिवाऽभुञ्जानस्य कस्यचित् कारणतया दिवाभोजनकल्पनासम्भवे रात्रिभोजनं न कल्प्यते । येनेह प्रसिद्धदोषासम्भवे दोषान्तरकल्पनं न स्यादिति ॥ **एवं चेति** ॥ गुणत्वादित्यतः परम् 'उक्तं युक्तम्' इति शेषः । एतेन पञ्चम्यन्तस्यानन्वय इति परास्तम् ।

पूर्वपक्षस्तु – न श्रुतिसमन्वयेन परमात्मनो व्युत्क्रमेण संहर्तृत्वं युक्तम् । व्युत्क्रमप्रतिपादकश्रुतेरप्रामाण्यात् । तथा हि अस्ति तावत्क्रमाल्लयप्रतिपादिका 'अत एव हीदं परात्क्रमादुत्पद्यते, क्रमाद्विलीयते' इति श्रुतिः । सा च प्रत्यक्षानुगुणाः 'क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैवोत्पत्तिर्विलयश्च' इत्याद्याश्च श्रुतयोऽस्मिन्नर्थे भवन्ति । अतो बलवदेतच्छ्रुतिविरोधेन व्यत्क्रमप्रतिपादकश्रुतेरप्रामाण्यमेवेति समन्वयो न युक्त इति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु – व्युत्क्रमेणैव लयो युक्तः । क्रमश्रुतेः सावकाशत्वेनाऽबाधकत्वात् । अस्ति हि व्युत्क्रमशब्देऽपि क्रमप्रवेशः । क्रमाल्लयाभिधायकभाल्लवेयश्रुतावेव' कर्ता प्राणादिकस्याऽस्य हन्ता भूम्यादिकस्य च' इति व्युत्क्रमेण लयाभिधानाच्च, 'अनुरुपक्रमः सृष्टौ प्रतिरूपो लये क्रमः' इति वचनाच्च । न च लोकविरोधेन व्युत्क्रमाल्लयसिद्धेः युक्तो हरौ श्रुतिसयन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमाह ॥ **सर्वं भगवतेति** ॥ कर्तृविशेषनिर्धारणेन लयो निर्धारित एव । तत्र क्रमव्युत्क्रमरूपप्रकारविचारावसर इति भावः । तत्राधिभूतादीन्युत्पत्तिक्रमेणैव लीयन्ते व्युत्क्रमेणेति चिन्ता । तदर्थं व्युत्क्रमाद्विलयश्चेति श्रुतिः किं क्रमाद्विलीयत इत्यादिश्रुत्या लोकेप्रायेणोत्पत्ति-क्रमेणैव लयदर्शनयुक्त्यनुगृहीततया बाधितोत नेति । तदर्थं क्रमादिश्रुतौ क्रमशब्दः किमनुक्रमपरः किं वा व्युत्क्रमपर इति । तदर्थं लोके प्रथमोत्पन्नानां प्रथमं नाशे किं प्रथमोत्पत्तिः प्रयोजिकोत सामर्थ्यविशेषाभाव इति । श्रुतिप्राबल्याय लोकदृष्ट्यनुसारित्वमित्युक्तन्यायमुपपद्यतेचेति सौत्रपद-व्यावर्त्यमाह ॥ **उत्पत्तिक्रमानुसारेणैवेति** ॥ युक्तियुक्तत्वेन श्रुतेः प्राबल्यमुपपाद्य बहुत्वेनापि प्राबल्यमाह ॥ **क्रमादुत्पद्यत इत्यादिना** ॥ उक्तं च न्यायविवरणे । लोकानुसारिबहुश्रुत्यनुरोध-श्चेति । अत एव सिद्धान्ते विपर्ययेण तु क्रम इति । बह्वीनामपि सावकाशत्वं वक्ष्यत इति भावः ।

सूत्रे तुशब्दोऽवधारणार्थेप्यर्थेच । व्युत्क्रमश्रुत्या क्रमश्रुतेः सावकाशत्वरूपविशेषद्योतकश्च । ततश्च क्रमो लयक्रमः । अतः प्रकृतादुत्पत्तिक्रमाद्विपर्येण वैपरीत्येनैव नतु मत्यनुसारीति प्रतिज्ञार्थं मत्वा व्याचष्टे ॥ **उत्पत्तीति** ॥ क्रमः क्रमाद्विलीयत इति पूर्ववाद्युदाहृतभाल्लवेयश्रुतिवचनमपि अतो विपर्ययोत्पत्तिक्रमविपरीतक्रमापेक्षयेति वृत्यन्तरपरत्वेन भाष्यं व्याचष्टे ॥ **क्रमवाचिश्रुतेरिति** ॥ अत एव भाल्लवेयश्रुतिवचनादित्यस्य भावमाह **यस्यामेवेति** ॥ **इत्यत आहेति** ॥ इत्यतः पूर्वपक्षश्रुतेः सावकाशत्वाख्यविशेषद्योतकतुशब्दव्याख्यानाय पुराणवचनेन सावकाशत्वमाहेत्यर्थः ॥ **एतेनेति** ॥ तुशब्देन सावकाशत्वप्रदर्शनेनेत्यर्थः इत्यत आहेति ॥ **उपपद्यते चेति** ॥ सूत्रार्थमिति शेषः ॥ **सामर्थ्यसाम्यादिति** ॥ शतवर्षजीवित्वरूपसामर्थ्यसाम्यादित्यर्थः ॥ **नासाविति** ॥ एतेनोपपद्यते इति सूत्रखण्डस्य विपर्यय इत्यनुवृत्तेनान्वय इत्युक्तं भवति । वैरूप्यमित्युक्तसिद्धान्तन्यायं

(वाक्यार्थमुक्तावली)

सूत्रखण्डारूढं करोति ॥ **एवञ्चेति** ॥ **इत्यत आहेति** ॥ उपपद्यते चेति चशब्दसूचित-स्मृतिमुदाहरतीत्यर्थः । सन्निधानमिति पदस्वारस्यात्सप्तम्यंततया पूर्वं इत्येतद्व्याख्यायैतेषामिति बहुवचनानुरोधेनाह ॥ **प्रथमा वेति** ॥ पूर्वव्याख्याने तु वीप्सयैव बहुवचनोपपत्तिरिति भावः । प्रथमाविभक्तिपक्षे सन्निधानशब्दार्थमाह ॥ **सन्निधीयत इति** ॥ अधिकरणेऽपि ल्युडिति भावः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिमाह ॥ **सर्वं भगवतेति** ॥ पूर्वाधिकरणे कर्तृविशेषनिर्धारणेन लये निर्धारिते एव तत्र क्रमव्युत्क्रमरूपप्रकारविशेषचिन्तावसर इति भावः ॥ **न च पक्षान्तरेऽपीति** ॥ उत्पत्तिक्रम-विपरीतक्रमेणैव लय इति पक्षान्तरेऽपीत्यर्थः । उत्पत्तिक्रमानुसारेणैव लय इत्यत्र श्रुतिबाहुल्यमाह ॥ **क्रमादिति** ॥ अवधारणार्थकतुशब्दस्य यथाश्रुत एव सम्बन्धः । लय इति सप्तम्यन्तपदाध्याहार इत्यभिप्रेत्य विपर्ययेण तु क्रम इति सूत्रांशं प्रतिज्ञाप्रदर्शनपरतया तावत्स्वयं व्याचष्टे ॥ **उत्पत्ति-क्रमेति** ॥ ननु तर्ह्युत्पत्तिक्रमेणैव लय प्रतिपादकश्रुतेः का गतिरित्यत आह ॥ **क्रमवाचिश्रुते-रपीति** । तथा च क्रमवाक्यं सावकाशमिति भावः । शङ्कते **कुत इति** ॥ उत्तरमाह ॥ **यस्या-मेवेति** ॥ **क्रमव्युत्क्रमयोः क्रमपदप्रवेश इति** ॥ अनुत्क्रमव्युत्क्रमयोः क्रमपदवाच्यतया प्रवेश इत्यर्थः ॥ **एतेनेति** ॥ क्रमश्रुतेः सावकाशत्वकथनेनेत्यर्थः ॥ **परिहृत इति** ॥ तत्रातिक्रमशब्दस्य व्युत्क्रमपरत्वादिति भावः ॥ **लौकिकानामिति** ॥ अनेनाकाशादयः पूर्वं विलीयन्ते पूर्वोत्पन्नत्वा-दित्यनुमाने सामर्थ्याभाव एवोपाधिरित्युक्तं भवति । सन्निधानमिति पदार्थस्वारस्यात् पूर्वोत्पन्न इति व्याख्याय एतेषामिति बहुवचनानुरोधेनाह ॥ **प्रथमा वेति** ॥ सप्तमी पक्ष इति प्रथमापक्षेऽपि सन्निधानशब्दान्वयो नेत्यत आह ॥ **सन्निधीयत अत्रेति** ॥

सूत्राक्षरार्थस्तु क्रमाद्विलीयत इति श्रुत्युक्त**क्रमस्तु अतः** प्रकृतात् सृष्टिक्रमात्, **विपर्ययेण** भवति । 'अत एव व्युत्क्रमाद्विलयश्चैव' इति वाक्यशेषादेव उपपद्यते च विपर्ययः । पूर्वोत्तरोत्पन्नानां सामर्थ्याधिक्यादिति भावः ।

## वाक्यार्थविवरणम्

**तद्विषय एवेति** ॥ लयविषय एवेत्यर्थः । अस्य सन्देहस्य इति शङ्कायाम् दृश्यत इति । पितुः पुरतः पुत्रस्य मरणदर्शनादित्यर्थ । क्रमवाचिश्रुतेः । क्रमाल्लयवाचिन्या 'अत एव' इति श्रुतेरित्यर्थः । ततश्च सावकाशतेति भावः ॥ **अर्थान्तरकल्पनम्** ॥ व्युत्क्रमरूपम् । **यस्यामेव श्रुतौ** । क्रमाद्विलीयत इत्यनेन **क्रमाल्लय श्रूयत** इत्युच्यते इति शेषः ॥ **व्युत्क्रमश्रुत्या** ॥ अक्षरादित्यादिश्रुत्या । भाष्ये क्रमेणेत्यस्य क्रमद्वयेनेत्यर्थः ॥ **क्रमव्युत्क्रमयोः** ॥ अनुत्क्रम-व्युत्क्रमशब्दयोरिति व्याख्येयम् । तेन व्युत्क्रमे क्रमशब्दप्रवेशसत्त्वेऽपि क्रमशब्दे कथमनुक्रमशब्द-प्रवेश इति शङ्काऽनवकाशः । क्रमशब्दस्यानुक्रमार्थत्वात् ॥ **सावकाशेति** ॥ क्रमशब्दस्य व्युत्क्रमपरत्वेनापि सावकाशत्वादिति भावः । सृष्टावन्योऽनुक्रमः । लये चान्यो व्युत्क्रमः ॥ **पूर्वोत्पन्नानामिति** ॥ यो यदपेक्षया आदिसृष्टौ पूर्वमुत्पन्न स तदपेक्षया सामर्थ्यातिशयादिगुणसंपन्न इति नियमादिति भावः । सन्निधानमिति पदस्वारस्याय पूर्व इत्येतत्सप्तम्यन्तमित्यभिप्रेत्य व्याचष्टे ॥ **पूर्व इति** ॥ एतेषामिति पदस्वारस्यायाह ॥ **प्रथमा वेति** ॥ प्रथमाबहुवचनं वेत्यर्थः । तथा च पूर्वे पूर्वोत्पन्ना विष्णोः सन्निधानमित्यसङ्गतमित्यत आह 'सन्निधीयत' इति । तथा च पूर्वे पूर्वोत्पन्ना क्रमेणाधिकं यथा स्यात्तथा विष्णोः सन्निधानं विष्णुप्रतिमाभूता इत्यर्थो द्रष्टव्यः । अधिकरणे ल्युडन्तस्य त्रिलिङ्गत्वात् नपुंसकत्वं युक्तमिति ध्येयम् ।

## वाक्यार्थमञ्जरी

उत्तरयति ॥ **श्रुतिविगानमिति** ॥ लयक्रमः **विपर्ययेण तु** सृष्टिक्रमाद्विपर्ययेणैव भवति । कुतः । **अतो** यतः क्रमाद्युत्क्रमाच्चेति श्रुतेरेव । तर्हि लोकविरोध इत्यत उक्तम् ॥ **उपपद्यते चेति** ॥ पूर्वोत्पन्नानां सामर्थ्याधिक्याद्विपर्यय उपपद्यते चेत्यर्थः । उत्तरमाह ॥ **यस्यामिति** ॥ **सावकाशेति** ॥ नामैकदेशन्यायेन क्रमशब्देन व्युत्क्रमग्रहणसम्भवादिति भावः ॥ **एतेनेति** ॥ क्रमशब्दस्य व्युत्क्रमपरत्ववर्णनेनेत्यर्थः । तत्रापि क्रमशब्दस्य व्युत्क्रमपरत्वादिति भावः ॥ **लौकिकानामिति** ॥ अनेन पूर्वोत्पन्नत्वात्पूर्वं लय इत्यत्र सामर्थ्याभाव उपाधिरित्युक्तं भवति ॥ **सन्निधानमिति** ॥ पदार्थस्वारस्यानुसारेणोक्त्वा तेषामिति बहुवचनानुरोधेनाह ॥ **प्रथमा वेति** ॥ पूर्वव्याख्याने तु वीप्सयैव बहुवचनोपपत्तेरिति भावः । सन्निधीयते सन्निहितो भवति ।

॥ इति विपर्ययाधिकरणम् ॥

## ९. अथ अन्तराधिकरणम्

## सूत्रभाष्यम्

**॥ ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥ १५ ॥**

'प्राणान्मनो मनसश्च विज्ञानम्' ।

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' (कठ.उ. ३-१३)

इति लिङ्गाद्विज्ञानमनसी अन्तरा विपरीतक्रम इति चेत् न, विशेषप्रमाणाभावात् ।

## तत्त्वप्रदीपिका

अन्तरेत्यादिसूत्रम् । मनसश्च विज्ञानमिति श्रुतेर्मनः कार्ये विज्ञाने यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनीति श्रुत्यन्तरात्कारणस्य मनसो विलयावगमनादनयोः सृष्टिक्रम एव लयेऽपीति चोद्यम् । यच्छेद्वाङ्मनसीति वाचं मनसि यच्छेदित्यर्थः । वाचोऽधिकरणान्तरादृष्टेः । तद्यच्छेज्ज्ञान आत्मनीति मनसस्तदृष्टेः । 'वाङ्मनसि सम्पद्यत' इत्यादेश्च ।

## तत्त्वप्रकाशिका

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमधिभूतादिलयविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सकललयकर्ता हरिरित्युक्तम् । लयविषये च श्रुतिविरोधे न समन्वयः सम्भवेदिति निवार्योऽसौ भवति । प्रकृताधिभूतादीनि विषयः । किं सर्वाण्युत्पत्तिक्रमवैपरीत्येन लीयन्ते कानिचित्क्रमेणापि वेति संशयः । 'अक्षरात्परमादेव' इति श्रुतेर्वक्ष्यमाणलिङ्गदर्शनस्य च विरोधः सन्देहबीजम् । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तत्पठित्वा पूर्वपक्षांशं तावद् व्याचष्टे ॥ **अन्तरेति** ॥ न सर्वेषां व्युत्क्रमेण लयः किं तु केषाञ्चिद् व्युत्क्रमात् । तथा हि । विज्ञानतत्त्वं तावन्मनस्तत्त्वादुत्पन्नं श्रूयते 'मनसश्च विज्ञानम्' इति श्रुतौ तस्य च पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लयः पूर्वावस्थितस्य मनस्तत्त्वस्य पूर्वमेव लयः श्रूयते 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति श्रुतौ । अनेन च लिङ्गदर्शनेन विज्ञानमनसी विनाऽन्येषां व्युत्क्रमाल्लयस्य प्राप्तत्वादुक्तमेव युक्तम् । लोकानुकूलं चैतत् । लोकेऽपि केषाञ्चित् क्रमात्केषाञ्चिद् व्युत्क्रमाल्लयदर्शनात् ।

(तत्त्वप्रकाशिका)

**न च सामर्थ्यतारतम्यविरोधः । विज्ञानमनसोः समसामर्थ्यस्यापि सम्भवात् । न चेतरश्रुतिविरोधः । तस्याः सयुक्तिकलिङ्गदर्शनविरुद्धाया अप्रामाण्योपपत्तेः । तथा च न श्रुतिसमन्वयो हरौ सिध्यतीति भावः । वाङ्मनसी यच्छेत् वाङ्मनसि लीयत इति स्मरेदित्यर्थः । सिद्धान्तांशं व्याचष्टे ॥ नेति ॥ न विज्ञानमनस्तत्त्वे विना विपरीतक्रमेण लयः किं तु सर्वेषामपि । विज्ञानमनस्तत्त्वयोर्यथोत्पत्तिलय इति विशेषप्रमाणाभावात् । सर्वेषामपि व्युत्क्रमाल्लयस्य श्रुतत्वाच्चेति भावः ।**

## गुर्वर्थदीपिका

वक्ष्यमाणलिङ्गदर्शनेन इत्यत्र 'मनसश्च विज्ञानम्' इति श्रुतावापाततो जनकतया प्रतीतमनसो जन्यतया प्रतीतविज्ञाने लयाख्यं लिङ्गम् । कचित्क्रमेण लयोऽप्यस्तीति ज्ञापकं लिङ्गमित्यर्थः । समसामर्थ्यस्यापि सम्भवादिति वदतोरुभयोरपि साम्यात्कारणस्य कार्येऽपि लयस्सम्भावित इति सूचितम् । वस्तुगत्या कारणमल्पशक्तिमत् कार्यमधिकशक्तिमदिति शङ्कितुरभिप्रायः । अन्यथा कार्ये लयस्योपोद्बलनासम्भवेन पूर्वपक्षप्राबल्यायोगात् । अत एवापिपदं टीकायामिति ज्ञेयम् । वाङ्मनसि लीयत इति स्मरेदित्यत्र 'तद्यच्छे' इति मनोमात्रस्यान्यत्र लयश्रवणात्सहोक्तयोरपि वाङ्मनसोर्वाचं मनसि यच्छेदित्यर्थाल्लभ्यत इति भावः । विज्ञानमनस्तत्वयोरिति वदता देहिनामन्तःकरणरूपमनसस्तज्जन्यज्ञानस्य चोत्पत्तिक्रमेण लयश्रवणेऽपि महाप्रलये नश्यतोर्विज्ञानमनस्तत्त्वयोरुत्पत्तिक्रमेण नाशाश्रवणादिति सूचितम् । सर्वेषामपि व्युत्क्रमाल्लयस्य श्रुतत्वादित्यत्र 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद्विलयश्च' इति श्रुतौ सर्वस्यापि व्युत्क्रमाल्लयस्य श्रुतत्वादित्यर्थः । ननूत्पत्तिक्रमेण नाशस्य साक्षात् श्रुतत्वात् 'तल्लिङ्गा' इति कथं सूत्रं तद्भाष्यं चेति चेन्न । 'विज्ञानमनसी अन्तरा विपरीतक्रम' इत्यस्यार्थस्य श्रुतावश्रुतत्वादस्मिन्नर्थे सा श्रुतिर्लिङ्गतया प्रमाणम् । कचित्क्रमलयस्य श्रुतत्वान्न सर्वत्र व्युत्क्रमेण लय इति हि वक्तव्यम् । तथा च लिङ्गलैङ्गिकभावादेव स्वाभीष्टसाध्यसिद्धिरिति भावः सूत्रभाष्यकारयोरिति बुद्धिमता बोद्धुं शक्यत्वात् ।

## भावबोधः

**अधिभूतादिलयविषयश्रुतिविरोधपरिहारादिति ॥** पूर्वाधिकरणोक्तव्युत्क्रमेण लयेऽत्र कचिदपवादनिरासादनन्तरसङ्गतिरिति ज्ञातव्यम् । **किमिति** । अत्राधिभूतादीनि किं मनस्तत्त्व-

(भावबोधः)

विज्ञानतत्त्वे विना व्युत्क्रमेण लीयन्ते उत सर्वाण्यपि व्युत्क्रमेणैव लीयन्त इति चिन्ता । तदर्थं सर्वेषां व्युत्क्रमेण लयाभिधानात् 'त्र्यक्षरात् परमादेव' इति श्रुतिः, 'प्राणान्मनो मनसश्च विज्ञानं' 'यच्छेद्वाङ्मनसी प्राज्ञः' इति श्रुतिद्वयप्रतिपादितोत्पत्तिलययोरेव क्रमरूपलिङ्गदर्शनबाधिता उत न वेति । तदर्थं तल्लिङ्गे क्रमलोकदृष्ट्यनुसारित्वरूपे युक्तियुक्तत्वेन निरवकाश उत सावकाश इति । तदर्थं 'प्राणान्मनो मनसश्च विज्ञानम्' इति सृष्टिश्रुतिगतमनोविज्ञानशब्दौ किं तत्त्वपरावुतान्तः-करणावबोधपराविति । तदर्थं तयोस्तत्र शक्तत्वेऽपि एतच्छ्रुतिगतमनोविज्ञानशब्दयोरन्तःकरणाव-बोधपरत्वनियामकं कार्यकारणभावावेदकान्वयव्यतिरेकरूपप्रमाणं नास्त्युतास्तीति । विज्ञानमनसोः क्रमेणेति सौत्रनिर्देशे तदुभयव्यतिरिक्तानां व्यत्क्रमेण लय इत्यस्यार्थस्यालाभात् 'अन्तरा विज्ञानमनसी क्रमेण' इति निर्देशः कृतः । उत्पत्तिक्रमेण लीयमानत्वेनाभिमते विज्ञानमनसी अन्तरेत्युक्तिसामर्थ्यात् सूत्रे क्रमशब्दोऽव्युत्क्रमपर इत्यभिप्रेत्य प्रवृत्तं विज्ञानमनस्यन्तरा विपरीतक्रम इति भाष्यं केषाञ्चित् क्रमाल्लयः केषाञ्चित् व्युत्क्रमाल्लय इत्यङ्गीकार इति न्यायविवरणानुरोधेन व्याचष्टे– **किं तु केषाञ्चिदिति** ॥ अनेनान्तरा विज्ञानमनसी व्युत्क्रम इति न्यायविवरणांशोऽपि व्याख्यातः । केषाञ्चित् क्रमात् केषाञ्चिद् व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृष्ट्यनुसारादिति न्यायविवरणोक्तमाह– **लोकानुकूलमिति** ॥ **न च सामर्थ्येनेति** ॥ पूर्वाधिकरणे पूर्वमुत्पन्नानां सामर्थ्याधिक्यस्योत्तरोत्पन्नानां सामर्थ्याल्पत्वस्योक्तत्वेन पूर्वोत्तरोत्पन्नमनस्तत्त्वविज्ञानतत्त्वयोरपि प्राप्तसामर्थ्ये तारतम्येन विरोध उत्पत्तिक्रमेण लयाङ्गीकार इत्यर्थः ॥ **समसामर्थ्यस्यापीति** ॥ 'सामर्थ्याधिक्यमेतेषाम्' इति स्मृतौ पूर्वोत्पन्नानां सामर्थ्याधिक्यान्ययोगव्यवच्छेदकावधारणाद्य-भावादित्यर्थः । 'सर्वं वा एतत् क्रमादुत्पद्यते क्रमात् विलीयत' इति श्रुतौ सर्वस्यापि व्युत्क्रमाल्लये सङ्ग्रहादिति न्यायविवरणं मनसि निधायाह– **सर्वेषामपीति** ॥

## भावदीपः

अस्य पूर्वोक्तप्रमेयस्थापनामात्रार्थत्वात्पूर्ववदेवानन्तरसङ्गतिमाह ॥ **सकललयेति** ॥ इति **श्रुतेरिति** ॥ पूर्वभाष्योक्तश्रुतेरित्यर्थः ॥ **वक्ष्यमाणेति** ॥ यथोत्पत्तिलयश्रवणरूपलिङ्गेत्यर्थः । पूर्वपक्षस्य पूर्वाक्षेपरूपफलाय तदाक्षेपप्रकारं च दर्शयितुं केषाञ्चित्क्रमाल्लयः केषाञ्चिद् व्युत्क्रमाल्लय इत्यन्यत्रोक्तिमनुरुध्य साध्यमध्याहृत्य तत्र हेतुपरतया पूर्वपक्षभाष्यं व्याचष्टे ॥ **न सर्वेषामिति** ॥

(भावदीपः)
उक्तमेव केषाश्चिदित्युक्तमेवेत्यर्थः । लिङ्गदर्शनस्य अक्षरादिति श्रुतितः प्राबल्याय केषाश्चित्क्रमाल्लयः केषाश्चिद् व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृष्ट्यनुसारादन्तराविज्ञानमनसी व्युत्क्रम इत्यन्यत्रोक्तां लोकदृष्ट्यनुसारियुक्तिं विवृणोति ॥ **लोकानुकूलं चैतदित्यादिना** ॥ उपपद्यते चेति पूर्वसूत्र-खण्डोक्तयुक्तिविरोधमाशङ्कते ॥ **न चेति** ॥ मनोविज्ञानयोः पूर्वोत्तरकालमुत्पन्नयोर्बहुलाल्प-शक्तिमत्त्वेन चिराचिरकालस्थायित्वावश्यम्भावेन व्युत्क्रमलय एव युक्तो न त्वनुक्रमलय इत्यर्थः । न्यूनाधिकसामर्थ्यासिद्धिं भाष्ये जन्मलयश्रुत्योरुक्त्या सूचितामाह ॥ **समेति** ॥ सृष्टौ मनसः पूर्वमवस्थानात् लये च विज्ञानस्य पश्चादवस्थानादिति भावः ॥ **न चेतरेति** ॥ अक्षरात्परमादेवेति श्रुतिविरोध इत्यर्थः ॥ **सयुक्तिकेति** ॥ लोकानुकूल्यरूपयुक्तिसहितेत्यर्थः ॥ **तथा चेति** ॥ अक्षरादिति श्रुत्यप्रामाण्ये अन्यत्राप्यनाश्वासापातादिति भावः । श्रुतौ मनसि वाक् यच्छेत् उपरमेत् । यम उपरमे इति धातोर्लीयत इत्यर्थः । तत्र प्राज्ञ इत्यस्यान्वयाय तद्वशत्वेन तद्ध्यानं लयो नाम न चापरः । कुतस्तु मानुषो देवान्नियच्छेद्धिनियामकानिति काठकभाष्यानुरोधेन ज्ञान-लक्षणामाश्रित्याह ॥ **इति स्मरेदित्यर्थ इति** ॥ तत्वप्रदीपे तु वाचं मनसि यच्छेदित्यर्थ इत्युक्तम् । मनसीति दैर्घ्यं छान्दसम् । नञः पूर्वभाष्येणान्वयं दर्शयति ॥ **न विज्ञानेति** ॥ अनेन सूत्रे पूर्वप्रकृतो लयोऽन्वेतीति सूचितम् । विशिष्टनिषेधः सविशेषणे हीति न्यायेन विशेषणनिषेधफलक इति भावेन पर्यवसितमाह ॥ **किं तु सर्वेषामपीति** ॥ ननु सर्वेषां व्युत्क्रमलये मानाभावादेव क्वचिदनुक्रमोऽपि लयः स्यादित्यतः सर्वं वा एतत्क्रमादुत्पद्यते क्रमाद्विलीयत इति श्रुतौ सर्वस्यापि व्युत्क्रमाल्लय-सङ्ग्रहादित्यन्यत्रोक्तरीत्याऽविशेषादिति सूत्रखण्डस्याविशेषप्रमाणादित्यर्थान्तरं मत्त्वा भाष्यभावमाह ॥ **सर्वेषामपीति** ॥

## अभिनवचन्द्रिका

**समसामर्थ्यस्यापि सम्भवादिति** ॥ ननु मनस्तत्वस्य विज्ञाने लयव्युत्पादनाय वैपरीत्येन सामर्थ्यस्यापि वक्तव्यम्, न तु समबलत्वसम्भवादिति । लयाधिकरणस्य अधिकबलवत्त्वनियमादिति चेत्, न ब्रूमो वयमेकमेव सामर्थ्यमुभयत्र समानमिति । येनोक्तदोषः स्यात् । किं नाम विज्ञान-तत्त्वोत्पादनाय मनस्तत्त्वस्य विशिष्टं सामर्थ्यम् । एवं च कृत्वा समसामर्थ्यमिति । तद्यथा लोके कश्चिद्बलेनोत्तमः । एवमपि तौ समावुच्येते ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु – न विष्णोर्व्युत्क्रमेण सर्वसंहर्तृत्वं युक्तम् । किन्तु विज्ञानमनसी अन्तरा व्युत्क्रमेण लयकर्तृत्वम् 'मनसश्च विज्ञानम्' इति मनस उत्पन्ने विज्ञानतत्त्वे 'तद्यच्छेत् ज्ञान आत्मनि' इति मनस्तत्त्वस्य लयश्रवणात्, लोकानुगुण्याच्च । लोके क्रमेण, व्युत्क्रमेण च लयदर्शनात् । न च सामर्थ्यतारतम्यविरोधः । मनस उत्पत्तिविषये सामर्थ्याधिक्यमित्यङ्गीकारे बाधकाभावात् । अतः सयुक्तिकलिङ्गदर्शनविरुद्धायाः क्रमश्रुतेः अप्रामाण्योपपत्तेः न श्रुतिसमन्वयो युक्त इति ।

सिद्धान्तस्तु – युक्तमेव विष्णोर्व्युत्क्रमेण सर्वसंहर्तृत्वम् । विज्ञानमनसोरपि बाधकाभावेन व्युत्क्रमेण लयाङ्गीकारात् । न च 'मनसश्च विज्ञानः' इति श्रुत्या मनस्तत्त्वात् विज्ञान-तत्वस्योत्पन्नत्वेन मनस्तत्वस्य विज्ञानतत्वे लयाङ्गीकारे कथं न विरोध इति वाच्यम् । श्रुत्यर्था-परिज्ञानात् । न हि सा श्रुतिः मनस्तत्त्वाद्धि ज्ञानतत्त्वस्योत्पत्तिमाचष्टे । किं तर्हि मन इन्द्रियाद् ज्ञानस्योत्पात्तिमाचष्टे । तदुक्तम् –

> 'परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा ।
> विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात् ।।
> विज्ञानतत्त्वात् मनो मनस्तत्वाच्च खादिकम् । इति ।

अतः श्रुत्यविरोधेन सर्वेषां व्युत्क्रमेण लयसिद्धेः हरौ श्रुतिसमन्वयो युक्त इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अस्य क्वचिदपवादनिरासेन पूर्वोक्तप्रमेयस्थापना मात्रार्थत्वादनन्तरसङ्गतिमाह ।। **सकललयेति** ।। **किमिति** ।। अत्राधिभूतादीनि प्राणान्मनोमनसश्च विज्ञानं, 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद-ज्ञानआत्मनि' इति श्रुतिद्वयप्रतिपादितयोरुत्पत्तिलययोरेकक्रमरूपलिङ्गदर्शनबलात्किं मनस्तत्व-विज्ञानतत्वे विना व्युत्क्रमेण लीयन्ते, उत सर्वाण्यपि अक्षरात्परमादेवेति श्रुत्या व्युत्क्रमेण लीयन्त इति चिन्ता । तदर्थं मनसश्च विज्ञानमिति श्रुतौ मनो विज्ञानशब्दौ किं तत्वपरौ उत अन्तःकरणा-वबोधपराविति ।। **वक्ष्यमाणेति** ।। मनोविज्ञानयोरुत्पत्तिक्रमेण लयश्रवणरूपवक्ष्यमाणलिङ्गेनेत्यर्थः । यथाश्रुतसूत्रानुरोधेन मनोविज्ञानयोरेव क्रमेण लयोऽन्येषां व्युत्क्रमेण लय इति पूर्वपक्षिणा पूर्वोक्तापवाद आशंक्यत इति व्याख्याने केषांचित्क्रमाल्लयः केषांचिद्व्युत्क्रमाल्लय इति न्याय-

(वाक्यार्थमुक्तावली)

विवरणविरोधः । तत्र मनोविज्ञानातिरिक्तानामपि क्रमाल्लयस्याशङ्क्यमानत्वादित्यभिप्रेत्य पूर्वसूत्राद्विपर्येण तु क्रम इत्यनुवर्तितस्याश्रुतन्वयः । न सर्वेषां व्युत्क्रमेण लयः किन्तु केषांचिदित्यभिप्रेत्य बहिरेव प्रतिज्ञामाह ॥ **न सर्वेषामिति** ॥ तर्हि सूत्राविरोध इत्यतः केषांचित्क्रमाल्लय इत्यत्रोदाहरणप्रदर्शनाय सूत्रं प्रवृत्तमिति भावेन सङ्गमयति ॥ **तथा हीति** ॥ **लिङ्गदर्शनेनेति** ॥ मनसश्च विज्ञानं, यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेद्ज्ञान आत्मनि' इति श्रुत्योः मनसो विज्ञानं जायते, वाचो मनसि लीयन्ते, मनश्च विज्ञाने लीयत, इति स्मरेदित्युक्तत्वेऽपि, विज्ञानमनसोः क्रमेणान्येषां व्युत्क्रमेण लय इत्येवं विधिरूपत्वाभावेनागमविधया बोधकत्वाभावात् । पूर्वमुत्पन्नस्य मनसः पश्चादुत्पन्ने लयश्रवणं विज्ञानमनसी विना व्युत्क्रमेण लय इत्यत्रान्यथानुपपत्तिमुखेन लिङ्गमितिभावः ॥ **उक्तमेव युक्तमिति** ॥ केषाञ्चित्क्रमात्केषाञ्चिद्व्युत्क्रमादित्युक्तमेवेत्यर्थः ॥ ननु लिङ्गदर्शनेनोभयोः क्रमाल्लयस्य प्राप्तत्वेऽपि कथं बहूनामित्थंतत्सिद्धिरित्यतो लोकदृष्ट्यनुसारित्वमित्युक्तन्यायं संगमयति **लोकानुकूलं चेति** ॥

उपपद्यतेचेति पूर्वसूत्रखण्डोक्तयुक्तिविरोधमाशङ्कते **न चेति** ॥ मनोविज्ञानयोः पूर्वोत्तरकालोत्पन्नयोः चिराचिरकालावस्थानावश्यंभावेन, बहुलाल्पशक्तित्वेन व्युत्क्रम एव युक्तो न त्वनुक्रम इत्यर्थः ॥ **समेति** ॥ सृष्टौ मनसः पूर्वमवस्थानात् । प्रलये विज्ञानस्य पश्चादवस्थानात् कालसाम्येन समसामर्थ्यस्यापि सम्भवादित्यर्थः । न च वामनपुराणे पूर्वोत्पन्नस्य सामर्थ्याधिक्योक्तिविरोधः । तस्य व्युत्क्रमेण लीयमान पूर्वोत्पन्नविषयत्वादिति भावः । श्रुतौ वाङ्मनसी यच्छेत् उपरमेत् । यम उपरम इति धातोः लीयत इत्यर्थः । तर्हि प्राज्ञ इत्यस्यान्वयो नास्तीत्यतस्तद्वशत्वेन ध्यानं लयो नाम न चापर इति काठकभाष्यानुसारेणाह ॥ **स्मरेदिति** ॥ मनसीति दीर्घश्चान्दसः । नञः पूर्वेणान्वयमाह ॥ **न विज्ञानेति** ॥ विशेषप्रमाणाभावादितिभाष्यस्य बुध्या विवेकेन विशेषप्रमाणाभावादित्यर्थान्तरं मत्वा तदनुसारेण सूत्रखण्डस्यार्थान्तरं सर्वसङ्ग्रह इत्युक्तन्यायं सङ्गमयितुमाह ॥ **सर्वेषामपीति** ॥ सर्वं वा एतत्क्रमादुपद्यते व्युत्क्रमाद्विलीयत इति श्रुतत्वाच्चेत्यर्थः । सूत्रे क्रमेणेत्यस्य व्युत्क्रमेणेत्यर्थः । लय इति शेषः ॥ **तल्लिङ्गादिति** ॥ विज्ञानमनसोरुत्पत्तिक्रमेण लये यथोत्पत्तिलयरूपलिङ्गादित्यर्थः ।

## तत्त्वसुबोधिनी

**अधिभूतलयविपर्ययेति** ॥ पूर्वाधिकरणोक्तव्युत्क्रमेण लयेऽत्र कश्चिदपवादनिरासादपवाद-सङ्गतिरिति भावः ॥ **वक्ष्यमाणलिङ्गदर्शनस्य चेति** ॥ पश्चादुत्पन्नस्य विज्ञानतत्वस्य पश्चाल्लय-कथनरूपलिङ्गदर्शनस्येत्यर्थः । विज्ञानमनसी क्रमेणेति सौत्रनिर्देशे तदुभयव्यतिरिक्तानां व्युत्क्रमेण लय इत्यर्थस्यालाभात् अन्तरा विज्ञानमनसी क्रमेण इति निर्देशः कृतः । उत्पत्तिक्रमेण लीयमानत्वेन अभिमते विज्ञानमनसी । अन्तरेत्युक्तिसामर्थ्यात् सूत्रे क्रमशब्दः व्युत्क्रमपर इत्यभिप्रेत्य प्रवृत्तं विज्ञानमनस्यन्तरा विपरीतक्रम इति भाष्यं व्याचष्टे ॥ **किन्तु केषाञ्चिदिति** ॥ कुत्र श्रूयत इति तत्राह ॥ **यच्छेदिति** ॥ अस्त्वेवं लिङ्गदर्शनम् । ततः किं तत्राह ॥ **अनेन च लिङ्गदर्शनेनेति** ॥ **उक्तमेव फलमिति** ॥ विज्ञानमनसी विना व्युत्क्रमेण लय इत्युक्तमित्यर्थः । लोकानुसारित्वयुक्तिमाह ॥ **लोकेति** ॥ **न च सामर्थ्येति** ॥ पूर्वमुत्पन्नानां सामर्थ्याधिक्य-स्योत्तरोत्पन्नानां सामर्थ्याल्पत्वस्योक्तत्वेन पूर्वोत्पन्नमनस्तत्वविज्ञानतत्वयोरपि सामर्थ्यतारतम्येन विरोध उत्पत्तिक्रमेण लयाङ्गीकार इत्यर्थः ॥ **समसामर्थ्यस्यापीति** ॥ सृष्टौ मनसः पूर्वमवस्थानात् प्रलये विज्ञानतत्वस्य पश्चादवस्थानात् सामर्थ्यं सम्भाव्यत इत्यर्थः । यद्वा सामर्थ्याधिकमेतेषामिति स्मृतौ पूर्वोत्पन्नानां सामर्थ्याधिक्यायोगव्यवच्छेदकावधारणाद्यभावादित्यर्थः ॥ **सयुक्तिकलिङ्ग-दर्शनविरुद्धाया इति** ॥ लोकानुसारित्वरूपयुक्तिसहितलिङ्गदर्शनविरुद्धाया इत्यर्थः । ननु यच्छेदिति श्रुत्यनुसारेण विज्ञानमनस्तत्वयोः क्रमेण लय इत्यत आह ॥ **विज्ञानेति** ॥ श्रुत्यन्तरमप्यत्रास्तीत्याह ॥ **सर्वेषामिति** ॥

## वाक्यार्थविवरणम्

**'अक्षरात्परमादेव' इति श्रुतेरिति** ॥ तत्र सर्वस्यापि व्युत्क्रमाल्लयोक्तेः व्युत्क्रमाद्विलयश्चै-वेत्यत्र सर्वमित्यस्य विभक्तिविपरिणामेन सर्वस्येत्यनुवृत्तेरभिप्रेतत्वादिति भावः ॥ **उक्तमेवेति** ॥ व्युत्क्रमेण लय इत्युक्तं युक्तमेवेत्यर्थः । विपरीतक्रम इति भाष्येण सूत्रस्थं क्रमेणेति पदं व्युत्क्रमेणेति व्याख्यातं भवति ॥ **यच्छेदिति** ॥ मनस्तत्त्वं विज्ञानतत्त्वे लीयते तच्चात्मनिलीयत इत्युक्त्याऽऽदौ मनस्तत्त्वलयः पश्चाद्विज्ञानतत्त्वलय इत्यर्थः ॥ **यथोत्पत्तिं लयः** ॥ उत्पत्त्यनुसारेण लयः इति यावत् ॥ **श्रुतत्वाच्चेति** ॥ अक्षरात्परमादेवेति श्रुत्युक्तत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

**अक्षरादिति** ।। अत्र सर्वशब्दस्य षष्ठ्यन्ततया विपरिणतस्य विलयशब्देनाप्यन्वयादिति भावः ।। **लिङ्गेति** ।। क्रमादुत्पन्नयोर्मनोविज्ञानयोः क्रमाद्विलयाख्येत्यर्थः ।। **ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ** । विज्ञानमनसी विज्ञानमनस्तत्त्वे अन्तरा विना क्रमेण व्युत्क्रमेणान्येषां लयः कुतः तल्लिङ्गात् तत्रोक्तेऽर्थे मनसश्चेत्यादिश्रुत्युक्तात्क्रमादुत्पन्नयोर्विज्ञानमनसोः क्रमाल्लयाख्यलिङ्गादिति चेन्न अविशेषात् विज्ञानमनसोरुत्पत्तिक्रमेणैव लय इत्यत्र विशेषप्रमाणाभावाद्व्युत्क्रमाद्विलय श्चेति विशेषप्रमाणाच्चेत्यर्थः ।। **न च सामर्थ्येति** ।। पूर्वोत्तरलययोः क्रमेणाल्पाधिकसामर्थ्ययोः प्रयोजकत्वेन मनोविज्ञानयोश्च सामर्थ्याधिक्यमेतेपामित्युक्तरीत्या क्रमेणाधिकाल्पसामर्थ्यवत्वादिति भावः ।। **समसामर्थ्यस्यापीति** ।। स्मृतौ पूर्वोत्पन्नानां सामर्थ्याधिक्यायोगव्यवच्छेदकावधारणाद्यभावादिति भावः । वाक्तदभिमानिन्युमा मनसि तदभिमानिनि रुद्रे, तन्मनो ज्ञान आत्मनि विज्ञानतत्वाभिमानिनि लीयत इति स्मरेदिति वाक्यशेषार्थः ।

## सूत्रभाष्यम्

**।। ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ।। १६ ।।**

**'मनसश्च विज्ञानम्' इति व्यपदेशश्चराचरेष्वालोचनाद्विज्ञानं भवतीति भागापेक्षया स्यात् । न विज्ञानतत्त्वापेक्षया । स्कान्दे च–**

**'परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा ।**
**विज्ञानतत्त्वं महतस्समुत्पन्नं चतुर्मुखात् ।।**
**विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम् ।**
**एवं बाह्या परा सृष्टिरन्तस्तद्व्यत्ययपेक्षया ।**
**विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः' ।। इति ।।**

।। इति अन्तराधिकरणम् ।।

## तत्त्वप्रदीपिका

यस्मादवरेषां दर्शनान्ते हरेर्दर्शनं तस्मादुत्पत्तिक्रमाद्विपरीतो व्यक्तिक्रमो ज्ञेयः ।

## तत्त्वप्रकाशिका

अस्त्येवोक्तं लिङ्गदर्शनं केषाञ्चित्क्रमालयः केषाञ्चिद् व्युत्क्रमालय इत्यत्र अतः कथं विशेषप्रमाणाभाव इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। **चराचरेति ।** यद्यपि 'यच्छेद्वाङ्मनसी प्राज्ञः' इति तत्वानां लयक्रमो भवेत्तथापि न तेषां तथोत्पत्तिः । विज्ञानतत्वान्मनस्तत्वस्योत्पन्नत्वात् । न च 'मनसश्च विज्ञानम्' इति श्रुतिविरोधः । मनःशब्दो हि तत्वेऽन्तःकरणे च वर्तते तथा विज्ञानशब्दोऽपि तत्वेऽवबोधे च । अयं च व्यपदेशः साधारणमनोविज्ञानराश्योरिन्द्रियाव-बोधाख्यभागविषय एव न तु मनोविज्ञानतत्वविषयः । न चेन्द्रियादिविषयत्वे काचनानुपपत्तिः । चराचरविषये मनोभावेनालोचने नावबोधस्योत्पद्यमानत्वात् । अतो नेदं लिङ्गदर्शनं विज्ञानमनस्तत्वयोः क्रमेण लये विशेषप्रमाणमिति भावः । तत्वविषयमेवेदं वाक्यं किं न स्यादित्यत आह ।। **स्कान्दे चेति ।।** बाह्या ब्रह्माण्डात् । अथ कचित्तत्वानामेवायं क्रमः श्रूयते चेत्तत्रापि ब्रह्माण्डान्तरभिव्यक्तौ ज्ञानिनां तत्वापरोक्षे च क्रमोऽसौ ज्ञातव्यः । अधमानां तत्वानां प्रथममभिव्यक्तेरिति भावेन वाक्यशेषमुदाहरति ।। अन्तरिति ।। अन्तर्ब्रह्माण्डस्य देहस्य वा व्यक्तौ विपरीतक्रम इत्यत्र लिङ्गं यस्मादिति । अतः श्रुत्यविरोधेन सर्वेषामपि व्युत्क्रमालयसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

मनःशब्दो हि तत्त्वे इत्यत्र तत्त्वे ब्रह्माण्डावरणभूतमनस्तत्त्व इत्यर्थः । अन्तःकरणपदेन स्थूलमनस्तत्त्वजन्यं देहिनां देहान्तरे विद्यमानं मनोरूपमिन्द्रियं गृह्यते । तथा विज्ञानशब्दोऽपि तत्वे इत्यत्र तत्वे तद्वत्ततोऽपि स्थूलावरणभूतविज्ञानतत्त्वे इत्यर्थः । बोध इत्यस्य त्रिक्षणावस्थायिनि घटपटादिज्ञान इत्यर्थः । चराचरेष्वालोचनाद्विज्ञानं भवतीति वदता चराचरस्थप्राणात्प्राण-प्रेरणयाऽऽलोचनं भवति । तेन च विज्ञानं भवतीति समग्रश्रुतेरर्थस्सूचितः । अल्पाक्षरत्वाज्जीव-व्यपाश्रय इति वक्तव्ये यच्चराचरग्रहणं तन्मनसस्तज्जन्यबोधस्य च जीवेष्वभावे चरे सञ्चरणाद्य-

(गुर्वर्थदीपिका)
सम्भवात् । अचरेऽपि स्वतः सञ्चरणाभावेऽपि परदत्तजलपानादिनाऽभिवृद्ध्यसम्भवादिति न हेतुसूचनार्थम् ।

## भावबोधः

सूत्रे तद्व्यपदेशः स चासौ व्यपदेशश्च तद्व्यपदेशो मनोविज्ञानमिति व्यपदेशः चराचर-व्यपाश्रयः स्यात् । यद्यपि चञ्चलान्तःकरणावबोधरूपचरतत्त्वरूपाचरविषयकः स्यात् । तथापि 'प्राणान्मनो मनसश्च विज्ञानम्' इति श्रुतौ तद्व्यपदेशस्तु भाक्तः । अन्तःकरणावबोधरूप-भागविषयक इति सूत्रांशयोजनामभिप्रेत्य प्रवृत्तं मनसश्च विज्ञानमिति व्यपदेशश्चराचरेषु भागापेक्षया स्यात्, न विज्ञानतत्त्वापेक्षयेति भाष्यं व्याचष्टे– **मनःशब्दो हीत्यादिना** ॥ अनेन मनस्तत्त्वविज्ञानतत्त्वान्तः करणावबोधरूपचराचरेषु मध्येऽन्तःकरणावबोधरूपभागापेक्षयेति न्यायविवरणं योजितं भवति । इदानीं च 'चराचरव्यपाश्रयः' स्थावरजङ्गमरूपसर्वविषयको यस्तद्भावो मनोभाव आलोचनमिति यावत् । तेन भावित्वादुत्पन्नत्वादवबोधस्येति तद्भावभावि-त्वादिति समासान्तर्गतस्यापि बुद्ध्या विविक्तस्य तद्भाव इत्यस्य चराचरव्यपाश्रय इत्येतद्विशेषण-मभिप्रेत्य प्रवृत्तं चराचरेष्वालोचनाद्विज्ञानं भवतीति भाष्यं व्याचष्टे– **चराचरविषय इति** ॥ अनेन सौत्र'चराचरव्यपाश्रय'शब्दस्तद्विषयकपर इति ज्ञापनाय भाष्ये चराचरेष्विति विषयसप्तमीनिर्देश इत्युक्तं भवति । अनेन तल्लिङ्गस्य तु चराचरव्यपाश्रयविज्ञानादिविषयत्वेनैव सावकाशत्वादिति न्यायविवरणमुक्ततात्पर्यम् । न्यायविवरणे आदिपदेन मनोग्रहणमिति ज्ञातव्यम् । सूत्रे चराचरव्यपाश्रयत्वस्य व्यपदेशस्तद्भाक्तयोरपि विशेषणज्ञापनाय 'चराचरव्यपाश्रय' इति पृथङ्-निर्देशः कृत इति ज्ञातव्यम् । यद्वा, तद्भावेति तच्छब्दस्तन्त्रन्यायेन प्रकृतस्य चराचरस्य मनसश्च परामर्शकत्वेन सप्तम्यन्तः षष्ठ्यन्तश्चोपात्तः । तथा च तेषु चराचरेषु तस्य मनसा भावेन विज्ञानभावित्वादिति सूत्रार्थ इत्यभिप्रेत्य प्रकृतं चराचरेष्विति भाष्यं व्याचष्टे– **चराचरविषयेति** ॥ न च लोकदृष्ट्यनुसारित्वरूपयुक्तिविरोधः, विज्ञानतत्त्वस्य मनस्तत्त्वापेक्षया सामर्थ्याधिक्यस्य प्रमितत्वेन युक्तेः पूर्वाधिकरणन्यायेनैव निरस्तत्वात् समसामर्थ्यस्यापि सम्भवादित्यस्य निर्मूल-त्वेनैवोपेक्षणीयत्वादिति ॥ **तत्त्वापरोक्ष्येति** ॥ अत्र 'यस्मादन्ते हरे दृशिः' इति वक्ष्यमाणानुरोधेन तत्त्वशब्देन तत्त्वाभिमानिदेवतानामपि ग्रहणम् । अत्राद्ये– लिङ्गमात्रेण पूर्वपक्षिते श्रुत्यादि-रूपविशेषप्रमाणाभावोक्त्या सिद्धान्तः । द्वितीये– लिङ्गस्य सावकाशत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

अस्त्येवेति कृतचोद्यस्य कः परिहार इत्यतो भाष्याद्यभिमतं स्वयमाह ॥ **यद्यपीति** ॥ **विज्ञानेति** ॥ विज्ञानतत्वात्तु मन इति भाष्यस्थस्मृतेरिति भावः । श्रुतिविरोधनिरासकतया भाष्यं व्याख्यातुमवतारयति ॥ **न च मनसश्चेति** ॥ भाष्ये चराचरेष्वित्युक्तबहुवचनोपपत्तये चराचर-शब्दितमनोविज्ञानशब्दार्थानाह ॥ **मनःशब्दो हीति** ॥ भाष्यमिदानीं व्याचष्टे ॥ **अयं चेति** ॥ मनसश्च विज्ञानमिति व्यपदेश इत्यर्थः । चराचरेष्वित्यस्यार्थः साधारणमनोविज्ञानराश्योरिति । चरशब्देन चञ्चलत्वान्मनोरूपमिन्द्रियं मनोवृत्तिरूपं ज्ञानं च गृह्यते । अचरशब्देनाचञ्चलत्वा-न्मनस्तत्वं विज्ञानतत्वं च गृह्यते इति भावः । भागापेक्षया स्यादित्यादेरर्थः इन्द्रियेत्यादि । तथा च मनसश्च विज्ञानमित्यस्य मनसो मनोरूपान्तरिन्द्रियाद्विज्ञानं वृत्तिरूपज्ञानमुत्पन्नमित्यर्थः ।

ननु मनसो विज्ञानानुत्पत्तिरेवास्मिन्पक्षेऽपि बाधिकेत्यत आलोचनाद्विज्ञानं भवतीति भाष्य-मवतारयति ॥ **न चेन्द्रियादीति** ॥ तल्लिङ्गस्य तु चराचरव्यपाश्रयविज्ञानादिनियतत्वेनैव (विषयत्वेनैव) सावकाशत्वादिति न्यायविवरणरीत्या चराचरेष्वित्येतदत्रापि जङ्गमस्थावरार्थकं सद्विषयसप्तम्यन्ततयान्वेतीति भावेन व्याचष्टे ॥ **चराचरविषयेति** ॥ भाष्यस्य सूत्राविसंवादाय तद्भावभावित्वादित्यंशार्थमाह ॥ **मनोभावेनेत्यादि** ॥ **अत इति** ॥ श्रुतेरन्यविषयतया सावकाशत्वादित्यर्थः । सूत्राक्षरार्थस्तु चन्द्रिकायां स्पष्टः । तन्त्रदीपिकायां चास्माभिर्विवृतः ॥ **इत्यत आहेति** ॥ स्मृतौ विज्ञानतत्वान्मनस्तत्वजन्मोक्तेस्तद्विरोधापत्तेर्न तत्वविषयं श्रुतिवाक्यमिति भावः । अन्तस्तद्व्यक्त्यपेक्षयेति भाष्यं प्रकृतानुपयोगीत्याशङ्क्य मैवं तत्वानां पूर्वसृष्टिर्हि परादव्यक्तमिति स्मृत्युक्तमिति स्मृत्युक्तक्रमेणैव कचित्तत्वानामेवायं पूर्वपक्ष्यभिप्रेतो विपरीतक्रमः श्रूयते चेत्सा श्रुतिर्ब्रह्माण्डान्तःसृष्ट्यभिप्राया बहुश्रुतिसङ्ग्राहकरूपस्मृतिस्तु बाह्यसृष्ट्यभिप्राया । यद्वा विपरीतक्रमश्रुतिः ज्ञानिनं प्रति स्वदेहे तत्वाभिमानिदेवतानामापरोक्ष्यक्रमाभिप्राया । द्वारपालदर्शनानन्तरं राज्ञ इवाधमदेवतादर्शनानन्तरम् अन्ते हरिदर्शनादिति परिहारद्वयोक्त्यर्थ-त्वादुत्तरभाष्यस्येत्यभिप्रेत्य व्याचष्टे ॥ **अथ कचित्तत्वानामेवेति** ॥ अभिव्यक्तौ सृष्टौ ॥ **अत इति** ॥ मनसश्चेति श्रुतेरन्यपरत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**परमात्मापि लीयत एवेति ॥** अनेन 'परमात्मापि न लीयत' इति भाष्यस्थनञः, उत्कर्षेण 'परमात्मापि लीयत' इत्यन्तः पूर्वपक्षः, नेति सिद्धान्त इति सूचितं भवति ॥ **स्वातन्त्र्यस्यापीति ॥** ननु लीलया विग्रहग्रहणपरित्यागेन लयोपपादनमनुपपन्नं, प्रागुक्तजगज्जन्मादिकारणत्वविरोधित्वात् । अपरिहार्यमेव लयादिकम् । दोषत्वात्, जगज्जन्मादिकारणत्वविरोधि, न तु लीलया प्राप्तं, न हि लीलया बालकैस्ताड्यमानो राजा न राजा भवति येनेश्वरो जगज्जन्मादिकारणं न स्यात् । इति चेत्, न ब्रूमो वयम् । लीलया विनाशो भवतीति । येनोक्तदोषः स्यात् । किं नाम यथा लीलया कुड्यात् कुड्यमुत्पततः अवर्जनीयः पातः, एवं लीलया विग्रहं गृहीतवतोऽपि अवर्जनीयो विनाश इति । सति च विनाशे दोषित्वात् न सर्वजगत्कारणत्वमिति युक्त एव पूर्वपक्षः । ततश्चैवं योजना लीलया विग्रहग्रहणे सति परित्यागोपपत्तेरिति ॥ **न च श्रुत्यन्तरबलादिति ॥** 'अर्थान्तरं परिकल्प्यत' इत्यनुवर्तते । 'परो गुणैः' इति भाष्ये तृतीयाश्रवणात् ईश्वरनिष्ट परत्वं गुणकृतमिति न मन्तव्यमिति भावेनाह– **गुणेभ्य इति ॥** ईश्वरस्य गुणा लिङ्गानीति भावः ।

पूर्वपक्षस्तु – न विष्णोः श्रुतिसमन्वयेन सकलजगज्जन्मादिकारणत्वं युक्तम् । तस्य विनाशित्वात् । 'अन्तस्तसि निलीन' इति श्रुतेः । न च 'नित्यो नित्यानाम्' इति श्रुतिविरोधः । ईश्वरो विनाशी चेतनत्वादिति युक्तिसहितत्वेन विनाशश्रुतेः प्राबल्यात् । न च स्वातन्त्र्येण हेतुना ईश्वरस्यानुत्पत्तेः साधितत्वाद्विनाशायोगः । स्वतन्त्रस्यापि लीलया विग्रहग्रहे सति अवर्जनीयपातोपपत्तेः । तद्यथा लीलया कुड्यात्कुड्यमुत्पततः पातः, न हि उत्पतनं लीलयेति पातोऽपि लीलया, अपि तु कारणान्तरादवर्जनीयः । अतः सयुक्तिकश्रुतिविरोधेनाऽन्य-श्रुतेरप्रामण्यान्नोक्तसमन्वयो युक्त इति ।

सिद्धान्तस्तु – युक्तमेव विष्णोर्जगत्कारणत्वं प्रलयस्याऽप्रामाणिकत्वात् । न च 'अन्तस्तमसि निलीन' इति श्रुतिरत्र प्रमाणम् । 'अन्तस्तमसि निलीन' इत्युक्त्वा पुरुषादीन् स्वयं पश्यति । 'नैनं पश्यति कश्चन' इति वचनेन निलीनशब्दस्याऽपिहितार्थत्वात् । अन्यथा 'नित्यो नित्यानाम्' इत्यादि बहुश्रुतिविरोधः स्यात् । अतः श्रुत्यविरोधेन परमात्मलयस्य निरस्तत्वात् युक्तं तस्मिन् श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रं सङ्गमयितुमुपक्रममाह ॥ **यद्यपीति** ॥ सूत्रे चरशब्दप्रयोगेन चञ्चलत्वादन्तःकरणावबोधौ। अचरशब्देन मनोविज्ञानतत्वे गृह्येते । चराचरशब्दाभ्यां जङ्गमस्थावरात्मकं जगच्च गृह्यते । तुशब्दोऽप्यर्थेऽवधारणे च । तद्व्यपदेश इति द्विरावर्तते । एकस्य मनोविज्ञानशब्द इत्यर्थः परस्य मनसस्तु विज्ञानमिति व्यपदेश इत्यर्थः । भागार्थकभक्षतेर्भावे क्तप्रत्यये क्तिन्प्रत्यये वा निष्पन्नाद्भक्तभक्तिशब्दाद्वा तस्येदमिति विषयविषयिभावेन प्रत्यये भाक्तइत्यस्य भागविषय इत्यर्थः। स्यादिति भवतीत्यर्थे विभक्तिरूपकमव्ययं सम्भावनायां वा । तद्भावेत्यत्र तदिति मनः । भावो भावना आलोचनम् । चराचरव्यपाश्रयेति प्रातिपदिकं तद्भावविशेषणत्वेनानुवर्तते । ततश्च तद्व्यपदेशः मनोविज्ञानशब्दः लोके चराचरव्यपाश्रयो भवति । अन्तःकरणावबोधमनस्तत्व-विज्ञानतत्वलक्षणराशिद्वयविषयो भवति । अतस्तद्व्यपदेशश्च मनसश्च विज्ञानमिति कार्यकारण-भावव्यपदेशोऽपि चराचरव्यपाश्रयः स्यात् । तद्रीत्या तत्वपरः मद्रीत्या इन्द्रियावबोधपर इति राशिद्वयसाधारणः सम्भावितः स्यात् । तथाप्यत्र मनोविज्ञानराश्योरिन्द्रियावबोधाख्यभागविषय एव भवेन्न तु मनो विज्ञानतत्वविषयः । बाधकाभावात् । प्रत्युत चराचरव्यपाश्रयेण, स्थावर, जङ्गम, विषयेण तद्भावेन मनःप्रणिधानरूपालोचनेन तद्भावस्य मनोवृत्तिज्ञानस्य, भावितत्वात् इति सूत्रार्थं मत्वा यथाभाष्यं व्याख्याने चराचर व्यपाश्रय इति भिन्नपदस्यानन्वितत्वाच्चराचरव्यपाश्रय इति पृथगुपादानमहिम्ना लब्धमर्थं वदन् भाष्यार्थमाह **मनःशब्दो हीत्यादिना** ॥ अयं क्रमः पूर्वपक्ष्यभिप्रेतक्रमः । ब्रह्माण्डान्तराभिव्यक्ताविति ब्रह्माण्डमध्ये तत्वाभिमानिनां देहोत्पत्ति-लक्षणाभिव्यक्तावित्यर्थः । यद्वा तस्मिन् प्रविष्टा हरिणैव सार्धमित्युक्तरीत्या ब्रह्माण्डे प्रवेशे-नाभिव्यक्तावित्यर्थः ॥ **तत्वापरोक्ष इति** ॥ तत्वाभिमानिसाक्षात्कार इत्यर्थः । अंतरित्यनन्तरं शेषमाह ॥ **ब्रह्माण्डस्य देहस्यचेति** ॥ व्यक्तावित्याद्युत्तरवाक्यम् । अत्राद्योक्तविशेषप्रमाण-भावस्यासिद्धिं परिहर्तुं द्वितीयसूत्रमिति क्रमः ।

## तत्त्वसुबोधिनी

सूत्रे तद्व्यपदेशः स चासौ व्यपदेशस्तद्व्यपदेशः मनसश्च विज्ञानमिति व्यपदेशः । चराचर-व्यपाश्रयः स्यात् । यद्यपि चञ्चलान्तःकरणबोधरूपचरतत्वविषयकः स्यात् तथापि प्राणान्मन इति

(तत्वसुबोधिनी)

श्रुतौ तद्व्यपदेशस्तु भाक्तः अन्तःकरणाववोधरूपभागविषय इति सौत्रांशयोजनामभिप्रेत्य प्रवृत्तं मनसश्च विज्ञानमिति भाष्यं व्याचष्टे ॥ **मनःशब्दो हीति** ॥ अनेन मनस्तत्वविज्ञान-तत्त्वान्तःकरणाववोधरूपचराचरेषु मध्ये अन्तःकरणाववोधरूपभागापेक्षयेति भाष्यं योजितं भवति । भजतिर्भागसेवयोरिति वचनात् भागार्थस्य भजतेर्भावे क्तप्रत्ययान्तात् भक्तशब्दाद्वाक्तिन् प्रत्ययान्तात् भक्तिशब्दाद्वा तस्येदमिति सम्बन्धसामान्ये विहिताणप्रत्ययान्तस्य भाक्तशब्दस्य भागविषयवाचकत्वं युक्तमित्यभिप्रेत्याह ॥ **अयं च व्यपदेशः इति** ॥ इन्द्रियाववोधाख्यभागविषय इति । यद्यपि मनःशब्दस्य मनस्तत्वमिन्द्रियं चेत्येको राशिरित्यर्थः । तथापि मनश्च विज्ञानमिति वाक्यस्थो मनोविज्ञानशब्दौ इन्द्रियाववोधरूपभागयोरेवर्क्तेर्त न तु मनस्तत्वविज्ञानतत्वयोरिति मनश्च विज्ञानमिति व्यपदेशो भागविषय इत्यर्थः । इदानीं चराचरव्यपाश्रयः स्थावरजङ्गमरूपसर्वविषयको यस्तद्भावः मनोभावः आलोचनमिति यावत् । तेन भावित्वात् उत्पद्यमानत्वात् अववोधस्येति तद्भागविषयत्वादिति समासान्तर्गतस्यापि बुध्या विविक्तस्य तद्भावभावित्वस्य चराचरव्यपाश्रय इत्येतद्विशेषणमित्यभिप्रेत्य प्रवृत्तं चराचरेषु आलोचनाद्विज्ञानं भवतीति भाष्यं व्याचष्टे ॥ **चराचर विषय इति** ॥ अनेन सौत्रचराचरव्यपाश्रयशब्दः तद्विषयकपर इति ज्ञापनाय भाष्ये चराचरेष्विति विषयसप्तमीनिर्देश इत्युक्तं भवति । सूत्रे चराचरव्यपाश्रयत्वस्य व्यपदेश तद्भावयोरुभयोरपि विशेषणत्वज्ञापनाय पृथङ्निर्देशः कृतः । यद्वा तद्भावेति तच्छब्दः तन्त्रन्यायेन प्रकृतस्य चराचरस्य मनसश्च परामर्शकत्वेन सप्तम्यन्तः षष्ट्यन्तश्चोपात्तः । तथा च तेषु चराचरेषु तस्य मनसो भावेन विज्ञानस्य भावित्वात् इति सूत्रार्थ इत्यभिप्रेत्य प्रवृत्तं चराचरेष्विति भाष्यं व्याचष्टे ॥ **चराचरविषये इति** ॥ न च लोकदृष्ट्यनुसारित्वरूपयुक्तिविरोधः । विज्ञानतत्वस्य मनस्तत्वापेक्षया सामर्थ्या-धिक्यस्य प्रमितत्वेन युक्तेः पूर्वाधिकरणे न्यायेनैव निरस्तत्वात् । समसामर्थ्यस्यापि सम्भवादित्यस्य निर्मूलत्वेनोपेक्षणीयत्वादिति अन्तस्तव्द्यक्त्यपेक्षयेत्यादिभाष्यं प्रकृतानुपयोगीति आशङ्क्य मैवं तत्वानां सर्वा सृष्टिर्हि परादव्यक्तमुत्पन्नमित्यादिभाष्योक्तस्मृत्युक्तक्रमेणैव । कचित्तत्वानामेवायं पूर्वपक्ष्यभिप्रेतविपरीतक्रमः श्रूयते चेत् सा श्रुतिः ब्रह्माण्डान्तःसृष्ट्यभिप्राया । बहुश्रुतिसङ्ग्रहरूपा स्मृतिस्तु बाह्यसृष्ट्यभिप्राया । विपरीतक्रमश्रुतिः ज्ञानिनं प्रति स्वदेहे तत्वाभिमानिदेवानाम-परोक्षक्रमाभिप्राया, द्वारपालदर्शनानन्तरमन्तर्दर्शनादिति परिहारद्वयकथनार्थत्वात् उत्तरभाष्य-स्येत्यभिप्रेत्योत्तरभाष्यं व्याचष्टे ॥ **कचित्तत्वानामेवेत्यादिना** ॥ **तत्वापरोक्ष इति** ॥ अत्र

(तत्त्वसुबोधिनी)

यस्मादन्ते **हरेर्दिशिरिति** वक्ष्यमाणानुरोधेन तत्वशब्देन तत्वाभिमानिदेवानामपि ग्रहणम् । अत्राद्ये लिङ्गमात्रेण पूर्वपक्षिते श्रुत्यादिरूपविशेषप्रमाणसद्भावोक्त्या सिद्धान्तः । द्वितीये तल्लिङ्गस्य सावकाशत्वोक्तिरिति । अत्र व्यपदेशस्तु मनसश्च विज्ञानमिति मनोविज्ञानयोः कार्यकारण-भावव्यपदेशस्तु भाक्तः स्यात् इन्द्रियावबोधरूपभागविषयत्वात् । चराचरात्मकसर्वविषयेष्वपि मनोभावरूपेणालोचनेनावबोधस्य भावित्वादुत्पद्यमानत्वात् इति समासान्तर्गततद्भावं प्रति अविशेषणस्यापि चराचरव्यपाश्रयत्वस्य पृथगुपादानं तु यद्यपि तद्व्यपदेशः मनोविज्ञानशब्दरूपो व्यपदेशः चराचरव्यपाश्रयः इति टीकोक्तरीत्या राशिद्वयविषयः तयोः चराचरत्वात् । इन्द्रियावबोधयोस्तु चञ्चलत्वेन चरत्वात् । तथापीह भागविषय इति योजनान्तरप्रदर्शनार्थमिति द्रष्टव्यम् । यद्वा तद्व्यपदेशः मनसश्च विज्ञानमिति व्यपदेशः चराचरव्यपाश्रयः स्यात् । यद्यपि चञ्चलान्तःकरणावबोधरूपचराचरतत्वविषयकः स्यात् । तथापि 'प्राणान्मन' इति श्रुतौ तद्व्यप-देशस्तु भाक्तः अन्तःकरणावबोधरूपभागविषयकः । कुतः? चराचरव्यपाश्रयः । स्थावरजङ्गमरूप-सर्वविषयको यस्तद्भावः मनोभावः ततो भावित्वात् उत्पद्यमानत्वात् अवबोधस्येत्यर्थः । यद्वा तद्भावेति तच्छब्दः तन्त्रेण प्रकृतस्य चराचरस्य मनसश्च परामर्शकत्वेन सप्तम्यन्तः षष्ठ्यन्तश्चो-पात्तः । तथा च तेषु चराचरेषु तस्य मनसो भावेन विज्ञानस्य भावात् इति अक्षरार्थः ।

## वाक्यार्थविवरणम्

अन्तःकरणे । अन्तरिन्द्रियभूत इत्यर्थः ॥ **अयं चेति** ॥ मनसश्च विज्ञानमिति व्यपदेश इत्यर्थः । मनश्शब्दवाच्यस्य विज्ञानशब्दवाच्यस्य चोक्तरीत्याऽनेकस्य सत्त्वान्मनोविज्ञान-राश्योरित्युक्तम् । मनसोऽवबोधस्य चरत्वं तत्त्वयोरचरत्वं मन्तव्यम् ॥ **इन्द्रियादिविषयत्वे** इति ॥ मनसश्च विज्ञानमित्यत्र मनश्शब्दस्यान्तःकरणरूपेन्द्रियविषयत्वे विज्ञानशब्दस्य चावबोधविषयत्वे तस्मात्तस्योत्पत्त्यसम्भवरूपा काचनानुपपत्तिर्नास्ति । कुत इति चेत् । अन्तःकरणेनाववोधोत्पत्तेः सुप्रसिद्धत्वेन तत्परतया मनसश्च विज्ञानमिति श्रुतेःसावकाशत्वादित्याह ॥ **चराचरेति** ॥ **आहेति** ॥ मनस्तत्त्वाद्विज्ञानतत्त्वोत्पत्तेरभावादित्याहेत्यर्थः । अथ कचित्तत्त्वानामेवायं क्रम इति । प्राणान्मनो मनसश्च विज्ञानमिति क्रमः । कचिच्छ्रुत्यन्तरे प्राणान्मनस्तत्त्वं मनस्तत्त्वाद्विज्ञानतत्त्व-मित्येवं रूपेण श्रूयते चेदित्यर्थः । ब्रह्माण्डान्तरित्यतः पूर्वं बहिष्ठानामिति शेषः ॥ ज्ञानिनां

(वाक्यार्थविवरणम्)

**तत्त्वापरोक्षे चेति** ॥ देह इति शेषः । कुत इत्यत आह ॥ **अधमानामिति** ॥ अभिव्यक्तः ब्रह्माण्डान्तः देहे ज्ञानिनामपरोक्षज्ञानकाले चेति शेषः ॥ **देहस्य वेति** ॥ देहस्यान्तरपरोक्षज्ञानकाले तेषामधमानां तत्त्वानामादावभिव्यक्त्यपेक्षयत्यर्थः ॥ **व्यक्तौ विपरीतक्रम इत्यत्रेति** ॥ देहस्यान्तरपरोक्षज्ञानकाले ज्ञानिनं प्रत्यधमतत्त्वव्यक्तिः पूर्वमित्यत्र ज्ञापकमित्यर्थः । यस्मादन्ते देहान्तर्विद्यमानसकलतत्त्वतदभिमानिसर्वदेवतासाक्षात्कारानन्तरमेव पश्चाद्धरेर्दर्शिर्जायत इति प्रसिद्धम् । इदं तु अधमतत्त्वानामादौ ज्ञानिनं प्रत्यभिव्यक्त्यङ्गीकार एवोपपद्यते, नान्यथेति तदपेक्षया विपरीतक्रमो. युक्त इति भावः ।

## वाक्यार्थमञ्जरी

अत्र चरेति चञ्चलत्वान्मनोरूपमिन्द्रियं तज्जन्यं ज्ञानं चोच्यते अचरेत्यचञ्चलत्वान्मनस्तत्वं विज्ञानतत्वं चोच्यते स्यादिति सम्भावनायां स चासौ व्यपदेशश्च तद्व्यपदेशस्तथा च तद्व्यपदेशः मनो विज्ञानमिति शब्दः चराचरव्यपाश्रयः स्यात् । यद्यपि मनस्तत्वान्तःकरणविज्ञानतत्वाव-बोधरूपचतुष्टयविषयकः सम्भावितः तथापि प्राणान्मनोमनसश्च विज्ञानमिति श्रुतौ तद्व्यपदेशस्तु भाक्तः अन्तःकरणावबोधरूपभागविषय एव न तु मनोविज्ञानविषयकः न चान्तःकरणावबोधक-विषयकत्वेऽनुपपत्तिरस्ति कुतः तद्भावभावित्वात् अत्र तदिति तन्त्रं तत्राद्यः सप्तम्यन्तश्चराचर-परामर्शकः चराचरशब्दौ च चेतनाचेतनात्मकसर्वपरौ द्वितीयश्च षष्ठ्यन्तो मनःपरामर्शकः तथा च तेषु चराचरेषु स्थावरजङ्गमात्मकसर्वविषये तस्य मनसो भावेन धर्मेणालोचनेनावबोधस्य भावित्वादुत्पन्नत्वादित्यर्थः ॥ **अधमानामिति** ॥ उभयत्रापि तत्वानां नीचक्रमेणाभिव्यक्तेरित्यर्थः । देहस्येत्यपरोक्षापेक्षया व्यक्तावपरोक्षे नीचक्रमेण व्यक्त्यङ्गीकार एव सर्वोत्तमस्य हरेरन्ते परोक्ष-ज्ञानमिति युज्यत इति भावः ।

॥ इति अन्तराधिकरणम् ॥

## १०. अथ आत्माधिकरणम्

**॥ ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥ १७ ॥**

'स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव' इति श्रुतेः परमात्माऽपि न लीयते । अश्रुतत्वाद्ब्रह्मलयस्य । निलीनशब्देनापिहितत्वमुच्यते । तुच्छेनाऽभ्वपिहितं यदासीत्, इति श्रुतेः । 'स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चन' इति पैङ्गिश्रुतिः । 'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ.उ. ५-१३) 'स नित्यो निर्गुणो विभुः परः परमात्मा' । 'नित्यो विभुः कारणो लोकसाक्षी परो गुणैः सर्वदृक् शाश्वतश्च' इत्यादि श्रुतिभ्यो नित्यत्वाच्च ।

॥ इति आत्माधिकरणम् ॥

## तत्त्वप्रदीपिका

नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः । अन्तस्तमसि निलीन इति श्रुतेः परमात्माऽपि लीयते पृथिव्यादिवदिति न मन्तव्यम् ॥ **अश्रुतत्वाद्ब्रह्मलयस्य** ॥ प्रत्युत 'तद्विलाप्य व्युत्तिष्ठते' 'स इदं सर्वं विसृजति' इत्यादेरस्या एव श्रुतेरपि परमात्मा न नश्यति । नचान्यत्र ब्रह्मलयः श्रुतः ।

## तत्त्वप्रकाशिका

अत्र परमात्मनि श्रुतिसमन्वयसिद्ध्यर्थं तल्लयविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सकलजगज्जन्मादिकर्ता परमात्मेत्युक्तम् । तस्य च लयप्राप्तौ तदनुपपत्तेरसौ निरसनीयः । सर्वोत्पत्तिलयकर्तृत्वेन प्रकृतः परमात्मा विषयः । लीयते न वेति सन्देहः । 'नित्यो नित्यानाम्' 'अन्तस्तमसि निलीन' इति श्रुतिविरोधः सन्देहबीजम् । तत्र सूत्रमुपन्यस्य पूर्वपक्षं सूचयन् व्याचष्टे ॥ **नात्मेति** ॥ परमात्माऽपि लीयते एव । 'तमसि निलीन' इति श्रुतेः । न चेयं श्रुतिर्नेश्वरविषयेति वाच्यम् । स इदं सर्वं विसृजति' इत्यादितल्लिङ्गात् । न चास्ति श्रुत्यन्तरमपीति वाच्यम् । विष्णुर्लयवांश्चेतनत्वाज्जीववदिति युक्तिसाहित्येन लयश्रुतेः प्राबल्यात् । न च वक्तव्यं स्वातन्त्र्य-हेतुना परमात्मनोऽनुपपत्तेरुक्तत्वात्कथं लय इति । स्वतन्त्रस्यापि लीलया विग्रहग्रहणपरित्यागो-

(तत्त्वप्रकाशिका)
पपत्तेः। अतः सयुक्तिकश्रुतिविरोधेनान्यश्रुतेरप्रामाण्यान्नोक्तसमन्वयो युक्त इति न वाच्यम्। कस्यामपि श्रुतौ ब्रह्मलयस्याश्रुतत्वादिति भावः। प्रस्थापयति प्रेरयति। आच्छादयत्यज्ञानेन।

ननु 'अन्तस्तमसिनिलीनः' इति ब्रह्मलयस्य श्रुतत्वात्कथमुच्यतेऽश्रुतत्वमित्यत आह ॥ **निलीनेति** ॥ कुतो निलीनश्रुतिरपिहितत्वपरेत्यत आह ॥ **तुच्छेनेति** ॥ अस्यां श्रुतौ 'नासदासीत्' इत्यादिना सर्वस्य लयमुक्त्वा तम आसीदिति प्रकृतेरवस्थानमभिधाय ब्रह्मणस्तदपि हितत्वं पुनः प्रादुर्भावश्चोच्यते। अतस्तत्समाख्यानादत्रापि निलीनशब्दोऽपि हितत्वार्थ एवेति भावः। ब्रह्मणो निलीनत्वमपि हितत्वमेवेत्यत्र श्रुतिं चाह ॥ **स इति** ॥ निलीन इत्युक्त्वा पुरुपादीन्स्वयं पश्यति नैनं पश्यति कश्चनेति वचनान्निलीनशब्दोऽपि हितार्थे प्रयुक्त इति ज्ञायत इति भावः। किमर्थमेवं निलीनश्रुतेरर्थान्तरं परिकल्प्यते लय इत्येवार्थः किं न स्यात्। समाख्यादीनां श्रुतेर्दुर्बलत्वात्। न च श्रुत्यन्तरबलात्। तस्याप्रामाण्योपपत्तेरित्यत आह ॥ **नित्य इति** ॥ नित्यत्वश्रुतिविरोधा-दर्थान्तरमेव युक्तम्। न च तदप्रामाण्यम्। बाहुल्येन प्राबल्यात्। न च सयुक्तिकाया अपि प्राबल्यम्। श्रुतिविरुद्धयुक्तेः स्वयममानत्वादिति भावः। गुणैर्गुणेभ्यः। न चोदाहृतश्रुतीनां स्वरूपविपयत्वं वाच्यम्। 'नित्यो नित्यानाम्' इति देहनित्यत्वस्याप्युक्तत्वात्। अतः श्रुत्यविरोधेन परमात्मलयस्य निरस्तत्वाद्युक्तस्तस्मिन् श्रुतिसमन्वय इति सिद्धम्।

## गुर्वर्थदीपिका

युक्तिसाहित्येन लयश्रुतेः प्राबल्यादित्यत्र तर्हीदमधिकरणं युक्तिसहितश्रुतिविरोधपरिहारात्मक-चतुर्थपादे प्रवेशनीयमिति न शङ्कनीयम्। तत्र युक्तीनामपि श्रौतत्वस्याभिप्रेतत्वादिति ज्ञेयम्। प्रस्थापयति इतस्ततो जीवानां प्रस्थापनं यात्रां कारयतीति व्युत्पत्तिमभिप्रेत्याऽऽह– **प्रेरयतीति** ॥ इदं चोपलक्षणम्। विस्थापयति उत्तमाधमाख्यविभागेन स्थापयतीत्यपि द्रष्टव्यम्। तस्या-प्रामाण्योपपत्तेरित्यत्र तस्य निलीनशब्दस्यार्थान्तरबोधकश्रुत्यन्तरस्याप्रामाण्योपपत्तेः युक्तिसहितलय-श्रुतिविरोधेनाप्रामाण्योपपत्तेरित्यर्थः। इत्यादिश्रुतिभ्यो नित्यत्वाच्चेति वदता बहुश्रुतिपु नित्यत्वस्य श्रुतेः 'नात्मा लीयत' इति श्रुतेरर्थान्तरं च सूचितम्।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **सर्वोत्पत्तिलयकर्तृत्वेन प्रकृत इति** ॥ पूर्वाधिकरणे विप्रतिपत्तिनिरासेन ब्रह्मव्यतिरिक्तस्य सर्वस्य लयोक्तौ तर्हि ब्रह्मणोऽपि चेतनत्वेन तत्साम्याल्लयः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **लीयत इति** ॥ अत्र परमात्मा लीयते न वेति चिन्ता । तदर्थमन्यस्तमसि निलीय इति श्रुतिर्ब्रह्मणो देहलये प्रमाणं न भवत्युत भवतीति । तदर्थं सा श्रुतिश्चेतनत्वयुक्तियुक्तत्वेन निरवकाशोतापिहितत्वपरत्वेन सावकाशेति । तदर्थं श्रुति-सावकाशत्वयुक्त्याभावसत्त्वयोः कल्पकं ब्रह्मणो देहनित्यत्वसाधकं प्रमाणं नास्त्युतास्तीति । 'स इदं सर्वं विसृजति' इत्यादिलिङ्गादित्यनेन भाष्येऽधिकांशोदाहरणस्य प्रयोजनमुक्तम् । भाष्ये परमात्मापीत्यपिशब्दसूचितां चेतनत्वेन साम्याद्विष्णोरपि देहलय इति न्यायविवरणोदाहृतां युक्तिमाह– **विष्णुर्लयवानिति** ॥ 'असम्भवस्तु' इत्यधिकरणेन गतार्थत्वं निरस्यति– न च **वक्तव्यमिति** ॥ **स्वातन्त्र्यस्यापीति** ॥ तथा च स्वातन्त्र्यस्याप्रयोजकत्वादनुत्पराक्षेपेणैवं-तदधिकरणप्रवृत्तिरिति भावः । ब्रह्मलयस्याश्रुतत्वादित्यनेन श्रुतत्वाच्चान्यथेति न्यायविवरणमपि व्याख्यातं भवति । **प्रादुर्भावश्चोच्यत इति** । 'तपस्तन्महिमा जायतैकम्' इति श्रुतिशेषेणेत्यर्थः ॥ **बाहुल्येनेति** ॥ अनेन ताभ्य इति सूत्रगतस्य श्रुतिभ्य इति भाष्यगतस्य बहुवचनस्य प्रयोजनमुक्तं भवति ॥ **देहनित्यत्वस्याप्युक्तत्वादिति** ॥ अनेन 'सर्वा एते चिदात्मनो ब्रह्मलयमनुप्राप्य विष्णोरुदरे संविशन्ति' इति तस्योदरे सर्वसङ्ग्रहणादिश्रुतिभ्यो नित्यत्वावगतत्वात्तदेहस्येति न्यायविवरणमुक्तार्थं भवति ।

## भावदीपः

चिन्तायाः फलमाह ॥ **सकलेति** ॥ अत्रैवैतद्विचारे किं निमित्तमित्यत आह ॥ **सर्वोत्पत्ती-त्यादि** ॥ तथा चात्रैवावसरप्राप्तोऽयं विचार इति भावः । इति श्रुतेः परमात्माऽपि न लीयत इत्युक्तेर्विरोधनिरासायाह ॥ **पूर्वपक्षं सूचयन्निति** ॥ तथैव भाष्यं व्याचष्टे ॥ **परमात्माऽपीति** ॥ भाष्ये तमसि निलीन इत्येतावत्येव वाच्ये शेषोक्तेरुपयोगं शङ्कापूर्वमाह ॥ **न चेयमिति** ॥ चेतनत्वसाम्याद्विष्णोरपि देहलय इत्यन्यत्रोक्तयुक्तिं शङ्कापूर्वं व्यनक्ति ॥ **न चास्ति श्रुत्यन्तर-**

(भावदीपः)

**मिति ॥** नित्यो नित्यानामित्येतदित्यर्थः । ननूत्पत्तिमत्वाल्लीयन्त इति सिद्धमिति प्रागुक्त-न्यायेनेश्वरस्याप्यसम्भवस्त्विति नये पराधीनविशेषावास्यभावरूपानुत्पत्तिमत्त्वोक्त्यैव लयाभावोऽपि सिद्ध इति तेनैवेदं गतार्थमित्याशङ्क्य निराह ॥ **न च वक्तव्यमित्यादिना ॥ अत इति ॥** लयश्रुतेः प्राबल्यादित्यर्थः । भाष्यादिस्थनञोऽन्वयमाह ॥ **इति न वाच्यमिति ॥** एतेन सूत्रे तमसि निलीन इति श्रुतेरात्मा लीयत इति न । अश्रुतेरिति पूर्वस्मादिति पदानुवर्तनं न प्रकृतलयान्वयेन च योजना सूचिता । अर्थतस्समाख्यात्वद्योतनाय तुच्छेनेति श्रुतेः संक्षेपेणार्थमाह ॥ **अस्यामिति ॥** आनुमानिकनये तदनन्यत्वनये चैषा श्रुतिरर्थतः सम्यग्व्याख्यातेति भावः ॥ **प्रादुर्भावश्चेति ॥** तपसस्तन्महिना जायतेति शेषेणेति भावः । अत एव भाष्ये स इदं सर्वं विलाप्येति व्युत्तिष्ठत इति च पूर्वोत्तरशेषोक्तिरर्थसाम्यद्योतनाय कृता । अत इति अर्थतः साम्यादित्यर्थः । यथा पुरुषविधमपि चैनमधीयत इत्यर्थतः पुरुषसूक्तसमाख्यानाद्वैश्वानरविद्योक्तो विष्णुरेवेत्युक्तं वैश्वानरनये पुरुष-विधमपि चैनमधीयत इति सूत्रे तद्वदिति भावः ॥ **समाख्यादीनामिति ॥** प्रकृते समाख्या-मात्रत्वेऽप्येवमुक्तिः शब्दादेवेत्यत्रोक्तन्यायस्मारणार्था । अत एव लिङ्गादीनामित्यनुक्त्वा प्रकृत-समाख्यापूर्वकतया लिङ्गादेर्ग्रहणम् । श्रुतेर्निलीनशब्दादित्यर्थः ॥ **श्रुत्यन्तरेति ॥** नित्यो नित्यानामिति श्रुत्यन्तरेत्यर्थः । अर्थान्तरं परिकल्प्यत इत्यनुषङ्गः । कथमुक्ताशङ्कानिरास इत्यतो बहुवचनतात्पर्यमाह ॥ **नित्यत्वेति ॥** गुणैरुत्कृष्ट इति भ्रमनिरासायाह ॥ **गुणैर्गुणेभ्य इति ॥** सत्त्वादिभ्य इत्यर्थः । सर्वे वा एते चिदात्मानो ब्रह्मलयमनुप्राप्य विष्णोरुदरे संविशन्तीति तस्योदरे सर्वसङ्ग्रहादिति श्रुतिभ्यो नित्यत्वावगमाच्च तद्देहस्येत्यन्यत्रोक्त्यनुरोधेन नित्योनित्यानामिति श्रुत्युक्तेर्भाविम् शङ्कापूर्वमाह ॥ **न चोदाहृतेति ॥** स्वरूपतो नित्यानामपि सकाशान्नित्यत्वोक्ति-र्देहतोऽपि नित्यत्वाभिप्रायेति भावः । 'जगृहे पौरुषं रूपम्' इत्यादि तु प्रथमस्कन्धतात्पर्ये जगृह इति तु व्यक्तिरिति चतुर्थगीताभाष्ये च व्याख्यातम् । तथा ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः । प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् । त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः । अवतीर्णो हि भगवान्स्वेच्छोपात्तपृथग्वपुरित्यादिपुराणवाक्यानि तु एकादशस्कन्धतात्पर्यादौ सम्यग्व्याख्यातानीति भावः । **अत इति ॥** निलीनश्रुतेर्नित्यत्वश्रुतिबाहुल्येनापि हि तत्वार्थत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

**तस्य लयप्राप्ताविति** ॥ चेतनत्वेन पूर्वदृष्टान्तेन तस्यापि लयप्राप्तावित्यनेनानन्तरसङ्गतिं सूचयति । परमात्मा लीयते नवेतिचिन्ता । तदर्थम् अन्तस्तमसि निलीन इति श्रुतिर्देहलयपरा । उतापिहितत्वमात्रपरा वेति । तदर्थमपिहितत्वमात्रपरत्वे ज्ञापकमस्ति न वेति ॥ **सूत्रमुपन्यस्य पूर्वपक्षमिति** ॥ सूत्रे श्रुतेरश्रुतेरिति च द्वेधा विच्छेदः । तमसि विलीन इति श्रुतेरात्मा लीयत इति नेति योजनायां सूत्र एवपूर्वपक्षलाभादुपन्यस्य तत्सूचितं पूर्वपक्षं सूचयन् व्याचष्ट इत्यर्थः । 'स इदं सर्वं विसृजति' इति वाक्यशेषोपयोगमाह ॥ **न चेयमिति** ॥ परमात्माऽपि लीयत इति भाष्ये अन्यवच्चेतनत्वेन हेतुना परमात्माऽपि लीयत इति सूचितं जीवसाम्यमित्युक्तन्यायं सङ्गमयितुमाह ॥ **न चास्तीत्यादिना** ॥ असम्भवस्त्वित्यधिकरणन्यायेन गतार्थत्वं निरस्यति ॥ **न च वक्तव्यमिति** ॥ तस्याक्षेपोऽयमिति भावः । विग्रहग्रहणं परित्यागोपपत्तेरिति । उक्तजन्मलयव्यवहारस्यैव मुख्यत्वोपपत्तौ गौणाश्रयणमन्याय्यमिति भावः । ततश्च जीववदात्मा परमात्माऽपि लीयते तमसिविलीन, इति श्रुतेरिति न वाच्यम् । कुतः अश्रुतेः । कस्यामपि श्रुतौ ब्रह्मलयस्याश्रुतत्वादित्यर्थः ॥ **इत्यत आहेति** ॥ **श्रुतेरिति** ॥ सूत्रखण्डस्थ निलीनशब्दस्यापिहितत्वतात्पर्यकत्वे समाख्याश्रुतेरित्यर्थान्तरमाहेत्यर्थः ॥ **पुनःप्रादुर्भावश्चेति** ॥ तपसस्तन्महिना जायतैकमित्यंशेनेत्यर्थः । अत एव भाष्ये इदं सर्वं विलाप्य व्युत्तिष्ठते इति पूर्वोत्तरशेषोक्तिः ॥ **तत्समाख्यानादिति** ॥ अर्थतः समाख्यानादित्यर्थः ॥ **श्रुतिं चाहेति** ॥ प्रयोग ज्ञापनायेति शेषः ॥ एतेन श्रुतेरित्यस्य निलीनशब्दस्यापिहितत्वश्रुतेरित्यर्थान्तरमुक्तं ज्ञेयम् । स्वयं पश्यतीत्युक्त्या देहावगमात् । नैनं पश्यतीत्यप्रत्यक्षत्वोक्त्या चेत्यर्थः ॥ **प्रयुक्त इति** ॥ नास्माभिर्गौण्याश्रीयत इति भावः ॥ **समाख्यादीनामिति** ॥ आदिपदेन पश्यतीत्युक्तदर्शनान्यथानुपपत्तेः नैनं पश्यतीत्यप्रत्यक्षं प्रयोगस्य च ग्रहणम् । ताभ्यः श्रुतिभ्यो नित्यत्वावगमाच्चेति सूत्रखण्डव्यावर्त्यपूर्वमवतार्य भाष्यं योजयति **किमर्थमित्यादिना** ॥ ताभ्य इति बहुवचनेन लब्धं सर्वसङ्ग्रह इति न्यायं घटयितुमाह ॥ **बाहुल्येनेति** ॥ परत्वे गुणानां कर्तृत्वकरणत्वयोरभावादाह ॥ **गुणैर्गुणेभ्य इति** ॥ सत्वादिगुणेभ्योऽतिक्रान्त इत्यर्थः ॥ **देहनित्यत्वस्यापीति** ॥ स्वरूपनित्यत्वस्य इतर चेतनमात्रसाधारण्यात्ततोऽप्यतिशयेन नित्यत्वोक्तिर्देहनित्यत्वमादाय पर्यवस्यतीति भावः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **सर्वोत्पत्तिलयेति** ॥ पूर्वाधिकरणे विप्रतिपत्तिनिरासेन ब्रह्मव्यतिरिक्तस्य लयोक्तौ तर्हि ब्रह्मणोऽपि चेतनत्वेन तत्साम्यात् लयः स्यादिति पूर्वपक्षोत्थानात् अनन्तरसङ्गतिरिति भावः । स इदं सर्वं विसृजति' इत्यादितल्लिङ्गादित्यनेन भाष्येऽधिकांशो-दाहरणस्य प्रयोजनमुक्तम् ॥ **श्रुत्यन्तरमपीति** ॥ नित्यो नित्यानामिति श्रुत्यन्तरमित्यर्थः । असम्भवस्त्वित्यधिकरणेन गतार्थतां निरस्यति ॥ **न च वक्तव्यमिति** ॥ **स्वतन्त्रस्यापीति** ॥ तथा च स्वातन्त्र्यस्याप्रयोजकत्वात् अनुत्पत्त्यपेक्षेणैवैतदधिकरणप्रवृत्तिरिति भावः । विस्थापयति प्रस्थापयति पदयोः पौनरुक्त्यादाह ॥ **प्रस्थापयति प्रेरयतीति** ॥ **प्रादुर्भावश्चोच्यत इति** ॥ तमसस्तन्महिमा जायतैकम्' इति श्रुतिविशेषेणेत्यर्थः । समाख्यानुसारेणैवमर्थः क्रियत इत्यत आह ॥ **समाख्यादीनामिति** ॥ तस्याः षष्ठप्रमाणत्वादिति भावः । स एतस्मिन्निति श्रुत्यन्तरबलात् न लीनश्रुतेरर्थान्तरं कल्प्यत इत्यत आह ॥ **न चेति** ॥ **बाहुल्येनेति** ॥ ताभ्यः इति सूत्रगतस्य श्रुतिभ्य इति भाष्यगतस्य च बहुवचनस्य प्रयोजनमुक्तं भवति । गुणैः पर इति सत्वादिभिः पर इत्यर्थः प्रतीयते अत आह ॥ **गुणैर्गुणेभ्यः इति** ॥ **नित्यो नित्यानामिति** ॥ अन्यथा नित्यानामिति व्यर्थःस्यादिति भावः ।

## वाक्यार्थविवरणम्

**अनुत्पत्तेरुक्तत्वादिति** ॥ अनादिनो भावस्य लयाभावनियमादिति भावः ॥ **विग्रहेति** ॥ तथा च यथा कथञ्चिद्विग्रहग्रहणतत्परित्यागयोरेवोत्पत्तिलयशब्दार्थत्वेन तयोश्च परमात्मनि सत्त्वेन स्वातन्त्र्यमप्रयोजकमिति भावः । तुच्छेनेत्यत्र छान्दसः स्वार्थे यक्प्रत्यय इति ज्ञातव्यम् । प्रादुर्भावश्चोच्यते । 'तपसस्तन्महिमा जायतैकमिति' श्रुतिशेषेणेत्यर्थः ॥ **निलीन इत्युक्तेति** ॥ निलीनशब्दस्य नाशार्थकत्वे पुरुषादिद्रष्टृत्वोक्त्ययोगादिति भावः ॥ **श्रुतेरिति** ॥ निलीनश्रुतेः सावकाशत्वादित्यर्थः ॥ **श्रुत्यन्तरेति** ॥ 'स एतस्मिन्' इति श्रुत्यन्तरबलान्निलीनश्रुतेरर्थान्तरं परिकल्प्यत इति वर्तते । अर्थान्तरत्वम् । निलीनशब्दस्य । तदप्रामाण्यम् । तासां नित्यत्व-श्रुतेरप्रामाण्यमित्यर्थः । ननु बहुत्वेन नित्यत्वश्रुतीनां प्राबल्यवन्निलीनश्रुतेरप्युक्तचेतनत्वादि-युक्तिसहितत्वेन प्राबल्यान्नार्थान्तरं कल्प्यमित्यत आह ॥ **न चेति** ॥ सयुक्तिकायाः निलीनश्रुतेः ॥

(वाक्यार्थविवरणम्)

**श्रुतीति ॥** नित्यत्वश्रुतीत्यर्थः । उदाहृतनित्यत्वश्रुतीनां स्वरूपनित्यत्वाभिप्रायकत्वेन निर्लीनश्रुतः देहनाशपरत्वेनाविरोध इत्याशङ्क्य निषेधति **॥ न चेति ॥ नित्य इति ॥** स्वरूपतो नित्यानां जीवादीनां सकाशादप्यस्य विशिष्य नित्यत्ववचनं देहनित्यत्वं विना न सम्भवतीति भावः ।

## वाक्यार्थमञ्जरी

आत्मा परमात्मा न लीयते कुतः अश्रुतेः ब्रह्मलयस्याश्रवणात् ताभ्यो नित्यो नित्यानां स नित्यो निर्गुणः स नित्यो विभुरित्यादिश्रुतिभ्यस्तस्य नित्यत्वाच्चेत्यर्थः **॥ उक्तत्वादिति ॥** असम्भवस्तु सतोऽनुपपत्तेरित्यत्रेति शेषः **॥ प्रेरयतीति ॥** अतो न पुनरुक्तिरित्याशयः **॥ अपिहितत्वेति ॥** आच्छादितत्वेत्यर्थः **॥ प्रादुर्भावश्चेति ॥** 'तपसस्तन्महिमा जायतैकम्' इति श्रुतिविशेषेणेत्यर्थः । अपिहितार्थे प्रयुक्त इति लयादर्शनादिति भावः । श्रुत्यन्तरबलादित्यनन्तरमर्थान्तरं परिकल्प्यत इत्यनुवर्तते परत्वं प्रति गुणशब्दोक्तब्रह्मादेरवधित्वात्तत्र चापादाने पञ्चम्या भाव्यत्वादाह **॥ गुणेभ्य इति ॥** अप्रधानेभ्य इत्यर्थः **॥ देहनित्यत्वस्येति ॥** अन्यथा स्वरूपनित्यषष्ठ्यन्तनित्यपदोक्तजीवाधिक्यालाभादिति भावः ।

॥ इति **आत्माधिकरणम्** ॥

## ११. अथ ज्ञाधिकरणम्

### सूत्रभाष्यम्

'नित्यो नित्यानाम्' इति (कठ.उ. ५-१३) जीवस्यापि नित्यत्वमुक्तम् । 'सर्व एते चिदात्मानो व्युच्चरन्ति' इत्युत्पत्तिरुच्यते । अतो विरोध इत्यत आह–

**॥ ॐ ज्ञोऽत एव ॐ ॥ १८ ॥**

जीवोऽप्यत एव परमेश्वरादुत्पद्यते । शब्दादेव । 'ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन' इति च कापायणश्रुतिः ।

### तत्त्वप्रदीपिका

'नित्यो नित्यानां चेतनश्चेतनानामेको वहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्' इति कठश्रुतिः । सर्व एव आत्मानो व्युच्चरन्तीति श्रुत्यन्तरे ।

### तत्त्वप्रकाशिका

एवमधिभूताधिदैवपरमात्मविषयश्रुतिविरोधे निरस्तेऽत्र हरौ श्रुतिसमन्वयसिद्ध्यर्थं जीवजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सर्वजगत्कर्ता विष्णुरित्युक्तम् । तत्र जीवस्यानादित्वे तदनुपपन्नमिति तद् दूष्यं भवति । सर्वमध्यपतितो जीवोऽत्र विषयः । किमुत्पद्यते न वेति संशयः । संशयवीजं श्रुतिविरोधं दर्शयति ॥ **नित्य इति** ॥ नित्यत्वादेवानुत्पत्तिरिति भावः । व्युच्चरन्ति उत्पद्यन्ते । न जीव उत्पत्तिमानिति पूर्वः पक्षः । अनादित्वादीश्वरवत् । न च साध्याविशिष्टता हेतोः । प्रागभावशून्यताया विवक्षितत्वात् । न च तत्र विवादः । उत्पत्तेरेवाभाव-प्रसङ्गात् । कारणशून्यतां वाऽनादित्वं ब्रूमः । न च तत्रापि विवादः । कारणानुपलब्धेरेव । न चाकाशादीनामेवं भूतानामप्युत्पत्तिमत्त्वेन व्यभिचारः असम्प्रतिपत्तेः । श्रुतिश्चास्यानुत्पत्तिं ब्रूते । न च श्रुत्यन्तरविरोधः । अनादित्वश्रुतेर्युक्त्युपेतायाः प्रावल्यात्तद्विरोधेनाप्रामाण्यात् । न च देहादेरुत्पत्तेः प्रत्यक्षसिद्धत्वाद्बाधः । व्यधिकरणत्वात् । अतो न जगत्कारणे ब्रह्मणि श्रुतिसमन्वय-सिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ जीवोऽप्युत्पद्यत एव । स

(तत्त्वप्रकाशिका)

**चेश्वरादेव श्रुतिसिद्धत्वात् । न चानादित्वश्रुत्यादिविरोधः । नित्यत्वाविरोधेनैवोत्पत्तेः श्रुत्युक्तत्वादिति भावः ।**

## गुर्वर्थदीपिका

नित्यानां चेतनानां मध्ये नित्यश्चेतन इति योजनिकायां जीवस्यापि नित्यत्वसिद्धिरिति भावेनाह **जीवस्यापीति** । न च तत्र विवादः । उत्पत्तेरेवाभावप्रसङ्गादित्यत्र तत्र प्रागभावशून्यत्वे, विवादः नास्तीति विवादो न, जीवस्य प्रागभावशून्यत्वनास्तित्वं नाम प्रागभाववत्त्वमेव । तथा च यदा प्रलये जीवस्य प्रागभावस्तदा धर्माधर्माश्रयाभावेन धर्माधर्माख्यमदृष्टमपि न स्यात् । तथा च सर्वोत्पत्तिमन्निमित्तकारणाभावादुत्पत्तेरेवाभावप्रसङ्गात् यस्याः कस्याश्चिदुत्पत्तेरप्यभावप्रसङ्गादित्यर्थः । तदुक्तमनुव्याख्याने 'धर्माधर्माश्रयत्वेन स्वीकार्यश्च नरो लयः' इति । असम्प्रतिपत्तेरित्यत्र उत्पन्नत्वरूपसाध्याभावस्यासम्प्रतिपत्तेरित्यर्थः । शब्दादेवेति वदता भाष्यकारेणात इति शब्दस्याऽऽवृत्तिस्सूचिता । जीवस्योत्पत्तिमत्त्वे, तत्प्रागभावदशायां सर्वोत्पत्तिमन्निमित्तकारणा-दृष्टस्यैवाऽऽधाराभावेनाभावः स्यादित्यभ्यधिकाशङ्कया 'ज्ञोऽत एव' इत्यधिकरणारम्भ इति ज्ञेयम् ।

## भावबोधः

सूचीकटाहन्यायेनाल्पमधिभूतादिविचारं कृत्वेदानीमापादसमाप्ति बहुलो जीवविचार इति सङ्गतिमाह– **एवमिति ॥ किमिति ॥** अत्र जीवः किमुत्पत्तिमान्न भवति उत भवतीति चिन्ता । तदर्थं 'सर्व एते आत्मानो व्युच्चरन्ति' इति श्रुतिरनादित्वयुक्त्यनुगृहीतया 'नित्यो नित्यानाम्' इति श्रुत्या बाधितोताबाधितेति । तदनुत्पत्तिश्रुतियुक्त्योरुत्पत्तिश्रुतेश्च किं स्वरूपोत्पत्ति-रूपविरुद्धार्थविषयकत्वम् उत स्वरूपानुत्पत्तिपराधीनविशेषलाभरूपोत्पत्तिरूपाविरुद्धार्थ-विषयकत्वमिति । तदर्थं जीवस्य स्वरूपानुत्पत्तौ पराधीनविशेषलाभलक्षणोत्पत्तौ च विशेषप्रमाणं नास्त्युतास्तीति । अनादित्वाज्जीवस्य पराधीनविशेषप्राप्तिरिति न्यायविवरणानुसारेण पूर्वपक्षमाह– **न जीव उत्पत्तिमानिति ॥** यद्यपि पराधीनविशेषप्राप्तिरिति न्यायविवरणे सूत्रद्वयनिरसनीयं निष्कृष्टमेव पूर्वपक्षसाध्यमुक्तम् । जीवस्याप्युत्पत्तिरुच्यत इत्यादिभाष्यानुसारेण प्रथमसूत्रनिरसनीय-तया जीवो नोत्पत्तिमानिति सामान्येन साध्योक्तिः । अन्यथा विशिष्यसाध्यकरणे 'ज्ञोऽत एव'

(भावबोधः)

इत्यस्यैव तन्निषेधकत्वेन विशिष्य पराधीनविशेषलाभलक्षणोत्पत्तिप्रतिपादकत्वेन चानादिनित्यस्य जीवस्योत्पत्तिः श्रुतावपि कथं युज्यत इत्यादिव्याहतत्वशङ्कानुदयेन 'युक्तेश्चेति' द्वितीयसूत्रानवतार-प्रसङ्ग इति भावः । **उत्पत्तेरेवाभाव प्रसङ्गादिति** । जीवस्य प्रागभावं प्रति प्रतियोगित्वे सिद्धान्त्यभिमतायाः पूर्वं विद्यमानस्यैव जीवस्य देहोत्पत्तिरूपपराधीनविशेषलाभलक्षणो-त्पत्तेरेवाभावप्रसङ्गादित्यर्थः । यद्वा–

'धर्माऽधर्माश्रयत्वेन स्वीकार्योऽपि नरो लये'

इत्यनुव्याख्यानोक्तरीत्या प्रलये सर्वोत्पत्तिमन्निमित्तकारणादृष्टाश्रयत्वेन जीवसत्त्वस्याङ्गी-कार्यत्वात्तस्य प्रागभावप्रतियोगित्वे निराश्रयादृष्टासम्भवात् कारणाभावेन जगदुत्पत्तेरेवा-भावप्रसङ्गादित्यर्थः । **आकाशादीनामिति** ॥ अनादित्वरूपहेतुविशिष्टानामव्याकृताकाशादीनां पराधीनविशेषलाभरूपोत्पत्तिमत्त्वेन व्यभिचार इत्यर्थः । आकाशादीनां पक्षसमत्वेन न तत्र व्यभिचार इत्यभिप्रेत्याह– **असम्प्रतिपत्तेरिति** ॥ 'नित्यो नित्यानाम्' इति जीवस्यापि नित्यत्वमुक्तमिति भाष्यानुरोधादाह– **श्रुतिश्चेति** ॥ युक्तेश्चेति सूत्रानुरोधादाह– **न च देहोत्पत्ते-रिति** ॥ सौत्रस्य 'अत एव' इत्यस्य व्याख्यानान्तरपरं शब्दादेवेति भाष्यं व्याचष्टे– **श्रुतिसिद्ध-त्वादिति** ॥ अनेन 'इदं सर्वमसृजत' इति सर्वस्य गृहीतत्वादिति न्यायविवरणांशोऽपि व्याख्यातः ॥ **नित्यत्वाविरोधेनैवेति** ॥

## भावदीपः

एवं सूचीकटाहन्यायेनाल्पमधिभूतादिविचारं कृत्वाऽधुनाऽऽपादसमाप्ति बहुजीवविचारः क्रियते इति भावेन सङ्गतिमाह ॥ **एवमिति** ॥ **जीवजन्मेति** ॥ जीवजन्मविषये यः श्रुतिविरोधस्तत्परिहारादित्यर्थः । वियन्नयाद्विशेषाशङ्कानिरासपूर्वमिति योज्यम् । तेन ततोऽगतत्वं बोध्यम् । चिन्ताफलं दर्शयति ॥ **सर्वेति** ॥ सर्वकर्तृत्वाक्षेपसौकर्यायाऽऽह ॥ **सर्वमध्येत्यादिना** ॥ कथं जन्मश्रुतेर्नित्यत्वश्रुतेरुत्पत्तिश्रुतितः प्राबल्यायानादित्वाज्जीवस्य पराधीनविशेषाप्राप्ति-रित्यन्यत्रोक्तां युक्तिम् उपपादनसापेक्षत्वात्पूर्वमाह ॥ **अनादित्वादिति** ॥ **न च साध्येति** ॥ यद्यपीयं शङ्का न न्यायविवरणोक्तसाध्ये सम्भवति । तत्रानादित्वादित्यस्य स्वरूपोत्पत्तिशून्यत्वा-

(भावदीपः)

दित्यर्थसम्भवात् । तथापि न जीव उत्पत्तिमानिति प्रागुक्तस्वरूपोत्पत्त्यभावरूपसाध्य एवेयं शङ्का । न्यायविवरणेऽप्येवमेव साध्यस्य विवक्षितत्वात् पराधीनविशेषाप्राप्तिरित्युक्तिकृत्यमग्रे विवरिष्यामः ॥ **प्रागभावेति** ॥ प्रागभावशून्यत्वरूपहेतोर्विवक्षितत्वादित्यर्थः । हेतोरसिद्धिमाशङ्कते ॥ **न च तत्रेति** ॥ नित्यो नित्यानामिति श्रुतिप्रमितेऽपि प्रागभावशून्यत्वे विवादश्चेत् घटादेरपि उत्पत्तिर्लोकप्रसिद्धापि न स्यादित्याह ॥ **उत्पत्तेरेवेति** ॥ यद्वा अनुत्पत्ताविव प्रागभावशून्यतायामपि विवाद एव तयोरभेदादिति भावेन शङ्कते ॥ **न च तत्रेति** ॥ प्रागभावशून्यत्वमनुत्पत्तितोऽन्यदित्यत्रापीत्यर्थः । प्रागभावशून्यत्वमनुत्पत्तितोऽन्यन्न चेत्प्रागभाव उत्पत्तितोऽन्यो न स्यात्तथा च प्रागभावहीनस्यात्मलाभरूपोत्पत्तिरेव न स्यादित्याह ॥ **उत्पत्तेरेवेति** ॥ **एवं भूतानामपीति** ॥ स्वरूपोत्पत्तिमत्त्वेनाश्रुतानां प्रत्युतानुत्पत्तिमत्त्वेन श्रुतानामपीत्यर्थः ॥ **असम्प्रतिपत्तेरिति** ॥ उत्पत्तिमतां भूताकाशादीनां कारणशून्यत्वे कारणशून्यानां चाव्याकृताकाशादीनामुत्पत्तिमत्त्वे असम्प्रतिपत्तेरित्यर्थः । तथा च न व्यभिचार इति भावः । यद्वा कारणशून्यानामप्यव्याकृताकाशादीनां वियन्नयोक्तरीत्या पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वेन व्यभिचार इति शङ्कायां पराधीनविशेषावाप्तेरुत्पत्तिमत्त्वे जन्मश्रुतेस्तादृशोत्पत्त्यर्थकत्वेनानुत्पत्तिश्रुतीनामपीश्वरवत्तादृशोत्पत्त्यभावपरत्वमेव स्यात् । अनेकार्थत्वस्यान्याय्यत्वात् । तथा चोत्पत्त्यनुत्पत्तिश्रुतीनां पुनरापन्नो विरोध इति भावेनाह ॥ **असम्प्रतिपत्तेरिति** ॥ पराधीनविशेषावाप्तिरूपोत्पत्तेरव्याकृतादावसंमतेरित्यर्थः । एतेन वियन्नय एवोपलक्षणतया जीवस्याप्युक्तरूपोत्पत्तिसिद्धेर्व्यर्थोऽयमारम्भ इति निरस्तम् । तस्यैवासम्प्रतिपत्तेरित्याक्षेपात् । अनेनैव पूर्वाक्षेपाभिप्रायेण न्यायविवरणे अनादित्वाज्जीवस्यानुत्पत्तिरिति वाच्ये पराधीनविशेषाप्राप्तिरित्युक्तम् ।

ननु विश्वकर्तृत्वश्रुतेरनादित्वादित्युक्तिविरोधो युक्तिपादे सङ्गत इत्यतो भाष्योक्तमाह ॥ **श्रुतिश्चेति** ॥ 'नित्यो नित्यानाम्' इति श्रुतिश्चेत्यर्थः । युक्तिस्तु श्रुतिप्राबल्यायोक्तेति भावेनाह ॥ **युक्त्युपेताया इति** ॥ उपाध्युत्पत्तौ तदुपाधिको जीवोऽप्युत्पद्येतेति भावेन शङ्कते ॥ **न चेति** ॥ **बाध इति** ॥ युक्तेः श्रुतेश्चेत्यर्थः । न देहादिर्जीवोपाधिः किं त्वन्य एवानादिरिति भावेनाह ॥ **व्यधिकरणत्वादिति** ॥ तथा च वक्ष्यति यावदात्मभावित्वाच्चेत्यत्र ॥ **अत इति** ॥ अनादित्वेन श्रुतजीवादेः सर्वस्योत्पत्त्यभावेन तज्जन्मश्रुतीनामप्रामाण्यादित्यर्थः । जन्माद्यसिद्धौ परमेश्वरा-

दित्युक्तिरयुक्तेत्यतो वाक्यभेदेन भाष्यं व्याचष्टे ॥ **जीवोऽपीति** ॥ न केवलं वियदादीत्यपेरर्थः ॥ **स चेति** ॥ उत्पद्यमानश्चेश्वरादेवोत्पद्यत इत्यर्थः । सूत्रे जानातीति ज्ञः । इगुपधज्ञाप्रीकिरः क इति ज्ञशब्दो जीववाची । अत एवेति पूर्वसूत्रप्रकृतपरमात्मपरामर्श इति भावः । पूर्वं प्रकृतश्रुतिपरामर्शि नात एवेति पदमिति भावेन शब्दादेवेति भाष्यार्थमाह ॥ **श्रुतिसिद्धत्वादिति** ॥ ते वा एत इति भाष्योक्त श्रुतिसिद्धत्वादित्यर्थः श्रुतावुत्पद्यन्त इत्येव पूर्तौ शेपोक्तेरुपयोगमाह ॥ **न चानादित्वेति** ॥ युक्तिरादिपदार्थः । अनादित्वस्याविरोधादित्यन्यत्रोक्त्यनुरोधेन श्रुत्युक्तितात्पर्य-माह ॥ **नित्यत्वेति** ॥

## अभिनवचन्द्रिका

**प्रागभावशून्यताया इति** ॥ यदोत्पत्तिरुच्यते तत्पूर्वकाले अभावशून्यतायाः सत्ताया विवक्षितत्वादित्यर्थः । असतः सत्तासम्बन्धाऽभावो ह्यत्र साध्यः । तदुपपादनायासत्त्वरूप-विशेषणाभावो हेतुतयोच्यते । अतो न साध्यावैशिष्ट्यमिति भावः । **न च तत विवाद इति** ॥ प्रलयकाले जीवानां सत्त्वस्य मयाऽनङ्गीकारात् अन्यतरासिद्धो हेतुरिति न वाच्यमित्यर्थः । कुत इत्यत आह **उत्पत्तेवेति** ॥ अदृष्टस्यकार्यमात्रकारणत्वात् प्रलयकाले जीवाभावे तदाश्रिताऽ-दृष्टस्याप्यभावापत्त्या कारणाभावेन जगदुत्पत्तिरेव न स्यादित्यर्थः ।

## वाक्यार्थमुक्तावली

पूर्वत्र यां श्रुतिमवलम्ब्य नित्यत्वाच्च ताभ्य इति परमात्मनित्यत्वं साधितं तयैवेह पूर्वपक्षोत्थानादनन्तरसङ्गतिः । यद्वा सूचीकटाहन्यायेनाल्पमधिभूतादिविचारं कृत्वेदानीमापाद-परिसमाप्तिबहुजीवविचारः क्रियत इति सङ्गतिमाह ॥ **एवमिति** ॥ अत्र जीवः किं नोत्पद्यत इति चिन्ता । तदर्थं सर्व एते चिदात्मानो व्युच्चरन्तीत्युत्पत्तिश्रुतिः कारणशून्यत्वयुक्त्यनुगृहीतया 'नित्यो नित्यानाम' इति श्रुत्या बाधिता उताबाधितेति । तदर्थमनुत्पत्तिश्रुतियुक्त्योरुत्पत्तिश्रुतेश्च किं स्वरूपोत्पत्तिविरुद्धार्थविषयकत्वं उत स्वरूपानुत्पत्तिपराधीनविशेषावाप्तिरूपाविरुद्धार्थविषयत्व-मिति । जीवस्यापि नित्यत्वमुक्तमिति भाष्ये ईश्वरवज्जीवस्यापि नित्यत्वं ध्वंसाप्रतियोगित्वम् । अत एव प्रागभावाप्रतियोगित्वमुक्तमित्युक्त्या जीवोऽप्युत्पद्यत इत्युत्तरभाष्येऽनादितया प्रमितो

(वाक्यार्थमुक्तावली)

जीवोऽपीत्युक्त्या च सूचितम् अनादितेत्युक्तन्यायं श्रुतिप्राबल्यायाह ॥ **अनादित्वादिति** ॥ अत एव न चानादित्वश्रुत्या विरोध इति वक्ष्यति ॥ **उत्पत्तेरेवेति** ॥ जीवस्य प्रागभावप्रतियोगित्वे सिद्धान्त्यभिमतायाः स्वरूपेण विद्यमानस्य जीवस्य पराधीनविशेषावाप्तिलक्षणोत्पत्तेरेवाभावप्रसङ्गः । यद्वा, धर्माधर्माश्रयत्वेन स्वीकार्योऽपि नरो लय इत्यनुव्याख्यानोक्तरीत्या सर्वोत्पत्तिमन्निमित्त-कारणादृष्टाश्रयत्वेन जीवसत्वस्याङ्गीकार्यत्वात्तस्य च प्रागभावप्रतियोगित्वे निराश्रयत्वेनादृष्टा-सम्भवात्कारणाभावेन जगदुत्पत्तेरेवाभावप्रसङ्गादित्यर्थः । चन्द्रिकायान्तु श्रौतप्रागभावशून्यत्वं जीवे न चेत् घटादेरप्युत्पत्तिर्न स्यात्प्रमितत्वाविशेषादित्यर्थः । यद्वा न चात्र साध्याविशिष्टता विवादः कर्तव्यः । प्रागभावशून्यत्वस्योत्पत्तिराहित्यस्य चैक्ये उत्पत्तिप्रागभावयोरेकत्वापत्त्योत्पत्तेः पूर्वं प्रागभावासम्भवेनात्मस्वरूपोत्पत्तेरेवाभावप्रसङ्गादित्यर्थद्वयमुक्तम् ॥ **एवं भूतानामिति** ॥ प्रागभावशून्यानां कारणशून्यानां चेत्यर्थः ॥ **असम्प्रतिपत्तेरिति** ॥ पक्षसमत्वेन व्यभिचारा-सम्प्रतिपत्तेरित्यर्थः । 'नित्यो नित्यानाम्' इति जीवस्यापि नित्यत्वमुक्तमिति भाष्यानुरोधेनाह ॥ **श्रुतिश्चेति** ॥ युक्तेश्चेति सूत्रानुरोधेनाह ॥ **न च देहादेरिति** ॥ उपाध्युत्पत्तौ तदुपाधिको जीवोऽप्युत्पद्यत एवेति भावः ॥ **व्यधिकरणत्वादिति** ॥ यस्य जीवोपाधित्वं स्वरूपान्तःकरणस्य नासावुत्पद्यते यश्चोत्पद्यते देहादिर्नासावुपाधिरिति व्यधिकरणत्वादित्यर्थः । तथा च वक्ष्यति यावदात्मभावित्वादिति ।

ननु जीवोपाधिर्द्विधाप्रोक्तः स्वरूपं बाह्यमेवचेत्युक्तत्वाच्छरीरादेः प्रतिफलनरूपप्रतिबिम्बत्वा-नापादकतयाऽनुपाधित्वेऽपि उत्पत्यादिविक्रियादिहेतुतयोपाधित्वाद्बाधतादवस्थ्यमित्यतश्चोक्तं **व्यधिकरणत्वादिति** ॥ जीवादत्यन्तभिन्नस्य शरीरस्योत्पत्यादेश्चैतन्यविक्रिया न युज्यते । अन्यगतधर्मस्यान्यत्र विक्रियाहेतुत्वानुपपत्तेरिति भावः जीवोत्पत्तिप्रतिज्ञापरत्वेन परोक्तकारण-शून्यत्वहेतोरसिद्धिपरत्वेन सूत्रं व्याकुर्वन् भाष्यं योजयति **जीवोऽपीति** ॥ सूत्रे जानातीति ज्ञशब्दो जीववाची । उत्पद्यत इति शेषः ॥ **अत एवेति** ॥ नात्मेति प्रकृतपरामर्शक इति भावः । अत एवेत्यस्य व्याख्यानान्तरपरं शब्दादेवेति भाष्यं व्याचष्टे **श्रुतिसिद्धत्वादिति** ॥ सर्वं एते आत्मानो व्युच्चरन्ति स इदं सर्वमसृजत' इति श्रुतेरित्यर्थः । एतेन सर्वसङ्ग्रह इत्युक्तन्यायोऽपि सङ्गमितो ज्ञेयः । अनादित्वश्रुतेर्विरोधपरिहारकत्वेनापि अत इति सूत्रं व्याकुर्वद्भाष्यं व्याचष्टे **न चेति** ॥ अत एव भाष्ये इति च श्रुतिरित्युक्तम् ।

## तत्त्वसुबोधिनी

सूचिकटाहन्यायेनाल्पाधिभूतादिविचारं कृत्वा इदानीं आपादसमाप्तिबहुजीवविचारः क्रियत इति सङ्गतिमाह ॥ **एवमिति** ॥ ननु सर्व एत इति श्रुतिः न जीवोत्पत्तिं प्रतिपादयति तत्र तत्प्रत्यायकपदाभावात् इत्यत आह ॥ **व्युच्चरन्ति जायन्त इति** ॥ अनादित्वमुत्पत्त्यभावश्चैक एवेति साध्याविशिष्टो । हेतुरित्याशङ्क्य निषेधति ॥ **न चेति** ॥ तत्र प्रागभावशून्यत्वे । **उत्पत्तेरेवाभावप्रसङ्गादिति** ॥ श्रौतप्रागभावशून्यत्वमनुत्पत्तितोऽन्यत्र चेत् प्रागभाव उत्पत्तितोऽन्यो न स्यात् । तथा च प्रागभावहीनस्यात्मलाभरूपोत्पत्तिरेव न स्यादित्यर्थः । यद्वा जीवस्य प्रागभावप्रतियोगित्वे सिद्धान्त्यभिमतायाः पूर्वं विद्यामानस्यैव जीवस्य देहोत्पत्तिरूपपराधीनविशेषलाभलक्षणोत्पत्तेरेवाभावप्रसङ्गः इत्यर्थः । यद्वा धर्माधर्माश्रयत्वेन स्वीकार्योऽपि नरो लय' इत्यनुव्याख्यानोक्तरीत्या प्रलयेऽपि सर्वोत्पत्तिमन्निमित्तकारणादृष्टाश्रयत्वेन जीवसत्वस्याङ्गीकार्यत्वात् तस्य प्रागभावप्रतियोगित्वे निराश्रयादृष्टासम्भवात् कारणाभावेन जगदुत्पत्तेरेवासम्भवात् इत्यर्थः ॥ **तत्रापीति** ॥ कारणशून्यत्वेऽपीत्यर्थः । कारणसंस्थितौ तदुपलभ्येत । नोपलभ्यते तस्मान्नास्तीति अनुपलब्धेरेव कारणशून्यत्वं सिद्धमिति परिहरति ॥ **कारणेति** ॥ **आकाशादीनामिति** ॥ अनादित्वरूपहेतुविशिष्टादीनामव्याकृताकाशादीनां पराधीनविशेषलाभरूपोत्पत्तिमत्वेन व्यभिचार इत्यर्थः ॥ **असम्प्रतिपत्तेरिति** ॥ उत्पत्तिमतां भूताकाशादीनां कारणशून्यत्वे कारणशून्यानां चाव्याकृताकाशादीनामप्युत्पत्तिमत्वेऽसंप्रतिपत्तेरित्यर्थः । तथा चाकाशादीनां पक्षसमत्वान्न व्यभिचार इति भावः । 'नित्यो नित्यानाम्' इति भाष्यानुरोधादाह ॥ **श्रुतिश्चेति** ॥ युक्तिश्चेति सूत्रानुरोधादाह ॥ **न च देहादेरिति** ॥ **व्यधिकरणत्वादिति** ॥ देहोत्पत्तिप्रत्यक्षत्वेन देहस्यानित्यत्वं भवतु जीवस्य त्वनित्यत्वं कुतः एवं च देहोत्पत्तेः प्रत्यक्षत्वेन जीवस्योत्पत्तिकथनं व्यधिकरणमित्यर्थः । सौत्रस्यात एवेत्यस्य व्याख्यानान्तरपरं शब्दादेवेति भाष्यं व्याचष्टे ॥ **श्रुतिसिद्धत्वादिति** ॥

## वाक्यार्थविवरणम्

ननु व्युच्चरन्तीत्युत्पत्तिश्रुतेर्नित्यत्वश्रुत्या कथं विरोध इत्यत आह ॥ **नित्यत्वादेवेति** ॥ **न चेति** ॥ अनुत्पत्तिमत्त्वस्यैवानादित्वेन साध्याविशिष्टत्वादिति भावः ॥ **विवक्षितत्वादिति** ॥

(वाक्यार्थविवरणम्)

अनादित्वादित्यनेनेति शेषः ॥ **तत्र** ॥ प्रागभावशून्यत्वे । जीवेऽपि प्रागभावप्रतियोगित्त्व-सत्त्वेनासिद्धिरिति भावः ॥ **एवं भूतानाम्** ॥ अनादित्वहेतुमताम् । अव्याकृताकाशादीनाम् ॥ **असम्प्रतिपत्तेः** ॥ साध्याभावस्येति शेषः । पक्षसमत्वान्न तेषु व्यभिचार इति भावः ॥ **बाध इति** ॥ उत्पत्त्यभावसाधकोक्तयुक्तेरिति शेषः ॥ **व्यधिकरणत्वादिति** ॥ जीवानुत्पत्तिसाधकानुमानस्य देहोत्पत्तिग्राहिणा प्रत्यक्षेण बाधो न युक्तो भिन्नविषयकत्वादिति भावः ॥ **ईश्वरादेवेति** ॥ तथा च कारणशून्यत्वरूपमनादित्वमसिद्धमिति भावः । अनुपलब्ध्या तन्निश्चय इत्यतः साऽसिद्धेत्याह ॥ **श्रुतीति** ॥ **श्रुत्युक्तत्वादिति** ॥ 'अविनष्टा एवोत्पद्यन्त' इति श्रुत्युक्तत्वादिति भावः ।

## वाक्यार्थमञ्जरी

असङ्गतिं परिहरति ॥ **नित्यत्वादेवेति** ॥ **विवक्षितत्वात्** ॥ अनादिपदेन तत्र जीवस्य प्रागभावाप्रतियोगित्वे ॥ **उत्पत्तेरेवेति** ॥ प्रलये सर्वोत्पत्तिनिमित्तकारणदृष्टाश्रयत्वेन जीवसत्वस्याङ्गीकार्यत्वेन तस्य प्रागभावप्रतियोगित्वे तदानीं जीवाभावेन निराश्रयादृष्टासम्भवात् कारणाभावेन जगदुत्पत्तेरेवाभावप्रसङ्गादित्यर्थः ॥ **न चाकाशादीनामिति** ॥ अनादित्व-रूपहेतुविशिष्टानामप्यव्याकृताकाशादीनां पराधीनविशेषलाभरूपोत्पत्तिमत्वेन व्यभिचार इत्यर्थः । तेषां पक्षसमत्वान्न व्यभिचार इत्याह ॥ **असम्प्रतिपत्तेरिति** ॥ उत्पत्तेरिति शेषः ॥ **व्यधिकरण-त्वादिति** ॥ अनुमानस्य जीवानुत्पत्तिसाधकत्वेन प्रत्यक्षस्य देहोत्पत्तिग्राहकत्वेन भिन्नविषयत्वा-दित्यर्थः ॥ **ॐ ज्ञोऽत एव ॐ** ॥ जानातीति ज्ञो जीवः अतः परमात्मनः सकाशादुत्पद्यत एव कुतः अत 'ते वा एत' इति श्रुतेरेवेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ युक्तेश्च ॐ ॥ १९ ॥**

**नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ।**

**'उत्पद्यन्ते चिदात्मानो नित्यानित्याः परात्मनः ।**

**उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयत' इति च व्योमसंहितायाम् ।** ॥ इति ज्ञाधिकरणम् ॥

## तत्त्वप्रदीपिका

अविनष्टा एवोत्पद्यन्त इति विरुद्धमिति न मन्तव्यमित्याह– **युक्तेश्चेति** । तामेव युक्तिं प्रकटयत्युत्तरभाष्येण । शरीरसंयोगापेक्षया उत्पत्तिर्युज्यत इत्यर्थः ।

'स्वदेहयोगविगमौ नाम जन्ममृती पुरा ।
इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचित्' इति स्कान्दे ।

## तत्त्वप्रकाशिका

नन्वनादिनित्यस्य जीवस्योत्पत्तिः श्रुतावपि कथं युज्यते । नित्यत्वमभ्युपेत्योत्पत्तिवचनस्य वन्ध्यात्वमभ्युपगम्य मातृत्ववचनेन साम्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **युक्तेश्चेति** ॥ युक्ता चानादेरपि जीवस्योत्पत्तिः तदुपाधेरुत्पत्तेः । न चैवं जीवोत्पत्तिरित्युपचारमात्रं स्यात् । पराधीनविशेषलाभस्योत्पत्तेरत्र विवक्षितत्वादिति भावः । अत्र स्मृतिसंमतिमाह ॥ **उत्पद्यन्त इति** ॥ अतः श्रुत्यविरोधेन जीवस्य ब्रह्मजातत्वसिद्धेर्युक्तस्तत्र श्रुतिसमन्वय इति सिद्धम् ।

## भावबोधः

'अविनष्टा एव' इति श्रुत्यभिप्रायकथनपरेणानेन पराधीनविशेषवत्त्वेऽप्यनादित्वस्याविरोधादिति न्यायविवरणांशस्यापि तात्पर्यमुक्तम् ॥ **पराधीनविशेषेति** ॥

ननु जीवस्य पराधीनविशेषलाभरूपोत्पत्तिर्वियदधिकरणन्यायसिद्धेति व्यर्थमिदमिति चेत्, न; उत्पत्तिश्रुतिः पराधीनविशेषावाप्तिरूपोत्पत्तिपरा चेदनुत्पत्तिश्रुतिरपि ब्रह्मणो जीववियदादावपि तदभावपरा स्यात् । अनेकार्थत्वस्यान्याय्यत्वादित्यतीतसर्वाक्षेपेण पूर्वपक्षिते ब्रह्मणि पराधीनविशेषावाप्तिरूपोत्पत्तिश्रुतिर्नास्ति । जीवादौ त्वस्तीति तदविरोधायानेकार्थत्वं न्याय्यमिति युक्तेश्चेति सूत्र एवोक्तेः, अत एव असम्प्रतिपत्तेरिति टीकायां सर्वमाक्षिप्तमिति । इह जीवमात्रे युक्ता देहयोगरूपोत्पत्तिरित्युच्यते । 'एतेन' इत्यत्र मुख्यप्राणस्यैवोत्पत्तिर्विशेषयुक्त्याक्षिप्य समाहितेति न तेनास्य गतार्थतेति ज्ञातव्यम् । अत्राद्ये– जीवस्य परमात्मनः सकाशादुत्पत्तौ श्रुतिरूपप्रमाणोक्तिः । द्वितीये– तद्बाधकत्वेनोक्ताया अनादित्वयुक्तेरप्रयोजकत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

पराधीनविशेषवत्त्वेऽपीति न्यायविवरणोक्तं व्यावर्त्यशङ्कापूर्वमाह ॥ **न चैवमित्यादिना** ॥ **अत्रेति** ॥ पराधीनविशेषलाभरूपोत्पत्तिमत्त्वे इत्यर्थः । एतेन जन्म श्रुतेरुक्तरूपोत्पत्त्यर्थत्ववत् अजन्मश्रुतेरुक्तरूपजन्माभावपरत्वापत्त्या विरोधतादवस्थ्यमिति प्रत्युक्तम् । ते वा एत इति उत्पद्यन्त इति श्रुतिस्मृतिविरोधेनाजन्मश्रुतेरुक्तरूपजन्माभावपरत्वायोगेन स्वरूपोत्पत्त्यभावपरत्वस्यैव वाच्यत्वादिति ॥ **अत इति** ॥ अनादिनित्यत्वाविरोधेनैवोत्पत्तेः श्रुतिस्मृत्युक्तत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**न चैवमिति** ॥ जीवोत्पत्तिरिति वचः उपचारमात्रं स्यात् । ततश्च तथा प्रतिज्ञाय उपाध्युत्पत्तिसाधने अर्थांतरं स्यादिति न वाच्यमित्यर्थः ।

पूर्वपक्षस्तु – न परमात्मनः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तं जीवस्य अनुत्पन्नत्वात् 'नित्यो नित्यानाम्' इति श्रुतेः । न चोत्पत्तावपि 'सर्व एत आत्मनो व्युच्चरन्ति' इति श्रुतिरस्तीति वाच्यम् । जीवो नोत्पत्तिमान् अनादित्वात् ईश्वरवदित्यादियुक्तिसहितत्वेन अनादित्वश्रुतेः प्राबल्यात् । न च साध्याविशिष्टता हेतोः । अनादिशब्देन तत्सत्तायाः अनादिकालीनत्वस्य विवक्षितत्वात् । न च प्रलये जीवानां सत्त्वे विवादः । तथा सति जीवाभावेन तद्धर्मस्यादृष्टस्याप्यभावापत्त्या कारणाभावेन जगदुत्पत्तिरेव न स्यात् । अथवा कारणशून्यत्वमनादित्वं विवक्षितम् । न च तत्रापि विवादः । कारणानुपलम्भात् । अतो जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो न युक्त इति ।

सिद्धान्तस्तु – युक्तमेव परमात्मनः श्रुतिसमन्वयेन जगत्कारणत्वम् । अनादिनित्यानामेव जीवानां 'ते वा एते चिदात्मानोऽविनष्टाः परंज्योतिर्निविशन्ति । विनष्टा एवोत्पद्यन्त' इत्युत्पत्तिविधानात् । न च कारणाभावः । परमेश्वरस्यैव कारणत्वात् । न च अनादिनित्यत्वमङ्गीकृत्य उत्पत्तिमत्त्वाङ्गीकारे 'माता वन्ध्या' इतिवत् व्याघातः । नित्यस्यापि जीवस्योपाध्युत्पत्त्यपेक्षयोत्पत्त्युपपत्तेः । तथापि न स्वरूपलाभरूपोत्पत्तिर्लभ्यते इति चेत्, मालाभि पराधीनविशेषावाप्तिरूपोत्पत्तेरेव विवक्षितत्वेन तदलाभस्येष्टत्वात् । अतः श्रुत्यविरोधेन जीवस्य ब्रह्मजातत्वसिद्धेः युक्तस्तत्र समन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनादेरपि जीवस्योत्पत्तेरविरुद्धत्वाच्च ज्ञोऽप्युत्पद्यत एवेत्यर्थः ॥ **तदुपाध्युत्पत्तिरिति** ॥ वाह्योपाध्युत्पत्तेरित्यर्थः । नन्वस्वरूपस्य देहस्योत्पादे जीवोत्पत्तिः कुतः अन्यगतधर्मस्यान्यत्र विक्रियाहेतुत्वानुपपत्तेः । उत्पत्तिव्यवहारस्य स्वसम्बंध्युप्तत्या लाक्षणिकत्वापत्तेश्चेत्याशङ्क्य परिहरति ॥ **न चैवमिति** ॥ पराधीनविशेषवत्वेऽप्यनादित्वाविरोधादिति न्यायविवरणमनुसृत्योक्तं **पराधीनेति** ॥ पराधीनस्य शरीराभिमानलाभलक्षणविशेषलाभस्येत्यर्थः । नन्वभिमानस्य मनोवृत्तित्वेन तदुत्पत्तौ जीवोत्पत्तिः कुत इति व्यधिकरणत्वं न परिहृतमिति चेन्न । देवदत्त-शरीरोत्पादे, यज्ञदत्तस्य नोत्पत्तिर्भवति तत्कस्य हेतोः अस्वीयेऽपि स्वीयतयानुसन्धानाभावादिति वक्तव्यम् । तथा च स्वीयतयानुसन्धानलक्षणोऽभिमानः शरीरोत्पत्त्यात्मन एव विक्रियाहेतुरिति किमनुपपन्नम् । स्पष्टितं चैतदन्यत्रास्माभिरिति ।

ननु जीवस्य पराधीनविशेषावाप्तिरूपोत्पत्तिर्वियदधिकरणीयव्यवस्था न्यायसिद्धा स्वरूपेणोत्पत्तिस्तु नेष्टेति व्यर्थमेतदिति चेन्न । उत्पत्तिश्रुतिः पराधीनविशेषावाप्तिरूपोत्तिपरा चेदनुत्पत्तिश्रुतिर्ब्रह्मणीव जीवादावपि तदभावपरा अनेकार्थत्वस्यान्याय्यत्वादिति च सर्वाक्षेपेण पूर्वपक्षिते ब्रह्मणि पराधीनविशेषावाप्तेरूपोत्पत्तिश्रुतिर्नास्ति, जीवादौ त्वस्ति । तदविरोधाया-नेकार्थत्वं न्याय्यमितीह युक्तेश्चेति सूत्र एवोक्तेः । अत एवासम्प्रतिपत्तेरिति टीकायां सर्वमाक्षिप्तं ज्ञेयम् ॥ **अत्र स्मृतीति** ॥ शरीराभिमानलक्षणपराधीनविशेषलाभापेक्षयोत्पत्तेः श्रुतेश्च मुख्यार्थतेत्यत्रेत्यर्थः । अत एवोपाध्यपेक्षया तेषामुत्पत्तिरपि गीयत इति उत्पत्तिश्रुतेर्वचन-वृत्तैरुक्तेरितिभावः । अत्राद्ये जीवोत्पादे साधकोक्तिः । द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**पराधीनविशेषेति** ॥ अत्र गतार्थताशङ्कापरिहारस्त्वन्यत्रोक्तो द्रष्टव्यः । अत्राद्ये सूत्रे जीवस्योत्पत्तौ श्रुतिरूपप्रमाणोक्तिः । द्वितीयेऽनादित्वयुक्तेरप्रयोजकत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

उपाधिः देहः अत्र अधिकरणे । एवञ्च पराधीनविशेषावाप्तेरेव मुख्योत्पत्तित्वेन विवक्षितत्वान्नोपचार इति भावः ।

## वाक्यार्थमञ्जरी

अनादिनोऽपि जनेर्युक्तत्वाच्चेत्यर्थः । **उपाधेः** देहस्य ॥ **पराधीनेति** ॥ जीवस्य देहलाभ एव पराधीनविशेषावाप्ते रूपोत्पत्तिरिति भावः ।

॥ इति ज्ञाधिकरणम् ॥

## १२. अथ उत्क्रान्त्यधिकरणम्

### सूत्रभाष्यम्

'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मनः सर्वरूपा अनन्ता' इति कापायणश्रुतौ व्याप्तत्वं प्रतीयते । 'अणुर्ह्येष आत्मा यं वा एते सिनीतः । पुण्यं च पापं च' इति गौपवन श्रुतावणुत्वमित्यतो विरोध इति । अतो ब्रवीति–

॥ ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥ २० ॥

हेतूनां सकाशादणुरेव । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुत' इति पौष्यायणश्रुतेः ॥२०॥

### तत्त्वप्रदीपिका

शरीरादुत्क्रान्तेः परलोकगमनादिमं लोकं प्रत्यागमनाच्चाणुरेव जीवः ।

### तत्त्वप्रकाशिका

अत्र परमेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवपरिमाणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । श्रुतिसमन्वयः पूर्वं हरावुक्तः । जीवपरिमाणविषये च श्रुतीनां विरोधेनाप्रामाण्ये नासौ युक्तः स्यादिति विरोधो निराकार्य एव । प्रकृतो जीव एव विषयः । किं व्याप्तोऽणुर्वेति संशयः । संशयबीजं श्रुतिविगानं दर्शयति ॥ **व्याप्ता हीति** ॥ सर्वात्मानः सर्वस्यादानादिकर्तारः । सर्वरूपाः पूर्णाः । यं वा एत इति वाक्यशेषोद्धारो जीवत्वज्ञापनार्थः । व्याप्तत्वमणुत्वं च प्रतीयते जीवस्येति शेषः । जीवो व्याप्त एवेति पूर्वः पक्षः । 'व्याप्ता ह्यात्मानः' इति श्रुतेः । न चेयं श्रुतिर्न जीवविषया बहुवचनविरोधात् । न चेश्वररूपबाहुल्यार्था । बाधकं विना श्रुतेर्बाधायोगात् । न चाणुत्वश्रुतिविरोधः । व्याप्तश्रुतेर्युक्तियुक्ताया बलवत्वात् । तथा हि न तावदणुरात्मा । सर्वदेह-गतस्पर्शज्ञानात् । रूपादीनां तत्तदिन्द्रियैर्ज्ञानात् । न चेदं ज्ञानमणावात्मनि सम्भवति । न हि कश्चिदप्राप्तकरणेन क्रियां निर्वर्तयति । न चात्मा देहपरिमाणः । उक्तदोषत्वात्तत्पक्षस्य । शरीर-परिमाणत्वे चात्मनः शरीरवत्सांशत्वं स्यात् । मध्यमपरिमाणस्य तन्नियमात् । तेषां चांशानां प्रत्येकं

(तत्त्वप्रकाशिका)

**चेतनत्वेन विरुद्धादिक्रियं शरीरमुन्मथ्येताक्रियं वापद्येत । न हि युगपदनेकेपामैकमत्यं सम्भवति । न च समुदायो नाम कश्चिद्धर्मी भवति । न चांशारब्धोंऽशी स्वीकर्तुं शक्यते । अनित्यत्वप्रसङ्गात् । अतः परिशेषादात्मनो व्याप्तत्वमेव सिध्यति । तथा च प्रयोगः । सर्वमिदं मूर्तमात्मनास्पृष्टं मूर्तत्वाच्छरीरवदिति । सयुक्तिकव्याप्तिश्रुतिविरोधादणुश्रुतेरेवाप्रामाण्यम् । तथा च न प्रागुक्त-समन्वयसिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य तच्छेषमेव पूरयति ॥ अत इति ॥ जीवोऽणुरेव न व्याप्तः । उत्क्रान्तिगत्यागतिमत्त्वात् पतत्रिशरीरवत् । न हि व्याप्तद्रव्यस्य व्योमादेरुत्क्रान्त्या-यस्ति । अतो निराकृतमध्यमपरिमाणस्यात्मनो व्याप्त्यनुपपत्तावणुत्वमेव सिध्यतीति भावः । सतीष्वात्मन उत्क्रान्तिगत्यागतिषु भवेद्विभुत्वाभावस्ता एव कुत इत्यत आह ॥ स इति ॥**

## गुर्वर्थदीपिका

**उक्तदोपत्वादित्यस्य** जैनमतनिराकरणाधिकरणे उक्तदोषत्वादित्यर्थः । विरुद्धादिक्रियमित्यत्र भोगे वैचित्र्यायांशभेदाङ्गीकारे पादस्थितांशेन कण्टकवेधाद्दुःखानुभवे करस्थितांशेन मोक्षक्षणा-त्सुखमनुभूयत इत्युक्तं स्यात् । तथा च वैषम्यमपरिहार्यम् । एवमन्यांशानामपि विषमाणां नैकप्रकारा क्रिया । अतस्त्रिभिरारूढशकटवद्विरुद्धदिक्षु क्रिययाऽप्यस्य तच्छरीरमुन्मथ्येतेत्यर्थः । शरीरान्तरेव क्रियायां सर्वथा क्रियाभावे चेतस्ततश्चलनासम्भवेनाक्रियमेव स्यादित्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृतो** जीव इति । धर्मेषूत्पत्तेः प्राथम्याज्जीवस्य तद्विचारानन्तरं तत्परिमाणविचारादनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र जीवः किं व्याप्त उताणुरिति चिन्ता । तदर्थं जीवाणुत्वसाधिका'अणुर्ह्येष आत्मा' इति श्रुतिरुत्क्रान्त्यादियुक्तिश्च 'व्याप्ता ह्यात्मान' इति श्रुत्या तत्र तत्र परिज्ञानलक्षणयुक्त्या च बाधिते उत अबाधिते इति । तदर्थं व्याप्तत्वसाधकश्रुतियुक्त्योः किं निरवकाशत्वमुत श्रुतेरीश्वरविषयत्वेन युक्तेश्चांशचिद्गुण-व्याप्त्याऽन्यथासिद्धत्वेन सावकाशत्वम् । तदर्थं श्रुतेरीश्वरविषयत्वज्ञापकं प्रकरणश्रुत्यादिकं युक्तेश्चान्यथासिद्धत्वे अन्यत्रांशचिद्गुणव्याप्त्या सार्वत्रिककार्यकारणत्वे दर्शनरूपं ज्ञापकं नास्त्युता-स्तीति । आत्मन इत्यनेन पुनरुक्तिं सर्वाभिदप्रतीतिं च निवारयितुमाह– **सर्वस्येति** ॥

(भावबोधः)

सर्वस्वरूपत्वप्रतीतिमपाकर्तुमाह– **सर्वरूपाः पूर्णा इति** ॥ 'सर्वः पूर्णगुणत्वतः' इत्युक्तेरिति भावः । न तावदणुरात्मेत्यनेन जीवस्यानणुत्वमिति न्यायविवरणांशो व्याख्यातः । सर्वदेहगस्य स्पर्शज्ञानाद्रसादीनां तत्र तत्र परिज्ञानादिति न्यायविवरणोक्तयुक्तिमाह– **सर्वदेहेति** ॥ **उक्तदोषत्वादिति** ॥ 'एवं चात्माकात्स्र्न्यम्' इत्यत्रेत्यर्थः । अणुत्वस्योत्क्रान्त्यादिहेतूनां साध्यसाधनभावे पतत्रिशरीरे व्यभिचारः स्यादित्यतो भाष्ये अणुरेवेत्येवकारप्रयोगसूचितमुत्क्रान्तिगत्यागतिमत्त्वादित्यनेनोत्क्रान्तिगत्यादेरिति न्यायविवरणं व्याख्यातं भवति ।

ननु जीवस्य व्याप्तत्वाभावसाधनस्य मध्यमपरिमाणवत्त्वेनाऽपि उपपत्त्याऽर्थान्तरता स्यादित्यत आह– **अत इति** ॥ अनेन, जीवोऽणुर्मध्यमपरिमाणानधिकरणत्वे सति व्याप्त्यनधिकरणद्रव्यत्वात्; परमाणुवत्; व्यतिरेकेण घटवदिति प्रयोगो दर्शितः । अनेनाणुरेवेति भाष्यं फलितप्रदर्शनपरमित्युक्तं भवति ।

## भावदीपः

**जीवपरिमाणेति** ॥ एतेन जीवे धर्मिव्युत्पत्त्यनुत्पत्तिचिन्तानन्तरं परिमाणरूपतद्धर्मचिन्ताऽत्रेति पूर्वसङ्गतिरपि सूचिता ॥ **नासौ युक्त इति** ॥ अभ्युपगतार्थद्वये अन्यतरार्थे अप्रामाण्यप्राप्तावन्यार्थेऽप्यनाश्वासप्रसङ्गादिति वियत्नयोक्तरीत्येति भावः । व्याप्ता ह्यात्मान इत्येतावति वाच्ये शेषोक्तिः सिद्धान्तानुगुण्याय ब्रह्मलिङ्गानि सूचयितुमिति भावेन अपुनरुक्त्यै अर्थमाह ॥ **सर्वात्मना इति** ॥ भाष्येऽणुत्वमित्यस्य पूर्वक्रियापदेनान्वयं शेषं चाह ॥ **व्याप्तत्वमिति** ॥ भाष्यसूचितां युक्तिमाह ॥ **बहुवचनेति** ॥ एकमेवाद्वितीयमिति स्वगतभेदहीने हरौ बहुत्ववाचिबहुवचनायोगादित्यर्थः ।

ननु 'गुहां प्रविष्टावात्मनौ' इत्यत्रोक्तन्यायेन न सङ्ख्योपसङ्ग्रहादपि नानाभावादित्यत्रोक्तन्यायेन वा 'ऋतं पिबन्तौ' 'यस्मिन्पञ्च पञ्चजना' इत्यादौ द्विवचनबहुवचनयोरिवेदमपि बहुवचनं युक्तमिति शङ्कते ॥ **न चेश्वरेति** ॥ **बाधकं विनेति** ॥ बहुत्वादिसङ्ख्या स्वाश्रयगतभेदव्याप्तेत्यस्यौत्सर्गिकत्वेन तत्र ब्रह्मश्रुतिगुहास्थत्वप्राणप्राणदत्वादिलिङ्गादिना बाधकेन तथात्वेऽपि इह तादृशबाधकाभावादित्यर्थः । नामानि सर्वाणि' इत्यादीनि तु सामान्यानि न त्वसाधारणानि । स

(भावदीपः)

आत्मेदं सृजति' इति विष्णुप्रकरणं तु न बहुवचनश्रुतिबाधायालमिति भावः । पृथिव्यधिकारेत्यत्र प्रकरणेनात्रश्रुतिबाधस्तु निरवकाशरूपादिसाहित्यात् । स्वशब्दोन्मानत्वे चात्र व्याप्ते जीवेऽपि कथंचिद्युक्ते इति भावः । न च 'गौणश्चेन्नात्मशब्दात्' 'साधारणशब्दविशेषात्' स्वशब्दा-दित्युक्तदिशा विष्ण्वेकनिष्ठात्मपदप्रातिपदिकस्वारस्यानुरोधेन प्रत्ययबाधो युक्त इति शङ्क्यम् । असदिति चेत् एतेन शिष्टेत्यादौ भाष्योक्तदिशाऽन्यवाचकस्यापि सत्त्वेन तत्परिग्रहे प्रत्ययस्वारस्य-स्यापि भावादिति तात्पर्यात् । अत एवोक्तं **श्रुतेर्बाधायोगादिति** ॥ अन्यत्रोक्तयुक्तिमत्र योजयितुं व्यावर्त्यशङ्कामाह ॥ **न चेति** ॥ **विरोध इति** ॥ बाधक इत्यनुषङ्गः । तथा च बाधकाभावोऽसिद्ध इति भावः । सर्वदेहस्पर्शज्ञानाद्रसादीनां तत्र तत्र परिज्ञानात् जीवस्यानणुत्वमिति न्यायविवरणे जीवस्य व्याप्तत्वमिति वाच्येऽनणुत्वमित्युक्तेर्भावं वदन् युक्तिं व्यनक्ति ॥ **तथा हि न तावदित्यादिना** ॥ **सर्वेति** ॥ कमनीयतनयालिङ्गनेन सर्वाङ्गीणसुखानुभवस्य विश्वजनीनत्वादस्ति सर्वदेहगतस्पर्शज्ञानमिति भावः ॥ **रूपादीनां चेति** ॥ शष्कुलीं भक्षयतो रूपरसगन्धस्पर्शशब्दानां युगपदेव चक्षुरादिभिरिन्द्रियैर्ज्ञानस्यानुभवसिद्धत्वादित्यर्थः । न चेत्युक्तं व्यनक्ति ॥ **न हीति** ॥ चक्षुरादिकरणैरात्मनो युगपत्प्राप्तिश्चाणुत्वे न युक्तेति भावः । ननूक्तयुक्तेरणुत्वाभावसाधक-त्वेऽप्यात्मनो मध्यमपरिमाणत्वेनाप्युपपत्त्या श्रुत्युक्तव्याप्तत्वासाधकत्वेन न श्रुतिप्राबल्यापादकत्वं युक्तेरित्यतः परिशेषसहकृतायास्तत्साधकत्वमिति भावेनाह ॥ **न चात्मेति** ॥ **उक्तेति** ॥ एवं चात्माकात्स्न्र्यं न च पर्यायादप्यविरोधो विकारादिभ्य इति समयपादोक्तदोषत्वादित्यर्थः । स्वयं दोषान्तरमाह ॥ **शरीरपरिमाणत्वे चेति** ॥ **शरीरवदिति** ॥ यथा शरीरं परस्परं भिन्नैरात्मना प्रत्येकं भिन्नाभिन्नैः कृत्स्नैश्चाभिन्नैरंशैरुपेतं तथाऽत्मापि तादृशैरंशैरुपेतः स्यादित्यर्थः ॥ **तन्नियमादिति** ॥ घटादौ दर्शनादिति भावः । एतत्प्रपश्चनं च सिद्धान्तेऽप्यविरोधश्चन्दन-वदित्यात्मनोऽभिप्रेतं सांशत्वमात्मना परस्परं च सविशेषाभिन्नैरंशैरुपेतत्वमिति वैलक्षण्यं द्योत-यितुमित्याहुः । शरीरोन्मथनादिदोपनिरासाय शङ्कते ॥ **न च समुदाय इति** । यथा नानावृक्षसमुदायो वृक्षेभ्योऽन्यो नास्ति तथेत्यर्थः । तन्तुपटयोरिव स्यादित्यत आह ॥ **न चेति** ॥ **अत इति** ॥ अणुत्वमध्यमपरिमाणत्वयोरयोगादित्यर्थः । जीवस्याणुत्वेऽपि इन्द्रियाणां व्याप्तत्वेन रूपादिज्ञानं युक्तमिति तु अणवश्चेति वक्ष्यमाणदिशेन्द्रियाणामप्यणुत्वान्निरस्तप्रायं मत्वाऽऽह ॥ **परिशेषादिति** ॥ **तथा चेति** ॥ एवमनुकूलतर्के सतीत्यर्थः । मध्यमपरिमाणत्वेऽप्युपपत्त्याऽ-

(भावदीपः)
प्रयोजका हेतव इत्यतः शेषपूर्त्या तात्पर्यतो भाष्यसूत्रयोरर्थमाह ॥ जीवोऽणुरेवेति ॥ ज्ञइत्यापादसमास्यनुवर्तत इति भावः । हेतोरप्रयोजकत्वादिनिराह ॥ न हीति ॥ पूर्वोत्तरदेशे विभागजनकक्रियावत्त्वरूपमुत्क्रमणादिकं सर्वदा सर्वदेशविभागरहिते व्योमादौ न युक्तमित्यर्थः ।

ननु व्याप्तस्यापीश्वरस्य भूमा सम्प्रसादादित्यत्रोत्क्रमणमुक्तम् । यथोक्तं भाष्ये तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यादिना नोत्क्रमणलिङ्गविरोधोऽपीति । तथा ज्योतिर्दर्शनादित्यत्र गत्यागती चोक्ते। स समानः सन्नभौ लोकावनुसंचरतीति ज्योतिः प्रकरणस्थवाक्ये तयोः प्रतीतेः । उक्तं च तत्र भाष्ये । प्राज्ञेनात्मनान्वारूढ उत्सर्जद्यातीति वचनात्तस्यापि लोकसंचरणमस्त्येवेति । न च हृत्स्थरूपापेक्षयोत्क्रांत्यादयो न व्याप्तरूपापेक्षयेति शङ्क्यम् । दहरनये अल्पश्रुतेरिति चेत्तदुक्तमिति सूत्रे 'एष म आत्मान्तरहृदये ज्यायान्' इति श्रुत्या हृत्स्थरूपस्यापि व्याप्तत्वस्य तत्र भाष्य एवोक्तेः । तथा च कथं न हि व्याप्तस्य ते युक्ता इत्युक्तिरिति चेत् उच्यते । व्याप्तस्येत्यस्य केवलमपरिच्छिन्नस्येत्यर्थः । अणुत्वासमानाधिकरणदेशापरिच्छेदयुक्तस्येति यावत् । अत एव व्याप्तस्येत्येवानुक्त्वा व्योमादेरित्यप्युक्तम् । हरे रूपं तु न स्थानत इति वक्ष्यमाणन्यायेन 'तानि ह वा एतानि सर्वाणि पूर्णानि' इति असन्ततेश्चेत्यादौ वक्ष्यमाणश्रुत्या 'व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि । न च भेदः कचित्तेषामणुमात्रोऽपि विद्यते । तथापि विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः । तस्माद्बुध्यवतारार्थमव्याप्तत्वं च भण्यते' । इति तृतीयस्कन्धतात्पर्योक्त्या च सर्वं व्याप्तमपि अक्षरनये अन्यभावव्यावृत्तेरित्यत्रोक्तदिशाऽणुपरिमाणं च भवतीति न दोष इति ।

ननु च महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदविदित्यादिना वैशेषिकनयानुभाष्ये व्योमादावप्यणुत्वमहत्त्वयोः समावेशो व्युत्पादित इति चेदेवं तर्हि व्याप्तस्येत्यस्य शक्त्यात्मकतारूपविशेषशून्यव्याप्तिमत इत्यर्थः । हरे रूपे तु अणुत्वमहत्त्वयोः सदासत्त्वेऽपि यदा महत्त्वस्य शक्त्यात्मकताऽणुत्वस्य व्यक्त्यात्मकता तदैवोत्क्रान्त्यादिक्रियावत्त्वाभिव्यक्तिरन्यदा तु नेत्युत्क्रान्त्यादिमद्भगवतो रूपं शक्त्यात्मकव्याप्तिमदिति न दोष इति भावः । यद्वा भगवद्रूपविशेषे महत्त्वस्य शक्त्यात्मकतादशायां व्याप्तत्वेनाव्यवहारादणुत्वेनैव व्यवहाराद् व्याप्तस्य व्याप्तत्वेनैव प्रसिद्धस्य व्योमादेरित्यर्थः । उक्तं चात्राधिकरणसुधायां सविशेषोऽपि क्रियाशक्त्यात्मना स्थिर इत्याद्यनुभाष्यव्याख्यावसरे व्यक्तिरूपेणैव व्यवहारालम्बनत्वादिति । अत एवोक्तं टीकायां

(भावदीपः)

हृद्यपेक्षयेत्यत्र भगवन्मूर्तिविशेषस्य व्यक्त्या तन्मात्रपरिमाणत्वादिति । विवृतमेतदसम्भवस्त्विति सूत्रे तत्वप्रदीपे । प्रपञ्चितं च चन्द्रिकायां भूमादिनये तथाप्युत्क्रान्त्यादेर्मध्यमपरिमाणेऽप्युपपत्त्याऽप्रयोजकत्वमित्यतः पूर्ववत्परिशेषसहितस्याणुत्वप्रयोजकत्वमिति भावेनाह ॥ **अत इति** ॥ उक्तहेतूनां सकाशादित्यर्थः । उपपादितं चोत्क्रांत्यादीनां बुद्धिधर्मत्वादिचोद्यनिरासेन जीवाणुत्ववादं न्यायामृतेऽणुत्वं जीवस्य ।

## अभिनवचन्द्रिका

**व्याप्तत्वमणुत्वं चेति** ॥ श्रुतिद्वयपर्यालोचनया जीवस्य व्याप्तत्वमणुत्वं च प्रतीयत इति हेतोः, भाष्ये – यथायोगं शेषो दृष्टव्य इत्यर्थः । अत्रायं विवेकः । काषायणश्रुतौ 'प्रतीयत' इत्यतः परं 'जीवस्य' इति शेषः । गौपवनश्रुतौ 'अणुत्वम्' इत्यतः परं 'जीवस्य प्रतीयत' इति शेष इति ॥ **उक्तदोषत्वादिति** ॥ पिपीलिकादेहगतस्य गजादिशरीरप्राप्तावपूर्तिः स्यात् । गजादिदेहगतस्यापि पिपीलिकादिशरीरप्राप्तावतिरेकः स्यादित्युक्तदोषत्वादित्यर्थः । दोषान्तरमाह– **शरीरपरिमाणत्वे चेति** ॥ आपादकस्य आपाद्येन व्याप्तिमाह– **मध्यमपरिमाणस्येति** ॥ आपाद्यस्यानिष्टत्वमाह– **तेषां चांशानामिति** ॥ ऐकमत्या नायं दोष इत्यत आह– **न हि युगपदिति** ॥ भवेदयं दोषः यदि जीवो नाम चेतनारब्धद्रव्यं स्यात्, न चैवं किं नाम अचेतनानां समुदाय इत्यभ्युपगम्यत इत्यत आह– **न चेति** ॥ समुदायत्वे ज्ञानादिधर्मयोगित्वं न स्यादिति भावः ॥ विपर्यये पर्यवसानमाह – **न चांशारब्ध इति** ॥ कुत इत्यत आह– **अनित्यत्वेति** ॥ यद्यपि आत्मनः सांशत्वे शरीरमुन्मथ्येत् । अविक्रियं वाऽऽपद्येतेति दूषणमुक्तं तथापि घटांशानामघटत्वेऽपि घटस्य घटत्ववत् समुद्रांशानामसमुद्रत्वेऽपि समुद्रस्य समुद्रत्ववत् चेतनांशानामचेतनत्वेऽपि चेतनस्य चेतनत्वसम्भवादिति नोक्तदोष इति परः परिहर्तुमुत्सहेतापीति अनित्यत्वप्रसङ्ग उक्तः । परिशेषेण विभुत्वं साधयित्वा अनुमानेनापि साधयति – **तथा च प्रयोग इति** ॥ एतेन परिशेषानुमानप्रयोगप्रदर्शनाय आत्मा महत्परिमाणाश्रयः अणुमध्यमपरिमाणानाश्रयत्वे सति द्रव्यत्वादिति वक्तव्यत्वेन सर्वमिदं मूर्तमित्याद्युक्तत्रयोग इति परास्तम् ।

## वाक्यार्थमुक्तावली

प्रकृतो जीव इति धर्मेषूत्पत्तेः प्राथम्यात् । जीवस्य तद्विचारानन्तरं तत्परिणामविचारादनन्तरसङ्गतिः ॥ **किं व्याप्त इति** ॥ देहसम्बन्धस्पर्शादिज्ञानरूपयुक्त्यनुगृहीतया, व्याप्त्यात्मान,

(वाक्यार्थमुक्तावली)

इति व्याप्तिश्रुत्या किं जीवो व्याप्तः ॥ उतोत्क्रमणादिलिङ्गसहितया अणुर्ह्येष आत्मायं वा एते सिनीत इति श्रुत्या अणुरिति चिन्ता । तदर्थं किं जीवादन्यत्र निरवकाशात्सर्वदेहपरिज्ञानं चाणुत्वेनोपपद्यते उत व्याप्तश्रुतिरीश्वरविषया, सर्वदेहपरिज्ञानं च जीवस्यांशव्याप्त्यादिनोपपद्यत इति संक्षेपः । सर्वात्मानः सर्वरूपा इत्यनयोर्भेदमाह **सर्वात्मान इति** ॥ 'सर्वःपूर्णगुणत्वत' इति प्रमाणं हृदि निधायोक्तं **पूर्णा इति** ॥ व्याप्तत्वमणुत्वं च प्रतीयते । जीवस्येतिशेषः । अणुत्वमित्यत्र प्रतीयते जीवस्येति पदद्वयशेष इति विवेकः । इतराधिकारादिति, सूत्रव्यावर्त्यं पूर्वपक्षं व्याप्ताह्येतेचिदात्मान इति श्रौतबहुवचनेनोर्ज्जीवयति ॥ **न चेयमिति** ॥ न च जीवपरत्वे, सर्वात्तृत्व, पूर्णगुणत्व, निर्गुणत्वायोगः । मिलित्वा सर्वेषां सर्वात्तृत्वस्य यथायोग्यं पूर्णत्वस्य स्वरूपतः सत्वादिगुणराहित्यस्योपपत्तेरिति भावः । गुहांप्रविष्टौ, न सङ्ख्योपसङ्ग्रहादपीत्यधिकरणद्वये 'ऋतं पिबन्तौ सुकृतस्य लोके छायां (गुहां) प्रविष्टौ परमे परार्धे । यस्मिन् पञ्चजना' इति द्विवचनबहुवचनयोः सावकाशितत्वात् । तन्न्यायेनेदमपि बहुवचनं युक्तमित्याशङ्क्य परिहरति ॥ **न चेश्वरेति** ॥ तत्र गुहास्थत्व, ब्रह्मशब्द, प्राणप्राणदत्वादिबाधकेन द्विवचनादिश्रुतेः द्वित्वादिसङ्ख्या स्वाश्रयभेदव्याप्त्येत्यौत्सर्गिकन्यायमपहाय तत्प्रतिनिधिविशेषव्याप्तत्वं स्वीकृत्यामुख्यार्थग्रहणेऽपीह बाधकाभावेन श्रुतिमुख्यार्थबाधायोगात् । आत्मशब्दस्य विष्णौ मुख्यत्वेऽपि, स आत्मेदं सृजतीति विष्णुप्रकरणत्वेऽपि बहुवचनश्रुत्या प्रतिरुद्धत्वेन तद्बाधकत्वमिति भावः । इति च काषायणश्रुतिरिति चशब्दाद्युक्तितोऽपि प्रतीयत इत्यर्थमभिप्रेत्य तत्र तत्र परिज्ञानमित्युक्तन्यायं सङ्गमयितुं तत्प्रतिपक्षश्रुतिविरोधमाशङ्क्य परिहरति ॥ **न चाणुत्वेत्यादिना** ॥ **सर्वदेहेति** ॥ कमनीयकान्तालिङ्गनेन सर्वाङ्गीणसुखानुभवस्य सार्वजनीनत्वादिति भावः ॥ **रूपादीनामिति** ॥ शष्कुलीं भक्षयतो रूपरसगन्धस्पर्शशब्दानां युगपदेव चक्षुरादीन्द्रियैर्ज्ञानस्यानुभवसिद्धत्वादिति भावः । चक्षुरादिकरणैरात्मनो युगपत् प्राप्तिश्चाणुत्वेन युक्तेति भावः ।

ननु सजातीयात्मविशेषगुणानां युगपदनुत्पत्तेः कथं युगपत् तत्र तत्र परिज्ञानम् । कालभेदेन चेदणोरात्मनस्तत्र क्रमेण गमनेनोपपद्यत इति कथं व्याप्तत्वमिति चेन्न । आत्माणुत्वपक्षे युगपद्रूपादिज्ञानाभावेऽपि व्याप्तत्वपक्षे तदुपपत्तेः । न च मनसोऽणुत्वाद्युगपत्समनस्केन्द्रियसन्निकर्षायोगाद्युगपद्ज्ञानायोगः । मनसाणुत्वेऽपि रश्मिद्वारा युगपदुपपत्तेः सर्वाङ्गीणस्पर्शज्ञानस्या-

(वाक्यार्थमुक्तावली)

वर्जनीयत्वाच्चेति । यद्वा रूपादीनामित्यत्र न युगपज्ज्ञाने तात्पर्यम् । हृदिस्थाण्वात्मना चक्षुरादीनां गोलकवर्तिनां सन्निकर्षायोगाद्रूपादिज्ञानमेव दुर्लभं स्यात् । गत्वासन्निकर्षस्यानङ्गीकृतत्वादिति भावः । अविरोधश्चन्दनवदित्यत्रांशतः शरीरव्याप्तेरुपपादयिष्यमाणत्वात् तन्निरसनीयं पूर्वपक्षं परिशेषेण व्याप्तत्वमुपपादयितुमाह ॥ **न चात्मेति** ॥ एवं चात्मा कात्स्न्यर्मित्यत्रोक्तदोषत्वादित्यर्थः ॥ **शरीरवदिति** ॥ यथाशरीरं परस्परभिन्नैः अंशेन प्रत्येकं भिन्नाभिन्नैः कृत्स्नैश्चाभिन्नैः अंशैरुपेतं तथाऽत्मापि तादृशैरंशैरुपेतः स्यादित्यर्थः ॥ **प्रत्येकमिति** ॥ भेदादिति भावः ॥ **उन्मथ्येति** ॥ सर्वत आकृष्यमाणं जीर्णं स्यात् । विरुद्धविक्रियमागामिनं दृष्ट्वा तैरंशैरप्रवर्तते क्रियाशून्यं वापद्येतेत्यर्थः ।

ननु समुदायिष्वैकमत्याभावेऽपि अंशसमुदाये तत्सम्भवतीत्याशंक्याह ॥ **न चेति** ॥ यथा नानावृक्षसमुदायाख्यो वृक्षेभ्योऽन्यो धर्मी नास्ति तथेत्यर्थः । न तु नानावृक्षा एव वनप्रत्ययविषयः एकं वनमिति प्रत्ययात् । किं तु वृक्षारब्धः समुदायाख्योऽवयवी तथा प्रकृते किं नस्यादित्यत आह ॥ **न च समुदायाख्य इति** ॥ भवति उत्पद्यत इत्यर्थः । एकं वनमितिप्रत्ययस्तु एकदेश-स्थत्वोपाधिनेति भावः । तन्तुपटयोरिव स्यादित्यत आह ॥ **न चेति** ॥ **तच्छेषमिति** ॥ ज्ञऽत्यनु-वृत्तेः सिद्धत्वान्नाणुरिति सूत्रादाकर्षेणात्राध्याहार्यं भागमाहेत्यर्थः । पतत्रि शरीरे अणुत्वाभावा-त्साध्यवैकल्यमित्यतो भाष्ये अणुरेवेति एवकारसूचितं साध्यमाह न व्याप्त इति ॥ **व्याप्तस्येति** ॥ केवलमपरिच्छिन्नस्येत्यर्थः । अणुत्वासमानाधिकरणदेशापरिच्छेदयुक्तस्येत्यर्थः । एवं चेश्वरस्य व्याप्तस्याप्युत्क्रमणादिसम्भवतीति न कश्चिद्दोषः इति ज्ञेयम् । ननु जीवस्योत्क्रान्त्यादिना व्याप्तत्वाभावेऽपि मध्यमपरिमाणत्वमस्तु । नाणुत्वसिद्धिरित्यत आह ॥ **अत इति** ॥ अनेन जीवः अणुः मध्यमपरिमाणशून्यत्वे सति, अव्याप्तद्रव्यत्वात्, परमाणुवत्, व्यतिरेकेण घटादिवदिति प्रयोगो दर्शितः । अनेनाणुरेवेति भाष्यं फलितप्रदर्शनपरमित्युक्तं भवति ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृतो जीव इति** ॥ धर्मेषूत्पत्तेः प्राथम्यात् जीवस्य तद्विचारानन्तरं तत्परिमाणविचारादनन्तरसङ्गतिरिति भावः । आत्मन इत्यनेन पुनरुक्तिं

(तत्त्वसुबोधिनी)

सर्वभिदाप्रतीतिं च निवारयितुमाह ॥ **सर्वस्येति** ॥ सर्वरूपत्वप्रतीतिमपाकर्तुमाह ॥ **सर्वरूपाः पूर्णा इति** ॥ सर्वः पूर्णगुणत्वत इत्युक्तेरिति भावः । अणुर्ह्येष आत्मा इत्येतावत एव प्रकृतोपयोगात् तावदेवोदाहर्तव्यम् । इत्यादेरुदाहरणमयुक्तमित्यत आह ॥ **यं वा इति न चेदमिति** ॥ अणुत्वेन करणसम्प्राप्त्यभावात् ज्ञानमेव न स्यादिति भावः । ननु करणप्राप्त्यभावेऽपि अस्तु ज्ञानरूपक्रियेत्यत आह ॥ **न हि कश्चिदिति** ॥ तथा भित्त्यादिव्यवधाने सत्यपि चक्षुषा घटादिज्ञानप्रसङ्ग इति भावः । नन्वात्मनो देहपरिमाणत्वाङ्गीकारात् सर्वशरीरगतज्ञानमुपपन्नमित्यत आह ॥ **न चेति** ॥ **उक्तदोषत्वादिति** ॥ एवं चात्माकात्स्नर्यमित्यत्रेत्यर्थः । दूषणान्तरं चाह ॥ **शरीरेति** ॥ कुत इत्यत आह ॥ **मध्यमेति** ॥ अस्तु सांशत्वं ततः किमित्यत आह ॥ **तेषां चेति** ॥ किं चेतना उताचेतनाः । नान्त्यः अचेतनस्य चेतनांशत्वायोगात् । आद्यं प्रत्याह ॥ **प्रत्येकं चेतनत्वेनेति** ॥ विरुद्धा दिक्षुक्रिया यस्य तत् तथोक्तम् । ननु भूतानामप्यंशानामेकमत्यात्र शरीरोन्मथनादीत्यत आह ॥ **न हीति** ॥ ननु न तेषां प्रत्येकं धर्मित्वं किन्तु तत्समुदायस्य धर्मित्वं तथा च नैष दोष इत्यत आह ॥ **न चेति** ॥ अणुत्वस्योत्क्रान्त्यादीनां च साध्यसाधनभावे पतत्रिशरीरे व्यभिचारः स्यादित्यतो भाष्ये अणुरेवेति एवकारप्रयोगसूचितं साध्यमाह ॥ **न व्याप्त इति** ॥ नन्वस्तु व्याप्तस्योत्युत्क्रान्त्यादीत्यत आह ॥ **न हीति** ॥

## वाक्यार्थविवरणम्

'नन्वणुर्ह्येष आत्मा' इत्यस्य वोपयुक्तत्वेन 'यं वा' इत्यादिवाक्यशेषोद्धारो व्यर्थ इत्यत आह ॥ **यं वा इति** ॥ **जीवत्वेति** ॥ 'अणुर्ह्येष' इति वाक्यस्य जीवपरत्वज्ञापनार्थ इत्यर्थः । व्याप्तत्वं प्रतीयत इत्यत्र जीवस्येत्येव शेषः । अणुत्वं चेत्यनन्तरं प्रतीयते जीवस्येति पदद्वयशेष इति ज्ञातव्यम् ॥ **न जीवेति** ॥ किन्त्वीश्वरविषयमिति भावः ॥ **बह्विति** ॥ ईश्वरस्यैकत्वात् जीवानां बहुत्वेन तत्सम्भवादिति भावः ॥ **बाधेति** ॥ बहुवचनश्रुतेः बहुत्वोपेतजीवस्वरूपपरत्वेन मुख्यार्थोपपत्ता-वीश्वररूपबाहुल्यरूपामुख्यार्थग्रहणायोगादिति भावः । ज्ञानात् । युगपदिति शेषः । इदं च दीर्घशष्कुलीभक्षणे द्रष्टव्यम् । अन्यथा युगपदित्यव्याख्यानेऽणोरपि जीवस्य क्रमेण तत्तदिन्द्रियं प्राप्य रूपादिज्ञानजनकत्वोपपत्तौ न व्याप्तत्वसिद्धिरिति ध्येयम् । उक्तं हेतुद्वयम् अणुत्वपक्षे न सम्भवतीत्यत आह ॥ **न चेदमिति** ॥ इदं सर्वदेहगतस्पर्शज्ञानम् । अणुत्वपक्षे देहैकदेशस्थत्वेन न

(वाक्यार्थविवरणम्)

सर्वदेहगतस्पर्शज्ञानं सम्भवतीति भावः ॥ **अप्राप्तेति** ॥ स्वेनाप्राप्तं यत्करणम् इन्द्रियादि तेनेत्यर्थः । निवर्तयति न हि । न जनयतीत्यर्थः । तथा चाणुत्वेन देहैकदेश एवावस्थितस्यात्मन इन्द्रियादिकं प्राप्य ज्ञानजनकत्वायोगात् । तस्मात् तत्तदिन्द्रियं प्राप्य युगपद् ज्ञानजनकत्वं वाच्यम् । तद् व्याप्तत्वं विना न सम्भवतीति भावः ।

ननु तर्हि सर्वदेहगतस्पर्शज्ञानाद्यन्यथानुपपत्त्या आत्मा देहपरिमाण एवास्तु न व्याप्त इत्याशङ्क्याह ॥ **न चेति** ॥ **उक्तदोषत्वादिति** ॥ हस्त्यादिशरीरस्थस्य पिपीलिकादिदेहप्राप्तावतिरेकः स्यादित्युक्तेत्यर्थः । दूषणान्तरं चाह ॥ **शरीरेति** ॥ **शरीरवदिति** ॥ शरीरे हस्तपादाद्यंशवदित्यर्थः । शरीरपरिमाणत्वेऽपि कुतः सांशत्वमित्यत आह ॥ **मध्यमेति** ॥ तथा च शरीरपरिमाणत्वे मध्यमपरिमाणप्राप्त्या मध्यमपरिमाणवतश्च शरीरादेः सांशत्वदर्शनेन तद्वदात्मनोऽपि सांशत्वं स्यादित्यापादनं द्रष्टव्यम् । अस्तु सांशत्वं ततः को दोष इत्यत आह ॥ **तेषां चेति** ॥ विरुद्धादिक्रियम् । विरुद्धासु दिक्षु क्रिया यस्य तत्तथोक्तम् । ऐकमत्याभावादिति भावः ।

ननु नोन्मथनं, तूष्णीमेव तेषां देहेऽवस्थानादित्यत आह ॥ **अक्रियं वेति** ॥ ननु नैष दोषः । तेषां चेतनभूतानामंशानामैकमत्येन प्रवृत्त्यभ्युपगमादित्यत आह ॥ **न हीति** ॥ ननु तेषामंशानां समुदायो नाम कश्चिद्धर्मोऽस्ति । स एव जीवस्तस्य चैकत्वेन विरुद्धादिक्रियाभावेन नोन्मथनादित्यत आह ॥ **न चेति** ॥ समुदायस्य समुदाय्यभिन्नत्वेन तेषां चानेकत्वाद्विरुद्धादिक्रियस्य देहस्योन्मथनादि स्यादेवेति भावः । नन्वथापि तैः सर्वैरंशैरारब्धोंऽशी कश्चनास्ति, स जीवस्तस्य चैकत्वान्न विरुद्धादिक्रियत्वेनोन्मथनादीत्यत आह ॥ **न चेति** ॥ **अनित्यत्वेति** ॥ उत्पत्तिमतो भावस्य विनाशनियमादिति भावः । **मूर्तमिति** ॥ सर्वमूर्तद्रव्यसंयोगित्वमेव व्याप्तत्वमित्यर्थः । मध्यमपरिमाणोपेते पतत्रिशरीररूपे दृष्टान्ते साध्यवैकल्यपरिहारायाणुरेवेत्यस्याभिप्रायमाह ॥ **न व्याप्त इति** ॥ तथा च व्याप्तत्वाभावः साध्य इति नोक्तदोष इति भावः । उत्क्रान्त्यादिसत्त्वेऽपि व्याप्तत्वमेवास्त्वित्यप्रयोजकतायां यदि जीवो व्याप्तः स्यात्तर्हि उत्क्रान्त्यादिमान् न स्यादित्यभिप्रेततर्कमूलभूतव्याप्तौ दृष्टान्तमाह ॥ **न हीति** ॥ व्याप्त्यनुपपत्तौ नाणुत्वसिद्धिर्मध्यमपरिमाणस्यापि सम्भवादित्यतो निराकृतेत्युक्तम् । एवं चात्मेत्युक्तरीत्येति शेषः ॥ **कुत इति** ॥ तथा चासिद्धिरिति भावः ।

## वाक्यार्थमञ्जरी

आत्मन इत्यनेन पुनरुक्तिं सर्वाभेदप्रतीतिं च निवारयितुमाह ॥ **सर्वस्येति** ॥ सर्वस्वरूपत्व प्रतीतिमपाकर्तुमाह ॥ **पूर्णा इति** ॥ सर्वः पूर्णगुणत्वत इत्युक्तेरिति भावः । भाष्ये शिनीतः बन्धयतः ॥ **व्याप्तत्वमणुत्वं चेति** ॥ व्याप्तत्वं प्रतीयत इत्यनन्तरं जीवस्येति शेषः । अणुत्वमित्यनन्तरं जीवस्य प्रतीयत इति शेष इति विवेकः । जीवविषयेत्यनन्तरं किंत्वीश्वरविषयेति शेषः परिशेष-रूपयुक्तिं वक्तुं प्रसक्तं प्रतिक्षिपति ॥ **न तावदित्यादिना** ॥ नन्वात्मेन्द्रियसन्निकर्षस्या-प्रयोजकत्वादणोरात्मनो युगपत्सर्वेन्द्रिय जन्यज्ञानमस्त्वित्यत आह ॥ **न हीति** ॥ **अप्राप्तेति** ॥ असम्बन्धेत्यर्थः । निर्वर्तयति निष्पादयति ॥ **उक्तदोपत्वादिति** ॥ एवं चात्माकात्स्न्र्यमित्यत्र पिपीलिकादेहगतस्य गजादिदेहप्राप्तौ अपूर्तिः स्यादित्यादि दोषोक्तेरित्यर्थः । ततः किमिति चेदत्र प्रष्टव्यं किमंशा एव गमनादिक्रियां कुर्वन्ति उत तत्समुदायः अथ तदारब्धोऽवयवी आद्ये आह ॥ **तेषां चेति** ॥ अंशानां प्रत्येकं गमनसामर्थ्यमस्ति न वा आद्ये कश्चिदेकां दिशं गच्छेदपरस्त्वन्यां शरीरैकदेशगमनं भागांतरस्यान्यत्र गमनमतः शरीरविनाशः स्यात् द्वितीये शरीरक्रिया न स्यात् न हि यदैकांशो गच्छति तदान्यांशेनापि गन्तव्यमिति नियमोऽस्तीत्यर्थः । ऐकमत्यात्पक्षद्वयेऽप्यदोप इत्यत आह ॥ **न हीति** ॥ द्वितीयं दूषयति ॥ **न चेति** ॥ समुदायिभिन्नसमुदायाभावादिति भावः । तृतीयं व्याचष्टे ॥ **न चांशेति** ॥ एवं परिशेषमुक्तानुमानं चाह ॥ **तथा चेति** ॥ सर्वभूत-संयोगित्वमेव व्याप्यत्वमिति भावः ॥ ॐ **उत्क्रान्तिगत्यागतीनां** ॐ । अणुरेव जीवः कुतः उत्क्रान्तिगत्यागतीनां हेतूनां सकाशादुत्क्रान्त्यादिमत्वादिति यावत् ।

## सूत्रभाष्यम्

**तत्र स्वातन्त्र्यप्रतीतेः –**

**'एकः प्रसूयते जन्तुरेक एव प्रमीयते ।**
**एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम्' ॥ इत्यादेश्च ।**

**स्वयमेवेत्यतो वक्ति –**

**॥ ॐ स्वात्मना चोत्तरयोः ॐ ॥ २१ ॥**

(सूत्रभाष्यम्)

'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते। तं वा एतमभिवदन्ति स्वात्मा' इति। 'एष ह्यानन्दमादत्ते एष ह्येनं जीवमभि-जीवयत्येष उद्गमयत्येष गमयत्येष आगमयति' इत्युत्तरयोर्वाक्ययोः परमात्मनैवोत्क्रान्त्यादयः।

## तत्त्वप्रदीपिका

तत्र 'सोऽस्माच्छरीरादुत्क्रम्य' इत्यादि श्रुतावुत्क्रान्त्यादिषु तस्य परप्रेरणानुक्त्या स्वातन्त्र्यप्रतीतेः स्वयमेवोत्क्रामति, गच्छत्यागच्छति च जीवः। एकः प्रसूयते जन्तुरित्यादिनैकाकित्वप्रतीतेश्चेत्यत आह– स्वात्मना चोत्तरयोः। स्वात्मना परेणेति विशेषणान्न स्वरूपवाची स्वात्मशब्दः। 'सु' सुखं तदादत्त इति 'स्वात्मा' परमः। तदेव ह्याह– 'एष ह्यानन्दमादत्त' इति। न हि जीवस्याऽ-नन्दादानं स्वतो दृश्यते।

## तत्त्वप्रकाशिका

एवमुत्क्रान्त्यादिहेतुभ्यो जीवस्याणुत्वे सिद्धे किंचित्प्रसङ्गाच्चिन्त्यते। किमिदमुत्क्रान्त्यादिक-मात्मनः परमेश्वरेण स्वयमेव वेति। किं तावत्प्राप्तमिति तत्राह ॥ **तत्रेति** ॥ उदाहृतश्रुतौ जीव-स्योत्क्रान्त्यादौ स्वातन्त्र्यप्रतीतेः स्वयमेव तस्योत्क्रान्त्यादिनेश्वरेणेत्यर्थः। अत्र जीवस्योत्क्रान्त्याद्येव श्रूयते न त्वन्याधीनताया विधिर्निषेधो वास्त्यतो नानेन दृढनिर्णय इत्यत आह ॥ **एक इति** ॥ स्मृत्यनुसारेण श्रुतेरपि पराधीनत्वनिषेधोऽर्थ इति भावः। एवं प्राप्ते परिहाराय सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ नैतच्छ्रुतिगतसाधारण्योक्त्या जीवस्य स्वयमेवोत्क्रान्त्यादीति मन्तव्यं किं तु परमात्मनैव। उत्तरवाक्यद्वये तथोक्तत्वात्। तदनुसारेण साधारणपूर्ववाक्यस्यापि तदर्थत्वोपपत्तेरिति भावः। स्मृतिस्तु प्रसवादिदुःखानुभवविषयेति हृदयम्। उन्नीयते मोक्षाय। एष ह्येवेति द्वितीयवाक्यं पूर्ववाक्यस्थस्वात्मशब्दं व्याख्याति।

## गुर्वर्थदीपिका

स्वयमेव तस्योत्क्रान्त्यादीत्यत्र स्वयमेव स्वत एवेत्यर्थः। 'आतेन यातं मनसा जवीयसा रथं यं वामृभवश्चक्रुरश्विना'। यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः।

## भावबोधः

एष ह्येवेति द्वितीयवाक्ये स्वात्मशब्दाभावात् सूत्रे उत्तरयोरिति द्वितीयग्रहणं कथमित्यत आह– **एष ह्येवेति ॥**

'यच्चाप्नोत्ति यदादत्ते यच्चातिविषयानिह'

इत्यादिवचनादेष ह्येवेत्यादेः स्वात्मशब्दव्याख्यानरूपत्वं द्रष्टव्यम् ।

## भावदीपः

**प्रसङ्गादिति ॥** प्रस्तुताणुत्वस्योत्क्रान्त्यादिमात्रेण सिद्धेरणुत्वसाधकाधिकरणमध्ये स्वातन्त्र्य-पारतन्त्र्यादिचिन्ता प्रासङ्गिकीत्यर्थः । तत्रेत्यस्यार्थद्वयमाह ॥ **उदाहृतश्रुताविति** ॥ उत्क्रान्त्या-दाविति च । तस्योत्क्रान्त्यादीति शेषोक्तिः । नेश्वरेणेत्येवार्थः । विधिरिति दृष्टान्ततयोक्तम् । परमात्मनैवेत्येवकारव्यावर्त्यं दर्शयन्नेव तत्पदमनुवदति ॥ **नैतदित्यादिना** ॥ एष जीवः परेणानन्दमादत्त इति भ्रमनिरासायाऽऽह ॥ **एष ह्येवेति** ॥ एतेन जीवेन सहेश्वरस्याप्युत्क्रान्त्यादि-मत्त्वेन जीववद् दुःखं स्यादिति निरस्तम् । आनन्दमादत्त इत्यात्मेत्यात्मपदव्याख्यानात् । युक्तिस्तु वैशेष्यादिति प्रागुक्ता ध्येया ।

## अभिनवचन्द्रिका

**प्रसङ्गाच्चिन्त्यत इति ॥** 'उत्क्रान्तिगत्यागतीनाम्' इति जीवाणुत्वं प्रसाध्य, अत्युत्कटतया स्मृतत्वात् 'स्वात्मना चोत्तरयोः' इत्यधिकरणेन जीवास्वातन्त्र्यं प्रसाध्य, पुनः सिंहावलोकनन्यायेन 'उत्क्रान्तिगत्या गतीनाम्' इति प्राचीनाधिकरणप्रमेयमेव 'नाणुरतच्छ्रुतेः' इत्यादिना विचारयामासेति इदमन्तर्भेदाधिकरणमिति भावः । 'एष ह्येवेति' वाक्ये ईश्वरवाचकशब्दाभावान्नेश्वर-परत्वमित्याशङ्कानिरासाय आह– **एष ह्येवेति ॥** पूर्ववाक्यगतात्मशब्दनिर्वचनपरत्वादीश्वरपरत्व-निर्णय इति भावः ।

'स्वात्मना चोत्तरयोः' इत्यधिकरणस्येदं सङ्गत्यादि । अत्र परमेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवस्योत्क्रान्त्यादौ स्वातन्त्र्यविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । विष्णुः सर्वनियामक

(अभिनवचन्द्रिका)

इत्युक्तं, तस्य च श्रुत्योः परस्परविरोधेनाप्रामाण्येऽयोगप्रसङ्गादवश्यं विरोधः परिहरणीयः। जीवोऽत्र विषयः। स्वतन्त्रः परतन्त्रो वेति सन्देहः। 'सोऽस्माच्छरीरादुत्क्रम्याऽमुं लोकमभिगच्छति। स एतेन स्वात्मना परेणेमं गर्भमनुप्रविशति' इति श्रुतिविगानं सन्देहबीजम्। 'जीवः स्वतन्त्र' एवेति पूर्वपक्षः। 'सोऽस्माच्छरीरादुत्क्रम्याऽमुं लोकमभिगच्छति' इति श्रुतेः। न च – श्रुत्यन्तरविरोधः। 'एकः प्रसूयते जन्तुः' इति अनुभवानुसारिस्मृतिसहितत्वेन तद्बाधात्। ततश्चायुक्तं लक्षणसूत्रमिति।

सिद्धान्तस्तु परतन्त्र एव जीवः प्रतिपत्तव्यः। 'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति। एष ह्येवानन्दमादत्ते, एष ह्येवैनं जीवमभिजीवयति' इत्युक्तश्रुतिविरोधादप्रमाणमेव। स्मृतिस्तु प्रसवादिदुःखानुभवविषयेति। 'आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना। यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः निमिषश्चिज्जवीयसा रथेनाऽऽयातमश्विना अन्तिषद्भूतुवामव इति।

## वाक्यार्थमुक्तावली

जन्मादिसूत्रोक्तसर्वनियामकत्वसाधनायान्तर्भेदाधिकरणमिति भावेनाह ॥ **एवमिति** ॥ एकः प्रसूयत इत्यत्रैकोऽसहाय इत्यर्थमभिप्रेत्याह ॥ **स्मृत्यनुसारेणेति** ॥ सूत्रे ज्ञस्योत्क्रान्त्यादिरित्यनुवर्तते। चोऽवधारणे। उत्तरयोर्वाक्ययोस्सकाशादिति शेषः ॥ **उक्तत्वादिति वा** ॥ तथात्वे सप्तमी ॥ **स्मृतिरिति** ॥ एक एव प्रसूयते प्रसूत्यादिदुःखमनुभवतीत्येवं दुःखानुभवविषय इति भावः। द्वितीयवाक्ये स्वात्मशब्दाभावात्। ननु यदीदं वाक्यद्वयमेकप्रकरणगतं स्यात्तर्हि पुनरुक्तमित्यत आह ॥ **एष हीति** ॥ तं वा एतमिति प्रतिज्ञाय एष हीत्यादिना पूर्ववाक्यस्थात्मशब्दं व्याख्यातीत्यर्थः। ननु स्वात्मशब्दमिति वाच्यम्। सुशुभम् आनन्दमादत्त इति व्युत्पत्ते-रुपपत्तेरिति चेन्न। स्वतन्त्रश्चासावात्मा चेति स्वात्मेति विग्रहमभिप्रेत्यात्मशब्दमात्रस्यार्थकथनात् आदत्त इत्यात्मा आनन्दमिति योग्यतया लाभ इत्युपपत्तेः। 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह' इत्यादेः। अतसातत्यगमन इति धातोः। जीवनं गमयति, शरीरादुद्गमयति, इत्येतदपि आत्मशब्दार्थ एवेति बोध्यम्। एतेन सूत्रे स्वेनेति वा आत्मनेति वा वाच्ये स्वात्मनेति वचनं जीवेन सहोत्क्रान्त्यादिमत्त्वे जीववद्दुःखी स्यादिति शङ्कानिरासायात्मपदेन स्वस्य दुःखविनैव जीवोत्क्रान्त्यादिहेतुत्वस्येत्यनेन स्वातन्त्र्योक्त्या वैशेष्ययुक्तेश्च सूचनात् श्रुत्यनुसाराच्चेत्युक्तं भवति।

## तत्त्वसुबोधिनी

प्रसङ्गाच्चिन्त्यत इति ॥ प्रस्तुतस्याणुत्वस्योत्क्रान्तिमात्रेण सिद्धेः अणुत्वसाधकाधिकरणमध्ये स्वातन्त्र्यपारतन्त्र्यचिन्ता प्रासङ्गिकीत्यर्थः । तर्ह्येक इति स्मृतेः का गतिरित्यत आह ॥ **स्मृतिस्तु इति** ॥ द्वितीयवाक्ये स्वात्मशब्दाभावात् सूत्रे उत्तरयोरिति द्वितीयवाक्यग्रहणं कथमित्यत आह ॥ **एष ह्येवेति** ॥ 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह' इत्यादेः स्वात्मपदव्याख्यानरूपत्वं द्रष्टव्यम् ।

## वाक्यार्थविवरणम्

**स्वातन्त्र्येति** ॥ अमुं लोकमभिगच्छति' इति वचनेनेति शेषः ॥ **एतच्छ्रुतीति** ॥ सोऽस्मात्' इति श्रुतीत्यर्थः ॥ **स्मृतिस्त्विति** ॥ 'एकोऽनुभुङ्क्ते सुकृतम्' इत्यत्रापि विषयजन्यं सुखमिति व्याख्येयम् । भगवतस्तु शुभविषयभोगेन सुखं व्यज्यत एव न तूत्पद्यते । अतोऽत्र सुकृतभोगस्य परमात्मनोऽपि सत्त्वेनैक इति कथमुक्तमिति शङ्कानवकाशः । भाष्य 'एनं जीवं प्रत्यभिजीव्य' उपजीव्यो भूत्वेत्यर्थः ।

## वाक्यार्थमञ्जरी

॥ **प्रसङ्गादिति** ॥ जीवस्योत्क्रान्त्यादि कर्तृत्वोक्तौ क्रियास्वातंत्र्यं सर्वकर्तृत्वमिति तस्य स्वातन्त्र्यं सर्वकर्तृत्वमिति तस्य स्वातन्त्र्यप्रतीतौ तस्यात्यन्तं निषिद्धतया तदस्वातन्त्र्यं स्मृतमत्र विचार्यत इत्यर्थः । स्वयमेव स्वेनैव ॥ **स्मृत्यनुसारेणेति** ॥ तत्रैकशब्देनान्यनिषेधादिति भावः ॥ ॐ **स्वात्मना चोत्तरयोः** ॐ ॥ जीवस्योत्क्रान्तिः स्वात्मना च परमात्मनैव न स्वतः कुतः उत्तरयोः उत्तरवाक्ययोः सकाशात् उत्तरवाक्यद्वये तथा प्रतिपादनादिति यावत् । उन्नीयते ऊर्ध्वं नीयते अतो न पुनरुक्तिरिति भावः । नन्वेष ह्येवेति द्वितीयवाक्ये स्वात्मशब्दाभावात् सूत्रे उत्तरयोरिति द्वितीयवाक्यग्रहणं कथमित्यत आह ॥ **एष ह्येवेतीति** ॥ सु आनन्दमादत्त इति स्वात्मोच्यते एतदेवानन्दमादत्त इत्यनेनोच्यत इति भावः ।

## सूत्रभाष्यम्

**॥ ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ २२ ॥**

'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च' इति व्याप्तिश्रुतेर्नाणुर्जीव इति चेन्न। 'स आत्मेदं सृजति स द्विधेदं बिभर्ति अन्तर्बहिश्च। स बहुधेदमनुप्रविश्याऽऽत्मनोऽभिनयति। स आत्मा स आत्मनः स ईशः स विष्णुः स परः परोवरीयान्' इति परमात्माधिकारत्वात्।

'एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः।
एक एवोच्यते वेदैस्तावता नास्य भिन्नता' इति च भविष्यत्पुराणे।

'तदयं प्राणोऽधितिष्ठति। तदुक्तमृषिणा – आ तेन यातम्' (ऐ.आ. २-३-८) इत्यादि च॥

## तत्त्वप्रदीपिका

उत्सर्गतश्चाणुत्वसाधिकास्ताः। अत्रापवादमाशङ्क्य परिहरति। **नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्**। स बहुभी रूपैरिदं जगदनुप्रविश्य स्वत एवाभितो नयतीत्येकस्यैव बहुरूपत्वकथनाद्व्याप्ता इति बहुवचनं च युज्यते। स आत्मा स आत्मान इत्येकस्यैव बहुरूपत्वं पुनस्तात्पर्यादुपदिशति। परोवरीयस्त्वोक्त्या च तस्यावरत्वं दूरीकरोति। 'तदुक्तमृषिणा'' इत्यादेस्तु श्रीमन्महैतरेयोपनिषद्भाष्य एवाभिहितोऽर्थो भगवता भाष्यकारेण–

'ऋष ज्ञान इति ह्यस्माद्धातोस्सर्वज्ञ एकराट्।
वेदद्रष्टा परमऋषिर्हयास्यः पुरुषोत्तमः॥
मन्त्राणां प्रथमो द्रष्टा सर्वेषां यत एव तु।
ऋषिणोक्तमिति प्राहुर्मन्त्रोक्तं ब्राह्मणान्यतः॥
तत्प्रसादाद्धि तपसा पश्चान्मन्त्रान्प्रपेदिरे।
ब्रह्माद्या ब्राह्मणं पश्चात्तैर्दृष्टमृषिभिः पृथक्॥
मन्त्राश्चोपनिषच्चैव नाकृत्वा सुमहत्तपः।
प्रथमं तद्धयास्येन दृष्टं केनचिदीक्ष्यते॥

(तत्त्वप्रदीपिका)

विना पृथक्ततो दृश्येद् ब्राह्मणं मुनिभिर्यतः ।
मन्त्राश्चोपनिपच्चैव ब्राह्मणादुत्तमास्ततः ॥
तत्राप्युपनिपच्छ्रेष्ठा युक्तावस्थाऽधिगम्यत'

इत्यादि प्रमाणविवेके । तेन रथेन, अध्यात्मं शरीराख्येन, अधिदैवतं रथरूपेण । 'ऋभव' इत्यत्र देवानां साधारणं नाम ।

'आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि ।
सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि' इति शब्दनिर्णये ॥

'निर्मितो दैवतैस्सर्वैर्विष्णुना वायुना सह ।
अधिष्ठितो रथो दिव्यस्सोऽध्यात्मं देहनामकः ॥
सम्यग्योग्यो यदा तस्य मनोवाक्कर्मभिर्भवेत् ।
देहाख्यस्य रथस्यैव तदा नारायणात्प्रभोः ॥
विविधं वासवत्त्वात्तु विवस्वन्नामकात् शुभम् ।
संसारवारकं ज्ञानं दिवो दुहितृनामकम् ॥
विष्णुतत्वापरोक्षाख्यमहनी द्वे च शोभने ।
ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे ॥
जायन्ते देवता त्वेषां भारती वायुरेव च ।
जीवन्मुक्तेश्च मुक्तेश्च दाता रूपद्वयी विभुः ॥
सर्वस्त्रीणामुत्तमत्वाद्द्यौर्नाम श्रीरुदाहृता ।
अहराख्या भारती तु नित्याहेयस्वरूपतः ॥
अहरित्युच्यते वायुर्ज्ञानरूपात्तथैव च ।
अधिदैवे रथेऽप्येते विष्णोर्लक्ष्म्यां प्रजज्ञिरे ॥
रथेन तेन देवेशौ विष्णुवायू जगत्पती ।
आयातमिति हैवैतौ प्रार्थयेद्यज्ञकर्मणि ॥
अन्यदाऽप्यर्थयेदेतौ ज्ञानेच्छुः पुरुपस्सदा ।
जपमन्त्रद्वयं नित्य'मा तेन' 'निमिप'स्तथा ॥
रक्षणं वां समीपे स्यान्ममेत्यध्यात्ममेव च ।
हयास्यत्वादश्विनौ तावित्याह परमा श्रुतिः ॥

(तत्त्वप्रदीपिका)

ऐन्द्राग्नेयादिकाश्चैव सर्वे मन्त्रा हरिं परम् ।
वदन्ति मुख्यतो नान्यं सर्वनामानमच्युतम् ॥
अथवा वायुदेहस्थं पृथक्संस्थं च केशवम् ।
मन्त्रो द्विवचनो वक्ति तथा वहुवचस्स्वपि' ॥ इत्याद्यैतरेयसंहितायाम् ॥

सुखं ददत इति 'सुदिने' । 'विवस्वतो' विष्णोस्सकाशात् 'दिवो दुहिता' 'अहनी' च जायन्ते । 'अहनी' इति द्विवचनेन द्वित्वे सिद्धेऽप्युभे इति वचनमध्यात्माधिदैवयोरुभयोरपि वचनार्थम् । न च सूर्यरथोऽत्र वर्ण्यते । न चाहोरात्रमहनी इत्युच्यते । सूर्यस्याश्विनामाभावात् । सप्ताश्वत्वाच्च तद्रथस्य । चतुरश्वत्वं चात्रोच्यते । 'श्रोत्रे पक्षसी चक्षुपी युक्ते' इत्यध्यात्मसम्वन्धाच्च । न च रात्रौ सुदिनमिति प्रयोगो दृष्टः । असुदिनस्यापि तत एव ज्ञातत्वाद्व्यर्थविशेपणता च । अस्मिन्पक्षे तु लौकिकाहर्व्यावृत्त्यर्थं सुदिने इति युज्यते । जीवन्मुक्तिर्मुक्तिश्च हि मुख्ये सुदिने । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत्कामयते तत्तत्सृजत' इति ज्ञान्यवस्थायां मुक्तौ भोगवाहुल्यकारणत्वात्साऽपि मुक्तिवत्सुदिनम् । न हि मुक्तावाधिक्यार्जनमस्ति । 'न हीयते यत्र गत्वा यत्र गत्वा न वर्धते' इति वचनात् । अतो ज्ञानोत्पत्तिसमनन्तरमेव मुक्तौ न पुनरार्जनमस्तीति कञ्चित्कालं ज्ञानित्वेनावस्थानमपि सुदिनमेव । ज्ञानात्पूर्वं तु पतनसंशयादेव न सुदिनम् । न चाश्विरथोऽत्र वर्ण्यते । न ह्यश्विरथयोगादहनी जायेते । एकरासभयुक्तो हि तद्रथः । 'तद्रासभो नासत्या सहस्रम्' इत्यादि । न च विवस्वच्छब्दोऽश्विनोर्विद्यते । 'यो देवानां नामधा एक एव' इति विष्णोस्सर्वनामानि प्रसिद्धानि च । 'युजो युक्ता अभियत्संवहन्ति' इत्यादिना तस्यैव प्रस्तावाच्च । अतो विष्णुरेव मुख्यतस्सर्वनामोक्त इति सिद्धमिति ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ **नेति** ॥ न जीवोऽणुः 'व्याप्ता ह्यात्मानः' इत्यनणुत्वाभिधायकश्रुतेः । उत्क्रान्त्यादिकं तु मनोगतमात्मन्युपचर्यत इति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ नैतच्छ्रुतिवलेनात्मनो व्याप्तत्वं वक्तव्यम् । अस्याः श्रुतेः परमात्मविपयत्वात् । 'स आत्मेदं सृजति' इत्यत्र परमात्मनः पठितत्वेनास्यास्तत्प्रकरणत्वात् । एतद्वाक्यस्य विष्णुपरत्वे वहुवचनविरोध इति चेन्न । परमात्मन्येव आत्मान इति वहुवचनश्रवणादिति भावः । अत एवैतच्छ्रुतेरबाधकत्वेनोत्क्रान्त्यादीनामौपचारिकत्वकल्पनं परास्तम् । ईश्वरस्य वहुवचनवाच्यत्वे

(तत्त्वप्रकाशिका)

भेदः स्यादित्यत आह ॥ **एकेति** ॥ एकस्मिन्ननेकवचनप्रयोगं सम्प्रतिपन्नस्थले दर्शयति ॥ **तदिति** ॥ अत्र परमात्मन एकस्यैव शरीराधिष्ठातृत्वमुक्त्वा तत्र द्विवचनयुक्तमन्त्रौ प्रमाणयति श्रुतिरतो निरन्तरेऽपि हरौ बहुरूपत्वापेक्षया बहुवचनं युक्तमिति भावः । हे अश्विनावाशुगती मनसो जवीयसा पटुना तेन शरीराख्येन रथेनायातं शरीरे सन्निहितौ भवतम् । यं रथं युवयोरर्थमेव देवाः कृतवन्तः । यत्सम्बन्धाच्च जीवस्य भगवत्प्रसादेन विद्योत्पन्नं तत्त्वज्ञानं जीवन्मुक्तिमुक्त्यवस्थे च साध्ये भवत इति प्रथममन्त्रार्थः । निमिषश्चित् चक्षुर्निमेषणादपि वां युवयोः सकाशाद्यदवनं तदस्मदन्तिके भवत्विति द्वितीयार्थः ।

## गुर्वर्थदीपिका

'निमिषश्चिज्जवीयसा रथेनायातमश्विना । अन्तिषद्भूतुवामवः' इति मन्त्रद्वयस्यार्थमाह **अश्विनावित्यादिना** ॥ 'अशु गतौ' इति धात्वर्थमभिप्रेत्याह **आशुगती इति** ॥ तेन शरीराख्येन रथेनेत्यस्याश्विनोरन्तर्गतरूपविषयत्वादस्य मन्त्रस्याधिष्ठानभूताश्विशरीराख्यरथेनेत्यर्थः । आयातमित्यस्य तात्पर्यकथनं शरीरे सन्निहितौ भवतमिति । यस्य द्विरूपस्य भगवतो योगे सत्यपीत्यस्यार्थमाह **यत्सम्बन्धादिति** ॥ जीवस्येति तु योग्यतया सम्बन्धः । विशेषेण वसुमान्विवस्वान् भगवान् तस्मादित्यस्यार्थकथनं **भगवत्प्रसादेनेति** ॥ द्योत्यतेऽनेन तत्वमिति द्यौः विद्या । तमोगुणविजृम्भितदुर्विद्याव्यावर्तनाय दिव इत्युक्तम् । तस्या दुहिता । तदुत्पन्नं तत्त्वज्ञानमित्यर्थः । 'दुह प्रपूरण' इति धातोस्सकलाभीष्टपूरणसमर्थं तज्ज्ञानमिति सूचनाय दुहितेत्युक्तम् । अहनी तमोविरुद्धत्वादहःपदवाच्ये जीवन्मुक्तिमुक्त्यवस्थे सुदिने शोभनानि दिनानि ययोस्ते सुदिने इत्यर्थः । 'अस्तिभवत्योः सर्वत्रान्वय' इति वचनात् भवत इति क्रियाध्याहारः । अस्य तात्पर्यमाह जीवन्मुक्तिमुक्त्यवस्थे च साध्ये भवत इति । वामित्यस्यार्थकथनं युवयोस्सकाशादिति । 'अव रक्षण' इति धातोरसुन्प्रत्ययान्तात्सकारान्तं पदमिति भावेनाऽऽह **अवः अवनमिति** ॥ अन्तिषत्पदस्यार्थकथनम् **अस्मदन्तिक इति** ॥ सदित्यवनस्यैव विशेषणम् । भूत्वित्यस्यार्थकथनं भवत्विति । तस्यावनस्य कदापि विकाराभावसूचनाय श्रुतौ भू इति धातुप्रकृतेरेव ग्रहणम् ।

## भावबोधः

'आतेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ।'

निमिषश्चिज्जवीयसा रथेनायातमश्विना । अन्तिषद्भूतुवामः' इति मन्त्रद्वयम् । ऋभव इति देवानां साधारणं नाम ।

'निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।
अधिष्ठितो रथो दिव्यः सोऽध्यात्मदेहनामकः ॥
सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् ।
देहाख्यस्य रथस्यैव तदा नारायणात् प्रभोः ॥
विविधं वासवत्वात्तु विवस्वन्नामकाच्छुभम् ।
संसारवारकं ज्ञानं दिवो दुहितृनामकम् ॥
विष्णुतत्त्वापरोक्ष्याख्यमहनी द्वे च शोभने ।
ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे' ॥

इत्याद्यैतरेयभाष्यानुसारेण व्याचष्टे– **हे अश्विनावित्यादिना** । यस्य योग इति निमित्तसप्तमी-त्यभिप्रेत्याह– **यत्सम्बन्धादिति** ॥ विवस्वत इत्यस्य तात्पर्यं भगवत्प्रसादेनेति । दिवो दुहिते-त्यस्यार्थो **वियोत्पन्नतत्त्वज्ञानमिति** ॥ अस्य जायत इति श्रौतपदेनान्वयः । उभे अहनीत्यस्यार्थः– **जीवन्मुक्तिमुक्त्यवस्थ इति** ॥ सुदिन इत्यस्यार्थः साध्ये भवत इति । जायत इत्यस्य वचन-विपरिणामेनानुवृत्तिमभिप्रेत्याह– **भवतु इति** ॥ अत एव तद्भाष्ये विवस्वतो विष्णोः सकाशाद्दिवो दुहिता अहनी च जायन्त इत्युक्तम् । भूत्वित्यस्यार्थोऽभिभवत्विति । श्रुतौ सदिति अव इत्यस्य विशेषणम् ।

## भावदीपः

उक्तानुमानस्य श्रुतिविरोधोक्तिपरतया भाष्यं व्याचष्टे ॥ **नेति** ॥ सौत्रातच्छब्दार्थमाह ॥ **अनणुत्वेति** ॥ भाष्ये व्याप्तिश्रुतेरिति फलितोक्तिरिति भावः । उक्तनिरवकाशहेतूनां व्यधिकरणा-

(भावदीपः)

सिद्धिमाह ॥ **उत्क्रान्त्यादिकमिति** ॥ प्रागुक्तं सर्वं भाष्यं नत्राऽन्वेतीति दर्शयति ॥ **नैतदिति** ॥ तत्र हेतुं स्वयमध्याहृत्य तत्र भाष्यं हेतुत्वेन योजयति ॥ **अस्या इति** ॥ **परमात्मन्येवेति** ॥ तत्प्रकारमग्रे वक्ष्याम इति भावः ॥ **एतच्छ्रुतेरबाधकत्वेनेति** ॥ प्रागुक्तयुक्तिबाधस्त्वग्रे समाधास्यत इति भावः । अत्र द्विवचनान्तपदोपेतमन्त्रोक्तिरनुपयुक्तेत्यत आह ॥ **अनेकवचनेति** ॥ तुल्य-न्यायतया बहुवचनप्रयोगसिद्धिरिति भावः ॥ **व्याचष्टे** ॥ **अत्रेत्यादिना** ॥ प्राण इत्याद्येकवचन-प्रयोगादाह ॥ **एकस्यैवेति** ॥ तदयमित्यादिश्रुतिर्व्याख्याता प्राणस्तथानुगमादित्यधिकरणे ॥ **श्रुतिरिति** ॥ ऐतरेयोपनिषत् । कथमेतावता निर्भेदे बहुवचनप्रयोगः । बहुत्वस्य भिन्नाश्रित-त्वादित्यतो न सङ्ख्योपसङ्ग्रहादपि नानाभावादित्यत्रोक्तन्यायं स्मारयति ॥ **अत इति** ॥ सौत्रप्रयोगान्निर्भेदेऽपि बहुवचनवाच्यत्वस्य स्मार्तत्वाच्चेत्यर्थः । तत्र प्राणदत्वादिब्रह्मलिङ्गवदत्रापि प्रागुक्तं ब्रह्मप्रकरणे वक्ष्यमाणे श्रुतिलिङ्गे च बहुत्वं भिन्नाश्रितमित्युत्सर्गस्यापवादकानीति भावः । 'आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वत' इति मन्त्रं 'निमिषश्चिज्जवीयसा रथेनायातमश्विना । अन्तिपद्भूतु नामवः' इति मन्त्रं च व्याख्याति ॥ **हे अश्विनाविति** ॥ तात्पर्यमाह ॥ **शरीर इति** ॥ वां युवयोरर्थमेव । ऋभवो देवाः । ऋभव इति देवानां साधारणं नामेत्यैतरेयभाष्योक्तेः । यस्य योग इत्युत्तरार्धस्य 'सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् । देहाख्यस्य रथस्यैतत्तदा नारायणात्प्रभोः । विविधं वासवत्वात्तु विवस्वन्नामकाच्छुभात् । संसारवारकं ज्ञानं दिवो दुहितृनामकम् । विष्णुतत्वा-परोक्षाख्यमहनी द्वे च शोभने । ज्ञानावस्थामुक्त्यवस्थे' इत्याद्यैतरेयभाष्योक्तरीत्या यस्य योग इत्यनेन देहाख्यरथस्य भगवदर्पणरूपसम्बन्धः । विवस्वत इत्यनेन भगवान् दिवो दुहितेत्यनेन अपरोक्षज्ञानं सुदिने शोभने अहनी इत्यनेन जीवन्मुक्तिमुक्ती च विवक्षिते इत्यभिप्रेत्यार्थमाह ॥ **यत्सम्बन्धादिति** ॥ जायत इत्यस्य जायेते इति विपरिणामलब्धार्थः साध्ये भवत इति । भूत्वित्यस्यार्थो भवत्विति ।

## अभिनवचन्द्रिका

मन्त्रद्वयं व्याचष्टे– **हे अश्विनाविति** ॥

## वाक्यार्थमुक्तावली

इतराधिकारादित्यत्रेतरमधिकरोति विषयीकरोतिति इतराधिकारः तस्य भावस्तस्मादित्यर्थमभिप्रेत्य परमात्माधिकारत्वादिति भाष्यस्य 'व्याप्ता ह्यात्मान' इति श्रुतेरित्यध्याहारपूर्वमित्यर्थमाह ॥ **अस्याः श्रुतेरिति** ॥ तदुपपादकत्वेनास्य परमात्मप्रकरणत्वादित्यर्थान्तरमाह ॥ **स आत्मेति** ॥ **एतद्वाक्यस्येति** ॥ व्याप्ता ह्यात्मान इति वाक्यस्येत्यर्थः ॥ **परमात्मन्येवेति** ॥ स आत्मा, स आत्मा न, इत्येकत्वेनोक्ते परमात्मन्येवेत्यर्थः । अत इति श्रौतप्रयोगबलान्निर्भेदेऽपि बहुत्वापेक्षया बहुवचनं युक्तमिति भावः । 'आतेन यातं मनसा जवीयसा रथं यं वा ऋभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वत, इति प्रथमो मन्त्रः । 'निमिषश्चिज्जवीयसा रथेनायातमश्विना' । अन्तिषद्भूतुवामवः' । इति द्वितीयो मन्त्रः ॥ **आशुगती इति** ॥ आशु वानात् गतेरिति व्युत्पत्तेरिति भावः । शरीरस्य मनसोऽपि जवीयस्त्वानुपपत्तेः तात्पर्यमाह ॥ **पटुनेति** ॥ यद्वा मनसोऽपि वेगे पटुतरेणेत्यर्थ एवायं देवतादेहविवक्षयोपपत्तेः ॥ **ऋभव इत्यस्यार्थो देवा इति** ॥ यस्य योगे इति निमित्तसप्तमीत्याह **यत्सम्बन्धादिति** ॥ देहाख्यरथस्य मनोवाक्कायकर्मभिर्भगवदर्पणरूपसम्बन्धादित्यर्थः । विवस्वत इत्यस्य तात्पर्यं **भगवदिति** ॥ दिवोदुहितेत्यस्यार्थो विधेत्यादि । तत्वज्ञानं विष्णुतत्वापरोक्षाख्यम् । अस्य जायत इति श्रौतपदेनान्वयः । उभे अहनीत्यस्यार्थो जीवन्मुक्तीत्यादि । सुदिने इत्यस्यार्थः साध्याविति । अनुवृत्तस्य जायते इत्यस्य जायेत इति विपरिणामेन लब्धार्थो **भवत इति** ॥ भूत इत्यस्यार्थो **भवत्विति** ॥

## तत्त्वसुबोधिनी

कुत इत्यतस्तत्प्रकरणादित्याह ॥ **स आत्मेदमिति** ॥ ननु तर्ह्युत्क्रान्त्यादिप्रतिपादकश्रुतेः का गतिरित्यत आह ॥ **उत्क्रान्त्यादिकन्त्विति** ॥ **अत एवेति** ॥ बहुवचनस्येश्वरगतत्वादेवेत्यर्थः ॥ **एतच्छ्रुतेरबाधकत्वेनेति** ॥ 'व्याप्ता ह्यात्मान' इति श्रुतेरुत्क्रान्त्यादिप्रतिपादकश्रुतिबाधकत्वाभावेनेत्यर्थः । 'आतेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः' । निमिषश्चिज्जवीयसा रथेनायातमश्विना अन्तिषद्भूतु वामवः ।

(तत्त्वसुबोधिनी)

इति मन्त्रद्वयं व्याचष्टे ॥ **अश्विनावित्यादिना** ॥ यस्य योगे इति निमित्तसप्तमी इत्यभिप्रेत्याह ॥ **यत्सम्बन्धादिति** ॥ विवस्वत इत्यस्य तात्पर्यं **भगवत्प्रसादेनेति** ॥ दुहितेत्यस्यार्थः ॥ **विद्योत्पन्नं तत्वज्ञानमिति** ॥ अस्य जायते इति श्रौतपदेनान्वयः । उभे अहनीत्यस्यार्थः ॥ **जीवन्मुक्ति-मुक्त्यवस्थे इति** ॥ सुदिने इत्यस्यार्थः ॥ **साध्ये भवत इति** ॥ जायते इत्यस्य वचन-विपरिणामेनानुवृत्तिमभिप्रेत्याह ॥ **भवत इति** ॥ भूत्वित्यस्यार्थो ॥ **भवत्विति** ॥ श्रुतौ सदिति अव इत्यस्य विशेषणम् ।

## वाक्यार्थविवरणम्

सौत्रात्तदित्यस्य व्याख्यानम् ॥ **अनणुत्वेति** ॥ व्याप्तत्वेत्यर्थः । नन्वेवं तर्ह्यणुत्वसाधको-त्क्रान्त्यादिविरोध इत्यत आह ॥ **उत्क्रान्त्यादित्विति** ॥ एतच्छ्रुतिविरोधेनेति शेषः । मनसश्चेतस्ततो गमनादि प्रसिद्धमिति मनोनिष्ठमुत्क्रान्त्यादिसन्निधानादात्मन्युपचर्यत इति कल्प्यते । तथा च वास्तवोत्क्रान्त्याद्यभावेन पूर्वानुमानेऽसिद्धिरिति भावः ॥ **अत एवेति** ॥ 'व्याप्ता ह्यात्मान' इति बहुवचनश्रुतेरीश्वरपरत्वादेवेत्यर्थः ॥ **अबाधकत्वेनेति** ॥ आत्माऽणुत्वबाधकत्वा-भावेनेत्यर्थः । आत्मनोऽणुत्वसिद्धेरिति शेषः । भाष्ये आत्मनो जीवानभितो नयतीत्यर्थः । बहुवचनवाच्यत्वे । बहुवचनान्तशब्दवाच्यत्वे । बहुत्वप्राप्त्येति शेषः । बहुत्वं विना बहुवचनान्त-शब्दवाच्यताऽयोगादिति भावः । भाष्ये एकशब्दैरित्यादिकमेकवचनान्तशब्दैरित्यादि व्याख्येयम् ॥ **निरन्तरे** ॥ निर्भेदे । मनसः सकाशादिति शेषः । विवस्वत इत्यस्य तात्पर्यं **भगवत्प्रसादेनेति** ॥ **विद्येति** ॥ शास्त्रेत्यर्थः । तत्त्वज्ञानं भवतीति शेषः । साध्यौ जीवन्मुक्तिमुक्त्यवस्थे च जीवस्य भगवत्प्रसादेन भवत इत्यन्वयः ॥ **अवनम्** ॥ रक्षणम् ।

## वाक्यार्थमञ्जरी

जीवो नाणुः कुतः अतत् श्रुतेः व्याप्ता इत्यनणुत्वश्रुतेरिति चेन्न तस्याः श्रुतेर्ब्रह्मपरत्वात् कुतः इतराधिकारात् 'स आत्मेदं सृजति' इति परस्य ब्रह्मणः प्रकारणादित्यर्थः ॥ **उपचर्यत इति** ॥ यथा भवन्मते मनोगतमेव दुःखाद्यात्मनिष्ठतयोपचर्यते तथेति भावः । अत एव भगवत्परत्वादेव निरन्तरो निर्भेदः । आतेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता

(वाक्यार्थमञ्जरी)

जायते दिव उभे अहनी सुदिने विवस्वतः । निमिषश्चिज्जवीयसा रथेनायातमश्विना । अन्तिषद्भूतु वामवः इति मन्त्रद्वयं व्याचष्टे ॥ हे **अश्विनावित्यादिना** ऋभव इत्यस्यार्थो देवा इति यस्य योग इति निमित्तसप्तमीत्यभिप्रेत्याह ॥ **यत्सम्बन्धादिति** ॥ विवस्वत इत्यस्य तात्पर्यं **भगवत्प्रसादे-नेति** ॥ दिवो दुहित इत्यस्यार्थो **विद्योत्पन्नतत्वज्ञान** इति ॥ अस्य जायत इति श्रौतपदेनान्वयः । उभे अहनी इत्यस्यार्थः **जीवन्मुक्तिमुक्त्यवस्थे** इति ॥ सुदिने इत्यस्यार्थः साध्याविति जायत इत्यस्य वचनविपरिणामेनानुवृत्तिमभिप्रेत्याह ॥ **भगवत** इति ॥ भूत्वित्यस्यार्थो भवत्विति श्रुतौ सदित्येतदव इत्यस्य विशेषणम् ।

## सूत्रभाष्यम्

**॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २३ ॥**

'एषो ह्यात्माऽध्युद्गतो मानशक्तेस्तथाऽप्यसौ प्रमितिं याति वेदैः ।
पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ता' इति वाक्यशेषे **आत्मशब्दोन्मानाभ्यां च ।**

''आत्माऽमेयः परं ब्रह्म परानन्दादिकाभिधाः ।
वदन्ति विष्णुमेवैकं नान्यत्रासां गतिः क्वचित्'' इति च कौर्मे ॥

## तत्त्वप्रदीपिका

**स्वशब्दोन्मानाभ्यां च** । मानशक्तेरधिकत्वेनोद्गतः । सर्वेभ्यो गुणाधिकत्वेन मानशक्ति-मतिलङ्घ्य वर्तते । न मानशक्त्या मीयते । तथाऽप्यसौ वेदैः **प्रमितिं याति** विषयत्वेन स्वप्रसादादेव प्रमीयत इत्यर्थः । वक्ष्यति च 'तत्प्रसादादेव प्रकाशो भवति' इति । अथवा **प्रमितिं याति** यापयति । स एव हि पुरुषं स्वप्रमितिं यापयति स्वातन्त्र्यात् । 'न ऋते त्वत्क्रियते किञ्चनाऽर' इत्यादेः । 'कृत्वा विवाहं तु कुरुप्रवीरा' इतिवत् । 'व्यत्ययो भेदस्वातन्त्र्यकरणेष्वि' इति वचनात् । स्वयमेव चोपपादयति श्रुतिः पूर्वार्धोदितं 'पूर्णोऽचिन्त्य' इत्यादिना । **योनिः** व्यक्तिकारणम् ॥

## तत्त्वप्रकाशिका

यदुक्तं व्याप्तिश्रुतिरीश्वरविषया तत्प्रकरणादिति न तद्युक्तम् । प्रकरणमात्रेण दुर्बलेन बहुवचनश्रुतेर्बाधायोगादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्वशब्देति** ॥ न केवलं प्रकरणबलेनैतच्छ्रुतेरीश्वरपरत्वमुच्यते किं तर्हि वाक्यशेषे श्रुतात्मश्रुतेरपरिमितत्वलिङ्गाच्चेति भावः । मानशक्तेरध्युद्गतः परिमाणातीतः । **प्रमितिं याति** ज्ञानविषयो भवति । कुत एतच्छ्रुतिलिङ्गयो-र्वैष्णवत्वमित्यत आह ॥ **आत्मेति** ॥ न च मन्तव्यं 'व्याप्ता ह्यात्मानः' इत्यत्रैवात्मशब्दानन्त्ययोः श्रवणात्किं वाक्यशेषग्रहणेनेति । तत्र बहुवचनसमभिव्याहारवशादन्यार्थताया एव झटिति प्रतिभासात् । वाक्यशेषस्य तु निश्चितत्वादिति ।

## गुर्वर्थदीपिका

ननु 'व्याप्ता ह्यात्मानः' इति श्रुतिं जीवविषयां वदतः पूर्वपक्षिणः उन्मानत्वमात्मशब्दवत्त्वं चाभिमतमेव । अतः कथं ताभ्यामेव समाधानमिति शङ्कते **कुत इति** ॥ आत्मामेयादिपदोक्त-स्वशब्दोन्मानत्वादिकं विष्णोरेव नान्यत्रेति स्मृतावितरत्र निषेधाच्च व्याप्ता आत्मान इति पराभिलषितश्रुतिरपि विष्णुविषयेति सूत्रकृतो भावः । वाक्यशेषस्य तु निश्चितत्वादित्यस्य पूर्णत्वाचिन्त्यत्व सर्वदेवैकयोनित्वसर्वाधीशत्वसर्वज्ञत्वसर्वकर्तृत्वादिब्रह्मासाधारणधर्मैर्ब्रह्मपरताया निर्णीतत्वेनाऽऽत्मोन्मानत्वादीनामपि तत्परताया निर्णीतत्वादिति भावः ।

## भावदीपः

चशब्दार्थं व्यञ्जयन् हेतुतया पूर्वमध्याहृतस्येह साध्यत्वेनान्वयमाह ॥ **न केवलमिति** ॥ सूत्रे स्वशब्देत्युक्तावपि श्रुतौ स्वशब्दभावात् स्वशब्दादित्यत्रेवात्रापि तात्पर्यादात्मशब्दो ग्राह्य इति भावेनोक्तम् **आश्रुतेरिति** ॥ **परिमाणातीत इति** ॥ मानं ज्ञानं लयश्चेति मर्यादा चापि कथ्यते इति वैश्वानरनयोक्ताभिधानात् मानपदस्य मर्यादार्थत्वादिति भावः । भाष्ये अनौचित्यमाशङ्क्य निराह ॥ **न चेति** ॥

## वाक्यार्थमुक्तावली

श्रुतेरितराधिकारित्वमित्यनुषज्यते । स्वेतिशब्दः स्वशब्दपर्यायशब्द इति वा । स्वस्य ब्रह्मण एवशब्द इति वा स्वशब्द आत्मेतिशब्दः उन्मानं प्रमाणागोचरं अपरिमितं च ॥ **भावप्रधान-मेतत्** ॥ आत्मश्रुत्युन्मानलिङ्गाभ्यां व्याप्ता ह्यात्मान इति श्रुतेः परमात्मविषयत्वं न केवलं प्रकरणादिति सूत्रार्थं भाष्यारूढं करोति ॥ **न केवलमिति** ॥ मानशक्तेरभ्युद्गतः प्रत्यक्षादि-प्रमाणशक्तिमतीतस्तदविषयः ॥ **कुतः एतावद्गुणवानिति** ॥ परिमित्यभावादित्यभिप्रेत्यार्थान्तरमाह ॥ **परिमाणातीन इति** ॥ परिमितशक्तिशून्य इत्यर्थः । मानशक्तेरुद्गत इत्यस्य मर्यादापन्नशक्तेरुद्गत इत्यर्थः । 'मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यत' इत्यभिधानम् । आत्मा मेय इति भाष्ये यद्यप्यमेय इति नाम तथापि यौगिकत्वाभिप्रायेण टीकायां कुत एतच्छ्रुतिलिङ्गयोरित्यवतारितमिति ज्ञेयम् ॥ **अन्यार्थतेति** ॥ आत्मशब्दस्य चेतनार्थत्वम् अनन्तशब्दस्य सङ्ख्यानन्त्यपरत्व-मित्यन्यार्थतायामेव स्फुरणादित्यर्थः ।

## वाक्यार्थविवरणम्

**मानशक्तेरध्युद्गतः** परिमाणातीत इति । मानानां प्रमाणानां या शक्तिः प्रमाजननरूपा तदतीतः । प्रमाणान्येतद्विषये प्रमाजननशक्तिमन्ति न भवन्तीति यावत् । तथा चामेय इत्यर्थः । तस्येदं तात्पर्यकथनं परिमाणातीत इति । परितो मानं ज्ञानं तेन तद्विषयत्वेनातीत इति तदर्थः । तथा च यद्यप्यमेयस्तथापि वेदैस्तद्रूपैः प्रमाणैः प्रमितिं यातीत्येतत् संगच्छते । तथा आत्मा मेय इति वक्ष्यमाणं कौर्मवाक्यं च । परिमाणातीत इत्यस्यापरिच्छिन्नपरिमाण इत्यर्थत्वे तथापीति 'अमेय' इति चासङ्गतं स्यादिति द्रष्टव्यम् । आनन्त्यं परिमाणातीतत्वरूपमुन्मानत्वं 'व्याप्ता' इति श्रुता-वनन्ता इति पदेन श्रूयते इति द्रष्टव्यम् ॥ **वाक्यशेपेति** ॥ एषो ह्यात्मेति वाक्यशेषेत्यर्थः । तथा चेदं सूत्रं व्यर्थमिति भावः ॥ **तत्र** ॥ व्याप्ता ह्यात्मान इति श्रुतौ । **अन्यार्थताया इति** ॥ जीवपरताया एवेत्यर्थः ॥ **निश्चितत्वादिति** ॥ एषो ह्यात्मेत्याद्येकवचनस्यैव सत्वेन जीवपरत्वस्य शङ्कितुमशक्यत्वात् परमात्मपरत्वमेव निश्चितमस्तीति स्वशब्देतिसूत्रेण वाक्यशेषग्रहणं युक्तमिति भावः । श्रुतौ स्वशब्दस्याभावात् स्वस्य वाचकशब्दः स्वशब्द इत्यभिप्रेत्य भाष्ये आत्मशब्देत्युक्तम् ।

## वाक्यार्थमञ्जरी

स्वशब्दपर्याय आत्मशब्दः उन्मानमपरिमितत्वं ताभ्यां च व्याप्यत्वश्रुतेरीश्वरपरत्वमित्यर्थः ॥ आनन्त्येति ॥ तत्र 'अनन्ता' नाम इत्युक्तेरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अविरोधश्चन्दनवत् ॐ ॥ २४ ॥**

अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते । यथा हरिचन्दनविप्रुष एकदेशपतितायाः सर्वशरीरव्याप्तिः ।

'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति ।
यथा व्याप्य शरीराणि हरिचन्दनविप्रुष' इति च ब्रह्माण्डपुराणे ॥

## तत्त्वप्रदीपिका

अत्राऽहुः नाणुत्वं देहिनो युज्यते । शिरश्चरणादिषु युगपद्वेदनाद्यनुसन्धानात्, शिरसि मे वेदना, चरणयोर्मे वेदनेति । न च शरीरपरिमाणत्वं, प्राङ्निरस्तत्वात् । पारिशेष्याद्व्याप्तत्वमेवेष्टव्यम् । उत्क्रान्त्यादयस्तु मनस एव । तत्र तत्र स्थितेनाऽत्मना, यथाकर्माऽरब्धेषु द्युभ्वादिषु सेन्द्रियेषु देहेषु यथायोग्यं संयुक्तस्य तस्य बुद्ध्यादिजनकत्वमिति लघीयसीयं कल्पना । प्रतिशरीरं शरीरिणः प्रवेशनिष्क्रमादयो न कल्प्यन्त इति । अत आह– ॐ **अविरोधश्चन्दनवत्** ॐ । अणुत्वेऽपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते हरिचन्दनबिन्दुवत् । ज्ञायते हि तस्य कृत्स्नशरीरव्याप्ति-रतिमात्राह्लादनेन । न च जीवस्य सर्वगतत्वे प्रमाणमस्ति । न च दूरदर्शनादिकं तत्रस्थरूपेणेति मतम् । अनुभवविरोधादक्षसन्निकर्षवैयर्थ्याच्च । देहस्थरूपस्यैव दूरदर्शनेष्टौ वृथा व्याप्तिकल्पनम् । न चोत्क्रान्तिगत्यादयः कल्प्यन्तेऽस्माभिः श्रुतिसिद्धा एव आश्रीयन्ते श्रुतहानिभयात् । न च मनस एव ता इति वाच्यम् । उपरतवृत्तिभिर्मन आदिभिरिन्द्रियैः सर्वैस्सहैव जीवस्योत्क्रमणादिश्रवणात् । 'तस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राण' इति 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति च । प्रपञ्चयिष्यति चैतद्वैराग्यपादे 'तदन्तरप्रतिपत्तौ रंहति'त्यारभ्य 'प्राणगतेश्च' इति चाऽऽसमाप्तेश्च । अत इन्द्रियाणां प्रतिशरीरमुत्पत्तिनाशकल्पना निर्मानका । अहो

(तत्त्वप्रदीपिका)

बहुप्रमाणसिद्धमणोर्जीवस्योत्क्रान्त्यादिकमकस्मादपलप्यप्रामाणिकीमनन्तदेशव्याप्तिं कल्पयतो न शोभते लघीयसीयं कल्पनेति । व्याप्तत्वे च सर्वेषां तुल्यानां सुखदुःखादिसङ्करप्रसङ्गः । मनस्संयोगजत्वात्तेषां तस्य च सर्वसाधारणत्वात् । न च तत्तद्देहस्वामिनः तत्तद्देहगतमनस्संयोगजसुखदुःखादीति वाच्यम् । देहारम्भकाणां कर्मणामसाधारण्ये कारणानुपलब्धेः । देहस्वामित्वेऽप्यव्यवस्थानात् । अतस्सुखिदुःखिबद्धमुक्तादिव्यवस्था दुर्वचा सर्वगतानेकात्मवादिनाम् । ऐकात्म्यवादिनां निरस्ता पुरस्तादेव । कथं च व्याप्तस्य कादाचित्को मनस्संयोगः । येन कादाचित्कं सुखदुःखादि स्यात् । न च हृदि संयोगात्सुखदुःखादिजन्मेति वाच्यम् । हृदि तस्य विशेषाभावादन्यत्र च संयोगस्य कृत्स्नात्मसमवेतत्वेनात्र कार्यकरत्वाविरोधात् । असंयुक्तप्रदेशाभ्युपगमे च सावयवत्वप्रसङ्गात् । न चौपाधिको भेद आत्मनो युक्त इत्युक्तः । अतोऽणुर्जीवः ।

## तत्त्वप्रकाशिका

स्यादेतत् । अथापि न जीवस्याणुत्वं युक्तम् । तत्र तत्र परिज्ञानायोगादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **अविरोध इति** ॥ नाणुत्वेऽपि जीवस्य तत्र तत्र परिज्ञानायोगः । अंशैः शरीरे व्याप्तत्वात् एकदेशपतितचन्दनबिन्दोरंशैः शरीरव्याप्तिवदेवेति भावः । प्रतिदृष्टान्तस्यापि सम्भवान्न नियामकं विना दृष्टान्तमात्रेणार्थसिद्धिरित्यत आह ॥ **अणुमात्रोऽपीति** ॥

## गुर्वर्थदीपिका

एकदेशपतितचन्दनबिन्दोरित्यत्र न च चन्दनबिन्दावप्यंशव्याप्तिरसिद्धेति शङ्क्यम् । 'यथा व्याप्य शरीराणि हरिचन्दनविप्रुष' इति स्मृतिसिद्धत्वात् ।

## भावदीपः

प्रागुक्तयुक्तिनिरासकतया सूत्रमवतारयति ॥ **स्यादेतदिति** ॥ सौत्राविरोधशब्दार्थं वदन् सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिपरिज्ञानोपपत्तिरित्यन्यत्रोक्त्यनुरोधेन भाष्यभावमाह ॥ **नाणुत्वेऽपीति** ॥ तेजोरूपेणेत्येकवचनं समुदायाशयमिति भावेन तस्यार्थो **अंशैः** इति । परस्परमात्मना च सविशेषाभिन्नैरित्यर्थः । अतो न 'निरवयवत्वशब्दकोपो वा' इत्युक्तविरोधः । नापि प्रागुक्तशरीरोन्मथनादिदोषः । एवेति दृष्टान्तस्य विश्वजनीनतामाह । स्मृतौ विप्रुषः तिष्ठन्तीति

(भावदीपः)
विपरिणामेनान्वयो ध्येयः । एतेन अणुत्वेऽपि जीवस्य तत्र तत्र परिज्ञानार्थमंशादिना व्याप्तिर्न वाच्या । अणवश्चेति सूत्रे इन्द्रियाणां तेजसा व्याप्तत्वस्य वक्ष्यमाणतया तैरणोर्जीवस्य सम्बन्धसिद्ध्या तत्र तत्र परिज्ञानोपपत्तेरिति निरस्तम् । जीवस्यापि तथात्वस्य स्मार्तत्वादिति ।

## वाक्यार्थमुक्तावली

ज्ञस्य अणोरिति च वर्तते । चन्दनवदिति षष्ठ्यर्थे वतिः । अंशैरिति शेषः । अणोरपि जीवस्य चन्दनबिन्दोरिवांशैः सर्वशरीरव्याप्तत्वेन तत्र तत्र परिज्ञानाविरोध इति भावेन प्रवृत्तं अणोरित्यादिभाष्यं व्याचष्टे ॥ **नाणुत्वेऽपीति** ॥ भाष्ये स्मृतौ च हरिचन्दनविप्रुष इत्यनन्तरं अंश इति शेषः । स्मृतौ शरीराणीति शरीरावयवानित्यर्थः । प्रतिदृष्टान्तस्य लोष्टादेः ।

## वाक्यार्थविवरणम्

**प्रतिदृष्टान्तस्यापीति** ॥ एकदेशपतिततैलादिबिंदोरंशैः सर्वशरीरव्याप्तेरपि दर्शनादिति भावः । नियामकम् । प्रमाणम् । शरीरव्याप्तमित्यत्राव्याप्तिरपि ग्राह्या । स्वरूपेण शरीराव्याप्तिरंशेन तद्व्याप्तिरिति विवेको द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

जीवस्याणुत्वेऽपि **अविरोधः** देहव्याप्तिविरोधाभावः । कथं **चन्दनवत्** हरिचन्दनबिन्दुवदित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥ २५ ॥**

**सम्यगसम्यगवस्थानविशेषाद्युज्यते चन्दनस्येति चेन्न । 'हृदि ह्येष आत्मा' (प्र.उ.३-६) इति जीवस्यापि तथाऽभ्युपगमात् ।**

## तत्त्वप्रदीपिका

**अवस्थितिवैशेष्यादित्यादि सूत्रम् । सम्यगवस्थानं चन्दनबिन्दोरेकत्रासम्यगवस्थानं सूक्ष्मैरंशैरशेषाङ्गेष्वस्ति । नैवं जीवस्य, निरंशत्वात् । अन्यथाऽनित्यत्वापातात् । अतो नाणुत्वे तस्य**

(तत्त्वप्रदीपिका)

**सर्वशरीरव्याप्तिः स्यादिति चेन्न । 'हृदि ह्येष आत्मा' इति श्रुतेः जीवस्यापि हृदि सम्यगवस्थाना-भ्युपगमादन्यत्रासम्यगवस्थानाभ्युपगमात् । न च सांशत्वेऽनित्यत्वमिति वाच्यम् । भिन्नांशारब्धस्य हि पटादेः सांशत्वमनित्यत्वव्याप्तम् । न च सांशत्वमात्रादनित्यत्वम् । परमाणूनां च निरंशत्वे सर्वदिक्सम्बन्धासिद्धिः । मिथः संयोगे च संयुक्तप्रदेशात्प्रदेशान्तरासिद्धेः प्रथमानुपपत्तिः । काल्पनिक प्रदेशान्तराश्रयणे तत्संयोगजानां कार्याणां काल्पनिकत्वप्रसङ्गः । आत्माकाशयोश्च निरंशत्वे पराभिमतस्यौपाधिकभेदस्य बहुवस्तुसंयोगस्य चासम्भवः । संयुक्तप्रदेशातिरिक्तप्रदेशाभावादेव ।**

## तत्वप्रकाशिका

**उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ अवस्थितीति ॥ न चन्दन-बिन्दोरिव स्वरूपतदंशाभ्यां शरीरव्याप्तिरात्मनः । चन्दनबिन्दोः शरीरैकदेशे सम्यगवस्थानस्यान्यत्रा-सम्यगवस्थानस्य चानुभवसिद्धत्वेन तथात्वस्य सम्भवात् । न ह्यात्मनः क्वचिच्छरीरदेशे सम्यगवस्थानं क्वचिदसम्यगवस्थानमस्ति येन तस्य स्वरूपांशाभ्यां शरीरव्याप्तिं प्रतीम इति भावः । परिहारांशं व्याचष्टे ॥ नेति ॥ न शरीरे सम्यगसम्यगवस्थानाभाव आत्मनो येन दृष्टान्ते वैषम्यं 'हृदि ह्येष आत्मा' इति श्रुतेरात्मनोऽपि चन्दनबिन्दुवत्सम्यगवस्थानाभ्युपगमादिति भावः ।**

## भावदीपः

भाष्ये युज्यते हरिचन्दनस्येत्युक्त्या न जीवस्येत्यर्थाल्लब्धं व्यञ्जयन् भाष्यं व्याचष्टे ॥ **न चन्दनेति** ॥ भाष्ये नेति नञः प्राचीनभाष्यलब्धेनान्वयमुपेत्य व्याचष्टे ॥ **न शरीर इति** ॥

## वाक्यार्थमुक्तावली

सूत्रे अविरोधश्चन्दनवदित्यनुवर्तते । अवस्थितिवैशेष्यादित्यावर्तते । वैशेष्यादिति स्वार्थे ष्यञ् । नेत्यप्यावर्तते । हृदीति श्रुतिप्रतीकग्रहणं स्थानकथनं वा । नाणोरपि जीवस्य चन्दनबिन्दोरिव स्वरूपतदंशाभ्यां व्याप्तिविरोधः । चन्दनबिन्दोः शरीरैकदेशे सम्यगवस्थानं अन्यत्रासम्यगवस्थान-मित्यवस्थितौ वैलक्ष्यण्यात् । चन्दनबिन्दूवस्थितेरात्मावस्थिते वैशेष्याद्वैलक्षण्यात् । न ह्यात्मनः क्वचिच्छरीरे सम्यगवस्थानं क्वचिच्छरीरेऽसम्यगवस्थानं चन्दनबिन्दोरिवास्ति । प्रमाणाभावादिति चेन्न । जीवस्य शरीरे सम्यगसम्यगवस्थाने मानाभावेन न चन्दनबिन्दुवैलक्षण्यम् । 'हृदि ह्येष

(वाक्यार्थमुक्तावली)

आत्मा' इति श्रुतेः हृदि सान्द्रद्रव्यरूपेण अन्यत्र तत्र तत्र परिज्ञानेन व्याप्तेश्चाभ्युपगमादिति सूत्रार्थं हृदि निधाय भाष्यभावमाह ॥ **न चन्दनविन्दोरित्यादिना** ॥

## वाक्यार्थविवरणम्

**तथात्वस्य** ॥ स्वरूपतदंशाभ्यां शरीराव्याप्तिव्याप्तियुक्तत्वस्य ।

## वाक्यार्थमञ्जरी

चन्दनबिन्दोर्देहे क्वचित्सम्यगन्यत्रासम्यगित्यवस्थानवैशेष्याद्व्याप्तिसम्भवेऽपि जीवस्य तदभावान्न युक्ता देहव्याप्तिरिति चेन्न । जीवस्याप्यवस्थितिवैशेष्याभ्युपगमात् कुतः हृदि ह्येष आत्मा' इति श्रुत्या हृद्येव जीवस्य सम्यगवस्थित्युक्तेरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ गुणाद्वाऽऽलोकवत् ॐ ॥ २६ ॥**

**यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वा । स्कान्दे च–**

**'असम्यक्सम्यगिति च व्यवस्थाभेदतः सुराः ।**
**व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा ॥**
**चिद्गुणस्य स्वरूपत्वात्तद्व्याप्तिश्चेति युज्यते ।**
**शक्तियोगात्सुराणां तु विविधा च व्यवस्थितिः' ॥ इति ।**

॥ इति उत्क्रान्त्यधिकरणम् ॥

## तत्त्वप्रदीपिका

**गुणाद्वाऽऽलोकवत्** । विधान्तरेण देहव्याप्तिमाह । यथा ह्यालोकस्य दीपादेः प्रकाशगुणेनापवरकादिव्याप्तिः, ज्योतिरात्मना स्वरूपेण दीपिकादावेव स्थितिः, एवं ज्ञानगुणेन व्याप्तिः

(तत्त्वप्रदीपिका)

जीवरूपेणाव्याप्तिरिति । एवञ्च दूरदर्शनादिकमपि प्रकाशव्याप्त्या युज्यते । तथा च श्रुतिः– 'तद्यथा ह्याणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवति' इति । उक्तव्याप्त्योराश्रयभेदं विविनक्ति स्कान्दवचनेन स्कान्दे चेति । च शब्दादन्यत्र च विस्तृतमेतत् । स्वरूपस्यासम्यगवस्थानेन व्याप्तिमन्तस्सम्यगवस्थानेनाव्याप्तिमन्तो देवास्तेभ्योऽन्येऽवराश्चिद्गुणेनैव व्याप्तिमन्तो न देववत्सान्द्रव्याप्तिभाजः । गुणव्याप्तेरेव गुणिव्याप्तित्वं युज्यते चिद्गुणस्यानपायित्वेन गुण्यैक्यात् । देवानां तु गन्धर्वादिभ्योऽधिकशक्तियोगात् तेभ्य उत्कृष्टा व्यवस्थितिर्युक्ता । तत्रापि केषाञ्चिदधिकशक्तियोगात्कदाचिद्बहुषु स्थानेषु प्रायः सम्यगवस्थानमत्युत्तमानां भगवत्प्रसादातिशया-दिच्छया सम्यगवस्थानं च । 'व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः' इति चाधस्तादुक्तम् । अतोऽवतारेष्वपि केषाञ्चित्परमपरायणानां महात्मनां तत्वविद्याचार्यवर्याणां मूलरूप इव सौवल्य-सार्वज्ञसौलक्षण्यादिगुणाः परिदृश्यमाना युज्यन्ते ।

## तत्त्वप्रकाशिका

एवं स्वरूपतदंशाभ्यामात्मनः शरीरव्याप्त्यव्याप्ती सदृष्टान्तमुक्त्वा प्रकारान्तरेणापि तदुपपादकं सूत्रं पठित्वा व्याचष्टे ॥ **गुणाद्वेति** ॥ अणोरपि जीवस्य शरीरव्याप्तिश्चिद्गुणस्य व्याप्तत्वेनो-पपद्यते । न च गुणिनोऽणुत्वेन गुणस्य व्याप्तिरयुक्ता । आलोकवदुपपत्तेरिति भावः । नन्वालोकस्य द्रव्यत्वात्कथं गुणत्वमुच्यत इति । मैवम् । तद्द्रव्यत्वे मानाभावात् । रूपित्वं मानमिति चेन्न । तेन घटादिरूपस्यैव प्रतीयमानत्वात् । न हि व्योम्नि वर्तमानस्य प्रकाशस्य रूपं गृह्यते । दीपं विहाय वृत्तिः प्रमाणमिति चेन्न । तस्य द्रव्यत्वसाधकताविवादात् । तर्हि कुतस्तद्गुणत्वमिति चेन्न । तदनुविधानादिनैवेति ब्रूमः । द्रव्यत्वे चालोकः कार्यमकार्यं वा । आद्येऽपि किं दीपकार्यमन्यस्य वा । नाद्यः । कारणं विहाय कार्यवृत्तेरनभ्युपेतत्वात् । न द्वितीयः । दीपप्रकाश इति प्रयोगानु-पपत्तिप्रसङ्गात् । कारणान्तरादर्शनाच्च । नान्त्यः । अप्रतीतिप्रसङ्गात् । प्रदीपावयवा एवालोक इति चेन्न । तथा सति प्रदीपानुविधानानुपपत्तेः । न हि जीर्णकन्थातन्तवः कतिचन विकीर्णाः कन्थया सहैव गच्छन्ति । अवस्थिता एवावयवा दीपापगमे तमसा न दृश्यन्त इति न युक्तम् । विरोधात् । क्रमेण चैवं सति प्रकाशबाहुल्यं स्यात् । तदैवोत्पन्नप्रदीपावयवाः सर्वतो विकीर्णा भवन्तीत्यनुभव-विरुद्धमिति युक्तमुक्तमालोको गुण इति । अप्राधान्यसाम्येन वा गुणत्वोक्तिरिति । अंशैर्गुणेन च व्याप्तिरित्येकत्र विरुद्धमित्यत आह ॥ **स्कान्दे चेति** ॥ व्याप्तिसाधकानुमानं तु घटादेरपि

(तत्त्वप्रकाशिका)

**व्याप्तिसाधकाभाससमानयोगक्षेमम् । अतः श्रुत्यविरोधेन जीवस्याणुत्वसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।**

## गुर्वर्थदीपिका

दीपं विहाय वृत्तिः प्रमाणमित्यनेन नालोकः प्रदीपगुणः प्रदीपं विहाय विद्यमानत्वात् यो यद्गुणः स तद्विहाय अन्यत्र न प्रतीयते यथा रूपमित्यनुमानं सूचितम् । तेजोगुणत्वेनाभिमतस्य तद्गुणत्व-निषेधे परिशेषाद्द्रव्यत्वमेव भवतीति भावः । तदनुविधानादिनैवेत्यत्र तदनुविधानं नाम नियमेन दीपगमने गमनं, दीपागमने आगमनं दीपप्रतीतौ प्रतीतिर्दीपनाशे नाशश्चेत्यादिकम् । अप्रतीति-प्रसङ्गादित्यत्र अकार्यद्रव्यत्वे प्रत्यक्षयोग्यत्वे च दीपनाशानन्तरमपि प्रतीयेत । प्रत्यक्षायोग्यत्वे दीपसमीपेऽप्यप्रतीतिप्रसङ्ग इत्यर्थः । विरोधादित्यस्य प्राक् गृहान्धकारनिवर्तकदीपालोकानां तमोऽभिभवस्य विरुद्धत्वादित्यर्थः । आलोकस्य दीपान्निस्सरदवयवरूपत्वे स्थूलावयवनिस्सरणे दाहप्रसङ्गेन प्रथमं दशदिक्षु त्रसरेणुसमानदशावयवनिस्सरणे अलोकस्यापि दीपातिसमीपस्थतैव स्यात् । पुनस्ततोऽतिशयितावयवनिस्सरणे ततोऽपि किञ्चिदधिकदेशस्थता स्यात् । एवं क्रमेण यामत्रयोपरि यावद्गृहमभिवृद्धिस्स्यादित्याह **क्रमेणेति** ॥ बाहुल्यं बहुलताऽभिवृद्धिरित्यर्थः । इदं चोपलक्षणम् । अवयवानां क्रमेण निस्सरणे प्रदीपस्य क्रमेण परिमाणह्रासप्रसङ्गेन तस्याणुता च स्यादित्यपि द्रष्टव्यम् । अप्राधान्यसाम्येनेत्यत्र अप्राधान्यं तेजः परतन्त्रता तेजोऽनुविधानमिति यावत् । तस्य साम्यं तद्गुणभूतरूपादिना आलोके साम्यम् । एवं चास्याप्रधानार्थकगुणशब्दवाच्यतैव शोभत इत्यर्थः । व्याप्तिसाधकानुमानमित्यत्र सर्वमिदं मूर्तम् आत्मना संस्पृष्टं, मूर्तत्वात् शरीर-वदित्यनुमानं सर्वं मूर्तं, घटेन संस्पृष्टं, मूर्तत्वात् घटसंस्पृष्टभूतलवदिति घटादेरपि व्याप्तिसाधका-भाससमानयोगक्षेममित्यर्थः । आलोकस्य गुणत्वपक्षे तु सरोवरान्तस्थकमलसौरभवत् यावत्स्वयोग्य-देशव्यापिता गुणवैचित्र्यादेव स्यात् । घटेऽपि संयोग एकदेशवर्त्ती । तद्रूपं तु यावद्घटवर्ति । गुरुत्वमतीन्द्रियम् । रूपमैन्द्रियिकं किञ्चित्पाकजं किञ्चिदपाकजम् । अतो गुणेषु वैचित्र्याद्यथा-दर्शनमेव गुणकल्पनम् । दिशि दिशि विकीर्यमाणकमलपरिमळाधारतया त्रसरेणुभ्योऽप्यतिसूक्ष्मतया अदृश्याः कमलावयवाश्च सहैवोद्गच्छन्तीति कश्चित् । तदत्यन्तमविचारितरमणीयम् । दृग्गोचरतया परमाणुवदतिसूक्ष्माणां तेषां गुणभूतरूपरसगन्धादेरप्युपलम्भायोग्यतयोपलभ्यमानमहापरिमळस्य

(गुर्वर्थदीपिका)

परिदृश्यमानमहापद्मगुणत्वापरिहारात् । अतस्तेजोरूपमपि तस्यैवोष्णस्पर्शवद्गुणिनं विहायापि स्वस्य योग्यदेशे तिष्ठतीत्यभ्युपेयम् । न चोष्णस्पर्शोऽपि न तेजसो धर्म इति वाच्यम् । समीपगमने औष्ण्यातिशयदर्शनेन तस्याग्निसूर्यमण्डलादिधर्मिधर्मतायाः सर्वैरपि वक्तव्यत्वात् । तस्मान्न कश्चित्क्षुद्रोपद्रवः ।

## भावबोधः

अणोरपि जीवस्य शरीरे व्याप्तिश्चिद्गुणस्य व्याप्तत्वेनोपपद्यत इति वाक्यद्वयेन सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिज्ञानोपपत्तिरित्यादिन्यायविवरणमपि व्याख्यातं भवति । **घटादिरूपस्येवेति** ॥ नीलघटादिसम्बन्धबालार्कप्रभादौ प्रतीयमानमारुण्यादिकं तु न्यायमतेऽपि न प्रभानिष्ठमिति भावः ।

ननु दीपे गच्छति प्रभायामपि गतिदर्शनात् क्रियावत्त्वेन (आलोकस्य) प्रभायाः द्रव्यत्वमिति चेत्, न । घटे गच्छति रूपस्यापि गतिदर्शनेन व्यभिचारात् । अन्यथा श्येने चलति अचलतः स्थाणोरिव तत्रैव रूपस्य स्थितिः स्यादिति ॥ **द्रव्यत्वसाधकताविवादादिति** ॥ उत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहाय वृत्तेर्वक्ष्यमाणत्वादिति भावः ॥ **तदनुविधानादिनेति** ॥ न च च्छायायां व्यभिचारः, भित्त्यादावचलेऽपि च्छायायाः सूर्यप्रातिलोम्येन चलनात् । लोके माणिक्य-प्रभादौ तद्गुणत्वव्यवहारः । 'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः' इति स्मार्तस्तेजसि गुणत्वव्यवहारश्च गुणत्वे प्रमाणमिति दर्शयितुमादिशब्दः ॥ **कारणान्तरादर्शनादिति** ॥ तदेव तत्र तैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमण्डलमारभन्त इत्यत्र मानाभावादिति भावः ॥ **अप्रतीतिप्रसङ्गादिति** ॥ परैरकार्यद्रव्यस्य बहिरिन्द्रियग्राह्यत्वानङ्गीकारेण चक्षुषा तदप्रतीति-प्रसङ्गादित्यर्थः । तथा सति **प्रदीपानुविधानानुपपत्तिरिति** ॥ निबिडावयवेन्द्रनीलादावयव-विदारणस्यासम्भवित्वात्तत्र प्रभा न स्यादित्यपि द्रष्टव्यम् ॥ **विरोधादिति** ॥ प्रभावयवतमसोः सहावस्थानमेव न । विरोधादिति भावः ॥ **क्रमेण चैवमिति** ॥ पुनः पुनर्दीपागमापगमयोः पुनः पुनस्तदवयवेषु विकीर्यमाणेषु उत्तरोत्तरं प्रकाशबाहुल्यं स्यादित्यर्थः ॥ **घटादेरपीति** ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वात् घटसंयुक्तपटवदिति प्रयोगसम्भवादित्यर्थः ।

अत्राद्ये– स्वपक्षसाधकहेतूक्तिः । द्वितीये प्रसङ्गात् प्रथमोक्तोत्क्रान्त्यादीनां परमात्माधीनत्व-प्रतिपादनम् । तृतीये अणुत्वे व्याप्तिश्रुतिबाधमाशङ्क्य तस्याः प्रकरणेनेश्वरपरत्वोक्तिः । चतुर्थे

(भावबोधः)
व्याप्तिश्रुतेरीश्वरपरत्वे श्रुतिलिङ्गरूपप्रबलसाधकान्तरोक्तिः । पञ्चमे तत्र तत्र परिज्ञानरूपयुक्तेर्हरि-चन्दनदृष्टान्तेनान्यथासिद्ध्युक्तिः । षष्ठे पञ्चमसूत्रोक्तदृष्टान्तदार्ष्टान्तिकयोर्वैषम्यशङ्कोद्धारः । सप्तमे मानुषादिसर्वजीवापेक्षया चिद्गुणव्याप्त्या प्रागुक्तयुक्तेरन्यथासिद्ध्युक्तिरिति सूत्रक्रमः ।

## भावदीपः

**चिद्गुणस्येति** ॥ अनेन तेजोरूपेणेत्यन्यत्रोक्तस्य चिद्गुणेनेत्यप्यर्थ उक्तो भवति । दृष्टान्तोक्तेः शङ्कानिवर्तकत्वरूपफलमाह ॥ **न चेति** ॥ गुणगुणिनोरभेदादिति शङ्काभिप्रायः ॥ **आलोकवदिति** ॥ सविशेषाभिन्नत्वान्न दोष इति भावः ॥ **घटादिरूपस्यैवेति** ॥ नीलघटसम्बद्धबालार्कप्रभादौ प्रतीयमानमारुण्यादिकं तु न्यायमतेऽपि न प्रभानिष्ठं तस्य शुक्लभास्वररूपवत्त्वादिति भावः ॥ **विवादादिति** ॥ कस्तूर्यादिस्थगन्धरूपगुणस्य वह्न्यादिस्थोष्णस्पर्शादिरूपगुणस्य च दूरगमनदर्शनात् । तदवयवानामेव गमनकल्पने क्रमेण कस्तूर्यादेः पलपरिमाणह्रासः स्यादिति भावः ॥ **तदनुविधानादिनेति** ॥ न च छायायां व्यभिचारः । भित्त्यादावचलेऽपि च्छायायाः सूर्यप्रातिलोम्येन चलनात् । अत्रादिशब्देन लोके माणिक्यप्रभादौ तद्गुणत्वव्यवहारः । 'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः' इति स्मार्तः तेजसि गुणत्वव्यवहारश्च गृह्यते । **दीपकार्यं** दीपसमवायिकारणकम् । **कारणं** समवायिकारणम् ॥ **कारणान्तरेति** ॥ दीपारोपकाल एव तत्रत्यतैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमण्डलमारभन्त इति त्वप्रामाणिकमिति भावः ॥ **अप्रतीतीति** ॥ अकार्यत्वे परमाणुत्वापातेनाप्रत्यक्षत्वापातादित्यर्थः ॥ **प्रदीपेति** ॥ प्रदीपारोपे तदैव तदवयवाः परितो विकीर्णाः सन्तः आलोकबुद्धिविषया इत्यर्थः ॥ **प्रदीपानुविधानेति** ॥ उपलक्षणं चैतत् । निबिडावयवेन्द्रनीलादाववयवविकरणासम्भवात् तत्र प्रभा न स्यादित्यपि ध्येयम् ॥ **बाहुल्यं स्यादिति** ॥ आद्यक्षणवद्द्वितीयादिक्षणेष्वपि अवयवानां विसरणस्य न्याय्यत्वादिति भावः । उपलक्षणं चेदम् । दीपस्य सूक्ष्मता च स्यात् । न पुनरन्येषां दीपप्रवेश इत्यत्र मानाभावादित्यपि ध्येयम् । पक्षान्तरमाह ॥ **अप्राधान्यसाम्येन वेति** ॥ **अंशैर्गुणेन चेति** ॥ अविरोध इत्यत्र गुणाद्वेत्यत्र चोक्तमित्यर्थः । एकत्र पुरुषे स्मृतौ सुरा इति । अन्ये देवावरा इत्युक्त्या विरोध निरास इति भावः ॥ **घटादेरिति** ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वाद्घटसम्बद्धपटवदित्यपि सम्भवादित्यर्थः । न च बाधः । अत्राप्यणुत्वश्रुतियुक्तिभ्यां बाधस्य साम्यादिति भावः । एवमन्यान्यप्यात्मव्याप्ति-

(भावदीपः)

साधकानि तार्किकोक्तानुमानानि चन्द्रिकान्यायामृतयोरुक्तदिशा निरस्यानि ॥ **अत इति** ॥ अणुत्वश्रुत्युत्क्रांत्यादियुक्तीनां भावात् । व्याप्तत्वश्रुतेरीशपरत्वात् युक्तेश्चांशादिव्याप्त्या अन्यथोपपन्नत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**प्रकारान्तरेणापि तदुपपादकमिति ॥ अविरोधश्चन्दनवदिति ॥** प्रागुक्तसमाधानस्य उत्तमजीवेषु सम्भवेऽप्यंशतो व्यतिरेकशून्येष्वसम्भवात् प्रकारान्तरेण तदुपपादकं सूत्रमित्यर्थः ॥ **आलोकवदुपपत्तेरिति भाव इति** ॥ यद्यपि भाष्यानुगुण्यात् प्रकाशवत् इति वक्तव्यम्, तथापि पीलुशब्दस्य वृक्षतत्फलवाचकत्ववत् आलोकशब्दस्यापि गुणगुणिनोरुभयोरपि वाचकत्वात् आलोकवदित्युक्तम् । अत्र टीकायां सूत्रभाव एव प्रदर्शितो न तु योजनोक्तेति द्रष्टव्यम् । एतेन 'यथाऽऽलोकस्य' इत्यादि भाष्यविरोध इति परास्तम् । एतेनैव 'ननु आलोकस्य द्रव्यत्वात् कथं गुणत्वमुच्यत इत्याद्ययुक्तं सूत्रभाष्यकाराभ्यां प्रकाशस्यैव गुणत्वाभिधानेन आलोकस्य गुणत्वानभिधानादिति परास्तम् । प्रकाशस्याप्यालोकशब्दवाच्यत्वात् ॥ **तेनेति** ॥ प्रकाशात्मकेन तेन तेजसो रूपेण घटादिरूपं प्रतीयत इति तावदीक्षामहे न पुनस्तस्य रूपमित्यसिद्धो हेतुरिति भावः । तदेवोपपादयति **न हि व्योम्नीति** ॥ व्योम्नि प्रतीयमानस्य रूपं न गृह्यते किन्तु रूपात्मनैव प्रकाशो गृह्यत इति हि प्रसिद्धमित्यर्थः । व्योमग्रहणन्तु आदित्यादिप्रकाशस्य प्रायो व्योमगतत्वाभिप्रायेण । एतेन यत्र क्वापि विद्यमाने प्रकाशे रूपप्रतीत्यभावात् विशिष्ठव्योमग्रहणं व्यर्थमिति परास्तम् । क्वचित्पुस्तकेषु 'युक्तमालोको गुणः' इत्यतः परम् 'अप्राधान्यसाम्येन वा गुणत्वोक्तिः' इति वाक्यं दृश्यते । तत्प्रक्षिप्तम् । बहुकोशेष्वदर्शनात् । आलोकस्य द्रव्यत्वे 'अविरोधश्चन्दनव' इति पूर्वोक्तसमाधानात् । 'गुणाद्वालोकव' इत्यस्य समाधानान्तरत्वाभावप्रसङ्गाच्च ।

पूर्वपक्षस्तु – न जीवोऽणुः 'व्याप्ता ह्यात्मान' इति श्रुतिविरुद्धत्वात् । न च अणुत्वेऽपि श्रुतिरस्तीति वाच्यम् । व्याप्तिश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । तद्बाधितैतच्छ्रुतेः प्रामाण्यायोगात् । तथा हि आत्मा नाऽणुः सर्वदेहावच्छेदेन स्पर्शादिग्राहित्वात् । नाप्यणुत्वे युगपत्सर्वेन्द्रियैर्ज्ञानं सम्भवति । न च आत्मा देहपरिमाणः मध्यमपरिमाणत्वेनाऽनित्यत्वप्रसङ्गात् । अतः

(अभिनवचन्द्रिका)
परिशेषादात्मनो व्यापकत्वमेव स्वीकार्यम् । तथा प्रयोगोऽपि 'सर्वमिदं मूर्तमात्मना स्पृष्टं मूर्तत्वात् मच्छरीरवत्' इति । तथा च अणुत्वश्रुतेरप्रामाण्येन श्रुतिमात्रस्य प्रामाण्यनैय्यत्याभावात् न श्रुतिसमन्वयो युक्त इति ।

सिद्धान्तस्तु – जीवोऽणुरेव न व्याप्तः । उत्क्रान्तिगत्याऽऽगतिमत्त्वात् । पतत्रिशरीरवदिति । अत्र महत्परिमाणातिरिक्तपरिमाणस्यैव विवक्षितत्वेन न दृष्टान्तः साध्यविकलो मन्तव्यः । न चात्र हेतवोऽसिद्धाः । 'सोऽस्माच्छरीरादुत्क्रम्य' इत्यादिश्रुत्या तेषां' सिद्धत्वात् । 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च' इति श्रुतेर्नाणुर्जीव इति चेत्, न 'स आत्मा इदं सृजति स द्विधा इदं बिभर्ति' इत्यादिना प्रकृतस्य परमात्मन एवाऽत्राऽभिधानात् । न च अस्य वाक्यस्य विष्णुपरत्वे बहुवचनविरोध इति वाच्यम् । स आत्मा, स ईशः, स विष्णुः' इत्यादिना बहुवचनान्तपदवाच्यत्वेन तस्यैव प्रकृतत्वात् । यदुक्तमीश्वरप्रकरणात् व्याप्तिश्रुतिस्तद्विषयेति, न तद्युक्तम् । प्रकरणमात्रस्य दुर्बलत्वेन बहुवचनश्रुतेर्बाधायोगादिति चेत्; स्यादयं दोषः यदि प्रकरणमात्रेण व्याप्तिश्रुतेस्तद्विषयत्वं ब्रूमः, न चैवं किं नाम 'एष ह्येवात्माऽभ्युद्गतो मानशक्तेः' इति वाक्यशेषे श्रुतात्मशब्दाऽपरिमितत्वलिङ्गाभ्यां चेति । ननु अथापि जीवस्य नाऽणुत्वं युक्तम् । तत्र तत्र परिज्ञानायोगप्रसङ्गादिति चेत्, न अणोरपि चन्दनबिन्दुवत् शरीरव्याप्त्यङ्गीकारात् । तदुक्तम्–

'अणुमात्रोऽप्ययं जीवः शरीरं व्याप्य तिष्ठति ।
यथा व्याप्य शरीराणि हरिचन्दनविप्लुषः' ।। इति ।

ननु भवतां चन्दनबिन्दोर्व्याप्त्याव्याप्ती सम्यगसम्यगवस्थासद्भावात् न तु जीवस्य तदभावादिति चेत्, न 'हृदि ह्येष आत्मा' इति श्रुतेः आत्मानोऽपि चन्दनबिन्दुवत् सम्यगसम्यगवस्थानाभ्युपगमात् । अथवा दीपादीनामपवारकादौ प्रकाशगुणेन व्याप्तिवत् जीवानां चिद्गुणेन व्याप्तिसद्भावात् न सार्वत्रिकज्ञानमनुपपन्नम् । नन्वालोकस्य द्रव्यत्वात् कथं गुणत्वमिति चेत्, न तद्द्रव्यत्वे मानाभावात् । रूपित्वं मानमिति चेत्, न आलोके रूपाऽप्रतीतेः । कुतस्तर्हि गुणत्वमिति चेत् तदनुविधानादिनेति ब्रूमः । गुणेन अंशैश्च व्याप्तिर्न सम्भवति विरोधादिति चेत्, न केषाञ्चिद्गुणेन केषाञ्चिदंशैः व्याप्तिरित्यङ्गीकारात् । तदुक्तम्–

'असम्यक् सम्यगिति च व्यवस्थाभेदतः सुराः ।
व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा' ।। इति

(अभिनवचन्द्रिका)

अतः श्रुत्यविरोधेन जीवानामणुत्वे सिद्धे युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे अणोरपि ज्ञस्याविरोध इति पदत्रयानुवृत्तिं मत्वा अणोरपि जीवस्य गुणाच्चिद्गुणव्याप्त्या वा व्याप्त्यविरोध इति सूत्रार्थं मत्वा भावमाह ॥ **अणोरपीति** ॥ दृष्टान्तोक्तेर्व्यावर्त्याशंकापूर्वमुपयोगमाह ॥ **न चेति** ॥ गुणगुणिनोरभेदादिति भावः ॥ **आलोकवदिति** ॥ गुणिनस्तेजसो दीपिकादावेवावस्थाने नाणुत्वेऽपि तद्गुणस्यालोकस्य गृहादिव्याप्तिवदभेदेऽपि विशेषेणैवं भावोपपत्तेरित्यर्थः ॥ **नन्वेतद्भाष्यविरुद्धम्** ॥ तत्रालोकस्य प्रकाशगुणेन प्रकाशरूपेण व्याप्तिः, ज्योतीरूपेणाव्याप्तिरिति सगुणजीवदृष्टान्ततयाऽऽलोकस्य चिद्गुणदृष्टान्ततया प्रकाशस्य जीवद्रव्यमात्रदृष्टान्ततया ज्योतीरूपस्योपादानेनालोकस्य गुणत्वाभावात् । अत एव चोद्यमपि क्रियमाणमसदिति चेदत्र केचिद्भाष्यसूत्रयोरालोकपदेन दीपादिर्विवक्षितः । तस्य प्रकाशगुणाद्व्याप्तिर्ज्योतीरूपेणाव्याप्तिरिति तदर्थः । आलोकवदुपपत्तेरिति टीकायामप्ययमेवार्थः । नत्वालोकस्येत्युत्तरवाक्ये तु आलोकपदेनालोकशब्दस्य दीपादेर्यः प्रकाशः सः विवक्षितः । आलोकशब्दस्योभयपरत्वात् । पीलुशब्दस्य वृक्षतत्फलवाचकत्ववदालोकशब्दस्यापि दीपतत्प्रकाशपरत्वोपपत्तेरित्याहुः । वस्तुतस्तु यथाऽऽलोकस्येत्यादिभाष्यस्यायमर्थः । यथा आलोकाख्यस्य प्रकाशगुणेन प्रकाशाख्यगुणत्वेन स्वेन रूपेण व्याप्तिः ज्योतीरूपेण गुणितयाऽव्याप्तिरेवं चैतन्यचिद्गुणेन व्याप्तिः द्रव्यरूपेणाव्याप्तिरिति दृष्टान्ततया दीपे उदाहर्तव्ये आलोकाख्यगुणस्य ग्रहणं तु यथा आलोकाख्यगुण एव गुणित्वेन विशेषेण व्यापकः तदात्मकद्रव्यत्वविशेषेणाव्यापकः एवं ज्ञानाख्यो गुण एव विषयीकारित्वविशेषेण गुण इत्यभिहितः शरीरव्यापकः स एव स्वात्मकद्रव्यत्वेन विशेषेण जीव इत्यभिहितोऽणुश्च । जीवस्य ज्ञानात्मकद्रव्यत्वादिति प्रमेयं सूचयितुमिति ज्ञेयम् ॥ **तेन घटादीति** ॥ आलोकाख्येन तेजोरूपेण घटादिरूपस्यैव प्रतीयमानत्वेनालोके रूपस्यैवाप्रतीयमानत्वादित्यर्थः । तदेवोपपादयति **न हीति** ॥ यद्यालोक एव रूपं गृह्येत तर्हि व्योम्न्याततेऽपि गृह्येतेति भावः । नीलघटादिसम्बद्धबालार्कप्रभादौ प्रतीयमानमारुण्यादिकं न्यायमतेऽपि न प्रभानिष्ठं तस्य शुक्लभास्वररूपत्वादिति भावः ।

(वाक्यार्थमुक्तावली)

ननु दीपे गच्छति प्रभाया अपि गतिदर्शनात् क्रियावत्त्वेन द्रव्यत्वमिति चेन्न । घटे गच्छति रूपस्यापि गतिदर्शनाद्व्यभिचारात् । अन्यथा श्येने चलति अचलस्थाणोरिव तत्रैव रूपस्य स्थितिः स्यादिति । किं च गुणादिपञ्चकस्य निर्गुणत्वनिष्क्रियत्वपरिभाषाप्यनादरणीया स्यात् इति टीकाकारैरुक्तत्वाद्गुणेषु चतुर्विंशतिसङ्ख्यावत्समवायादावेकत्वसङ्ख्यावद्रूपे रसस्य स्पर्शात्पृथक्त्ववज्ज्ञातेः सर्वगतत्वेन महत्ववच्च प्रभाया गुणत्वेऽपि रूपचलनादिकमस्त्विति न कानिदनुपपत्तिः ॥ **द्रव्यत्वसाधकताविवादादिति** ॥ उत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहाय वृत्तेर्वक्ष्यमाणत्वात् । भेरीदेशोत्पन्नशब्दस्यैव श्रोत्रदेशगमनमिति सिद्धान्ते अङ्गीकाराच्चेति भावः । न च 'वायुर्गन्धानिवाशयात्' इति गीतायां, गन्धवतः पुण्यावयवानिति प्रमेयदीपिकायां व्याख्यातत्वात् केवलगन्धस्य न गमनमिति वाच्यम् । तत्र शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति' इति पूर्वपादत्रये जीवस्य शरीरप्राप्त्युत्क्रमणकाले परमेश्वर इन्द्रियाण्यादाय संयातीत्युक्तेः स्वस्वगुणविशिष्टेन्द्रियाण्यादाय गमने तथाविधदृष्टान्तेन भवितव्यमिति भावेन टीकायां तस्य क्वचिद्गन्धवत्पुष्पावयवस्य गमनाभावात् गन्धवतः पुष्पावयवानिवेति व्याख्याततत्त्वेऽपि क्वचिद्गन्धमात्रस्य गमनाविरोधे नैतद्ग्रन्थप्रवृत्तेरुपपत्तेः । कस्तूर्यादिगन्धरूपगुणस्य वह्निस्थोष्णस्पर्शस्य दूरगमनात्तदवयवानामेव कस्तूर्यादेः पलपरिमाण ह्रासः स्यात् । गृहे च वह्नेर्बहुकालमवस्थाने बहुवारमुन्नयनेवांशोपचयेन नैय्यत्यिकगृहदाहप्रसङ्गश्चेत्यलम् । तदनुविधानादिनैवेति न च छायायां व्यभिचारः । भित्यादावचलेऽपि छायायाः सूर्यप्रतिलोम्येन चलनात् । आदिशब्देन लोके माणिक्यप्रभादौ तद्गुणव्यवहारः 'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादि गुणैकराशिम्' इति स्मार्तस्तेजसि गुणत्वव्यवहारश्च गृह्यते । अत एव टीकाकारैः 'शुद्धानन्दोरुसंविद्युति' इत्यत्र द्युतेर्गुणत्वमुक्तम् ॥ तदनुविधानमुपपादयितुं द्रव्यत्वे दूषणान्तरमाह ॥ **द्रव्यत्वे चेति** ॥ **कारणं विहायेति** ॥ उपादानं विहायोपादेयद्रव्यवृत्तिरित्यर्थः ॥ **कारणान्तरादर्शनादिति** ॥ तदैव तत्रत्यतैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमण्डलमारभन्त इत्यत्र प्रमाणाभावादिति भावः ॥ **अप्रतीतिप्रसङ्गादिति** ॥ परैरेवाकार्यद्रव्यस्य बहिरिन्द्रियग्राह्यत्वानङ्गीकारेण चाक्षुषत्वापातादित्यर्थः ॥ **प्रदीपेति** ॥ प्रदीपारोपणे तदैव तदवयवाः परितोऽवकीर्णाः सन्त आलोकबुद्धिविषया इत्यर्थः । तस्मादेतत्सूत्रेऽप्येवमभिधीयते ॥ **प्रदीपानुविधानेति** ॥ उपलक्षणं चैतत् ॥ निबिडावयवेन्द्रनीलावयवविसरणस्यासम्भवात्तत्र प्रभा न स्यादिति द्रष्टव्यम् ॥ **बाहुल्यं स्यादिति** ॥ आद्यक्षण इव

(अभिनवचन्द्रिका)

अतः श्रुत्यविरोधेन जीवानामणुत्वे सिद्धे युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे अणोरपि ज्ञस्याविरोध इति पदत्रयानुवृत्तिं मत्वा अणोरपि जीवस्य गुणाच्चिद्गुणव्याप्त्या वा व्याप्त्यविरोध इति सूत्रार्थं मत्वा भावमाह ॥ **अणोरपीति** ॥ दृष्टान्तोक्तेर्व्यावर्त्याशंकापूर्वमुपयोगमाह ॥ **न चेति** ॥ गुणगुणिनोरभेदादिति भावः ॥ **आलोकवदिति** ॥ गुणिनस्तेजसो दीपिकादावेवावस्थाने नाणुत्वेऽपि तद्गुणस्यालोकस्य गृहादिव्याप्तिवदभेदेऽपि विशेषेणैवं भावोपपत्तेरित्यर्थः ॥ **नन्वेतद्भाष्यविरुद्धम्** ॥ तत्रालोकस्य प्रकाशगुणेन प्रकाशरूपेण व्याप्तिः, ज्योतीरूपेणाव्याप्तिरिति सगुणजीवदृष्टान्ततयाऽऽलोकस्य चिद्गुणदृष्टान्ततया प्रकाशस्य जीवद्रव्यमात्रदृष्टान्ततया ज्योतीरूपस्योपादानेनालोकस्य गुणत्वाभावात् । अत एव चोद्यमपि क्रियमाणमसदिति चेदत्र केचिद्भाष्यसूत्रयोरालोकपदेन दीपादिर्विवक्षितः । तस्य प्रकाशगुणाद्व्याप्तिर्ज्योतीरूपेणाव्याप्तिरिति तदर्थः । आलोकवदुपपत्तेरिति टीकायामप्ययमेवार्थः । नत्वालोकस्येत्युत्तरवाक्ये तु आलोकपदेनालोकशब्दस्य दीपादेर्यः प्रकाशः सः विवक्षितः । आलोकशब्दस्योभयपरत्वात् । पीलुशब्दस्य वृक्षतत्फलवाचकत्ववदालोकशब्दस्यापि दीपतत्प्रकाशपरत्वोपपत्तेरित्याहुः । वस्तुतस्तु यथाऽऽलोकस्येत्यादिभाष्यस्यायमर्थः । यथा आलोकाख्यस्य प्रकाशगुणेन प्रकाशाख्यगुणत्वेन स्वेन रूपेण व्याप्तिः ज्योतीरूपेण गुणितयाऽव्याप्तिरेवं चैतन्यचिद्गुणेन व्याप्तिः द्रव्यरूपेणाव्याप्तिरिति दृष्टान्ततया दीपे उदाहर्तव्ये आलोकाख्यगुणस्य ग्रहणं तु यथा आलोकाख्यगुण एव गुणित्वेन विशेषेण व्यापकः तदात्मकद्रव्यत्वविशेषेणाव्यापकः एवं ज्ञानाख्यो गुण एव विषयीकारित्वविशेषेण गुण इत्यभिहितः शरीरव्यापकः स एव स्वात्मकद्रव्यत्वेन विशेषेण जीव इत्यभिहितोऽणुश्च । जीवस्य ज्ञानात्मकद्रव्यत्वादिति प्रमेयं सूचयितुमिति ज्ञेयम् ॥ **तेन घटादीति** ॥ आलोकाख्येन तेजोरूपेण घटादिरूपस्यैव प्रतीयमानत्वेनालोके रूपस्यैवाप्रतीयमानत्वादित्यर्थः । तदेवोपपादयति **न हीति** ॥ यद्यालोक एव रूपं गृह्येत तर्हि व्योम्न्याततेऽपि गृह्येतेति भावः । नीलघटादिसम्बद्धबालार्कप्रभादौ प्रतीयमानमारुण्यादिकं न्यायमतेऽपि न प्रभानिष्टं तस्य शुक्लभास्वररूपत्वादिति भावः ।

(वाक्यार्थमुक्तावली)

ननु दीपे गच्छति प्रभाया अपि गतिदर्शनात् क्रियावत्त्वेन द्रव्यत्वमिति चेन्न । घटे गच्छति रूपस्यापि गतिदर्शनाद्व्यभिचारात् । अन्यथा श्येने चलति अचलस्थाणोरिव तत्रैव रूपस्य स्थितिः स्यादिति । किं च गुणादिपञ्चकस्य निर्गुणत्वनिष्क्रियत्वपरिभाषाप्यनादरणीया स्यात् इति टीकाकारैरुक्तत्वाद्गुणेषु चतुर्विंशतिसङ्ख्यावत्समवायादावेकत्वसङ्ख्यावद्रूपे रसस्य स्पर्शात्पृथक्त्व-वज्जातेः सर्वगतत्वेन महत्ववच्च प्रभाया गुणत्वेऽपि रूपचलनादिकमस्त्विति न कानिदनुपपत्तिः ॥ **द्रव्यत्वसाधकताविवादादिति** ॥ उत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहाय वृत्तेर्वक्ष्यमाण-त्वात् । भेरीदेशोत्पन्नशब्दस्यैव श्रोत्रदेशगमनमिति सिद्धान्ते अङ्गीकाराच्चेति भावः । न च 'वायुर्गन्धानिवाशयात्' इति गीतायां, गन्धवतः पुण्यावयवानिति प्रमेयदीपिकायां व्याख्यातत्वात् केवलगन्धस्य न गमनमिति वाच्यम् । तत्र शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति' इति पूर्वपादत्रये जीवस्य शरीरप्राप्त्युत्क्रमणकाले परमेश्वर इन्द्रियाण्यादाय संयातीत्युक्तेः स्वस्वगुणविशिष्टेन्द्रियाण्यादाय गमने तथाविधदृष्टान्तेन भवितव्यमिति भावेन टीकायां तस्य क्वचिद्गन्धवत्पुष्पावयवस्य गमनाभावात् गन्धवतः पुष्पावयवानिवेति व्याख्यातत्वेऽपि क्वचिद्गन्ध-मात्रस्य गमनाविरोधे नैतद्ग्रन्थप्रवृत्तेरुपपत्तेः । कस्तूर्यादिगन्धरूपगुणस्य वह्निस्थोष्णस्पर्शस्य दूरगमनात्तदवयवानामेव कस्तूर्यादेः पलपरिमाण ह्रासः स्यात् । गृहे च वह्नेर्बहुकालमवस्थाने बहुवारमुन्नयनेवांशोपचयेन नैय्यत्यिकगृहदाहप्रसङ्गश्चेत्यलम् । तदनुविधानादिनैवेति न च छायायां व्यभिचारः । भित्यादावचलेऽपि छायायाः सूर्यप्रतिलोम्येन चलनात् । आदिशब्देन लोके माणिक्यप्रभादौ तद्गुणव्यवहारः 'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादि गुणैकराशिम्' इति स्मार्तस्तेजसि गुणत्वव्यवहारश्च गृह्यते । अत एव टीकाकारैः 'शुद्धानन्दोरुसंविद्युति' इत्यत्र द्युतेर्गुणत्वमुक्तम् ॥ तदनुविधानमुपपादयितुं द्रव्यत्वे दूषणान्तरमाह ॥ **द्रव्यत्वे चेति** ॥ **कारणं विहायेति** ॥ उपादानं विहायोपादेयद्रव्यवृत्तिरित्यर्थः ॥ **कारणान्तरादर्शनादिति** ॥ तदैव तत्रत्यतैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमण्डलमारभन्त इत्यत्र प्रमाणाभावादिति भावः ॥ **अप्रतीतिप्रसङ्गादिति** ॥ परैरेवाकार्यद्रव्यस्य बहिरिन्द्रियग्राह्यत्वानङ्गीकारेण चाक्षुषत्वापातादित्यर्थः ॥ **प्रदीपेति** ॥ प्रदीपारोपणे तदैव तदवयवाः परितोऽवकीर्णाः सन्त आलोकबुद्धिविषया इत्यर्थः । तस्मादेतत्सूत्रेऽप्येवमभिधीयते ॥ **प्रदीपानुविधानेति** ॥ उपलक्षणं चैतत् ॥ निबिडावयवेन्द्र-नीलावयवविसरणस्यासम्भवात्तत्र प्रभा न स्यादिति द्रष्टव्यम् ॥ **बाहुल्यं स्यादिति** ॥ आद्यक्षण इव

(वाक्यार्थमुक्तावली)

द्वितीयादिक्षणेष्वपि अवयवानां विसरणस्य न्याय्यत्वादिति भावः । उपलक्षणं चैतत् । दीपस्य सूक्ष्मता च न स्यात् । पुनरन्येषां दीपप्रवेश इत्यत्र मानाभावादित्यपि द्रष्टव्यम् । तुष्यतु दुर्जन इति न्यायेनाह ॥ **अप्राधान्येन वेति** ॥ **एकत्र विरुद्धमिति** ॥ यद्यपि देवानामंशैः गुणेनापि व्याप्तिरस्ति । तथाप्यंशैर्गुणेनैवेति सावधारणे नैकस्मिन्नेव पुरुषे विरुद्धमिति भावः ॥ **घटादेरिति** ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वात् घटस्पृष्टपटवदित्यपि सम्भवादित्यर्थः । अन्ये गन्धर्वादयः । गुणव्याप्तौ जीवस्य किमायातमित्यत आह ॥ **चिद्गुणस्येति** ॥ सुराणां गन्धर्वादिभ्यः शक्तियोगाद्विशिष्टाव-स्थितिः सा च विविधा तारतम्येनैवेति मूलार्थः । अत्राद्ये गत्यादित्युक्तप्राधान्योक्तिः । द्वितीये प्रसङ्गाद्गत्यादेरीशाधीनत्वस्य । तृतीये प्रथमोक्तलिङ्गानां व्याप्तश्रुतिबाधमाशङ्क्य ईशपरतया प्रकरणेनावकाशत्वस्य । चतुर्थे तत्रैव श्रुतिलिङ्गरूपप्रबलसाधकस्य ॥ पञ्चमे सिद्धान्तन्यायस्य तत्र तत्र परिज्ञानरूपपूर्वपक्षन्याय सत्प्रतिपक्षत्वमाशङ्क्य चन्दनदृष्टान्तेनान्यथासिद्धेः । षष्ठे पञ्चमोक्त-दृष्टान्त दार्ष्टान्तिकयोर्वैषम्यशङ्कोद्धारस्य । सप्तमे पुनर्मानुषादिसर्वजीवापेक्षया चिद्गुणव्याप्त्युक्त्या पूर्वपक्षयुक्तेरन्यथासिद्धेरुक्तेरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

न स्वरूपेण व्याप्तियुतः । अन्ये सुरेभ्यः मनुष्याः चिद्गुणेन व्याप्तियुताः । अन्यथा न अंशेन व्याप्तियुताः । ननु चिद्गुणस्य व्याप्तित्वे जीवस्य व्याप्तत्वव्यवहारः कथमित्यत उक्तम् ॥ **चिद्गुण-स्येति** ॥ देवानामप्येवंरूपेण कथं व्यवस्थितिरित्यत उक्तम् ॥ **शक्तियोगात् इति** ॥ ईश्वर-प्रसादजसामर्थ्ययोगात् इत्यर्थः । नन्वालोको द्रव्यं रूपित्वादित्यनुमानं द्रव्यत्वे मानमित्याशङ्कते ॥ **रूपित्वमिति** ॥ तेन **घटादिरूपस्यैवेति** ॥ नीलघटादि सम्बद्धबालार्कप्रभादौ प्रतीयमान-मारुण्यादिकं तु न्यायमतेऽपि न प्रभानिष्ठमिति भावः । न च दीपे गते प्रभाया अपि गतिदर्शनात् क्रियावत्वेन आलोकस्य द्रव्यत्वमिति वाच्यम् । घटे गच्छति रूपस्यापि गतिदर्शनेन व्यभिचारात् । अन्यथा श्येने चलति अचलतस्स्थाणोरिव रूपस्यापि तत्रैवावस्थितिः स्यात् इति द्रष्टव्यम् ।

ननु घटादिरूपातिरिक्तं आलोकरूपं व्योम्नि दृश्यत इत्यत आह ॥ **न हीति** ॥ तत्र मेघरूपस्यैव प्रतीयमानत्वादिति भावः । आलोको द्रव्यं दीपं विहाय वृत्तेः इत्यनुमानं प्रमाण-

(तत्त्वसुबोधिनी)

मित्याशङ्कते ॥ **दीपमिति** ॥ **द्रव्यत्वसाधकताविवादादिति** ॥ उत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहाय वृत्तेर्वक्ष्यमाणत्वादिति भावः ॥ **कुतस्तद्गुणत्वमिति चेत् इति** ॥ आलोकस्य दीपगुणत्वं कुत इत्यर्थः ॥ **तदनुविधानेनैवेति** ॥ दीपान्वयव्यतिरेकानुविधानादित्यर्थः । न चान्वयव्यतिरेकानुविधानेन तद्गुणत्वानुमाने छायाया अपि भित्तिगुणत्वं स्यात् तदन्वयव्यतिरेकानुविधानात् इति वाच्यम् । भित्त्यादावचलेऽपि छायायाः सूर्यप्रातिलोम्येन चलनात् तथा च तदनुविधानाभावात् न व्यभिचारः । लोके माणिक्यप्रभादौ तद्गुणत्वव्यवहारः 'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः' इति स्मार्तः तेजसि गुणत्वव्यवहारश्च गुणत्वे प्रमाणमिति दर्शयितुमादिशब्दः ॥ **कारणान्तरदर्शनादिति** ॥ तदैव तत्र तैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमण्डलमारभन्त इत्यत्र मानाभावादिति भावः ॥ **अप्रतीतिप्रसङ्गादिति** ॥ अकार्यद्रव्यत्वे परमाणुत्वापातेनाप्रत्यक्षत्वप्रसङ्गादित्यर्थः ॥ **तथा सति प्रदीपानुविधानानुपपत्तेरिति** ॥ उपलक्षणं चैतत् निबिडावयवेन्द्रनीलादाववयवविदारणस्यासम्भावितत्वात् तत्र प्रभा न स्यादित्यपि द्रष्टव्यम् ।

ननु प्रदीपावयवा एवालोकः । दीपानुविधानं तु दीपावयवानां दीपेन सहैवागमनात् प्रतीयते इत्यत आह ॥ **न हीति** ॥ इतस्ततो विकीर्णानामवयवानां दीपेन सह गमनमेव नोपपद्यते । अन्यथा विकीर्णजीर्णकन्थातन्तूनामपि कन्थया सहैव गमनं स्यादिति भावः ॥ **विरोधादिति** ॥ प्रभावयवतमसोः सहावस्थानमेव न, विरोधादिति भावः ॥ **क्रमेण चैवमिति** । पुनःपुनर्दीपगमनागमनयोः पुनःपुनस्तदवयेषु विकीर्यमाणेषूत्तरोत्तरं प्रकाशबाहुल्यं स्यादित्यर्थः । अनुभवविरोधमप्याह ॥ **तदैवेति** ॥ तदैवोत्पन्नानां दीपावयवानां विकीर्णत्वं न सम्भवतीति भावः । पक्षान्तरमाह ॥ **अप्राधान्यसाम्येन वेति** ॥ **घटादेरपीति** ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वात् घटसंयुक्तपटवत् इति प्रयोगसम्भवात् इत्यर्थः । अत्राद्ये सूत्रे स्वपक्षसाधकहेतूक्तिः । द्वितीये उत्क्रान्त्यादीनां परमात्माधीनत्वप्रतिपादनम् । तृतीये व्याप्तिश्रुतेः प्रकरणेनेश्वरपरत्वोक्तिः । चतुर्थे तस्या एवेश्वरपरत्वे श्रुतिलिङ्गादिरूपसाधकान्तरोक्तिः । पञ्चमे तत्र तत्र परिज्ञानरूपयुक्तेरन्यथासिध्युक्तिः । षष्ठे पञ्चमसूत्रोक्त दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यशङ्कोद्धारः । सप्तमे मानुषादिसर्वजीवापेक्षया चिद्गुणव्याप्त्या प्रागुक्तयुक्तेरन्यथासिध्युक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**शरीरव्याप्यव्याप्तीति** ॥ स्वरूपेण शरीराव्याप्तिरंशैः शरीरव्याप्तिरिति यथायोग्यं सम्बन्धो न यथाक्रमम् ॥ **चिद्गुणस्येति** ॥ ज्ञानापरपर्यायप्रकाशरूपगुणस्येत्यर्थः ॥ **आलोकवदिति** ॥ दीपवदित्यर्थः । गुणिनो दीपस्याव्याप्तत्वेऽपि तद्गुणभूतालोकस्य गृहादौ सर्वत्र व्याप्तिदर्शनादित्यर्थः । **आलोकस्य** दीपप्रकाशापरपर्यायप्रभा अत्र आलोकशब्देन ग्राह्या **रूपित्वम्** ॥ शुक्लभास्वररूपवत्त्वमित्यर्थः । आलोकेन घटादिनिष्ठस्यैव रूपस्य प्रतीयमानत्वेनालोके रूपवत्त्वमसिद्धमिति छलेनोत्तरमाह ॥ **तेनेति** ॥ किञ्च यद्यालोके रूपं स्यात्तर्ह्याकाशोपरि देशे विद्यमानस्यापि प्रकाशस्य रूपं गृह्येत । तस्मान्नास्त्यालोके रूपमित्याह ॥ **न हीति** ॥ तेन **घटादिरूपस्यैवेति** ॥ प्रभा हि तेजसो रूपमिति वचनात् तेजसः शुक्लभास्वररूपापरपर्यायेणालोकेन घटादिनिष्ठरूपमेव प्रतीयते न तु स्वरूपवत्त्वम् । अतोऽन्यतरासिद्धिरिति भावः । तदुपपादयति ॥ **न हीति** ॥ तेजोरूपसूर्यमण्डलस्य शुक्लभास्वररूपाख्यः प्रकाश एव प्रतीयते न पुनस्तस्य रूपमित्यर्थः । अत्र व्योम्नीति पदप्रयोजनं विचार्यम् ।

ननु गुणस्य स्वसमवायिकारणं विना वृत्तेरभावात् यद्यालोको गुणः स्यात्तर्हि स्वसमवायिकारणं दीपं विहाय कुड्यादावपि वृत्तिर्न स्यात् । वर्तते च दीपं विहाय वृत्तिः । तस्मादालोको न दीपगुणोऽपितु द्रव्यमेव ।

तथा च प्रयोगः । आलोको द्रव्यम् आश्रयं विना प्रतीयमानत्वादित्याशङ्कते ॥ **दीपमिति** ॥ प्रमाणं द्रव्यत्व इति शेषः ॥ **तस्येति** ॥ आश्रयं विहाय वृत्तेरित्यस्य हेतोरित्यर्थः । 'व्यतिरेको गन्धवत्' इति सूत्रे गुणे गन्धे आश्रयं विना वृत्तेर्वक्ष्यमाणत्वेन व्यभिचार इति भावः । यद्यपि तत्र सहायेनावयवा अप्यायान्ति तथापि पुष्पादिरूपप्रधानाश्रयं विना तावद्वृत्तिरस्तीति ध्येयम् । नन्वालोकस्य द्रव्यत्वाभावे कुतः प्रमाणादीपादिगुणत्वमिति शङ्कते ॥ **तर्हीति** ॥ दीपान्वयव्यतिरेकानुविधायित्वमेतद्गुणत्वे मानमित्याह ॥ **तदनुविधान इति** ॥ दण्डान्वयव्यतिरेकानुविधायिनि घटे व्यभिचारात् सम्भावके युक्तिरियम् । एवं गुणत्वे साधकमुक्त्वा द्रव्यत्वे बाधकमाह ॥ **द्रव्यत्वे चेति** ॥ **अनभ्युपेतत्वादिति** ॥ आलोकस्य च दीपं विहायापि कुड्यादौ वृत्तेः सत्त्वात् दीपकार्यत्वमयुक्तमिति भावः । दूषणान्तरमाह ॥ **कारणान्तरेति** ॥ दीपादन्यस्य यस्य कार्यं तस्य

(वाक्यार्थविवरणम्)

अन्यस्य कारणान्तरस्यादर्शनादिति भावः ॥ **नान्त्य इति** ॥ अकार्यत्वपक्ष इत्यर्थः ॥ **अप्रतीतीति** ॥ अकार्यद्रव्यस्य बहिरिन्द्रियाग्राह्यत्वादालोकस्य चाकार्यद्रव्यत्वे चक्षुषा प्रतीतिर्न स्यादिति भावः ॥ **प्रदीपेति** ॥ तथा च द्रव्यसमवायिकारणं ह्यवयवः । प्रदीपावयवत्वे प्रदीपसमवायिकारणत्वेन द्रव्यत्वमेव वाच्यम् । न गुणत्वमिति भावः । कुतोऽनुपपत्तिरित्यतोऽवयवानामवयव्यनुविधाननियमाभावादालोकस्य नियमेन प्रदीपानुविधानसत्त्वात् न तदवयवानामालोकत्वमित्याह ॥ **न हीति** ॥ जीर्णकन्थाझाटने कृते तस्याः सकाशाद्विकीर्णा इतस्ततः पतिताः कतिचन तन्तवः कन्थायाः कुत्रचिन्नयने तया सह न गच्छन्ति । किन्तु तत्रैवास्थिता भवन्ति । तद्वद्दीपावयवानामालोकत्वे दीपेन सह गमनमनुपपन्नमित्यर्थः । नूतनकन्थायास्ततूनां विकीर्णताऽयोगाज्जीर्णेत्युक्तम् ।

ननु तदुपरीत्थमुच्यते । जीर्णकन्था तन्तुवत् सह न गच्छत्येव । किन्तु तद्वत्तत्रैवावस्थिता भवति । तथा च येऽवस्थिता अवयवास्त एवालोकत्वेनाभिमताः । तर्हि दीपनयने किमिति न दृश्यन्त इति चेत् । यदा दीपो गच्छति तदा तम आगत्य तानवयवांस्तत्रत्यानावृणोति । तथा च तदावृतत्वान्न दृश्यन्ते । तदपगमे तु दृश्यन्त इत्याशङ्क्य प्रभावयवतमसोः सहावस्थानमेव न सम्भवति **विरोधात्** ॥ दूरे तदावृतत्वमित्याह ॥ **अवस्थिता एवेत्यादिना** ॥ **क्रमेणेति** ॥ द्विवारं त्रिवारं दीपानयनेऽपनयने च बह्ववयवानामवस्थानप्राप्त्याऽऽलोकबाहुल्यस्य प्राप्तत्वेनोत्तरोत्तरप्रकाशो बहुतरः स्यादित्यर्थः । ननु यदा दीप आनीयते तदा तदवयवाः सर्वतो विकीर्णा भवन्तीत्येतदङ्गीक्रियते । यदा च दीपो नीयते तदाऽवयवास्तमसा आवृता भवन्तीति नोच्यते, किन्तु दीपेन सह न गच्छन्ति । अपि तु नश्यन्तीति । ततः को दोष इत्यतस्तस्याप्यनुभवविरुद्धकल्पनैव दोष इत्याह ॥ **तदैवेति** । अत्रालोकशब्दो नानार्थः । सूत्रे भाष्ये च यथा आलोकस्य 'लुक् प्रकाश' इति धातोः प्रकाशगुणेनेत्यत्रालोकशब्देन दीपो ग्राह्यः । प्रकाशशब्देन च दीपादिनिष्ठप्रभाऽपरपर्यायप्रसिद्धालोकः । अत एव प्रकाशगुणेनेत्यालोकस्योक्तं गुणत्वमसहमानेन नन्वालोकस्येत्याशङ्कितम् । ज्योतीरूपेण । दीपरूपेण । टीकायामालोकवदुपपत्तेरित्यत्रालोकशब्देन दीपो ग्राह्यः । नन्वालोकस्य द्रव्यत्वादित्यत्र युक्तमुक्तम् । आलोको गुण इतीत्यत्र चालोकशब्देन दीपादिनिष्ठप्रकाशापरपर्यायालोकः प्रसिद्ध एव विवक्षित इति ध्येयम् ॥ **स्कान्दे चेति** । तथा चैवं भाष्ययोजना । अंशैः सम्यगवस्थानं स्वरूपेणासम्यगवस्थानमित्यवस्थाभेदतोऽवस्थानविशेषतो

(वाक्यार्थविवरणम्)
व्याप्यव्याप्तियुता ये ते सुराः । तथा चाविरोध इत्यादिसूत्रद्वयं देवताविषयमित्युक्तं भवति । अन्ये जीवाश्चिद्गुणेनैव व्याप्यव्याप्तियुता नान्यथा । अंशैः । देवताभिन्नजीवानां निरंशत्वात् । तथा च गुणाद्वेतिसूत्रम् इतरजीवविषयमित्युक्तं भवति ।

ननु तर्हि व्याप्तिश्चिद्गुणस्यैव न जीवस्येत्यत आह ॥ **चिद्गुणस्येति** ॥ **स्वरूपत्वात्** ॥ जीवस्वरूपत्वात् । तद्व्याप्तिः । तेन चिद्गुणेन व्याप्तिरित्येतद्युज्यते । ननु जीवेष्वविद्यमानं स्वरूपतदंशाभ्यां सम्यगसम्यगवस्थानं देवानां कथं युज्यते इत्यतः सुराणां तादृशशक्तियोगाज्जीवानां तादृक्सामर्थ्यग्दिूरत्वादित्याह ॥ **शक्तीति** ॥ सुराणां व्यवस्थितिः शक्तिलक्षणोपायात् विविधा विचित्रेत्यर्थ इति । नन्वेवं जीवस्याणुत्वे व्याप्तिसाधकानुमानविरोध इत्यत आह ॥ **व्याप्तीति** ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वात् घटसंयुक्तपटवदित्यनेनाप्यनुमानेन घटस्यापि व्याप्तत्वं सिद्ध्येदिति भावः ।

## वाक्यार्थमञ्जरी

**व्याप्यव्याप्तीति** ॥ स्वरूपेणाव्याप्तिरंशैर्व्याप्तिरिति विवेकः ॥ ॐ **गुणाद्वाऽऽलोकवत्** ॐ ॥ अणोरपि जीवस्य गुणाचिल्लक्षणादेहव्याप्तिः सम्भवति कथम् आलोकवत् आलोकस्य दीपादेः प्रकाशाख्यगुणेन गेहान्ते व्याप्तिवदित्यर्थः । आलोकवत् दीपवत् आलोकस्य प्रकाशस्य उभयोरप्यालोकशब्दवाच्यत्वादेवं व्यवहारः ॥ **घटादिरूपस्यैवेति** ॥ नीलघटसम्बद्धबालार्कप्रभादौ प्रतीयमानमारुण्यादिकं न्यायमतेऽपि न प्रभानिष्ठं तस्य शुक्लभास्वररूपत्वादिति भावः । ननु दीपे गच्छति प्रभाया गतिदर्शनेन क्रियावत्वाद्द्रव्यत्वमिति चेन्न । घटे गते रूपस्यापि गतिदर्शनेन व्यभिचारात् अन्यथा तत्रैव रूपस्य स्थितिः स्यादिति ध्येयम् । प्रकाशस्यापि रूपं प्रतीयत इति किं न स्यादित्यत आह ॥ **न हीति** ॥ यद्यालोके रूपं स्यात्तर्हि घटाद्यसम्बद्धस्याकाशे विद्यमानप्रकाशस्यापि रूपं गृह्येत न चैवमस्ति अतो न रूपित्वमित्यर्थः ॥ **दीपं विहायेति** ॥ गुणस्तु रूपादिर्न द्रव्यव्यतिरेकेण वृत्तेरिति भावः ॥ **विवादादिति** ॥ उत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहाय प्रवृत्तेर्वक्ष्यमाणत्वादिति भावः ॥ **तदनुविधानेति** ॥ दीपानुसारेण गमनागमनादिमत्वेनेत्यर्थः । 'तेजो बलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः' इति स्मृतौ तेजसि

(वाक्यार्थमञ्जरी)

गुणव्यवहारसङ्ग्रहायादिशब्दः । कारणम् उपादानम् ॥ **कारणान्तरेति** ॥ तदैव तत्रैव तैजस-परमाणव एव व्यणुकादिक्रमेणालोकमण्डलमारभन्त इत्येतच्च मानाभावादुपेक्ष्यत इति भावः ॥ **अप्रतीतिप्रसङ्गादिति** ॥ परैरकार्यद्रव्यस्य बहिरिन्द्रियग्राह्यत्वानङ्गीकारेण चक्षुषा तदप्रतीतिप्रसङ्गा-दित्यर्थः । तदवयवत्वादेव तेन सह गमनमित्यत आह ॥ **न हीति** ॥ कन्था पटः ॥ **विरोधादिति** ॥ प्रदीपावयवतमसोः सहावस्थानमेव न सम्भवति तमस आलोकाभावरूपत्वेन विरोधादित्यर्थः ॥ **क्रमेणैवेति** ॥ पुनः पुनर्दीपागमापगमयोः पुनस्तदवयवेषु विकीर्यमाणेषु उत्तरोत्तरं प्रकाशबाहुल्यं स्यादित्यर्थः ॥ **तदैवोत्पन्नेति** । नूतनेत्यर्थः ॥ **अनुभवविरुद्धमिति** ॥ नूतनपटावयवानां विकीर्णतयाऽदर्शनादित्यर्थः ॥ **घटादेरपीति** ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वाद्घटस्पृष्टपटवदित्यपि साधयितुं शक्यत्वादिति भावः ।

॥ इति उत्क्रान्त्यधिकरणम् ॥

## १३. अथ व्यतिरेकाधिकरणम्

### सूत्रभाष्यम्

'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चावर्तते स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति गौपवनश्रुतावेकस्याबहुत्वं प्रतीयते । 'स पञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा स गच्छति स मुच्यते' इति पाराशर्यायण-श्रुतौ बहुरूपत्वं प्रतीयते । अतो विरोधं परिहरति—

**॥ ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ २७ ॥**

यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति । 'अथैक एव सन् गन्धवद्व्यतिरिच्यते । अथैकीभवति । अथ बह्वीभवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान्' इति शाण्डिल्यश्रुतिः ।

'अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः ।
आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा' ॥ इति च पाद्मे ।

॥ इति व्यतिरेकाधिकरणम् ॥

### तत्त्वप्रदीपिका

यथा पुष्पाद्गन्धः पृथग्गच्छतीति दृष्टान्तान्न विरोध आशङ्कनीयः । तं हि परिहरति अथैक एव सन् गन्धवद्व्यतिरिच्यत इति श्रुत्युपादानेन । न च दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यम् । बहुभावमात्रविषयो दृष्टान्तः । स च विशेषमात्रप्रापकोऽत्र न भेदप्रापकः । अथैकीभवतीति विशेष-णात् । न हि कदाचिद्भिन्नयोरभेदसम्भवः । एकस्यैव सतो बहुभावः सुखज्ञानाद्यनुसन्धानाच्चा-वसीयते । तद्धि चेतनैक्ये प्रमाणम् । 'एक आत्मनः शरीरे भावात्' इति चांशांशिनोरभेदः प्रदर्शयिष्यते । 'आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा' इति वचनाच्च । न च सर्वेषां बहुभावः । तस्मादबहुभावश्रुतिर्न विरुध्यते । न च परमयोगः पूर्वं प्रत्युक्तः तस्य । श्रुतिस्मृतिपरिगृहीतत्वेना-प्रत्याख्येयत्वात् । अन्यस्मिन्नप्यविरुद्धं स्वीकार्यमस्तीति द्योतितम् 'इतरेषां च' इति च

(तत्त्वप्रदीपिका)

शब्दयोजनाबलात् । तं च शब्देन भागोपलब्धिरङ्गीकृतेति हि व्याचख्यौ । 'भाग' एकदेशः । तत्र तेभ्यस्तु विशेषशङ्कास्पदत्वेनायमतिदेशयोऽभूत् । तेभ्योऽधिकं प्रमाणोपपन्नत्वं विशेषशङ्काबीजम् । परिहारे विशेषः प्रमाणोपलब्धभागस्त्रीकार इति भवति कथञ्चित् । एतेनैतदप्यपास्तं, यद्योगिनो बहुदेहेषु युगपद्भोगयोगार्थं सर्वगतत्वं जीवानां कल्पयन्ति । अंशबहुत्वेनैव तदुपपत्तेरुक्तत्वात् । अन्तःकरणस्य चाव्याप्तस्य देहे देहे पृथग्गतिमिच्छन्ति चेद्योगिभोगाय भोक्तुस्तथा किमिति नेच्छेयुः । नेच्छन्ति चेद्देहान्तरेषु भोगाभावप्रसङ्ग इति ।

## तत्त्वप्रकाशिका

अत्रेश्वरे श्रुतिसमन्वयसिध्यर्थं जीवविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणे हरौ श्रुतीनां समन्वयः प्रागुक्तः । स च श्रुतीनां विरोधेनाप्रामाण्ये न युक्तः स्यादिति सर्वथा निराकार्यः । प्रकृतो जीव एव विषयः । किमेकरूपः किं वाऽनेकरूप इति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयति **॥ स इति ॥** जीवत्वज्ञापनायादिवाक्योद्धारः । एकरूप एवेति पूर्वः पक्षः । 'स एकधा' इति श्रुतेः । न चान्यत्राप्यस्ति श्रुतिरिति वाच्यम् । ऐकरूप्यश्रुतेः सयुक्तिकत्वात् । युज्यते खलु विभावात्मनि योगप्रभावेन शरीरबहुतया बाहुरूप्यम् । तच्च निषिद्धम् । न च वक्तव्य-मणोरप्यात्मनोंऽशबाहुल्याद् **बहुरूपत्वमिति ॥** निरवयवत्वात् । 'स नित्यो निरवयवः' इति श्रुतेः । न च मन्तव्यं योगिनोऽघटितघटकसामर्थ्यवत्त्वेनोपपन्नं बहुरूपत्वम् । दृश्यते हि समाधि-सामर्थ्यादेव तेषां समुद्रपानादीति । तथा सति जीवस्येश्वरेण गुणसाम्यापातात् । एतदेवैश्वर्यं यत्कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यम् । अतः सयुक्तिकैतत् श्रुतिविरोधेन बहुरूपश्रुतिरप्रमाणमेव । न च श्रुतेरीश्वरविषयता । स विमुच्यत इति जीवलिङ्गात् । ततश्च न हरौ श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतारयति **॥ अत इति ॥** अतो विरोधः सन्देहबीजमस्ति तं परिहरतीत्यर्थः । सूत्रं व्याचष्टे **॥ यथेति ॥** अस्त्येव जीवस्य बहुरूपत्वम् । अणुत्वेऽप्यंशव्यतिरेकेण बहुत्वोपपत्तेः । न चांशिनं विहायान्यत्रांशस्य गमनमनुपपन्नम् । गन्धादौ दृष्टत्वात् । न च श्रुतिविरोधः । तस्याः स्वरूपैक्यविषयत्वात् । न च भिन्नांशशून्यत्वादनुपपत्तिः । योगसम्पदा तदुपपत्तेः । न चेश्वरेण साम्यापातः । योगिनामपि बहुरूपत्वशक्तेर्योगाराधितेश्वरप्रसादायत्तत्वात् । न चेश्वरस्याप्येतद-शक्यम् । तस्याचिन्त्यशक्तित्वात् । कुत एतत्सर्वमिति चेदथेतिश्रुतेरेवेति भावः । अत्र चशब्दसूचितां स्मृतिं च दर्शयति **॥ अचिन्त्ययेति ॥** तदेवं श्रुत्यविरोधेन जीवस्य बहुरूपत्वोपपत्तेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

आदिवाक्योद्धार इत्यत्र 'स नित्यो निरवयवः पुण्ययुक्पापयुक्च' इति वाक्यस्याऽऽदिभागोद्धार इत्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृत इति** ॥ पूर्वाधिकरणेऽणुत्वेन सांशत्वेन च प्रकृत इत्यर्थः । तथा च यदि जीवोऽणुस्तर्हि योगिनो बहुरूपत्वायोग इति पूर्वपक्षोत्थानाद्वा तस्य च 'अविरोधश्चन्दनवत्' इत्युक्तार्थोपपादकतया सङ्गतौ स्थितायामिति सुधोक्तरीत्या अविरोधश्चन्दनवदित्युक्तं, सांशत्वमयुक्तं निरवयवत्वेन श्रुतत्वादित्याक्षेपाद्वाऽनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र जीवः किमेकरूपः किं वाऽनेकरूप इति चिन्ता । तदर्थं जीवस्य बहुरूपत्वश्रुतिः किं निरवयत्वश्रुत्यनुगृहीतया एकरूपत्वश्रुत्या बाधिता न वेति । तदर्थमेकरूपत्वश्रुतिः जीवस्यांशराहित्यपरत्वेन निरवकाशोत स्वरूपैक्यमात्रपरत्वेन सावकाशेति । तदर्थं भिन्नांशरहितस्य बहुरूपत्वं न घटत उत योगसामर्थ्यात् घटत इति । तदर्थं योगिनोऽघटितघटनाशक्तिमत्वे ईशेन गुणसाम्यमापद्यते न वेति । तदर्थं सा शक्तिः किं योगिनो स्वातन्त्र्येणोतेश्वरप्रसादेनेति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति ॥ **निरवयव इति श्रुतेरिति** ॥ अनेन पूर्वांशोदाहरणस्य युक्तिसूचकत्वेनापि प्रयोजनमुक्तं भवति । जीवस्य बहुरूपत्वशक्तावीशेन गुणसाम्यमिति न्यायविवरणं व्याचष्टे ॥ **तथा सतीति** ॥ 'एक एव सन्' इति, श्रुत्यनुसारेणाह– **तस्याः स्वरूपैक्यविषयत्वादिति** ॥ **योगिनामपि बहुरूपत्वशक्तेरिति** ॥ 'तं यथा यथेश्वरः प्रकुरुते' इति श्रुत्यंशव्याख्यानपरेणानेनेशशक्त्यैव बहुरूपत्वादेरिति न्यायविवरणमपि व्याख्यातं भवति ।

## भावदीपः

**जीवविषयेति** ॥ जीवस्य बहुरूपत्वैकरूपत्वविषयेत्यर्थः । भाष्ये स एकधेत्यादौ वाच्ये पुण्ययुगित्याद्युक्तिर्व्यर्थेत्यत आह ॥ **जीवत्वेति** ॥ स नित्यो निरवयव इत्यंशोक्तिस्तु निरवयवत्वरूपपूर्वपक्षयुक्तिसूचनायेति भावः । अन्यत्रापि बाहुरूप्येऽपीत्यर्थः । अणुत्वादेकरूप एवेति युक्तिमभिप्रेत्य तस्याप्रयोजकत्वनिरासाय विपक्षे हेतूच्छित्तिर्बाधिकेति भावेनाह ॥ **युज्यत इति** ॥

(भावदीपः)

अविरोधश्चन्दनवदित्यनेन गतत्वमाशङ्क्य तन्निरासाय भाष्यसूचितयुक्तिमाह ॥ **न चेति** ॥ निरवयवत्वाद्भिन्नावयवशून्यत्वादित्यर्थः । निरवयवत्वोपपादनाय नित्य इत्यंशस्याप्युक्तिरन्यथा प्रागुक्तदिशाऽनित्यत्वं स्यादिति भावः । तेषाम् अगस्त्यसौभरिकर्दमादीनाम् । उक्तशङ्कानिरासाय जीवस्य बहुरूपत्वशक्तावीशेन गुणसाम्यमित्यन्यत्रोक्तयुक्तिमाह ॥ **तथा सतीति** ॥ विष्टिगृहीतो नाकर्तुं शक्नोतीत्यकर्तुमित्युक्तम् ॥ **अत इति** ॥ यतोऽणुत्वं यतश्च निरवयवत्वं यतश्च योगाद्बाहुरूप्ये गुणसाम्यापातोऽत इत्यर्थः । साध्यमध्याहृत्य तत्र हेतुत्वेन एवमित्यादिभाष्यदिशा सूत्रार्थमाह ॥ **अस्त्येवेति** ॥ व्यतिरेकेण विभागेन अंश्यपेक्षयांशस्य पार्थक्येनेत्यर्थः । भाष्ये यथेत्यादिदृष्टान्तोक्तेरुपयोगमाह ॥ **न चेति** ॥ दर्शयतीत्युक्तश्रुतावेकीभवतीत्युक्तेरुपयोगमाह ॥ **न चेति** ॥ स एकधेति श्रुतीत्यर्थः । स्मृत्यनुरोधाच्छ्रुतावपि यथेत्यतः पूर्वं योगसम्पदेति शेषं मत्वा तदुपयोगमाह ॥ **न च भिन्नांशेति** ॥ यथा यथेत्यादेरुपयोगमाह ॥ **न चेश्वरेणेति** ॥ ईशशक्त्यैव बहुरूपत्वादेरित्यन्यत्रोक्त्यनुरोधेन यथा यथेत्यादिश्रौतपदतात्पर्यमाह ॥ **योगिनामपीति** ॥ अचिन्त्यपदकृत्यमाह ॥ **न चेश्वरस्यापीति** ॥ कृतं व्याख्यानं श्रुतिनिष्ठं करोति ॥ **अथेति श्रुतेरेवेतीति** ॥ **स्मृतिमिति** ॥ श्रुतौ योगसम्पदेत्यस्याभावात्स्मृत्युक्तिरिति भावः । तत् तस्मात् एकविध्यश्रुतेः स्वरूपैक्यपरत्वात् एवम् ईश्वरप्रसादोपचितयोगसामर्थ्यायत्तं बहुरूपत्वमित्युक्त-प्रकारेणेत्यर्थः ।

## अभिनवचन्द्रिका

**किमेकरूप इति** ॥ किमेकदा एकदेहावच्छिन्नः, अथवा तदैवाऽनेकदेहावच्छिन्न इति सन्देह इत्यर्थः ॥ **पूर्वपक्ष इति** ॥ यद्यपि भाष्यकृता सन्देहनिरासमात्रेण अधिकरणस्याऽर्थवत्त्वात् सन्देह एव प्रदर्शितो न पूर्वपक्षः, तथापिऽसन्देहनिरासवत् पूर्वपक्षनिरासोऽपि अधिकरणप्रयोजनमिति भाष्यकृदभिमतत्वात्पूर्वपक्षः प्रदर्शितः ॥ **तथा सतीति** ॥ समुद्रपानादिकर्तारो न योगिनः, रामकृष्णादिवत् परमेश्वररूपाण्येवेति भावः । एतेन अघटितघटनासामर्थ्यं न परमेश्वरेण गुणसाम्या-पादकं तादृशसामर्थ्यवत्स्वपि कुम्भोद्भवादिषु परमेश्वरसाम्याभावादिति परास्तम् । 'अत' इत्यस्य परिहरति' इत्यनेनाऽन्वयाऽयोगात् शेषं पूरयित्वा व्याचष्टे – **अतो विरोध इति** ॥ गन्धादौ दृष्टत्वादिति । यद्यपि गन्धो गुणो नांशः, तथापि गुणोऽपि यदा व्यतिरिच्यते किमु तदा अंशस्य अंशिव्यतिरेके वक्तव्यमिति भावेन गुणो दृष्टान्तत्वेनोपात्त इति ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु – जीवो नैकदाऽनेकशरीरावच्छिन्नः किन्तु एकेनैव । 'स एकधा न सप्तधा' इति श्रुतेः । न च अन्यत्राप्यस्ति श्रुतिरिति वाच्यम् । तस्या युक्तिविरुद्धत्वेनाऽप्रामाण्यात् । तथा हि अनेकशरीरावच्छिन्नत्वं हि द्वेधा भवेत् । जीवस्य विभुत्वेन वा, सांशत्वेन वा । नोभावपि पक्षौ सम्भवतः, अणुत्वे निरवयवत्वे च श्रुतिसद्भावात् । न च उभयाभावेऽपि योगिनामघटितघटकसामार्थ्यवत्त्वेन उपपन्नमनेकशरीरत्वम् । दृश्यते हि तेषां समुद्रपानादिकमिति वाच्यम् । तथात्वे जीवस्य ईश्वरेण गुणसाम्यप्रसङ्गात् । अतः सयुक्तिकैतच्छ्रुतिविरोधेन बहुरूपश्रुतेरप्रामाण्यात् न हरौ श्रुतिसमन्वयो युक्त इति ।

सिद्धान्तस्तु – न जीवस्यैकरूपत्वमेवेति नियमः, किं तर्हि योगाद्यापादितेश्वरानुग्रहेण केषांचित् युगपदनेकरूपत्वमपि । न च अंशिनं विहायांशस्य गमनानुपपत्तिः । दृश्यते खलु गुणस्यापि गन्धस्य धर्मिणं विहायान्यत्र गतिः, सति चैवं काऽनुपपत्तिः । द्रव्यस्यांऽशस्य अंशिनं विहाय अन्यत्र गमने । न च 'एकधेति श्रुतिविरोधः – तस्य स्वरूपैक्यविषयत्वात् । कुत एतत्सर्वमिति चेत्, अथैक एव सन् गन्धवत् व्यतिरिच्यते, 'अथैकीभवति' इति श्रुतेः । अत एव श्रुत्यविरोधेन जीवस्य बहुरूपत्वोपपत्तेः युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं सूचयन् विषयमाह **प्रकृत इति** ॥ अणुत्वेन, सांशत्वेन च **प्रकृत** इत्यर्थः ॥ तथा च यदि जीवोऽणुस्तर्हि योगिनो बहुरूपत्वायोग इति प्रधानसूत्रेण वा सांशत्वेऽपि निरवयवत्वश्रुतिविरोध इत्यविरोधश्चन्दनवदिति गुणसूत्रेण वा अनन्तरसङ्गतिरिति भावः ॥ **किमेकरूप इति** ॥ जीवः किमेकरूपः किं वाऽनेकरूप इति चिन्ता । तदर्थं जीवस्य बहुरूपत्वश्रुतिः किं निरवयत्वश्रुत्यनुगृहीतया एकरूपत्वश्रुत्या बाधिता न वेति ॥ तदर्थमेक-रूपत्वश्रुतिर्जीवस्यांशराहित्यपरत्वेन सावकाशा उत स्वरूपैक्यमात्रपरत्वेन सावकाशेति ॥ तदर्थं भिन्नांशरहितस्य बहुरूपत्वं न घटते ॥ **उत योगसामर्थ्याद्घटत इति** ॥ तदर्थं योगिनोऽघटित-घटनाशक्तिमत्वे किमीशेन गुणसाम्यमापद्यते न वेति ॥ **आदिवाक्येति** ॥ स एकधेत्यतःपूर्ववाक्य-स्येत्यर्थः ॥ **उपलक्षणमेतत्** ॥ द्वितीये श्रुतौ स विमुच्यत इत्यन्तस्य चेति ग्राह्यम् ॥ **सयुक्ति-कत्वादिति** ॥ अणुत्वसाधकोत्क्रान्त्यादियुक्तियुक्तत्वादित्यर्थः । अत एव इमं लोकममुं चावर्तत

(वाक्यार्थमुक्तावली)
इत्यंशोदाहरणमिति भावः । नन्वनया श्रुत्याऽणुत्वलाभेऽपि कुतः श्रुत्यन्तरविरोधिताऽनेक-रूपत्वाभाव इत्यत आह । **युज्यत इति** ॥ अविरोधश्चन्दनवत्' इत्यणोरप्यंशबाहुल्यस्योक्तत्वात् बहुरूपत्वं सम्भवतीत्याशंक्य तत्प्रतिक्षिपति ॥ **न च वक्तव्यमिति** ॥ **निरवयव इति श्रुतेरिति** ॥ अनेन पूर्वांशोदाहरणस्यैतद्युक्तिसूचकत्वेनाप्युपयोग इत्युक्तं भवति । योगसम्पदा इत्येतद्व्यावर्त्यमाह ॥ **न चैवमिति** ॥ अचिन्त्ययेशशक्त्येत्यत्र वक्ष्यमाणेशशक्तिरित्युक्तसिद्धान्तन्यायव्यावर्त्यं गुणसाम्यमित्युक्तपूर्वपक्षन्यायमाह ॥ **तथा सतीति** ॥ कृत्स्नप्रसक्तिसूत्रे ईश्वरशक्त्या जीवस्य कार्येषु सामर्थ्यैकदेशेन प्रवृत्तेरुक्तत्वादिहेश्वरशक्त्या द्रव्यतो निरंशस्यांशव्यतिरेकोक्तेर्न गतार्थता । सूत्रे अणोरपि, ज्ञस्य, स्वात्मनेति, पदत्रयमनुवर्तते । ततश्चाणोरपि ज्ञस्येश्वरशक्त्या गन्धवत्पुष्प-गतादंशिनो गन्धांशानामिव व्यतिरेको विश्लेषोभवति । कुतः तथा दर्शयति श्रुतिः स्मृतिश्च तथा वक्तीति सूत्रार्थः । स्वात्मनेत्यस्याननुवृत्तौ प्रतिज्ञाप्रमाणयोरेकार्थत्वाभावप्रसङ्गः । उक्तं च सुधायां सूत्रोपात्ताभ्यां श्रुतिस्मृतिभ्यां यस्मादेवमभिधीयते । प्रतिज्ञाप्रमाणयोरप्येकार्थताया आवश्यकत्वादिति ॥ **गन्धादाविति** ॥ पुष्पस्थादंशिगन्धादंशानां पृथक्त्वनिदर्शनादित्यर्थः ॥ **न च श्रुतीति** ॥ 'स एकधा' इत्यादि श्रुतिरित्यर्थः । एक एव सन्निति श्रुत्यनुसारेणाह ॥ **स्वरूपैक्येति** ॥ गन्धवैषम्यं शङ्कते ॥ **न च भिन्नेति** ॥ गन्धेंशांशिनोर्भेदाभेदात् । भेदस्य सत्वाद्व्यतिरेको युज्यते । चेतनस्य त्वत्यन्ताभेदाद्व्यतिरेको न युज्यत इति भावः । सूत्रे दृष्टान्तोपादानन्तु भेदहीनस्यापि व्यतिरेक-सम्भावकतया भेदमात्रेणेति ध्येयम् ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृत इति** ॥ पूर्वाधिकरणेऽणुत्वेन सांशत्वेन च प्रकृत इत्यर्थः । तथा च यदि जीवोऽणुस्तर्हि बहुरूपत्वायोग इति पूर्वपक्षोत्थानाद्वा, अविरोधश्चन्दनवत् इत्युक्तं सांशत्वस्मृत्युक्तं निरवयवत्वेन श्रुतत्वाद्वानन्तरसङ्गतिरिति भावः । ननु स नित्यो निरवयव इत्येवोदाहर्तव्यम् । प्रकृतोपयोगात् । 'पुण्ययुक्' इत्यादि तु कथमुदाहृतमित्यत आह ॥ **सयुक्ति-कत्वादिति** ॥ बाहुरूप्यासम्भवरूपयुक्तियुक्तत्वात् इत्यर्थः । नन्वात्मनो विभुत्वेन योगप्रभावेन शरीरबहुतया बाहुरूप्यं भविष्यतीत्यत आह ॥ **युज्यते खल्विति** ॥ **तच्च निपिद्धमिति** ॥ अतीताधिकरण इत्यर्थः । अणुत्वेऽप्यंशबाहुल्यात् बाहुरूप्यं इत्याशङ्क्य निषेधति ॥ **न च**

(तत्त्वसुबोधिनी)

**वक्तव्यमिति** ॥ निरवयवत्वं प्रसिद्धमित्यत आह ॥ **स नित्य इति** ॥ अघटितघटकशक्तिमत्त्वं प्रत्यक्षसिद्धमित्याह ॥ **दृश्यते हीति** ॥ ननु जीवस्यैश्वर्याभावात्तेन कथं गुणसाम्यमित्यत आह ॥ **एतदेवेति** ॥ एक एव सन्निति श्रुत्यनुसारेणाह ॥ **तस्या इति** ॥ **अनुपपत्तिरिति** ॥ अंशिनं विहायान्यत्रागमनानुपपत्तिरित्यर्थः । अत्र सूत्रे गन्धवच्छब्देनात्यन्तभेदहीनस्यापि व्यतिरेकं सम्भावको दृष्टान्त उक्तः । दर्शयति च शब्दाभ्यां अत्यन्तभिन्नस्यापि व्यतिरेके श्रुतिस्मृती प्रमाणीकृते । तत्सम्भावक योगसामर्थ्ययोगिनस्तादृशसामर्थ्यदातृत्वरूपमीश्वरसामर्थ्यं च ताभ्यामेवोक्तमिति न सूत्रे पृथगुक्तम् । प्रमिते चानन्यगतिके चाविरोध ईश्वरशक्त्येति नातिप्रसङ्गः ।

## वाक्यार्थविवरणम्

'स एकधा' इत्यादेरेव प्रकृतोपयोगात् 'स नित्य' इत्यादिभागोदाहरणं व्यर्थमत आह ॥ **जीवत्वेति** ॥ 'स एकधा' इत्यस्य जीवपरत्वज्ञापनायेत्यर्थः । तत्र पुण्यपापयुक्तत्वरूपजीवलिङ्गोक्तेरिति भावः ॥ **सयुक्तिकत्वादिति** ॥ युक्तिश्चेशेन गुणसाम्यरूपा वक्ष्यमाणा द्रष्टव्या । नन्वेकरूप एवेति न युक्तम् । ऐकरूप्यश्रुतेर्जीवस्यैकरूपत्वमस्तु । अनेकरूपत्वमप्यस्तु बहुरूपत्वश्रुतेः । न चासम्भवः । योगिनां योगप्रभावेण गृहीतशरीराणां बहुरूपतया बहुरूपत्वोपपत्तेरतो न विरोध इति चेत्तत्राह ॥ **युज्यत इति** ॥ यद्यात्मा विभुः स्यात् तदैव तस्य योगप्रभावेण गृहीतानां शरीराणां बहुत्वेन युगपत्तेषु प्रवेशसम्भवेन बाहुरूप्यं युज्येत । एवं चानेकरूपत्वप्रतिपादिका श्रुतिस्तद्विषयिणी स्यात् । न चैवं, विभुत्वस्य निषिद्धत्वात् । अणुत्वस्यैव समर्थितत्वात् । अणोश्चात्मनो योगप्रभावेण युगपच्छरीरबाहुल्यं सम्भवेऽपि युगपत्तत्र प्रवेशासम्भवादित्यर्थः ॥ **उपपन्नमिति** ॥ अणुत्वेऽपीति शेषः । अघटितघटकसामर्थ्यवत्त्वमेव कुत इत्यत आह ॥ **दृश्यते हीति** ॥ तेषाम् ॥ अगस्त्यादीनाम् । आदिपदेन पुनर्विसर्जनं ग्राह्यम् । नन्वेतादृशसामर्थ्यवत्त्वमात्रेण कुत ईश्वरेण गुणसाम्यमित्यत आह ॥ **एतदेवेति** ॥ **श्रुतेः** ॥ स एकधेति श्रुतेः ।

ननु विभुत्व एव योगप्रभावेण तत्सम्भवो नाणुत्व इत्युक्तमिति चेत्तत्राह । अणुत्व इति अंशव्यतिरेकेण । अंशिनः सकाशात् पृथग्गमनेनेत्यर्थः ॥ **श्रुतिः** ॥ ऐकरूप्यश्रुतिः ॥ **अनुपपत्तिरिति** ॥ भिन्नांशवत्त्वे हि तेषामंशानामंशिनं विहायान्यत्र गमनमनुपपन्नं स्यात् न ह्येवम् । तस्य

(वाक्यार्थविवरणम्)

भिन्नांशरूपशून्यत्वेनांशानामंशिनाऽत्यन्ताभिन्नतयांऽशिनं विहायान्यत्र गमनमनुपपन्नमित्यर्थः ॥ **योगेति** ॥ स्वीययोगसामर्थ्येनेत्यर्थः । योगो नाम 'ईश्वरे मनःप्रणिधानम्' ॥ **साम्यापात इति** ॥ जीवरूपबहुरूपत्व इति शेषः । बहुरूपत्वस्य स्वेच्छाधीनत्वे हि ईशेन गुणसाम्यापातः । न चैवं, किन्त्वित्यत आह ॥ **योगिनामपीति** ॥ **एतदिति** ॥ योगिनां बहुरूपत्वशक्तिनियामकत्वम् । भाष्ये अवयववर्जित इत्यस्य भिन्नांशेनाभिन्नांशेन च वर्जितो योगीश्वर इत्यर्थः ॥ **आत्मानम्** ॥ स्वात्मानम् ॥ **जीवस्येति** ॥ योगिजीवस्येत्यर्थः ॥ **बहुरूपत्वेति** ॥ ईशसामर्थ्येन स्वरूपणैव वहुरूपत्वोपपत्तेरित्यर्थः । यथोक्तं 'अच्छेद्यस्यापि जीवस्य' इत्यादि अनुव्याख्यानं । उक्तं च सुधायां 'अत्र योगिनां स्वरूपेणैवानेकरूपत्वं प्रतिपाद्यत' इति ।

## वाक्यार्थमञ्जरी

**जीवत्वेति** ॥ एकधेत्युक्तस्येति शेषः । तत् विभुत्वं तेषाम् अगस्त्यादीनां कथमित्यतोऽ-घटितघटनमेवैश्वर्यशब्दार्थमित्याह ॥ **एतदेवेति** ॥ अशक्यं कर्तुम् अनिष्टमकर्तुम् एकप्रकारोपेनस्य प्रकारान्तरोपेततया कर्तुं सामर्थ्यमित्यर्थः । अत इत्यस्य परिहरतीत्यनेनान्वयायोगादाह ॥ **अतो विरोध इति** ॥ **ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ** ॥ अणोरपि जीवस्यांशैर्व्यतिरेकः विभागोऽस्ति कथं गन्धवत् । यथा पुष्पाद्गन्धस्य विभागस्तद्वत् कुतः तथा तेन रूपेण अथैक एवेति श्रुतिर्दर्शयति यत इत्यर्थः । **स्वरूपैक्यविषयत्वादिति** ॥ 'एक एव सन्' इत्युक्तेरिति भावः ।

॥ इति व्यतिरेकाधिकरणम् ॥

## १४. अथ पृथगुपदेशाधिकरणम्

### सूत्रभाष्यम्

'तत्त्वमसि, (छां.उ.६-८-७) 'अहं ब्रह्मास्मि' (बृ.उ.६-४-१०) इत्यादिषु जीवस्य परेणाभेदः प्रतीयते । 'नित्यो नित्यानां चेतनश्चेतनानाम्' (श्वे.उ.६-१३) 'द्वा सुपर्णा' (श्वे.उ.४-६) इत्यादिषु भेदः । अत उच्यते –

**॥ ॐ पृथगुपदेशात् ॐ ॥ २८ ॥**

'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः ।
यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्' ॥

इति सोपपत्तिककौशिकश्रुतेर्भिन्न एव ज़ीवः ।

### तत्त्वप्रदीपिका

अथेदमालोच्यते– किमयं जीवः परेणाभिन्नः किं वा भिन्न इति । केषाञ्चिन्मन्दमतीनां 'स आत्मा तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि श्रुतियाथातथ्यापरिज्ञानादभिन्नः प्रतीयते 'द्वा सुपर्णा' इत्यादीनां व्यावहारिकभेदानुवादित्वमाचक्षाणानाम् । अत्राभिधत्ते **पृथगुपदेशात्** । अचिन्त्यः स्वरूपतः शक्तितश्च । परमो निर्दोषत्वेन । पूर्णो गुणैः । प्रमेयत्वाप्रमेयत्वे सर्वशक्तित्वाल्पशक्तित्वे परत्वावरत्वे पूर्णत्वापूर्णत्वे नित्यमुक्तत्वबद्धत्वे स्वातन्त्र्यपारतन्त्र्ये जीवानामन्योन्यभेदश्चेत्युपपत्तयः श्रुत्युपदर्शिताः । तत्प्रसादादेव मोक्षवचनान्मोक्षेऽपि पारतन्त्र्यमवसीयते । अन्यथा मोक्षमेव न प्रदद्यात् । न हि स्वतन्त्र ईश्वरः स्वतन्त्रान्तरमापादयितुमीहते । तत्सद्भावे स्वातन्त्र्यस्यैवापाय-प्रसङ्गात्प्रातिकूल्यानुकूल्ययोः । न हि सर्वस्वातन्त्र्यमपहातुमिच्छा कस्यचिद्भवति । अतो मुक्तावपि परतन्त्रत्वाद्भिन्न एव जीवः परमेश्वरात्सर्वदेत्यभिप्रायः । यदि चायं 'अहं ब्रह्मास्मि' इत्यादिरभेदोपदेशः किमयमहं शब्दोऽनात्मविषयः, किं वेतरेतराध्यासवद्विषयः, आहोस्वित् चैतन्यमात्रविषयः । न तावदादिमः । अनात्मनो ब्रह्मतोपदेशस्य निष्फलत्वात् । ब्रह्मणोऽ-नात्मत्वप्रसङ्गाच्च । न च स्थाणुः पुरुष इतिवन्निषेधाभिप्रायेणेयमुक्तिरिति वाच्यम् । तथा व्यपदेशादृष्टेः । नापि मध्यमः । उक्तदोषादेव । इदमनिदं रूपवस्त्वात्मकेऽहम्प्रत्ययगोचर इदं रूपं

(तत्त्वप्रदीपिका)
निरस्यानिदंरूपैक्यं विधीयते इति चेन्नैवम् । जहदजहल्लक्षणाया निरस्तत्वात् । न चान्तिमः । सिद्धसाधनत्वात् ।

## तत्त्वप्रकाशिका

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवस्य परमात्माभिन्नत्वादिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणे ब्रह्मणि श्रुतीनां समन्वयो निरूपितः । स चाद्वैतश्रुत्या भेदश्रुतेर्विरोधेऽनुपपन्नः स्यादित्यवश्यमसौ निरसनीयः । प्रकृतजीव एवात्र विषयः । किं परब्रह्मणा भिन्न उताभिन्न इति संशयः । संशयबीजं श्रुतिविवादं दर्शयति ॥ **तत्त्वमसीति ॥** परमात्माभिन्न एव जीव इति पूर्वः पक्षः । 'तत्त्वमसि' इत्यादिश्रुतेः । न च विपर्ययेऽप्यस्ति श्रुतिरिति वाच्यम् । अद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गयुक्ताया बलवत्त्वात् । 'एकमेवाद्वितीयम्' इत्युपक्रमात् । तत्त्वमसि इत्युपसंहारात् । 'तत्त्वमसि' 'तत्त्वमसि' इति नवकृत्वोऽभ्यासात् । अद्वैतस्य प्रमाणान्तराप्राप्तत्वेनापूर्वत्वात् । 'तस्य तावदेव चिरम्' इति फलश्रवणात् । 'येनाऽश्रुतं श्रुतं भवति' इत्याद्यर्थवादात् । मृत्पिण्डादिदृष्टान्तेनोपपादनात् । एवं श्रुतेरद्वैत एव तात्पर्यावगमात् । तद्विरुद्धभेदश्रुतेरतत्त्वावेदकत्वमेवेति न परमात्मनि परमार्थतः श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** पृथगेव जीवः परमात्मनः 'भिन्नोऽचिन्त्यः' इति श्रुतेः । न चास्ति विपर्ययेऽपि श्रुतिरिति वाच्यम् । विरुद्धधर्माधिकरणत्वयुक्तियुक्तत्वेन भेदश्रुतेः प्राबल्यादिति भावः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृत इति ॥** योगाराधितेश्वराचिन्त्यशक्त्या यत्र बहुरूपत्वशक्तिमत्त्वेन प्रकृत इत्यर्थः । तथा च न पूर्वाधिकरणोक्तं जीवशक्तेरीशायत्तत्वं युक्तम् । तयोरभेदादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । यद्वा सुधोक्तरीत्या 'अथातो ब्रह्मजिज्ञासा' इत्यादिभिः 'व्यतिरेको गन्धवत्' इत्यन्तैः प्रतिपादितो भेद अभ्यधिकाशङ्कया आक्षिप्य विशेषयुक्तिभिः सर्वशङ्कोद्धारेण समर्थ्यत इत्यनन्तरसङ्गतिरिति ज्ञातव्यम् ॥ **किमिति ॥** अत्र जीवः परमात्मना न भिद्यते उत भिद्यत इति चिन्ता । तदर्थं भेदश्रुतिरभेदश्रुतिबाधिता उताभेदश्रुतिर्भेदश्रुतिबाधितेति । तदर्थमभेदश्रुतिरद्वैते षड्विधतात्पर्यलिङ्गोपेतत्वेन प्रबलोत भेदश्रुतिर्विरुद्धधर्माधिकरणत्वादियुक्त्युपेतत्वेन प्रबलेति । तदर्थं भेदश्रुतेः प्राबल्याङ्गीकारेऽभेदश्रुतेरप्रामाण्यं

(भावबोधः)

प्राप्नोत्युत सादृश्याभेदप्रतिपादकत्वेन सावकाशतया न प्राप्नोतीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । तत्त्वमसीत्यादिश्रुतेरित्यनेन जीवेश्वरैक्यमिति न्यायविवरणांशोऽपि व्याख्यातः ॥ **विरुद्धेति** ॥ देशकालादिव्यवस्थापकाभावे सतीत्यपि विशेषणीयम् । अभेदस्य सर्वाभिमतमानविरोधं वदतानेन सर्वमानविरोधादिति न्यायविवरणमप्युक्ततात्पर्यकं भवति ।

## भावदीपः

**प्रकृत इति** ॥ ज्ञोऽत इत्यत इत्यर्थः । भाष्ये इत्यादिषु इति बहुवचनप्रयोगेऽपि श्रुत्या जीवेश्वरैक्यमित्यन्यत्रोक्त्यनुरोधेनाभेदप्राप्तौ श्रुतित्वमेव प्रयोजकं न तु बहुत्वमपीत्युपेत्य भाष्योक्तश्रुतिमाह ॥ **तत्वमसीत्यादिश्रुतेरिति** ॥ परमते प्रसिद्धत्वेन न्यायविवरणेऽनुक्तान्यपि श्रुतिप्राबल्याय स्वयमाह ॥ **षड्विधेति** ॥ यद्वा श्रुतिभिश्चानुमाबलादित्यनुभाष्येऽनुमापदेन तात्पर्यलिङ्गान्यभिप्रेतानीति मत्वा षड्विधेत्युक्तिः श्रुतिभिरित्यादिबहुवचनं तु द्वैतश्रुतेर्बहुत्वेन प्राबल्यमिति शङ्कायामद्वैतश्रुतेरपि तदस्तीति सूचयितुमिति भावः ॥ **अप्राप्तत्वेनेति** ॥ 'देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यतेऽत्मन' इत्यत्र तत्त्वनिर्णयटीकायां तल्लक्षणाभिमान एव तदैक्याभिमान इत्युक्तावपि स्पष्टं ब्रह्मतादात्म्याप्रतीतेरेवमुक्तम् । यद्वा पराभिमानेनैवमुक्तिरित्यविरोधः ॥ **तस्येति** ॥ 'यावन्न विमोक्ष्येऽथ सम्पत्स्यत' इति वाक्यशेषे तस्य ज्ञानिनस्तावानेव विलम्बः । 'यावत्प्रारब्धमोचनम्' इत्युक्त्वा 'अथ प्रारब्धमोक्षानन्तरमेव सम्पत्स्यत' इति ब्रह्मप्राप्तिरूपफलश्रवणादित्यर्थः ॥ **येनेति** ॥ 'येनाश्रुतं श्रुतं भवत्यमतं मतम्' इति वाक्ये येन ब्रह्मणा श्रुतेन मतेन विज्ञातेनान्यदप्यश्रुतममतमविज्ञातमपि जगत् श्रुतं मतं विज्ञातं भवतीत्यद्वैतबुध्या ब्रह्मज्ञानस्य स्तवनादित्यर्थः । उपपत्तिं चाह ॥ **मृत्पिण्डेति** ॥ 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इति वाक्ये ब्रह्मज्ञानेनान्यज्ञानं कथमिति शङ्कायां यथा मृत्पिण्डज्ञानेन मृण्मयज्ञानं भवति तयोरभेदात् । एवं ब्रह्मजगतोरभेदाद् ब्रह्मज्ञानेनान्यज्ञानं युक्तमित्युपपादनादुपपत्तिमत्त्वादित्यर्थः । नन्वतत्वावेदकत्वेऽपि तादृक् श्रुतिसमन्वयः सिध्यत्येवेत्यत आह ॥ **परमार्थत इति** ॥ तादृश एव प्रागुक्त इति भावः । भिन्न एवेत्यस्य व्याख्येयं सौत्रपदं दर्शयन्भाष्यं व्याचष्टे ॥ **पृथगेवेति** ॥ सूत्रे अनुवृत्तज्ञपदस्यार्थो जीव इति । स्वात्मपदानुवृत्तिं मत्वाऽऽह ॥ **परमात्मन इति** ॥ सोपपत्तिकेत्युक्तेरुपयोगं वक्ति ॥ **न चेति** ॥ उपपत्तेरेकत्वेऽपि निरवकाशत्वात्परकीयोपक्रमादेर्बहुत्वेऽपि सावकाशत्वाद्भेदश्रुतिरेव प्रबलेति । अत्रापि मानबाहुल्यस्याग्रे व्यक्तत्वाच्चेति भावः ।

## अभिनवचन्द्रिका

**तत्त्वमसीत्यादिश्रुतेरिति ॥** ननु अनेन वाक्येन श्वेतकेतोरेव ब्रह्माऽभेदः सिध्येत् न सर्वजीवानां 'त्वमसी' त्यभिधानात् । न च तावता जीवब्रह्माऽभेदः सिद्ध्यति । श्वेतकेतो रामकृष्णादिवत् ब्रह्मावतारत्वेनाप्युपपत्तेः । न च श्वेतकेतुमुपलक्षणीकृत्य सर्वजीवानामभेदो बोध्यत इति वाच्यम् । ज्ञापकाभावात् । अन्यथा –

> तस्मान्नन्दाऽऽत्मनोऽयं ते नारायणसमो गुणैः ।
> श्रिया कीर्त्याऽनुभावेन गोपायस्व समाहितः ॥

इति वाक्यं नन्दपुत्रमुपलक्षणीकृत्य सर्वपुत्राणां गुणैर्नारायणसमत्वं वक्तीति स्यात् । अत एव – अस्य वाक्यस्य प्राबल्योपपादनाय षड्विधतात्पर्यलिङ्गव्युत्पादनमप्युक्तम् । अनेन वाक्येन जीवैक्यप्राप्तौ तात्पर्याभावशङ्कायामेवाऽस्य वक्तव्यत्वादिति चेत्, सत्यम् । अनेन वाक्येन न सर्वजीवानां ब्रह्माभेदः सिद्ध्यतीति, तथापि श्वेतकेतोर्ब्रह्माऽभेदसिध्या जीवब्रह्माभेदस्तु सिध्यत्येव । श्वेतकेतोर्जीवत्वात् । न च श्वेतकेतो रामकृष्णादिवद्भगवदंशत्वं शक्यते वक्तुम् । 'न वै सोम्याऽस्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति, इत्यादिवाक्यपर्यालोचनया तस्य जीवत्वावगमात् । सिद्धे च जीवस्यापि श्वेतकेतोर्ब्रह्माभेदेऽविशेषात् सर्वजीवानामपि तत्सिध्येत् । एवं च जीवाभेदसिद्धये तत्त्वमस्यादिवाक्योदाहरणं, तत्प्राबल्यसिद्धये उपक्रमाद्यानुगुण्यव्युत्पादनमपि नाऽयुक्तमिति । **षड्विधतात्पर्यलिङ्गयुक्ताया इति ॥** अत्रोपपत्तियुक्ताया इत्यपि ग्राह्यम् । उपक्रमादिवत् उत्तरत्रोपपत्तेरप्युपपादनात् ॥ **उपक्रमादिति ॥** 'तात्पर्यलिङ्गोपेता चेयमद्वैतश्रुतिषः' इत्यध्याहृतसाध्येन सर्वेषां पञ्चम्यन्तानां सम्बन्धः ॥ **विरुद्धधर्माधिकरणत्वेति ॥** अत्र धर्माणां विरुद्धत्वं भावाभावरूपत्वं न तु सहानवस्थितत्वमिति बोध्यम् । एतेन – जीवब्रह्मणोर्भेदसिद्धौ धर्मयोः सहानवस्थितत्वरूपविरोधसिद्धिः । तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इति परास्तम् । संयोगतदभावाधिकरणस्यापि वृक्षस्य भेदाभावात् कथं तेन भेदसिद्धिरिति चेत्, न तत्रापि अवच्छेदकभेदसद्भावात् । तथापि धर्मिभेदे किमायातमिति चेत्, उच्यते । विरुद्धधर्माधिकरणत्वं भेदेन विना अनुपपद्यमानमुत्सर्गतो धर्मिभेदं गमयति । तस्यानुपपत्तौ कालभेदम्, तस्याप्यनुपपत्तौ अवच्छेदकभेदम् । तस्याप्यनुपपत्तौ सम्बन्धभेदं गमयति । प्रकृते च बाधकाभावात् धर्मिभेद एव सिध्येत् ।

## वाक्यार्थमुक्तावली

न जीवशक्तेरीशायत्तत्वं तयोरभेदादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **किमिति** ॥ अत्र जीवः परमात्मनाऽभिन्नः उत भिन्न इति चिन्ता । तदर्थमभेदश्रुतिरद्वैते षड्विधतात्पर्यलिङ्गोपेतत्वेन प्रबला, उत भेदश्रुतिविरुद्धधर्माधिकरणत्वादियुक्त्युपेतत्वेन प्रबलेति । तदर्थं भेदश्रुतिप्राबल्याङ्गीकारे भेदश्रुतेरप्रामाण्यमुत सादृश्याभेदप्रतिपादकत्वेन सावकाशतेति । श्रुतिरित्युक्तपूर्वपक्षन्यायमाह ॥ **तत्वमसीति** ॥ ननु 'अथातो ब्रह्मजिज्ञास' इत्यादि व्यतिरेको गन्धवत्' इत्यन्तैः सूत्रैर्जीव-परमात्मभेदस्य श्रुत्यादिप्रमाणबलेनोपपादितत्वात्तत्वमस्यादि श्रुतिशतेनापि नाभेदप्रतिपत्ति-रुत्पत्तुमलम् । किन्तु गौणार्था एव श्रुतय इति निश्चयो भवेदतः प्रापकाभावान्नेदमधिकरण-मारम्भणीयमित्याशङ्क्य परिहरति **न चेति** ॥ कुतो न वाच्यमित्यतोऽभ्यधिकाशंकामाह **अद्वैत-श्रुतेरित्यादिना** ॥ **तस्य तावदेवेति** ॥ 'तस्य तावदेव चिरं यावन्न विमोक्षेऽत इत्यद्वैतज्ञानिनो यावच्छरीरादारब्धकर्मणा वा न विमोक्ष्येत तावदेव विलम्बो मोक्षाय' इति वेदोद्देश्यफलस्याद्वैत-ज्ञानात् साध्यताश्रवणादित्यर्थः । येनाश्रुतमिति वचनस्य येन ब्रह्मणाश्रुतं जगच्छ्रुतं भवतीत्यर्थः । तत्कथमत्राद्वैतं श्रूयत इति चेन्न । ऐक्यमहिम्ना श्रुतस्य श्रवणोक्त्या अद्वैतस्तुतिपर्यवसानात् ॥ **तद्विरुद्धेति** ॥ प्रबलाभेदश्रुतिविरुद्धायाः प्राचीनसूत्रनिचयोपात्ताया मिथ्याभूतभेदप्रतिपादकत्वेन अतत्वावेदकत्वमेवेत्यर्थः । न च 'अस्मिन्नस्य तद्योगं शास्ति' इति मुक्तावपि भेदोक्तिर्बाधिका । तस्यावान्तरमुक्तिविषयत्वोपपत्तेरिति भावः । सूत्रे ज्ञः स्वात्मेत्यनुवृत्तिं मत्वा प्रवृत्तभाष्यार्थमाह ॥ **पृथगेवेति** ॥ सोपपत्तिकेत्यंशव्यावर्त्यमाह न चास्तीति । जीवानुवादेन ब्रह्माभेदपरस्य 'तत्वमसि' अहं ब्रह्मास्मि' इत्यादिवाक्यस्य सत्प्रतिपक्षतया भिन्न एव जीवः परमात्मनेति भाष्ये उक्तत्वेऽपि ब्रह्मानुवादेन जीवाभेदपरस्य भाष्ये इत्यादिष्वित्यादिशब्दोपात्तस्य 'तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यादिवाक्यस्य सत्प्रतिपक्षतया, 'भिन्नोऽचिन्त्यः परमो जीवसङ्घा'दिति श्रुत्यनु-सारेण ज्ञान् प्रति स्वात्मा पृथगिति च प्रतिज्ञा द्रष्टव्या । अत एवानुव्याख्याने, एवं स्थितेऽपि जीवैक्यं केचिदाहुः परात्मना । तद्योऽहमिति पूर्वाभिः श्रुतिभिश्चानुमाबलात् । न तद्युक्तं यतो विष्णुः पृथगेवाभिधीयते । इत्युक्तं ज्ञेयम् ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिरिति सूचयन् विषयमाह ॥ **प्रकृत इति** ॥ योगसाधितेश्वरायत्त बहुरूपत्व-शक्तिमत्वेन प्रकृत इत्यर्थः । तथा च न पूर्वाधिकरणोक्तं जीवशक्तेरीशायत्तत्वं युक्तम् । तयोरभेदात् इति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **विपर्ययेऽपीति** ॥ भेदेऽपीत्यर्थः । कानि तात्पर्यलिङ्गानीत्यतस्तान्याह ॥ **एकमेवेत्यादिना** ॥

## वाक्यार्थविवरणम्

उपक्रमादीनामुपपत्तिविशेषत्वमभिप्रेत्य षड्विधेत्युक्तम् । कुरुपाण्डवन्यायेन सामान्यविशेष-भावमभिप्रेत्य मृत्पिण्डादीत्यनेनोपपत्तिरुक्तेति ज्ञातव्यम् । भाष्ये 'नित्यो नित्यानाम्' इत्यादौ अतिशयितनित्यत्वातिशयितचेतनत्वोक्त्या भेदः प्राप्त इति ध्येयम् ।

## वाक्यार्थमञ्जरी

**षड्विधेति** ॥ उपपत्तिविशेषाणां षड्विधत्वादियमुक्तिः अत एव मृत्पिण्डादि दृष्टान्तैरुप-पादनादित्यनेनोपपत्तिकथनं नानुपपन्नम् ॥ **तस्य तावदेवेति** ॥ तस्यापरोक्षज्ञानिनो मोक्षे तावानेव विलम्बः यावत्प्रारब्धान्न विमोक्षेत अथ प्रारब्धक्षयानन्तरमेव ब्रह्म सम्पद्यत इत्यर्थः । येन ब्रह्मणा श्रुतेन ॥ **मृत्पिण्डादीतिं** ॥ 'यथा सौम्यैकेन मृत्पिण्डेन' इत्यादिनेति शेषः । यथा घटादीनां मृदात्मकत्वेन तज्ज्ञाने ज्ञातमेवं सर्वजगतो ब्रह्मात्मकत्वेन तज्ज्ञाने तज्ज्ञानमिति पराभिमतोऽर्थः । अतत्त्वावेदकत्वं मिथ्यावेदनपरत्वम् ॥ **ॐ पृथगुपदेशात् ॐ** ॥ जीवो ब्रह्मणः सकाशात् पृथक् भिन्न एव कुतः उपदेशात् भिन्नो जीव इति श्रुतेरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २९ ॥**

**ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूपमतोऽभेदव्यपदेशः । यथा सर्वगुणात्मकत्वा-त्सर्वात्मकत्वं ब्रह्मण उच्यते 'सर्वं खल्विदं ब्रह्म' (छा.उ.३-१४-१) इति । भविष्यत्पर्वणि च–**

(सूत्रभाष्यम्)

'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः ।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' ॥ इति ।

॥ इति पृथगुपदेशाधिकरणम् ॥

## तत्त्वप्रदीपिका

अभेदव्यपदेशस्य गतिं सदृष्टान्तमाचष्टे । **'तद्गुणसारत्वात्'** इत्यादि सूत्रम् । ब्रह्मगुणसदृशा गुणाः ब्रह्मगुणा उच्यन्ते । ज्ञानं गुणः सर्वचेतनानाम् । विशिष्टानामानन्दादयश्च । सारः स्वरूपं मुक्तौ यदवशिष्यते । अत एवान्येभ्योऽधिकसादृश्यात्सम्यग्ज्ञानिनां विशेषतस्तत्सादृश्यव्यपदेशः 'निरञ्जनः परमं साम्यमुपैति' इत्यादिकः । 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इति च सादृश्यमेव विवक्षितम् । 'सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्' इतिवत् । न हि ब्राह्मण-पूजकः स एव ब्राह्मणो भवतीत्युक्तं हि भगवत्पादैरेवान्यत्र । यः परमं ब्रह्म वेद स बृंहित एव भवति, न तु तत्परमं ब्रह्म भवतीति ह्यर्थोऽवगम्यते । अन्यथा 'परात्परं पुरुषमुपैति दिव्यमि'ति पूर्ववाक्य-विरोधाच्च । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इत्यादि श्रुतिभिश्च मुक्तौ भेदो निर्विगानमभिगीयते । यथा सर्वजगद्गतगुणा ब्रह्मणि विद्यन्त इति 'सर्वं खल्विदं ब्रह्म' इत्युच्यते । न पुनः सर्वस्य ब्रह्मत्वेन । न हि जडस्य प्राज्ञाभेदं कश्चिद्विपश्चिन्मन्यते, एवमत्रापि । न चात्र पुनरुक्तिः । अन्यत्रानुषङ्गिकत्वाद्भेदसाधनस्य । तासु तासु श्रुतिषु जीवे तदैक्येन समन्वयसन्देहापोहाय प्रदर्शनीयत्वेन तत्तद्गतभेदवाक्यानां तात्पर्यार्थत्वाच्च पुनः पृथग्विचारस्य । भेदे हि तात्पर्यं मोक्षशास्त्रस्यावगम्यते सूत्रगत्या श्रुतिगत्या च । तथा च परमोपनिषदि–

'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा नद्यस्समुद्राश्च शुद्धोदलवणे यथा ॥
यथा चोरापहार्यौ च यथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥
तथाऽपि सूक्ष्मरूपत्वान्न जीवात्परमो हरिः ।
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ।
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथा' ॥ इति ।

(तत्त्वप्रदीपिका)

न च वाच्यम् 'उत्क्रान्तिगत्यागतीनाम्' इत्यादीनि 'पृथगुपदेशात्' इत्यन्तानि जीवस्याणुत्व-साधकानि पूर्वपक्षसूत्राणि, 'तद्गुणसारत्वात्' इति व्याप्तिसाधकसिद्धान्तसूत्रमिति । अत्र व्याप्त्यसाधनात् । न च बुद्धिगुणसारत्वादणुत्वव्यपदेश इति सूत्रयोजना सुधुतामाधत्ते अप्रस्तुतत्वाद् बुद्धेस्तच्छब्देन परामर्शायोगात् । न च बुद्धिगुणाः सारः स्वरूपमात्मनोऽभ्युपगम्यन्ते, हेयत्वात् । न च यावदात्मभावित्वं बुद्धेरिष्टम् । अविद्यानिवृत्तौ निवृत्त्यभ्युपगमात् । अतस्तदपि न बुद्धौ योजनीयम् । न च विवेचकमनालोच्य पूर्वोत्तरमतभेदकल्पना विपश्चितां चेतसि चमत्कार-माविष्करोति । न च तुशब्दः पक्षव्यावर्तक इति नियमः । 'पुंस्त्वादिवत्तु' इत्यत्रैव व्यभिचारात् । न चातिसंरम्भेण पूर्वपक्षीकृतमप्रतिवचनेन निरसितुं शक्यते । न चोत्सूत्रं सिद्धान्तप्रतिपादनमिति वाच्यम् । असूत्रितस्यासिद्धान्तत्वात् । सूत्रेषु निरस्यपक्षोपन्यास उत्सूत्रं चोत्प्रेक्षणीयस्तत्र तत्र सिद्धान्तः सूत्रविरुद्ध इति न सज्जनसमाजे भ्राजते ॥

'ऋगादयश्च चत्वारः पञ्चरात्रं च भारतम् ।
मूलरामायणं ब्रह्मसूत्रं मानं स्वतः स्मृतम् ॥
अविरुद्धं च यत्त्वस्य प्रमाणं तच्च नान्यथा ।
एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथञ्चन' ॥ इत्युक्त्वा विरुद्धशास्त्राणि विनिन्द्य,

'निर्णयायैव यत्प्रोक्तं ब्रह्मसूत्रं तु विष्णुना ।
व्यासरूपेण तद्ग्राह्यं तत्रोक्ताः सर्वनिर्णयाः ॥
यथार्थवचनानां च मोहार्थानां च संशयम् ।
अपनेतुं हि भगवान्ब्रह्मसूत्रमचीक्लृपत् ॥
तस्मात्सूत्रार्थमागृह्य कर्तव्यस्सर्वनिर्णयः ।
सर्वदोषविहीनत्वं गुणैस्सर्वैरुदीर्णता ।
अभेदस्सर्वरूपेषु जीवभेदः सदैव च ॥
विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा ।
तारतम्यं च मुक्तानां विमुक्तिर्विधया तथा ॥
तस्मादेतद्विरुद्धं यन्मोहार्थं तदुदाहृतम् ।
तस्माद्ये ये गुणा विष्णोर्ग्राह्यास्ते सर्व एव तु ॥'

इति भविष्यत्पर्वण्युक्तम् ।

## तत्त्वप्रकाशिका

नन्वेवं सत्यद्वैतश्रुतेर्निर्विषयतयाऽप्रामाण्यं प्राप्तमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **तदिति ॥** तच्छब्देन स्वात्मनेति प्रकृतस्य परामर्शः । नाभेदश्रुतेरप्रामाण्यप्राप्तिः । परमात्मगुणसदृशानन्दादि गुणस्वरूपत्वेन जीवस्य गौणवृत्त्याऽभेदव्यपदेशोपपत्तेः । यथा खलु सकलजगद्गुणसदृशगुणात्मकत्वेन परमात्मा जगदिति व्यपदेशः । 'सर्वं खल्विदं ब्रह्म' इत्यादौ तथैवेति भावः । अत्रैव स्मृतिसंमतिमाह ॥ **भविष्यदिति ॥** गौणी वृत्तिरमुख्येति चेत् सत्यम् । मुख्यार्थासम्भवादाश्रीयते । न हि सार्वज्ञादिगुणवता ब्रह्मणाऽल्पज्ञानादिमतो जीवस्याभेदो युक्तः । न सार्वज्ञादि पारमार्थिकमिति चेन्न । 'यः सर्वज्ञः' इत्यादि श्रुतिसिद्धत्वात् । श्रुतिसिद्धसार्वज्ञादेरपि मिथ्यात्वे बौद्धराद्धान्तापत्तिः । कश्चैवं वादिनोऽद्वैतश्रुतिसिद्धार्थे विश्वासहेतुरन्यत्राभिनिवेशात् । उपजीव्यप्रमाणविरुद्धं चाद्वैतबोधनम् । जीवपरमात्मविषयप्रमाणैर्भेदस्यैव ग्रहणात् । परेणापि हि प्रमाणविरोधभीरुणा लाक्षणिकोऽर्थोऽङ्गीकृतोऽद्वैतश्रुतेः । तथा च सुतरां युक्तं गौणार्थग्रहणम् । लक्षणावृत्तौ हि तत्त्वं पदवाच्यार्थपरित्यागेनासिपदमात्रे सामानाधिकरण्यरूपमुख्यार्थताऽशेषप्रमाणविरुद्धाङ्गीकर्तव्या । वरं हि ततस्तत्त्वंपदमुख्यार्थमङ्गीकृत्यासिपदमात्रस्य गौणार्थवर्णनम् । नात्र प्रमाणविरोधेन श्रुतेरमुख्यार्थताऽभ्युपगम्यते येन गौणार्थोऽङ्गीकार्यः स्यात् । किं तु श्रुतेरेव तथाभिप्रेतत्वादिति कश्चित् । स प्रष्टव्यः । कथमयं श्रुतेरभिप्रायो लोकोत्तरप्रज्ञेन विज्ञात इति । तात्पर्यलिङ्गैरिति वदन् देवानां प्रियोऽसावुपेक्षितव्यः । न हि लिङ्गानि तात्पर्यावबोधकानि लाक्षणिकार्थग्रहणे कारणानीति युक्तम् । लिङ्गबलादद्वैत एव तात्पर्ये सिद्धे प्रमाणविरोधाद् गौणार्थमनङ्गीकृत्य लक्षणाश्रीयत इति चेन्न । उपक्रमादीनामन्यार्थत्वात् । यथा चैतत्तथोक्तमन्यत्रेति । अथापीदं स्यात् । 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्' इति वदन् भाष्यकारः कथमेवं श्रुतिं व्याख्याति । न च परमात्मसमन्वयविषयकं तद्वाक्यम् । अर्थान्तरप्रस्ताव एवोदाहृतत्वात् । कश्चिदिति विशेषणाच्चेति । मैवम् । तत्र रूढियोगौ विहाय केवलवृत्त्यन्तरस्य निषिद्धत्वात् । रूढियोगपूर्वकगौण्यादि वृत्तेरनिवारणात् । सा च परकीयन्यायेनैव । अस्ति हि 'तत्त्वमसि' इत्यादि श्रुतीनाम् 'अतत्त्वमसि' इत्यादि रूपो रूढार्थः । अतः श्रुत्यविरोधेन जीवस्य परमात्मभेदसिद्धेर्युक्तस्तत्र वेदसमन्वय इति सिद्धम् ।

# गुर्वर्थदीपिका

पुरुषः शार्दूल इव पुरुषशार्दूल इतिवत्तस्य परमात्मनो गुणा इव गुणास्तद्गुणाः ब्रह्मणो गुणा इव गुणाः ब्रह्मगुणा इति सूत्रभाष्ययोरुपमागर्भसमासं सूचयितुमुक्तं **परमात्मगुणसदृशेति ॥** सिंहो देवदत्त इतिवत्तत्वमित्युक्ते ब्रह्मप्रतियोगिकैक्यं जीवे प्रतीयते । अतस्तस्यैव निर्वाहाय ब्रह्मगुण-सदृशगुणवत्त्वं जीवे कथितम् । प्राज्ञवदिति दृष्टान्तीकृते 'सर्वं खल्विदं ब्रह्म' इति वाक्ये सर्वपदेन जडप्रपञ्चः कथ्यते । तस्य ब्रह्मैक्यं परमतेऽपि नास्ति । अतो न दृष्टान्ते विप्रतिपत्तिः । अत एव विरुद्धधर्माक्रान्ततया तयोर्भेदं सूचयितुं प्राज्ञवदित्युक्तं सूत्रकृता । प्राज्ञजडयोरैक्यासम्भवस्तु सर्वजनसम्मतः । अत्र दृष्टान्तकथनव्याजेन तस्यापि वाक्यस्यार्थं निर्णेतुमिदमेवोदाहरणमुदितं सूत्रकारेण । अस्मिंश्च वाक्ये सर्वप्रतियोगिकमैक्यं ब्रह्मणि प्रतीयते । अतो भाष्यकृताऽपि दृष्टान्ते यथा सर्वगुणात्मत्वात् सर्वात्मत्वं ब्रह्मण उच्यत इत्युक्तं सर्वगुणा इव गुणास्सर्वगुणा इति पूर्ववत्समासः । ते च गुणाः सत्यत्वनित्यत्वाबाधितत्वार्थक्रियाकारित्वादय इति अन्यत्राभिनिवेशा-दित्यत्र अभिनिवेशाद्दुराग्रहादन्यत्र दुराग्रहं विनेत्यर्थः । प्रमाणविरोधाद्गौणार्थमनङ्गीकृत्य लक्षणा आश्रियत इत्यत्र प्रमाणविरोधादैक्ये तात्पर्यबोधकप्रमाणविरोधाद्गौणार्थमनङ्गीकृत्य गौणार्थाङ्गीकारे सिंहदेवदत्तयोरिव जीवब्रह्मणोरैक्यस्यैव भङ्गो जायते । तच्चैक्ये तात्पर्यबोधकप्रमाणविरुद्धम् । अतस्तां वृत्तिमनङ्गीकृत्येत्येका योजना । यथा प्रमाणविरोधाद्यथाश्रुतार्थग्रहणे सर्वज्ञकिञ्चिज्ज्ञयो-स्तयोर्भेदग्राहिप्रत्यक्षविरोधादैक्यानुकूललक्षणाऽऽश्रियत इत्यपरा योजना । यथा चैतत्तथोक्तमन्यत्रे-त्युपलक्षणम् । 'एकं' 'सदेवाग्र आसीत्' इति लयेऽपि ब्रह्ममात्रावस्थानमुच्यते । अद्वितीयपदेन च ततो द्वितीयं नेति जडाजडप्रपञ्चयोरभावः कथ्यते । एवं च प्रलये प्रध्वंसप्रतियोगिना जगता विद्यमानस्य ब्रह्मणो विरुद्धधर्माक्रान्ततया ब्रह्मजगतोः भेदस्यैवोपक्रमो न त्वभेदस्येति बालैरपि बोद्धुं शक्यत इत्यपि द्रष्टव्यम् । कश्चिदिति विशेषणादित्यत्र योगरूढीं विना कोऽपि श्रुतिगोचरोऽर्थो नास्तीत्युक्ते, सकलश्रुतीनामपि योगरूढिभ्यामेव प्रवृत्तिरित्यर्थस्यैव प्रतीयमानत्वादिति भावः । परकीयन्यायेनेत्यत्र परेणापि मुख्यार्थासम्भवेन वृत्त्यन्तराश्रयणादित्यर्थः । अस्ति हि 'तत्त्वमसि' इत्यादिश्रुतीनामतत्त्वमसीत्यादिरूपोरूढाद्यर्थ इत्यत्र 'तत्त्वमसि' इत्यादिवाक्ये गौणार्थतयाऽङ्गी-कृतस्यासिशब्दस्य अतत्त्वमसीति वाक्ये रूढिरस्ति । अत्र मुख्यार्थबाधाभावेनासिशब्दस्य रूढ्यैव

(गुर्वर्थदीपिका)

प्रवृत्तेरिति भावः । 'भेदव्यपदेशाच्चान्य' इत्यादिसूत्रेषु 'ते ये शतं प्रजापतेरानन्दाः' 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' 'इन्द्रस्यात्मा' इत्यादिना तत्तत्प्रकरणस्थभेदवाक्यैरेव भेदस्समर्थितः । इदं च सर्वप्रकरणेष्वपि विचार्यमाणेषु सर्वत्र भेद एव प्रतीयते । अतो नाभेदस्य कुत्राप्यवसर इति ज्ञापयितुं भेदे प्रमाणबाहुल्यं च दर्शयितुमिति ज्ञेयम् । 'पृथगुपदेशात्' इत्यत्र तु निरवकाशभेदप्रतिपादकसर्वसाधारणश्रुतिविरोधेनैक्यस्यासम्भवादैक्यवाक्यानां गौणी वृत्तिराश्रयणीयेति प्रतिपाद्यते । अतो न गतार्थतेति च ज्ञेयम् ।

## भावबोधः

परमात्मगुणसदृशेत्यादिना श्रुतेः सादृश्यैक्यादिना सावकाशत्वादिति न्यायविवरणमपि व्याख्यातं भवति । बहुमानविरोध एकस्य दौर्बल्याच्चेति न्यायविवरणं मनसि निधायाऽऽह सत्यमित्यादिना । धर्मिग्राहिविरोधाच्चेति न्यायविवरणं व्याचष्टे– **उपजीव्येति** । असिपदमात्रस्य गौणार्थवर्णनमिति । तत्त्वं पदसमभिव्याहृतासिपदबलाद्धि तत्वं पदार्थतावच्छेदकयोर्ब्रह्मत्वजीवत्वयोः सामानाधिकरण्यरूपस्य तदाश्रयब्रह्मजीवाभेदस्य लाभः । स च ब्रह्मत्वजीवत्वयोरेकवस्तुनिष्ठत्वलक्षणमुख्यसामानाधिकरण्यरूपस्तदाश्रयाभेदः सर्वप्रमाणबाधित इति तं परित्यज्य सदृशवस्तुनिष्ठत्वलक्षणामुख्यसामानाधिकरण्यरूपतदाश्रययोः सादृश्यरूपोऽमुख्याभेदोऽसिपदलभ्य इत्यभिप्रायः । यथोक्तमनुव्याख्याने–

> 'अतो भेदवदेवैताः श्रुतयः प्रवदन्ति हि ।
> पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात्' ।। इति ।

अत एव सुधायां तद्व्याख्यानावसरे ततो वरं पदद्वयस्य मुख्यार्थत्वम् अभ्युपगम्य सामानाधिकरण्यमात्रगौणत्वमभ्युपगन्तुमित्युक्तम् । कथमेवं श्रुतिं व्याख्यातीति ।

ननु 'रूढियोगौ विना' इत्यस्य कर्मनिर्णयटीकायां न केवलो रूढो नापि केवलो यौगिकोऽस्तीत्यर्थ इति मुख्यवृत्तिद्वयसमुच्चयपरत्वेन व्याख्यातत्वात् कथमेतच्छङ्कावकाश इति चेत्, सत्यम्, वानात् सूतेरिति वासुदेवशब्दस्य योगमुक्त्वा योगमात्रस्यातिप्रसङ्गपरिहारार्थं रूढिविशेषज्ञानार्थं योगश्चाङ्गीकार्य इत्याशयेनास्य प्रमाणस्याचार्यैस्तत्रोदाहृतत्वेन तावन्मात्रस्य प्रकृतोपयोगात् तद्वाक्यं

(भावबोधः)

तत्र तथा व्याख्यातम् । वस्तुतस्तु योगरूढेर्मुख्यवृत्त्यन्तरत्वेऽपि रूढियोगग्रहणेनैव गृहीतत्वात् रूढियोगौ विना समुच्चितमुख्यवृत्तिं विना गौण्याद्यमुख्यवृत्त्या केवलयोगेन केवलरूढ्या वा कश्चिदर्थो वेदगो नैव भवेदित्यर्थस्य प्रतिभासनात् वेदे मुख्यवृत्तिरेव नास्तीति शङ्कोत्थानमिति भावः। केवलवृत्त्यन्तरस्य निषिद्धत्वादिति । 'नैवार्थो वेदग' इति निषेधस्य सामान्यरूपत्वेन रूढियोगौ विना योगस्य रूढिसाहित्यं रूढेर्योगसाहित्यं विना केवलयोगेन केवलरूढ्या वा कश्चिदर्थो वेदगो न भवेत्' इति रूढियोगयोः परस्परसाहित्यनिषेधस्येव रूढियोगौ विना मुख्य-वृत्तिसाहित्यं विना केवलया गौण्याद्यमुख्यवृत्त्या कश्चिदर्थो वेदगो न भवेदित्यमुख्यवृत्तेः मुख्यवृत्ति-साहित्यनिषेधोऽपि एतद्वाक्यार्थ इति भावः ॥ **सा च परकीयन्यायेनैवेति** ॥ सा गौणीवृत्तिश्च परकीयन्यायेन तत्त्वमसीति पदविभागगभ्युपेत्येत्यर्थः । अत्राद्ये– स्वपक्षसाधकोक्तिः । द्वितीये– अद्वैतश्रुत्यप्रामाण्यपरिहाराय तासां गतिनयनमिति सूत्रक्रमः ।

## भावदीपः

तद्गुणेत्यस्य ब्रह्मगुणेति कथं भाषणमित्यत आह ॥ **तच्छब्देनेति** ॥ अद्वैतश्रुत्युक्तेर-साङ्गत्यनिरासाय श्रुतेस्साद्दश्यैक्यादिना सावकाशत्वादित्यन्यत्रोक्त्यनुरोधेन साध्यमध्याहृत्य तत्र हेतुत्वेन सूत्रभाष्ययोर्भावार्थमाह ॥ **नाभेदेति** ॥ **जीवस्येति** ॥ सज्जीवस्येत्यर्थः । शास्त्रस्य सदधिकारिकत्वेन तं प्रत्येव तत्वमसीत्युपदेशात् । एतच्च पुंस्त्वादिवदित्यत्र व्यक्तमिति सज्जीव-स्येत्येव नोक्तम् ॥ **सकलजगद्गुणेति** ॥ 'सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि' इति गीता-भाष्यैकादशस्कन्धतात्पर्यादावुक्तमोक्षधर्मवचनेन । 'गामाविश्य च भूतानि धारयामि' इत्यादिगीतासु च पृथिव्यादीनां ये धारकत्वादयो गुणाः तत्सदृशगुणात्मकत्वस्य ब्रह्मण्युक्तेरिति भावः । बहुमान-विरोधे चैकस्य दौर्बल्याच्चेत्यन्यत्रोक्तं व्यक्तीकर्तुमाह ॥ **गौणीति** ॥ बहुमानानि विवरीतुं सोपपत्ति-केति भाष्योक्तविरुद्धधर्माधिकरणत्वयुक्तिं तावदुपपादयति ॥ **न हीति** ॥ 'उपजीव्यविरुद्धं तु कथमैक्यं श्रुतिर्वदेत्' इत्यनुभाष्योक्तयुक्तिमाह ॥ **उपजीव्येति** ॥ अत्रोपजीव्यत्वं च धर्मिग्राहक-विरोधाच्च' इति न्यायविवरणरीत्या धर्मिग्राहकत्वमित्यभिप्रेत्य तद्विरोधं स्पष्टयति ॥ **जीवेति** ॥ 'किञ्चित्कर्ता च दुःखीति सर्वैरेवानुभूयते । सर्वज्ञो भगवान् विष्णुः सर्वशक्तिरिति श्रुतः' इत्यनु-भाष्योक्तेरिति भावः । एतेन बहुमानविरोधो विवृतो ध्येयः । विशिष्टाभेदरूपमुख्यार्थे

(भावदीपः)

अनुभवोपपत्तिश्रुतिरूपप्रमाणविरोधः परस्यापि हि सम्मत इत्याह ॥ **परेणापि हीति** ॥ तथा **चेति** ॥ मुख्यार्थे प्रमाणविरोधस्योभयसंमतत्वे सतीत्यर्थः । सुतरामसंशयम् । बहुमानविरोध एकस्य दौर्बल्याच्चेत्यन्यत्रोक्तस्यैकपदस्य व्यावर्त्यं दर्शयन् तद्वाक्यार्थं व्यनक्ति ॥ **लक्षणावृत्तौ हीति** ॥ **अशेषेति** ॥ प्रत्यक्षयुक्तिश्रुतिरूपेत्यर्थः । एकस्य दौर्बल्याच्चेत्येतद् व्याचष्टे ॥ **असिपदमात्रस्येति** ॥ अत्र विशेषश्चन्द्रिकायां बोध्यः । प्रागुक्ततात्पर्यलिङ्गान्यन्यथयितुं शङ्कते ॥ **नात्रेति** ॥ लोकोत्तरे-त्यपहासः । देवानांप्रिय इति च मूर्खे इति निपातनादलुक्समासः । अनभिज्ञ इत्यर्थः । कुत इत्यत आह ॥ **न हीति** ॥ यद्यपि लिङ्गानि मानान्तराविरोधे मुख्यार्थ एव तात्पर्यबोधकानि । तथापि प्रकृते मानान्तरविरोधान्मुख्यार्थे तात्पर्यं परेणैव व्यक्तम् । अमुख्यार्थमध्ये गौणे न तात्पर्यं किं तु लाक्षणिक एवेत्यत्र तु लिङ्गानि न शक्तानीति भावः । गौणार्थे तात्पर्यं न किं तु लाक्षणिक एवेत्यत्र शक्तानि लिङ्गानीत्येतदाशङ्कते ॥ **लिङ्गेति** ॥ गौणार्थानङ्गीकारे हेतुरद्वैत एव तात्पर्य इति लक्षणाश्रये हेतुः **प्रमाणविरोधादिति** ॥ भवेदेतत् यद्युपक्रमादिलिङ्गानामद्वैत एव तात्पर्यावगमकत्वं तदेवासिद्धमित्याह ॥ **उपक्रमादीनामिति** ॥ अन्यत्र विष्णुतत्वविनिर्णयादौ ॥ **इति वदन्निति** ॥ कर्मनिर्णय इति योज्यम् ॥ **अर्थान्तरेति** ॥ वचनानां बह्वर्थत्वमस्तीत्याद्यर्थान्तरप्रकरण इत्यर्थः ॥ **वृत्त्यन्तरस्येति** ॥ मायावादिभिः शब्दानां ब्रह्मणि वक्ष्यमाणरीत्येति भावः ॥ **रूढियोगपूर्वकेति** ॥ 'सिंहश्चैत्र' इत्यत्र सिंहपदस्य सिंहे रूढौ सत्यामेव चैत्रे गौणी वृत्तिः । 'गङ्गायां घोषः' इत्यत्र रूढिपूर्विका लक्षणेत्येवम् अहं ब्रह्मास्ति' इत्यादौ ब्रह्मादिपदस्य परमात्मादौ रूढियोगयोः सत्त्वे तत्पूर्विकैवेह गौणी वृत्तिरिति भावः । कर्मनिर्णयटीकायां तु न केवलं रूढो नापि केवलो यौगिकोऽस्तीत्यर्थ इति रूढियोगरूपमुख्यवृत्तिद्वयसमुच्चयपरत्वेनाप्यर्थान्तरमुक्तम् । वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्या युज्यत इति कर्मनिर्णयवाक्यविरोधोऽपि नास्ति । तस्य तट्टीकाया-मेवैतदविरोधेन व्याख्यानादिति भावः । नन्वथापि विष्णुतत्वविनिर्णयादिविरोधस्तु स्यात् । तत्रा-तत्त्वमसि' इति पदविभागमुपेत्य मुख्यार्थस्योक्तेरित्यत आह ॥ **सा चेति** ॥ गौणवृत्तिरित्यर्थः । अतत्त्वमसि तदन्यद्वस्त्वसि इत्यर्थः । नञोऽन्योन्याभावे रूढत्वात् रूढार्थ इत्युक्तम् । आदिपदेनानन्दमयाधिकरणे तत्तच्छब्दवाच्यत्वोक्तेरिति भाष्योक्तेस्तत्त्वमस्यादिशब्दानां 'प्राणो वा अहमस्म्यृष' इत्यत्रैतरेयभाष्योक्तदिशा यौगिकार्थस्य ग्रहः ॥ **अत इति** ॥ द्वैतश्रुतेः सोपपत्ति-कत्वादभेदश्रुतेः सादृश्यपरत्वेन सावकाशत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**गौणवृत्त्येति** ॥ 'अहं ब्रह्मास्ति' इत्यादौ अभेदप्रापकब्रह्मादिशब्दस्य जीवे गौण्या वृत्त्याऽभेदव्यपदेशोपपत्तेरित्यर्थः । एतेन श्रुतौ सादृश्यरूपगौणाभेदस्यैवोक्तत्वेन मुख्याभेदव्यपदेशाभावात्, अभेदव्यपदेशोपपत्तेरित्ययुक्तमिति परास्तम् । एतेनैव अभेदस्य वाक्यार्थत्वात्, गौण्या वृत्त्या अभेदव्यपदेशोपपत्तेरित्ययुक्तमिति परास्तम् ॥ **अन्यत्राभिनिवेशादिति** ॥ अन्य इति शेषः । ततश्च 'यः सर्वज्ञ' इति श्रुतिसिद्धात् सार्वज्ञ्यादन्यत्र अन्यस्मिन् अद्वैतश्रुतिसिद्धेऽर्थेऽभिनिवेशादन्यः को विश्वासहेतुः न कोऽपीत्यर्थः । आग्रहमूलकमेव परकीयमद्वैतप्रतिपादनमिति भावः । एतेन अभिनिवेशादन्य इति वक्तव्यं न त्वन्यत्रेति भवदादियोगाभावे प्रथमायास्त्रलो विधानाभावादिति परास्तम् । अद्वैतस्य प्रमाणविरुद्धत्वं पराभिमतमित्याह– **परेणापि हीति** ॥ अद्वैतश्रुतेरर्थो लाक्षणिकोऽङ्गीकृत इत्यर्थः । ततः किमित्यत आह – **तथा चेति** ॥ त्वत्पक्षे एकस्य लाक्षणिकत्वे अस्मदीयं गौणार्थग्रहणं युक्तम् । लक्षणातो गौण्या वरत्वात् । त्वत्पक्षे पदद्वयस्य लाक्षणिकत्वे तु अस्मदीयं गौणार्थग्रहणं सुतरां वरमिति भावः । लक्षणावृत्तिमङ्गीकृत्यापि स्वपक्षस्याधिक्यं वक्तुमाह– **लक्षणावृत्तौ हीति** ॥ लक्षणावृत्तावुभाभ्यामङ्गीकृतायामपि त्वत्पक्षपातिना तत्त्वंपदवाच्यार्थपरित्यागेनाऽसिपदमात्रस्य मुख्यार्थताऽशेषप्रमाणविरुद्धाऽङ्गीकर्तव्या भवति । त्वया तथैवाऽङ्गीकृतत्वात् । ततोऽपि तत्त्वंपदयोर्मुख्यार्थमङ्गीकृत्य असिपदमात्रस्य इवार्थे लक्षणामङ्गीकृत्य, सादृश्याऽभेदरूपगौणार्थवर्णनं युक्तमित्यर्थः । अनेन 'तत्त्वमसि' इति श्रुतेः त्वं तदसि 'तदिव' इति योजनोक्ता भवति ।

ननु असिपदस्य मुख्यार्थता अशेषप्रमाणविरुद्धेत्ययुक्तम् । असिपदार्थभवनस्य प्रमाणविरुद्धत्वाभावादिति चेत्, न त्वम्पदनिर्दिष्टे तत्पदार्थभवनस्य प्रमाणविरुद्धत्वात् । ननु त्वंपदलक्ष्यचिन्मात्रस्य तत्पदलक्षितचिन्मात्रात्मकत्वमुच्यते तत्कथं प्रमाणविरुद्धत्वमिति चेत्, न लक्षणया चिन्मात्रैक्यबोधनस्यैवाऽयोगात् । तथा हि त्वंशब्दस्य चिन्मात्रलक्षणायां तेन निर्विकल्पकबोधः स्यात् । एवं तच्छब्देनापि निर्विकल्पकबोधः स्यात् । न च एवं सति अस्याऽनेन तादात्म्यमुच्यत इति विज्ञातुं शक्यमिति अकामेनापि तत्त्वंपदाभ्यां विशिष्टबोधो वक्तव्य इति कथं नाशेषप्रमाणविरोधः । किं च तत्त्वंपदयोर्मुख्यार्थमभ्युपगम्य अद्वैतबोधने प्रमाणविरोधोऽस्ति न वा । नेति पक्षे लक्षणाङ्गीकारवैयर्थ्यम् । आद्ये लक्षणाङ्गीकारेऽपि प्रमाणविरोधो दुष्परिहरः ।

(अभिनवचन्द्रिका)

न हि विद्यमानस्य धर्मस्य अविवक्षामात्रेण विरोधः परिहृतो भवति । 'आदित्यो यूपः, यजमानः प्रस्तरः, अग्निर्जलम्' इत्यादिवाक्येनापि स्वरूपमात्रलक्षणया अग्निजलादीनां तादात्म्यापातात् । जीवेश्वरगतासार्वाज्ञादिधर्माणां मिथ्यात्वादैक्यं न प्रमाणविरुद्धमिति चेत्, न श्रुतिसिद्धसार्वज्ञादीनां मिथ्यात्वे ऐक्याऽसिद्धिप्रसङ्गस्योक्तत्वादिति ॥ **नाऽत्र प्रमाणविरोधेनेति** ॥ अत्र तत्त्वमसीति श्रुतौ प्रमाणविरोधेन श्रुतेः त्वंपदस्य तत्पदस्य, **अमुख्यार्थता** लाक्षणिकार्थता नाभ्युपगम्यते । येन 'तत्त्वमसि' इति श्रुतेः गौणार्थः सादृश्याभेदरूपोऽर्थोऽङ्गीकृतः स्यादित्यर्थः ॥ **तथाऽभिप्रेतत्वादिति** ॥ लाक्षणिकार्थतात्पर्यवत्त्वादित्यर्थः ॥ **तात्पर्यलिङ्गैरिति वदन्निति** ॥ तात्पर्यलिङ्गैः तात्पर्ये सिद्धे तदन्यथाऽनुपपन्त्या तत्त्वंपदयोर्लाक्षणिकत्वसिद्धिरिति वक्तव्ये तात्पर्य-लिङ्गैरिति वदन् मूर्खत्वादुपेक्षितव्य इत्यर्थः तथैव वक्ष्यामीति भावेन शङ्कते – **लिङ्गबलादिति** ॥ **रूढियोगौ विहायेति** ॥ यथा 'गङ्गायां घोषः' इत्यादिलौकिकवाक्यं गङ्गादिपदानां लाक्षिणिकार्थमादायैव अर्थं प्रतिपादयति न पुना रूढार्थमप्युपादाय । न तथा वेदवाक्यम्, किन्तु महायोगादिवृत्त्या कञ्चिदर्थं प्रतिपाद्यैव गौण्याद्यमुख्यवृत्त्यापि अर्थान्तरं प्रतिपादयतीत्याशयेन 'रूढियोगौ विना' इत्यादिना गौणार्थनिषेधादित्यर्थः । एतेन वेद इव लोकेऽपि शब्दानां केवलगौणाद्यर्थाभावात्, विशिष्य 'नैव वेदगो भवेत्' इति कथनमयुक्तमिति परास्तम् ।

ननु रूढियोगौ विहाय केवलवृत्त्यन्तरस्य निषिद्धत्वादित्ययुक्तम्, केवलायाः गौण्यादि-वृत्तेरप्रसक्तत्वे निषेधायोगात् प्रसक्तिर्वक्तव्या । सा च प्रसक्तिः प्रमाणेनैवेति निषेधानुपपत्तिरित्यत आह– **सा चेति** ॥ भवत्येव केवलगौण्यादिवृत्तिः प्रसक्ता । परन्तु न प्रमाणेन । किन्तु परकीयन्यायेनैव । तथा च निषेधो नाऽनुपपन्न इति भावः । एतेन असिपदगौणतायाः स्वमतत्वात् परकीयन्यायेनैवेत्ययुक्तमिति परास्तम् । ननु वेदो रूढियोगौ विना गौण्यादिवृत्त्यैव अर्थान्तरं न प्रतिपादयतीत्ययुक्तम् 'तत्त्वमस्यादि' वाक्यानामर्थान्तरदर्शनेन अमुख्यवृत्त्यैव अर्थप्रतिपादकत्वस्या-श्रयणीयत्वादित्यत आह– **अस्ति हीति** ॥

पूर्वपक्षस्तु – अभिन्न एव जीवः परमात्मना, 'तत्त्वमसि' इत्यादिश्रुतेः । यद्यपि श्रुतिरियं श्वेतकेतोरेव साक्षादैक्यं बोधयति, तथापि – सर्वजीवाऽभेदे तात्पर्यसद्भावात् भवत्येव सर्वजीवाभेदे प्रमाणम् । तथा हि श्वेतकेतुस्तावत् जीवो न रामकृष्णादिवद्भगवदंशः, 'न वै सौम्याऽस्मत्कुलीन' इति पूर्ववाक्यपर्यालोचनया तथाऽवगमात् । न च जीवत्वाविशेषे कस्यचिद्ब्रह्माभेदः, कस्यचिन्नेति

(अभिनवचन्द्रिका)
सम्भवति । अतो मन्यामहे सर्वजीवानां ब्रह्माभेदं विवक्षित्वैव श्रुतिः श्वेतकेतो ब्रह्माभेदं वक्तीति । न च विपर्ययेऽप्यस्ति श्रुतिरिति वाच्यम् । अद्वैतश्रुतेः सोपपत्तिषड्विधतात्पर्यलिङ्गयुक्तत्वेन बलवत्त्वात् । तथा हि तात्पर्यलिङ्गोपेता चाऽद्वैतश्रुतिः, 'एकमेवाद्वितीयम्', इत्युपक्रमात्, 'तत्त्वमसि' इत्युपसंहारात्, 'तत्त्वमसि, तत्वमसि' इति नवकृत्वोऽभ्यासात्, अद्वैतस्य प्रमाणान्तरेणाऽप्राप्तत्वेनाऽपूर्वत्वात्, 'तस्य तावदेवचिरम्' इति फलश्रवणात्, 'येनाऽश्रुतं श्रुतं भवति' इत्यर्थवादात्, मृत्पिण्डादिदृष्टान्तोपपादनादिति । एवं च अद्वैतश्रुतेरद्वैत एव तात्पर्यावगमात् तद्विरुद्धभेदश्रुते रतत्वावेदकत्वमेवेति न परमात्मनि श्रुतिसमन्वयो युक्त इति ।

सिद्धान्तस्तु – भिन्न एव जीवः परमात्मनः 'भिन्नो जीव' इति श्रुतेः, न च अभेदेऽपि अस्ति श्रुतिरिति वाच्यम् । विरुद्धधर्माधिकरणत्वयुक्तित्वेन भेदश्रुतेः प्राबल्यात् । ननु तर्ह्यद्वैतश्रुतेरप्रामाण्यं प्राप्तमिति चेत्, न । जीवस्य परमात्मगुणसदृशानन्दादिगुणवत्त्वात्, 'अहंब्रह्मास्ति' इत्यादिश्रुतिगतानां ब्रह्मादिशब्दानां गौण्यावृत्त्या जीवे प्रवृत्तत्वेन सादृश्याभेदस्य श्रुत्यर्थत्वात् । 'तत्त्वमसि' इत्यादौ ब्रह्मावाचकशब्दस्य जीवे गौणवृत्त्यङ्गीकार इव, असिपदस्य इवार्थे लक्षणाङ्गीकारेऽपि सादृश्याभेदप्रतितेश्च । अभेदाभावेऽपि अभेव्यदेशस्य तद्गुणसारत्वेन 'सर्वं खल्विदं ब्रह्म' इत्यादौ दर्शनात् । ननु अभेदश्रुतेरभेद एवार्थः किं न स्यादिति चेत्, न तत्त्वंपदबोध्ययोर्विशिष्टयो रैक्यस्य बाधितत्वात् तत्त्वंपदयोर्भागत्यागलक्षणया चिन्मात्राऽभेदबोधनेन विरोध इति चेत्, न निर्विशेषयोर्विशेषण विशेष्यभावायोगेनाऽभेदबोधनाऽयोगात् अभेदस्य नीलमृत्पलमित्यादाविव विशेषणविशेष्यभावमुखेनैव बोधनीयत्वात् । ननु 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेः' इतिनिषेधात् कथं गौणपरतया व्याख्यानमिति चेत्, न भावानवबोधात् । न ह्याचार्यः श्रुतेर्गौणाद्यर्थः सर्वथा नास्तीत्यनेनाह, येनोक्तदोषः स्यात्, किं नाम यथा 'गङ्गायां घोषः' इत्यादिलौकिकवाक्यस्य गङ्गादिपदामुख्यार्थद्वारक एव वाक्यार्थः न तु मुख्यार्थद्वारकः, नैवं वेदे, वेदे हि स्वपदानां महायोगादिवृत्त्याऽर्थं प्रतिपाद्यैव गाण्यादिवृत्त्याऽर्थान्तरं प्रतिपादयति-त्याह । ननु 'केवलया गौण्यादिवृत्त्या वेदोऽर्थं प्रतिपादयति' इत्ययुक्तम्, अप्राप्तनिषेधायोगादिति चेत्, न परीत्या प्राप्तिसद्भावात् । अतः श्रुत्यविरोधेन जीवस्य परमात्माभेदसिद्धेर्युक्तस्तत्र श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**ज्ञस्येत्यनुवर्तते ॥** तद्गुणेति तद्गुणसदृशपरः । तुशब्दोऽवधारणे । तद्व्यपदेशः परमात्मत्व-व्यपदेशः तदभेदव्यपदेश इति यावत् **॥ प्राज्ञवदिति ॥** प्राज्ञस्य जडाभेदव्यपदेशवदिति सूत्रपदार्था-नभिप्रेत्य भाष्यभावमाह **॥ परमात्मगुणेति ॥ जगद्गुणेति ॥** 'सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि' इति । 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इत्यादौ पृथिव्यादीनां ये धारकत्वादयो गुणाः तत्सदृशगुणात्मकत्वस्य ब्रह्मण्युक्तेरिति भावः । अत्राशङ्कयोक्तं सुधायां, न चैवं साध्यसमत्वदोषः । जीवमात्राभेदवादिनं प्रति अस्याधिकरणस्यारब्धत्वादिति । सूत्रे श्वेतकेतूपलक्षितसर्वमोक्षयोग्य-विवक्षया ज्ञानानन्दगुणसारत्वस्य गौणे प्रवृत्तिनिमित्तस्योक्तत्वेऽपि सर्वचेतनविवक्षया चेतनत्वसाम्यं गौणप्रयोगनिमित्तमिति भावेन स्मृतौ, तथापि ज्ञानरूपत इत्येवोक्तम् । सूत्रे ब्रह्मवदित्यनुक्त्वा प्राज्ञग्रहणं तु ज्ञानरूपस्य नाचेतनात्मकसर्वाभेदोऽयुक्त इति दृष्टान्तोपपादनाय । ऐक्यव्यपदेशः सादृश्याद्गौण्येव न तु मुख्यत इत्यवधारणार्थं दृढयितुमाशङ्क्य निषेधति **॥ गौणीति ॥** 'सर्वमान-विरोधिता' इत्युक्तन्यायं तदुत्तरत्वेन घटयति सत्यमित्यादिना ॥ एतेन प्राचीनसूत्रैः श्रुत्याद्यवष्टम्भ-नोक्तो भेदोऽपारमार्थिक एवेत्यपि प्रत्युक्तं ज्ञेयम् **॥ जीवपरमात्मेति ॥** जीवविषयेण साक्षिणा नाहमीश्वर इति परमात्मविषयेण च यःसर्वज्ञ इत्यादिना जीवविरुद्धधर्मप्रतिपादकेन च भेदस्यैव ग्रहणात् इत्यर्थः **॥ परेणापीति ॥** विशिष्टैक्यस्य प्रमाणबाधितत्वाद्विरुद्धभागत्यागलक्षणया तत्वं पदयोर्लाक्षणिकोऽर्थः स्वीक्रियत इति भावः **॥ सुतरामिति ॥** तत्पक्षे ऐक्यस्य लाक्षणिकत्वे अस्मदीय गौणार्थत्वं युक्तम् । लक्षणातो गौण्याः प्रवृत्तौ लघूपायत्वात् । यदा त्वत्पक्षे द्वयस्य लाक्षणिकत्वं तदा सुतरां यु क्तमिति भावः । तदुपपादयति **॥ लक्षणावृत्ताविति ॥** परस्परान्वितानेकप्रकृतिनिष्ठैकविभक्तिकत्वरूपसामानाधिकरण्यस्य तद्बोध्यैक्ये शुक्लः पट इत्यादौ शक्त्यवगमात् ।

'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिः' इत्यत्र प्रातिपदिकद्वयगताया एकस्या विभक्तेरैक्यबाधकत्वोक्तेश्च । तद्वत् तत्त्वंपदान्तर्गतविभक्त्यैक्यरूपसामानाधिकरण्यस्यापि तत्त्वंपद-लक्षणचैतन्ययोः साक्षादैक्यलक्षणमुख्यार्थताङ्गीकार्या । असिपदन्तु सामान्यतो योग्येतरान्वित-सत्ताकर्तृवाचकं ऐक्यवाचकैकविभक्त्यन्तपदद्वयसहितं स च ब्रह्मत्वं चैकोऽसीत्येकसत्ताकत्वमाह ।

(वाक्यार्थमुक्तावली)
पदान्तरसमभिहारे सामान्यशक्तेर्विशेषपर्यवसानादिति भावः ॥ **असिपदमात्रस्येति** ॥ त्वं पदनिर्दिष्ट तत्पदार्थभवनस्य प्रमाणबाधितत्वात्, त्वंतत्सीवेति तत्पदार्थ भवनतुल्यभवनं बोधयतीति, असिपदमात्रस्य गौणार्थवर्णनं वरमित्यर्थः ।

नन्वसिपदार्थभवनस्य, प्रमाणविरुद्धत्वाभावात्कथं गौणत्वमिति चेन्न । गङ्गायां घोष इत्यत्र गङ्गाया अधिकरणत्वं न बाधितं किन्तु समभिव्याहृतपदार्थघोषाधिकरणत्वम् । एवमसिपदबोध्य-भवनस्याबाधितत्वेऽपि त्वंपदार्थनिर्दिष्टतत्पदार्थभवनं बाधितमेवेति तत्पदार्थतुल्यभवनतुल्यं तत्सादृश्यं गौण्या बोधयति । तत्पदार्थभवनस्य तत्सादृश्यस्य च तुल्यत्वं अभेदव्यवहारकारणत्वरूपं बोध्यम् । ननु सन्न्यायरत्नावल्यां तत्वमसीत्यत्र जगत्स्रष्टृपरामर्शितस्तच्छब्दस्यैव त्वंशब्दवाच्यजीवे गौण-वृत्याश्रयणेन तत्वंपदयोरपि लक्षणाश्रयणस्य पराहतत्वादिति तत्पदार्थे गौण्याः स्वीकारात् । सुधायां ततो वरं पदद्वयस्य मुख्यार्थत्वमङ्गीकृत्य सामानाधिकरण्यमात्रस्य गौणत्वाभ्युपगम इति । तत्वोद्योतपद्मनाभतीर्थीये च, तत्वमसीत्येतन्न स्वरूपैक्यमात्रोपलक्षकं तत्वंपदसामानाधिकरण्य-स्याग्निर्माणवक इति वत् गौणवृत्तिसम्भवादिति । सामानाधिकरण्यमात्रस्य गौण्यस्वीकाराद्विरोध इति चेदस्मन्मते तत्पदे वा, सामानाधिकरण्ये वा, असिपदे वा, गौणीति विवक्षितत्वेन पदत्रयेऽपि विरोधाभावात् । यदा तत्पदे गौणी तदा सामानाधिकरण्यस्य असिपदस्य ऐक्यवाचकस्य मुख्यार्थबाधान्मुख्यार्थगुणयोगिनि सादृश्ये गौणत्वं तदा तत्वंपदयोरसिपदस्य च मुख्यार्थत्वम् । सादृश्यस्य चैक्यगुणयोगित्वं व्यवहारहेतुत्वेन । यदा तूक्तरीत्या असिपदमात्रस्यासीवेति त्वंपदार्थे तत्पदार्थभवनसादृश्यमात्रेण गौणी । तदान्येषां मुख्यार्थत्वमित्यविरोधात् । चन्द्रिकाभावबोधार्थस्तु तत्रैवानुसन्धेयः ॥ **योगेनेति** ॥ तात्पर्यमनालोच्य प्रमाणविरोधादेव अमुख्यार्थस्वीकारे लाघवादेक-पदे गौण्यङ्गीकारस्य वरत्वं स्यात् । न चैवं किन्तु श्रुतेरेव लाक्षणिकार्थाभिप्रायवत्वात् । न च गौणार्थे तात्पर्यमस्तीति भावः ॥ **तात्पर्यलिङ्गैरिति** ॥ तात्पर्ये सिद्धे तदन्यथानुपपत्या तत्वंपदयो-र्लाक्षणिकत्वसिद्धिरिति वक्तव्यम् । तात्पर्यलिङ्गैर्लाक्षणिकत्वावगतिरिति वदन् मूर्खत्वादुपेक्ष्यः । देवानांप्रियो मूर्ख इति वररुचि वाक्यस्मरणात् । ननु तात्पर्यलिङ्गानि न साक्षाल्लाक्षणिकार्थग्रहणे कारणानि । किन्तु तैस्तात्पर्ये सिद्धे तदन्यथानुपपत्या लाक्षणिकार्थावगतिर्गौणत्यागश्चेत्येवमेवाङ्गी-करोमीत्यत आह ॥ **लिङ्गबलादिति** ॥

(वाक्यार्थमुक्तावली)

ननु लिङ्गबलादद्वैततात्पर्यावगतौ विशिष्टैक्यमेवाङ्गीक्रियताम् । किं लक्षणयेत्येतदुक्तं **प्रमाणविरोधाल्लक्षणेति** ॥ विशिष्टैक्यस्य विरुद्धधर्माधिकरणत्वयुक्तिबाधितत्वाद्भागत्यागलक्षणे-त्यर्थः। तर्हि गौण्याश्रितामित्यतोऽप्युक्तं **प्रमाणविरोधाद्गौणार्थत्वमिति** ॥ तात्पर्यग्राहक-प्रमाणविरोधादित्यर्थः ॥ **तत्र रूढियोगौ विहायेति** ॥ यद्यपि रूढियोगौ विना कश्चिदिति कर्मनिर्णयवाक्यस्य तद्गुणसारत्वादिति सूत्रविरोधपरिहाराय तट्टीकायां रूढियोगौ समुच्चितौ विहाय न केवलरूढो नापि केवलो योगोऽस्तीत्यर्थ इति व्याख्यातम् । तथापीह प्रकारान्तरेण व्याख्याय विरोधः परिह्रियत इत्यर्थः ॥ **रूढियोगपूर्वकेति** ॥ यथा लोके गङ्गायां घोष इत्यादौ गङ्गापदलक्ष्ये तीरे गङ्गापदस्य रूढियोगौ परित्यज्यैव केवललक्षणा । यथा वा चित्रलिखितसिंहे सिंहशब्दस्य रूढियोगौ विहाय केवलगौणः न तथा वेदे । किन्तु लक्ष्ये गौणार्थे च रूढियोगावङ्गीकृत्यैव प्रयोजनान्तरलाभाय लक्षणादिरप्यङ्गीक्रियते । यथा महद्भयं वज्रमुद्यतम्, इत्यत्र 'वर्जनाद्वज्रमुच्यते' 'वज्रं प्रहरणोत्तमम्' इति रूढियोगावङ्गीकृत्यैवेश्वरे 'वज्रवद्भयदं चैव' इत्यत्र संहारसाधनत्व-गुणयोगेन वज्रशब्दस्य गौण्यङ्गीकार इति बोध्यम् ।

ननु वेदे रूढियोगौ विहाय केवललक्षणादिवृत्तेरप्रसक्तत्वे निषेधायोगः । प्रसक्तिश्च प्रमाणेनैवेति निषेधायोग इत्यत आह **सा चेति** ॥ केवलवृत्तिरित्यर्थः । तत्त्वमसीत्यत्र तत्त्वंपदयोर्लक्ष्ये रूढियोगावनाश्रित्य केवललक्षणायाः सत्यज्ञानादिपदानां च ब्रह्मणि केवललक्षणायाश्चाङ्गी-काराद्वादिप्रसक्तस्य निषेध इति भावः ॥ **न तु परकीयन्यायेनेति** ॥ कुतः अस्माभिरपि तत्त्वमसीत्यत्यत्र असिपदस्य केवलमसी वेति गौण्यङ्गीकारादित्यत आह ॥ **अस्ति हीति** ॥ अतदिति पदच्छेदे सामानाधिकरण्यग्रहणम् । भावबोधे तु सा चेत्यस्य गौणीवृत्तिश्च परकीयन्यायेन तत्त्वमसीति पदविभागमभ्युपगम्येति व्याख्यातम् । अत्राद्ये स्वपक्षसाधकोक्तिः । द्वितीये परपक्षसाधकस्य सावकाशत्वोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

पूर्वत्र जीवस्य प्रकृतत्वात् तच्छब्देन जीवपरामर्श इति भ्रान्तिनिवारणायाह ॥ **तच्छब्देनेति** ॥ तत्त्वमसीत्यने न सत्यमनेन भेदाप्रकृतेरप्रामाण्यशङ्का निराकृतेत्यत आह ॥ **नाभेदश्रुतेरिति** ॥ **सकलजगद्गुणेति** ॥ 'सर्वभूतगुणैर्युक्तं देवत्वं ज्ञातुमर्हसीति' भारते ।

(तत्त्वसुबोधिनी)

'गामाविश्य च भूतानि धारयाम्यहमोजसा' इत्यादि गीतासु च । पृथिव्यादीनां धारकत्वादयो गुणाः तत्सदृशगुणात्मकत्वस्य ब्रह्मण्युक्तेरिति भावः । मुख्यार्थासम्भवमेवोपपादयति ॥ **न हीति** ॥ **एवं वादिन इति** ॥ श्रुतिसिद्धस्यापि मिथ्यात्ववादिन इत्यर्थः । अभिनिवेशादन्यत्राग्रहं विना कः विश्वासहेतुः न कोऽपीत्यर्थः । न केवलं मयैवामुख्यार्थोऽङ्गीक्रियते । अपि तु परेणापीत्याह ॥ **परेणापीति** ॥ **लक्षणावृत्तौ हीत्यादि** ॥ परमते पदद्वये लक्षणा मम मते तु तत्पदमात्रे गौणी । न चाल्पबाधेनैवोपपत्तौ बहुबाधोऽन्याय्य इति भावः । टीकायां सामानाधिकरण्यस्य गौणत्वोक्तेस्तु तत्पदं सर्वकर्तृत्वादिविशिष्टब्रह्मपरमेव तत्त्वंपदयोः सामानाधिकरण्यं तु नाभेदपरं, किन्तु सादृश्यपरमिति नाभिप्रायः, सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावेऽपि सिंहप्रातिपदिकस्येव सदृशे गौणत्वात्, सन्यायरत्नावल्यां तत्त्वमसीत्यत्र जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गुणवृत्त्याश्रयणेन तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादित्युक्तत्वाच्च । अपि तु तत्पदेनैव गौण्या वृत्या सादृश्ये लब्धे परस्परान्वितानेक प्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवस्य (जीवे) असत्त्वेऽपि अमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात् सामानाधिकरण्येनामुख्यस्याभेदस्य लाभ इत्येवाभिप्रायः । अस्ति हि सिद्धश्चैत्र इत्यत्रापि चैत्रे सिद्धत्वेन रूपेणाभेदाभावेऽपि भूतत्वेन तदभेदः । यद्यपि तच्छब्दस्य तत्सदृशेऽर्थे सति तस्य गौणार्थतावच्छेदकेन सादृश्येनैव रूपेण त्वंपदार्थजीवाभेदो मुख्य एव तथापि शक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण नाभेदो मुख्य इति द्रष्टव्यम् ।

ननु लिङ्गबलाल्लक्षणाश्रीयत इति तत्राह ॥ **न हि लिङ्गानीति** ॥ यद्यपि लिङ्गानि मानान्तराविरोधे मुख्यार्थे तात्पर्यबोधकान्येव तथापि प्रकृते मानान्तरविरोधात् मुख्यार्थे तात्पर्यं परेणैवेत्युक्तम् । अमुख्यार्थमध्ये गौणे न तात्पर्यं किन्तु लाक्षणिक एवेत्यत्र तु लिङ्गानि न शक्तानीति भावः ॥ **अन्यार्थत्वात्** ॥ भेदार्थत्वात् । कथमुपक्रमादीनां भेदार्थत्वमत आह ॥ **यथा चैतदिति** ॥ **कथमेवं श्रुतिं व्याख्यातीति** ॥ गौणीवृत्तिमाश्रित्य कथं व्याख्यातीत्यर्थः ॥ **केवलवृत्त्यन्तरस्येति** ॥ रूढियोगौ विना मुख्यवृत्तिसाहित्यं विना केवलया गौणाद्यमुख्यवृत्या कश्चिदर्थो वेदगो न भवेत् इति । अमुख्यवृत्तेर्मुख्यवृत्तिसाहित्यनिषेध एतद्वाक्यर्थ इति भावः ॥ **सा चेति** ॥ सा गौणी वृत्तिश्च परकीयन्यायेन ॥ तत्त्वमसीति पदविभागमभ्युपेत्येत्यर्थः । अत्राद्ये स्वपक्षसाधकोक्तिः । द्वितीये द्वैतश्रुतीनां गतिकथनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

परमात्मगुणसदृशानन्दादिगुणस्वरूपत्वेन **जीवस्येति** ॥ अत्र जीवानन्दादेः परमात्मानन्दादिसादृश्यम् अनुकूलतया वेदनीयत्वनिरुपाधिकप्रियत्वादिना द्रष्टव्यम् । यथोक्तम् 'अन्या नन्दादिसादृश्यमानुकूल्यादिना परमिति' ॥ **यथा खलु सकलजगद्गुणसदृशगुणात्मकत्वेनेति** ॥ 'सर्वभूतगुणैर्युक्तं दैवं त्वां ज्ञातुमर्हसि' इति भारते । 'गामाविश्य च भूतानि धारयाम्यहमोजसा । पुष्णामि चौषधीः सर्वाः सोमो भूत्वा' इत्यादि गीतासु च । पृथिव्यादीनां ये धारकत्वादयो गुणास्तत्सदृशगुणात्मकत्वस्य ब्रह्मण्युक्तेरिति भावः ॥ **परमात्मा जगदिति** ॥ एवं च श्रुतौ ब्रह्मोद्दिश्य सर्वत्वं विधेयमिति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

जीवस्य तद्व्यपदेशो ब्रह्माभेदकथनं तद्गुणसारत्वात् तस्य ब्रह्मणो गुणः आनन्दादिः तत्सदृशगुणः सारः स्वरूपं यस्य तद्गुणसारः तस्य भावस्तत्त्वं तस्मादेव न त्वभेदात् कथं प्राज्ञवत् यथा प्राज्ञः परमात्मा जगद्गुणसदृशस्वरूपत्वेन तदभिन्न उच्यते तथेत्यर्थः । गौण्याऽमुख्यया सादृश्यं निमित्तीकृत्य प्रवृत्ततया ॥ **अन्यत्राभिनिवेशादिति** ॥ आग्रहादन्य इत्यर्थः ॥ **उपजीव्येति** ॥ धर्मिग्राहकत्वेनोपजीव्येत्यर्थः । कथमित्यत आह ॥ **जीवेति** ॥ **नाहं सर्वज्ञ इति** ॥ साक्षिणा जीवस्य 'यः सर्वज्ञः' इति ब्रह्मणश्च विरुद्धधर्माधिकरणतयाऽवगमादिति भावः ॥ **प्रमाणविरोधेति** ॥ तत्त्वंपदमुख्ययोः सार्वज्ञ्यासार्वज्ञ्यविशिष्टयोरैक्यस्य विरुद्धधर्माधिकरणत्वयुक्तिविरुद्धत्वेन तत्त्वं पदयोश्चिन्मात्रलक्षकत्वं मायिनाप्यंगीकृतमित्यर्थः । तदेव व्यनक्ति ॥ **लक्षणावृत्ताविति** ॥ तथा लाक्षणिकार्थत्वेन लोकोत्तरप्रज्ञेन लोकोत्तमज्ञानवतेत्युपहासः देवानांप्रियो मूर्ख इति निपातादलुक्समासः अनभिज्ञ इत्यर्थः । तदेव व्यनक्ति ॥ **न हीति** ॥ लिङ्गतात्पर्यानिर्णय इत्युपक्रमादीनां तात्पर्यमात्रज्ञापकत्वेन शब्दार्थज्ञापकत्वायोगादिति भावः । तर्हि मयापि तात्पर्यज्ञापकत्वमित्युच्यते इति शङ्कते ॥ **लिङ्गबलादिति** ॥ **अन्यार्थत्वादिति** ॥ भेदपरत्वादित्यर्थः । तथा हि शकुनिसूत्रादि दृष्टान्तबलेन 'स आत्मा तत्त्वमसि' इत्यत्रातत्त्वमसीति पदच्छेदेन भेद एवोच्यते न ह्यभेदं प्रतिज्ञाय भेदे दृष्टान्ताभिधानं युक्तम् अत एवैकमेवेत्येतत्समाभ्यधिकराहित्यप्रतिपादनेन भेदपरम् एवमैतदात्म्य-

मित्यपि यथा सौम्येत्यादि च प्राधान्यादिनैकविज्ञानेन सर्वं विज्ञानपरम् एवं चैकमेवाद्वितीयमिति भेदस्योपक्रमादैतदात्म्यमिदं सर्वमिति तस्यैवोपसंहारात् । अतत्त्वमसीति नववारमभ्यासात् शास्त्रं विना शास्त्रगम्येश्वरभेदस्यप्राप्त्यापूर्वत्वात् अथ सम्पत्स्यत इति फलश्रवणात् येनाश्रुतं श्रुतं भवतीत्यर्थवादात् शकुनिसूत्रदृष्टान्तैरुपपादनाच्चेति । अन्यत्र छान्दोग्यभाष्यादौ वदन्कर्मनिर्णये एवं गौणार्थतया ॥ **समन्वयेति** ॥ वैदिकशब्दानां रूढियोगौ विना वृत्त्यन्तरेण भगवत्परत्वनिषेधकं तद्वाक्यमित्यर्थः ॥ **अर्थान्तरेति** ॥ योगस्याप्यावश्यकत्वप्रतिपादनावसर एवेत्यर्थः ॥ **कश्चिदिति विशेषणादिति** ॥ तेनार्थमात्रनिषेधादिति भावः ।

ननु तत्त्वमसीत्यादेर्गौणार्थमात्रप्रतिपादकत्वेन रूढ्यादिनार्थान्तरप्रतिपादकत्वाभावाद्विरोध-स्तदवस्थ एवेत्यत आह ॥ **सा चेति** ॥ सा गौणीवृत्तिश्च परकीयन्यायेन तत्त्वमसीति पदच्छेद-मभिप्रेत्यैव । वस्तुतस्तु शकुनिसूत्रदृष्टान्तानुसारेण स आत्मा अतत्त्वमसि त्वम् अतदसि तद्भिन्नोऽसि इति रूढ्या भेदप्रतिपादकत्वमेवेत्यर्थः ॥ **गौणीवृत्तिरिति** ॥ वेदे योगरूढिरूप-मुख्यवृत्तिरेव वाच्या । गौणीवृत्तिश्चामुख्या । अतस्तामङ्गीकृत्य तया कथमभेदव्यपदेशो व्याख्यायत इति भावः । मुख्यार्थासम्भवमेव दर्शयति ॥ **न हीति** ॥ **नेति** ॥ तथा च ब्रह्मजीव-निष्ठसार्वज्ञाल्पज्ञतादिविरुद्धधर्मयोः मिथ्यात्वात् तत्त्यागेन चिन्मात्रैक्यं युक्तमिति भावः । श्रुति-सिद्धमपि सार्वज्ञादिकं मिथ्याभूतं किं न स्यादित्यत आह ॥ **श्रुतिसिद्धेति** ॥ मिथ्यात्व इत्यनन्तरम् अतत्त्वावेदकत्वेन श्रुतेरप्रामाण्यापत्त्येति शेषः । दूषणान्तरमाह ॥ **कश्चैवंवादिन इति** ॥ श्रुति-सिद्धसार्वज्ञादेर्मिथ्यात्वं वदतस्तवाद्वैतश्रुतिसिद्धाप्यर्थेऽभिमानादन्यत्रान्यो विश्वासहेतुः कः । न कोऽपि । तथा च श्रुतिसिद्धत्वाविशेषात् 'अद्वैतश्रुतिसिद्धोऽप्यर्थो मिथ्या स्यादिति भावः ॥ **जीवेति** ॥ यदि जीवमनूद्येश्वराभेदो बोध्यते, यदि वेश्वरमनूद्य जीवाभेद उभावनूद्यैक्यमात्रं वा तदा सर्वत्रापि जीवेश्वरसिद्ध्या, भाव्यम् । जीवस्तु साक्षिणा दुःखादिविशिष्टत्वेनैव सिद्धः । ईश्वरस्तु 'यः सर्वज्ञः' इत्याद्यागमेन सार्वज्ञादिविशिष्टतया । अतस्तयोः श्रुतिसिद्धसार्वज्ञादि-विरुद्धधर्माधिकरणत्वेन सिद्धभेदयोरद्वैतं बोधयन्ती श्रुतिः कथमुपजीव्यप्रत्यक्षागमविरुद्धा न भवेदिति भावः । श्रुत्याऽद्वैतबोधने प्रत्यक्षागमविरोधो मया नाद्रियत इति चेत्तत्राह ॥ **परेणापीति** ॥ तथा च प्रमाणविरोधस्याकिञ्चित्करत्वे विशिष्टयोरेवाभेदबोधनोपपत्तौ भागत्यागलक्षणया चिन्मात्राभेदो

(वाक्यार्थमञ्जरी)

बोध्यत इत्यङ्गीकारोऽयुक्तः स्यादित्यर्थः । लाक्षणिकार्थापेक्षया गौणार्थग्रहणस्य युक्तत्वमुपपादयति ॥ **लक्षणेति** ॥ **असिपदमात्रमुख्यार्थतेति** ॥ तत्त्वंपदसमभिव्याहृताऽसिपदस्य तत्त्वंपदार्थतावच्छेदकभूतयोर्ब्रह्मत्वजीवत्वयोरेकवस्तुनिष्ठत्वरूपं सामानाधिकरण्यं हि मुख्यार्थस्तथा चाभेदो लक्ष्यत इत्युच्यते त्वया । इदं च सर्वप्रमाणविरुद्धमित्यर्थः ॥ **वरं हीति** ॥ अत्र ही त्युक्त्या बहुबाधस्यान्याय्यत्वात् 'त्यजेदेकं कुलस्यार्थे' इति न्यायादिति सूचयति ॥ **प्रमाणेति** ॥ उपजीव्यप्रत्यक्षागमेत्यर्थः ॥ **अमुख्यार्थता** ॥ लाक्षणिकार्थता ॥ **अभ्युपगम्यते** ॥ श्रुतिव्याख्यानकर्तृभिरस्माभिर्नाभ्युपगम्यत इत्यर्थः ॥ **येनेति** ॥ यद्यस्माभिरभ्युगम्येतेत्यर्थः ॥ अङ्गीकार्यः स्यात् ॥ लाक्षणिकार्थापेक्षया गौणार्थग्रहणस्य वरत्वेनेति शेषः ॥ **श्रुतेरेव तथेति** ॥ लक्षणयाऽयममुख्योऽर्थस्तत्त्वमस्यादिश्रुतेरेवाभिप्रेतोऽस्ति । स मया व्याख्यानेन प्रकटीक्रियतेऽतो न ममाकौशलमित्यर्थः । उपक्रमादिषड्विधतात्पर्यलिङ्गानामभेदे तात्पर्यसत्त्वात् तैः श्रुत्यभिप्रायो विज्ञायत इति चेत्तत्राह ॥ **तात्पर्यलिङ्गैरिति** ॥ देवानांप्रिय इति च मूर्खे । मूर्खत्वमेवोपपादयति ॥ **न हीति** ॥ 'लिङ्गं तात्पर्यनिर्णय' इति प्रमाणेन अस्य वाक्यस्यास्मिन्नर्थे तात्पर्यमस्तीत्येवं श्रुतितात्पर्यविषयीभूतार्थावबोधकत्वेन प्रसिद्धान्युपक्रमादिलिङ्गानि वेदस्यायं मुख्यार्थो न, किन्तु लाक्षणिक एवार्थ इति मुख्यार्थपरित्यागेन लाक्षणिकार्थग्रहणे कारणानीति न हि युक्तमित्यर्थः । तथा निश्चये चादावुपक्रमादिभिरेकस्मिन्नर्थे श्रुतितात्पर्ये सिद्धे तात्पर्यविषयीभूतोऽर्थः किं मुख्यवृत्त्या लभ्यते, उत लक्षणावृत्त्येतिविचारः पश्चाद्व्याख्यातृभिरेव कर्तव्य इति तव मूर्खत्वमिति भावः ।

ननु न मम देवानांप्रियत्वं भवदुक्तप्रकारस्यैवाश्रयणादित्याशङ्कते ॥ **लिङ्गेति** ॥ उपक्रमादित्यर्थः ॥ **सिद्धे** ॥ तत्त्वमस्यादिवाक्यस्य ॥ **प्रमाणेति** ॥ जीवस्य परमात्मगुणसदृशगुणवत्त्वरूपगौणार्थाङ्गीकारे परमात्मनो निर्गुणत्वप्रतिपादक 'नेहनाना' इत्यादिप्रमाणविरोध आयातीति न गौणार्थोऽङ्गीक्रियत इत्यर्थः ॥ **अन्यार्थत्वात्** ॥ द्वैतपरत्वात् । तथा च द्वैते तात्पर्ये सिद्धे इत्युक्तमयुक्तमिति भावः । कथमुपक्रमादीनामन्यार्थत्वमित्यत आह ॥ **यथा चैतदिति** ॥ अन्यत्र छान्दोग्यभाष्यादौ । इदं वक्ष्यमाणं दूषणम् ॥ **वदन्निति** ॥ कर्मनिर्णय इति शेषः ॥ एवम् ॥ गौणीवृत्त्या । तथा च स्ववचनविरोध इति भावः ॥ **परमात्मसमन्वयेति** ॥ सर्ववेदानां भगवति समन्वये निरूपणीये रूढियोगौ विना कश्चिदमुख्यो गौणाद्यर्थः समन्वयविषयवेदगो न भवेदित्येवं

(वाक्यार्थमञ्जरी)

तद्वाक्यम् । प्रकृते च तत्त्वमसीत्यत्र समन्वयानुक्तेर्गौणार्थ आश्रीयत इति न विरोध इति भावः ॥ **अर्थान्तरप्रस्ताव एवेति** ॥ एवं हीदं वाक्यं टीकाकारैर्विवृतम् । तथापि श्रुत्यैकस्य शब्दस्यानेकार्थत्वं न सिद्ध्यति । वासनादिनिमित्तेन हरेर्वासुदेवादिशब्दवाच्यत्वे देवदत्तादेरपि तत् स्यात् । ततो रूढिराश्रयणीया । बलवती च रूढिर्दुर्बलं योगमपहरतीत्यङ्गीकृत्य योगेन प्राप्ताऽति-प्रसक्तिः परिहरणीया । ततश्चाखण्डवृत्तेरेकस्या एवाश्रणीयत्वात् कुतोऽनकार्थतेत्याशङ्कां ब्रह्मतर्कवाक्येन परिहरति ॥ **रूढीति** ॥

इत्येवं समन्वयव्यतिरिक्तार्थान्तरप्रसङ्ग एवास्य वाक्यस्योदाहर्तव्यत्वेन समन्वयप्रसङ्गा-भावान्नैतद्वाक्यस्य तद्विषयत्वमित्यर्थः । ननु रूढियोगौ विनेति वाक्ये गौण्यादिवृत्ति-व्यावर्तकावधारणादेरभावेन रूढियोगौ विना गौणीवृत्तिं च विनाऽन्यार्थो वेदगो न भवेदित्यर्थः किं न स्यादित्यत आह ॥ **कश्चिदितीति** ॥ रूढियोगाख्यमुख्यवृत्तेरन्यः कश्चिदित्यनेन निषिद्धत्वान्नैवं व्याख्यानं युक्तमिति भावः ॥ **रूढियोगौ** ॥ समुचितौ । **केवलवृत्त्यन्तरस्येति** ॥ तथा च रूढियोगौ विना रूढिसहितयोगं योगसहितरूढिं च विना कश्चित्केवलरूढः केवलयौगिको वाऽर्थो वेदगो न भवेदिति यथा प्रमाणस्यार्थस्तद्वदेव रूढियोगौ विना रूढिसहितगौणीं योगसहितां च गौणीं वृत्तिं विना कश्चिद्योगरूढिरूपमुख्यवृत्त्यसहितकेवलगौणाद्यर्थो वेदगो न भवेत् । तत्सहितस्तु भवेदेवेत्येवमप्यस्य प्रमाणस्यार्थोऽभिप्रेतः । प्रकृते च तदुभयसहितगौणीवृत्तिरेवोच्यत इति न विरोध इति भावः ॥ **सा चेति** ॥ तत्त्वमसीति वाक्यं योगरूढिगौणीवृत्तिभिः व्याख्येय-मित्युक्तम् । तत्र गौणीवृत्त्या व्याख्येयमिति यदुक्तं तत्परकीयन्यायेनैव । यथा हि परः तत् त्वं असीति पदविभागमङ्गीकृत्य लाक्षणिकार्थं यथा वक्ति तथा वयमपि तथैव पदविभागमङ्गीकृत्य गौणार्थं वदामः । तदपेक्षयाऽस्य वरत्वादिति परन्यायेनेति द्रष्टव्यम् । वस्तुतो योगरूढिभ्यामेव श्रुतिर्व्याख्यायते । तत्र तत् त्वम् असीति पदानां नामानि सर्वाणीति न्यायेन 'अहेयत्वादहंनामा त्वं चासौ प्रतियोगितः । अस्मि नित्यास्तितामनात्' इत्यादिप्रमाणानुसारेण महायोगवृत्त्या भगवत्परत्वं प्रसिद्धम् । रूढेरर्थः कथं तत्त्वमस्यादिवाक्यस्येत्यतस्तं दर्शयति ॥ **अस्ति हीति** ॥ **अतत्त्वमसी-त्यादिरूप इति** ॥ तथा च 'स आत्मा अतत् त्वं असि इत्यकारप्रश्लेषेण पदं विच्छिद्य त्वम् अतस्तस्मादन्यद्वस्त्वसीत्येवं रूपो रूढोऽर्थः प्रसिद्धोऽस्ति हीत्यर्थः ।

॥ इति पृथगुपदेशाधिकरणम् ॥

## १५. अथ यावदधिकरणम्

### सूत्रभाष्यम्

जीवस्याप्युत्पत्तिरुक्ता । अतस्तस्य 'सोऽनादिना पुण्येन पापेन चानुबद्धः ।

परेण निर्मुक्त आनन्त्याय कल्प्यत' इत्यनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इत्यत आह–

**॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ ३० ॥**

यावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपि ।

'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः ।
अत उत्पद्यते च म्रियते च विमुच्यते चे' ॥ इति च आग्निवेश्यश्रुतिः ।

'आत्मा नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो धातुरस्य त्वनित्य' इति च भारते।

॥ इति यावदधिकरणम् ॥

### तत्त्वप्रदीपिका

यद्यपि 'ज्ञोऽत एव' इति सूत्रे जीवस्य स्वरूपनित्यत्वमर्थतो लभ्यते । उपाध्यपेक्षयेति भाष्यवचनात् । तथाऽपि मुखतोऽनुक्तेरुत्पत्त्युक्तेश्च पुनरारम्भः । श्रुत्यन्तरोपसंग्रहार्थश्च । उपाधे-रागमापायित्वेऽपि जीवस्य यावदात्मभावित्वात्तत्प्रयुक्तः कर्मसम्बन्धो युज्यते । बन्धककर्मनिर्मोके च तन्निमित्तोपाध्यपेक्षयोत्पत्तिविनाशाभावादानन्त्याप्तिश्च युज्यते ।

### तत्त्वप्रकाशिका

अत्रेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवनित्यत्वविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । श्रुतिसमन्वयो हरावुक्तः । श्रुतेर्जीवनित्यत्वविषयायाः श्रुत्यन्तरविरोधेनाप्रामाण्ये तदनुपपत्ति-प्रसङ्गात्परिहर्तव्यमेतत् । प्रकृतो जीव एवात्र विषयः नित्योऽनित्यो वेति सन्देहः । 'ब्रह्मालय-

(तत्त्वप्रकाशिका)

मभ्युपैति' 'आनन्त्याय कल्पत' इति श्रुतिविरोधः सन्देहबीजम् । तत्र सफलं पूर्वपक्षयति ॥ **जीवस्यापीति ॥** अनित्य एव जीवः । अनित्यत्वश्रुतेः । न च वक्तव्यं 'सोऽनादिना' इति श्रुतिर्जीवनित्यत्वेऽप्यस्ति । अत्र जीवस्यानादिकर्मसम्बन्धानन्त्यप्राप्त्योरुक्तत्वादिति । अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ता खलु जीवस्योत्पत्तिः 'ज्ञोऽत एव' इति । उत्पत्तिमतश्चानित्यत्वं नियतमेव । घटादौ दृष्टत्वात् । न च वक्तव्यं तत्रोत्पत्तिरुपाधेरेवोक्ता न तु जीवस्यातः कथं तस्यानित्यत्वमपीति । उपाधेरुत्पत्तिमत्त्वे प्रतिबिम्बस्योत्पत्तिनियमात् । न हि दृष्टमुपाधेरुत्पत्तिमत्त्वेऽपि प्रतिबिम्बस्यानादित्वम् । अतोऽस्त्येव जीवस्योत्पत्तिर्विनाशश्च । अतः सयुक्तिक श्रुतिविरोधात्तस्यानादिकर्मसम्बन्धाद्ययुक्तेस्तदभिधायकश्रुतेरप्रमाणत्वादयुक्तो ब्रह्मणि श्रुतिसमन्वय इति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** नित्य एव जीवः । प्रतिबिम्बस्य बिम्बोपाधितत्सन्निधिनाशं विना नाशानुपपत्तेः । बिम्बस्य परमात्मनोऽनाद्यनन्तत्वात् । उपाधेश्च यावत्परमात्मभावित्वात् । सर्वगतबिम्बस्योपाधिसन्निधेश्च नित्यत्वात् । अतो जीवस्यानाद्यनन्तत्वान्नानादिकर्मसम्बन्धाद्यनुपपत्त्यप्रमाणता च श्रुतेर्भवति । न चानित्यत्व-श्रुतिविरोधः । तस्या उपाधिविषयत्वात् । न चोपाधेरनित्यत्वे पुनर्जीवस्यानित्यत्वापत्तिरिति वाच्यम् । न हि येनोपाधिना जीवः प्रतिबिम्बस्तस्यैवोत्पत्तिविनाशौ ब्रूमोऽपि तु धात्वादिपदोदित (पदोदितात्) बाह्योपाधेरेव । कुत एतदखिलमिति चेत् नित्यः परः इति श्रुतेः स्मृतिवचनद्वयाच्चेति भावः । उक्तं चैतदन्यत्र । 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे तु प्रतिबिम्बः कथं भवेत् । कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् इति । तथा 'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् इति । अतः श्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धेर्युक्तो हरौ वेदानां समन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

ज्योतिर्मयस्य जीवस्य स्वरूपभूतचिद्रूपस्थूलप्रभामण्डलस्य मध्येऽणोर्जीवस्य दर्पणाख्योपाधौ प्रतिमुखस्येव सदा स्थितत्वान्नोपाधिनाशो न वा प्रतिबिम्बनाश इति भावेनोक्तं **उपाधेश्चैव नित्यत्वादिति** ॥ इयांस्तु विशेषः प्रतिबिम्बभूतजीवस्यैवान्तर्बिम्बभूतो हरिस्तिष्ठति । न तु प्रतिमुखस्य मुखमिव बहिः । कुत एतत् । तत्सदृशत्वे सति तदधीनत्वमेव जीवस्य प्रतिबिम्बत्वम् ।

(गुर्वर्थदीपिका)

न तु लौकिकप्रतिबिम्बस्येव सर्वसाम्येनापीति । ननु 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इति सूत्रकृता जीवस्य नित्यत्वं कुतः समर्थ्यते । उत्पत्त्यनङ्गीकारे 'प्रतिज्ञाहानिरव्यतिरेकात्' इत्यत्रोक्त 'सर्वमसृजते' इति प्रतिज्ञाहानिवज्जीवस्य नित्यत्वाङ्गीकारेऽपि 'सर्वं वा अत्ति' इति प्रतिज्ञाहानेस्साम्यादिति चेत्सत्यम् । 'ज्ञोऽत एव' इत्यत्रोत्पत्तिमात्रकथनेन सूत्रकृता जीव-स्वरूपानादित्वस्याप्रस्तावितत्वादत्र जीवस्वरूपनित्यत्वकथनेन तत्रानादित्वमपि सूचयति सूत्रकारः । तदधिकरणो'क्तोत्पत्ति' इत्यत्रापि देहाख्योपाधिनाशादिना नाशस्साम्येन सिद्ध्येदेव । एवं चेदमधिकरणद्वयमन्योन्योपकारेण जीवस्यानादिनित्यतामुपाध्युपगमापगमाभ्यामुत्पत्तिविनाशौ च साधयितुं प्रवृत्तमिति भावस्सूत्रकारस्य ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृतो जीव इति** ॥ पूर्वाधिकरणे उपदेशादिति सूत्रोपात्तबन्धान्मोक्षं तत एवाभिवाञ्छेदिति श्रुत्युक्तब्रह्माधीनबन्धमोक्षवत्त्वेन प्रकृत इत्यर्थः । तथा च जीवस्यानित्यत्वान्न प्रागुक्तमोक्षो युज्यत इत्याक्षेपादनन्तरसङ्गतिरिति भावः । **नित्य इति** ॥ अत्र जीवः किं नित्य उतानित्य इति चिन्ता । तदर्थं जीवनित्यत्वश्रुतिरुत्पत्तिमत्त्वरूपयुक्त्यनु-गृहीतयाऽनित्यत्वश्रुत्या बाधितोत नेति । तदर्थं श्रुत्युक्तोत्पत्तिविनाशौ किं जीवस्वरूपस्योत तदुपाधेरेवेति । तदर्थं तदुपाधेरेवोत्पत्तिनाशावित्यङ्गीकारेऽपि जीवस्याप्यनित्यत्वादिकं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं जीवस्येश्वरप्रतिबिम्बत्वघटकोपाधिः किं बाह्यदेहादिरेवोत जीवस्वरूपमेवेति । तदर्थमुपाधिद्वैविध्यादौ प्रमाणं नास्त्युतास्तीति ॥ **सफलमिति** ॥ 'न दोष' इति सूत्रांश-निरसनीयतया अनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इति भाष्ये उक्तत्वादिति भावः ॥ **सयुक्तिकत्वेनेति** ॥ उत्पत्तिमत्त्वात् विनाशित्वं जीवस्येति न्यायविवरणोक्तयुक्तिसहितत्वेनेत्यर्थः । जीवस्यापि उत्पत्तिरुक्तेति भाष्यानुसारेण पक्षधर्मतामाह– **उक्ता खल्विति** ॥ सूत्रे 'नित्यत्वाच्च न दोषः' इत्येव कृते उपाधिनाशप्रयुक्तनाशाभावलाभेऽपि बिम्बोपाधिनाशप्रयुक्तप्रतिबिम्बनाशा-भावस्यालाभात् त्रितयनाशप्रयुक्तनाशाभावप्रतिपादनार्थं यावदात्मभावित्वादित्युक्तमित्यभिप्रेत्य प्रवृत्तयावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपीति भाष्यस्याभिप्रायमाह– **प्रतिबिम्ब-स्येत्यादिना** ॥ सौत्रात्मशब्दाभिप्रायमाह– **सर्वगतेति** ॥ नानादिकर्मसम्बन्धाद्यनुपपत्त्येति । 'न

(भावबोधः)

दोषः' इति सूत्रांशव्याख्यानपरेणानेन नित्यत्वे तदभीष्टमोक्षाद्यसिद्धेरिति न्यायविवरणमप्युक्त-तात्पर्यकम् ॥ **अपि तु धात्वादीति** ॥ अनेन हि पराधीनविशेषवत्त्वमात्रेण विनाशित्वमिति न्यायविवरणमप्युक्ततात्पर्यकं भवति । तद्गतमात्रपदाभिप्रायस्तु न हि येनेत्यनेनोक्त इति ज्ञातव्यम् । 'नित्यः परः' इति श्रुतेरित्यनेन तादृशानामेव नित्यत्वश्रुतेरिति न्यायविवरणमप्युक्तार्थम् । आत्मा नित्यः जीवोऽनित्य इति पदद्वयस्य भिन्नस्थानगतत्वान्न पुनरुक्तिरिति भावेनाह– **स्मृतिवचन-द्वयाचेति** ॥ अनेन सूत्रे 'तद्दर्शनाच्च' इति सम्बन्धे स्मृतिसमुच्चायक'श्च'शब्द इत्युक्तं भवति । भाष्योदाहृतश्रुतिस्मृतिभ्यां जीवस्वरूपस्य नित्यत्वं बाह्यदेहस्यानित्यत्वमित्येवोच्यते, न तु स्वरूपस्यैव । प्रतिबिम्बत्व घटकत्वम्, न बाह्योपाधेरित्येतदुक्तम् । तथा च कथं ताभ्यामुक्ता-खिलार्थप्रतिपत्तिरित्यतः स्वयमुक्ताशेषार्थप्रतिपादकं प्रमाणान्तरमाह– **उक्तं चैतदिति** ॥

## भावदीपः

भाष्येऽनुक्तमपि प्रकरणबलाच्छ्रुतिविगानं सन्देहबीजमाह ॥ **ब्रह्मन्निति** ॥ ब्रह्मणीत्यर्थः । अन्यत्राभावाच्चेत्यत्र भाष्योक्ता श्रुतिः । आनन्त्यायेति त्वत्र भाष्योक्ता ॥ **अनादिकर्मेति** ॥ उत्पत्तिविनाशवतस्तदयोगादिति भावः । उत्पत्त्युक्तावनादिपुण्यादिसम्बन्धायोगेऽपि आनन्त्यायोगः किमर्थमुक्तो भाष्ये इत्यतः उत्पत्तिमत्त्वाद्विनाशित्वं जीवस्येत्यन्यत्रोक्त्यनुरोधेन जीवस्यापीति वाक्यमुभयत्र युक्तिसूचकत्वेन व्याचष्टे ॥ **उक्तखल्विति** ॥ तथा चोत्पत्तिमत्त्वं नासिद्धमिति भावः । प्रकारान्तरेणासिद्धिमाशङ्क्य निराह ॥ **न च वक्तव्यमिति** ॥ **प्रतिबिम्बस्येति** ॥ जीवस्य प्रतिबिम्बत्वं चाभास एवेत्यादावग्रे व्यक्तमिति भावः ॥ **अत इति** ॥ उपाध्युत्पत्तौ प्रतिबिम्बोत्पत्ति-नियमाज्जीवोपाधेश्चोत्पत्तिमत्त्वादुत्पत्तिमतश्च विनाशनियमाच्चेत्यर्थः । एवं जीवस्याप्युत्पत्तिरुक्तेति भाष्यं व्याख्यायेदानीम् अत इति पदमनूद्यार्थमाह ॥ **अतः सयुक्तिकश्रुतीति** ॥ एतेनोक्तेत्यस्यात्मनो व्युच्चरन्ति ब्रह्मँल्लयमित्यादि श्रुतावुक्तेत्यप्यर्थो दर्शितः । तेन युक्तिविरोधमात्रेण श्रुतेरप्रामाण्यं कथमभिप्रेतमिति निरस्तम् । भाष्योक्तस्यावान्तरफलत्वं दर्शयन् तस्यापि नान्तरीयक-फलं वदन् महाफलमाह ॥ **तस्यानादीत्यादिना** ॥ आदिपदेनानन्त्यग्रहः । एतेन जीवस्यानित्यत्वे तदभीष्टमोक्षाद्यसिद्धेरित्यन्यत्रोक्तिरपि व्याख्याता । अन्यथा उक्तेऽर्थे अविरोधं दर्शयत्यनेनाध्याये-नेति भाष्यविरोध इति भावः । एवं जीवोऽपीति भाष्यमेवं शब्दार्थं वदन् व्याचष्टे ॥ **नित्य एव**

(भावदीपः)

**जीव** इति ॥ न विनाशीत्येवंशब्दार्थः । तत्र स्वयं हेतुमाह ॥ **प्रतिबिम्बस्येति** ॥ तदुपपादकत्वेन यावदित्यादिभाष्यार्थमाह ॥ **बिम्बस्येति** ॥ असम्भवस्तु नात्माश्रुतेरित्याभ्यां सिद्धत्वात्सोऽनुत्पत्तिलय इत्यणुभाष्योक्तेरिति भावः । भाष्यस्थस्य सौत्रचशब्दव्याख्यानपरस्य जीवोऽपीत्यपि पदस्योपाधितत्सन्निध्योस्समुच्चायकत्वमर्थ इति भावेन तत्तात्पर्यमाह ॥ **उपाधेश्चेति** ॥ यावदात्मभावित्वादित्युपाधिनित्यत्वाभिधानाच्चेति द्वितीये गीताभाष्योक्तेरिति भावः । एतेन सौत्रश्चशब्दोऽनुक्तसमुच्चय इति सूचितम् । सौत्रात्मपदलब्धोक्तिः **सर्वगतेति** ॥ यच्चाप्नोतीत्यादिस्मृतेः । यावदात्मभावित्वादित्यस्य भावार्थः **नित्यत्वादिति** ॥ इदानीं ज्ञोऽत इत्यतः षष्ठ्यन्ततया ज्ञशब्दमनुवर्त्य यावदात्मभावित्वाच्चेत्येतदंशार्थं हेतुत्वेनानुवदन् यावदात्मभावित्वान्न दोष इति सूत्रखण्डस्यार्थमाह ॥ **अत इति** ॥ उपाधितत्सन्निध्योर्नित्यत्वादित्यर्थः । यावदात्मभावित्वादित्यस्य तात्पर्यमनाद्यनन्तत्वादिति । तद्दर्शनादिति सौत्रांशोपात्तश्रुतावनित्यास्तस्य धातव इत्यंशस्य कृत्यमाह ॥ **न चानित्यत्वश्रुतीत्यादिना** ॥ ब्रह्मँल्लयमभ्युपैतीति श्रुतीत्यर्थः । अनित्यस्तस्योपाधिरित्यनुक्त्वा धातुपदप्रयोगतात्पर्यं वक्तुमाह ॥ **न चोपाधेरिति** ॥ न च पराधीनविशेषवत्त्वमात्रेण विनाशित्वमित्यन्यत्रोक्त्यनुरोधेन तात्पर्यमाह ॥ **न हि येनेति** ॥ तादृशानामेव नित्यत्वश्रुतिविरोधादित्यन्यत्रोक्त्यनुरोधेन भाष्यमवतारयति ॥ **कुत एतदखिलमिति** ॥ बिम्बस्य परमात्मनः प्रतिबिम्बस्य जीवस्य तदुपाधेर्बिम्बोपाधिसन्निधेश्च नित्यत्वम् । बाह्योपाधेरनित्यत्व मित्येतदखिलमित्यर्थः । धातवोऽनित्या इत्यनेन नित्योपाधेरधातुभूतनित्योपाधेश्च लाभात् । जीवनित्यत्वोक्त्या सन्निधिनित्यत्वलाभाच्चेति भावः । आत्मा नित्यः, जीवो नित्य इति पादद्वयं भारते भिन्नस्थानस्थं वाक्यद्वयं ततो न भारते पुनरुक्तिरित्याह ॥ **स्मृतिवचनद्वयाच्चेति** ॥ उपाधिद्वैविध्यादिकं भाष्ये स्पष्टं कुतो नोक्तमित्यत आह ॥ **उक्तं चेति** ॥ अन्यत्र चतुर्थस्कन्धतात्पर्ये एकविंशेऽध्याये ॥ **तथेति** ॥ प्रथमस्कन्धतात्पर्ये त्रयोदशेऽध्याये ननु आभास एव चेत्यत्र सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीव ईशस्यानुपाधिः 'इन्द्रचापो यथा रवेः' इत्युक्तिविरोधः । तत्र निरूपाधिप्रतिबिम्बत्वस्य वक्ष्यमाणत्वादित्येतदप्यनेनैव निरस्तम् । तस्य भिन्नोपाधिराहित्यपरत्वोपपत्तेरिति ॥ **अत इति** ॥ बिम्बोपाधितत्सन्निधीनां नित्यत्वाज्जीवानित्यत्वश्रुतेर्बाह्योपाधिविषयत्वादित्यर्थः ।

# अभिनवचन्द्रिका

ननु 'सोऽनादिना' इति श्रुतिः । अनादिकर्मसम्बन्धे तात्पर्यवत्त्वात् तत्रैव प्रमाणं न तु नित्यत्व इत्यत आह – **अत्र जीवस्येति** ।। श्रुत्युक्तानादिकर्मसम्बन्धाऽऽनन्त्योक्त्यन्यथानुपपत्त्या जीवनित्यत्वसिद्धेर्जीवनित्यत्वे श्रुतिर्मानमिति भावः ।। **अनित्यत्वश्रुतेरिति** ।। अनित्यत्वसाधकश्रुतेः साक्षादनित्यत्वसंस्पर्शो न युक्त्या सह एकार्थप्रतिपादकत्वात् प्राबल्यम् । अनादिकर्मसम्बन्धाभिधायकश्रुतेस्तु साक्षान्नित्यत्वसंस्पर्शाभावेन तदभावाद्दौर्बल्यमिति भावः ।। **प्रतिबिम्बस्येति** ।। यद्यपि जीवो न ईश्वरस्य प्रतिबिम्बः, तदभिधात्री श्रुतिरपि माणवके सिंहशब्दवत् गौणी, तथापि आदर्शे प्रतिबिम्बवत् जीवोऽपि ईश्वरप्रतिबिम्ब इति मन्वानस्याऽयं पूर्वपक्ष इति बोध्यम् ।। **प्रतिबिम्बस्येति** ।। यद्यपि जीवस्य यावत्परमात्मा विद्यते तावत्कालभावित्वात् अनादिकाले संबन्धस्यापि सत्त्वात् न श्रुत्यप्रामाण्यलक्षणो दोषः श्रुत्यादौ तद्दर्शनादिति भाष्याशयो वर्णनीयः । जीवस्य तदधीनत्वे सति तत्सदृशत्वरूपगौणप्रतिबिम्बत्वेन दर्पणाद्युपाधिगतमुखादिप्रतिबिम्बवत् मुख्यप्रतिबिम्बत्वाभावात् । 'तदधीनत्वतत्सदृशत्वमात्रेण एषाश्चिदात्मनां रूपं स्वरूपम्, अस्माभिराभास इत्युक्तम्, सूर्यकाद्युपमा च तावन्मात्रेणोपात्ता' इति सुधोक्तेः, तथापि टीकाकृता अङ्गीकारवादेन प्रवृत्तं 'न ह्युपाधिबिम्बसान्निध्यनाशे प्रतिबिम्बनाशः' इत्यादिगीताभाष्यमनुसृत्य भाष्याशयो वर्णित इति बोध्यम् ।। **सर्वगतबिम्बस्येति** ।।

ननु 'हृदयस्था हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बक' इति वचनात् सर्वगतोपास्त्यनधिकारिणां बिम्बोपासनाभावेन मोक्षाभावप्रसंगाच्च परिच्छिन्नमूर्तिविशेषस्यैव बिम्बत्वं न सर्वगतस्य बिम्बत्वं, तत्कथमुच्यते सर्वगतबिम्बस्य उपाधिसन्निधेश्च नित्यत्वादिति चेत्, सत्यमस्त्येव मूर्तिविशेषस्य बिम्बत्वम्, तथापि परिच्छिन्नस्यापि मूर्तिविशेषस्य सर्वगतत्वात् तस्याऽन्यत्रगमनप्रयुक्तसान्निध्यनाशो न मन्तव्य इत्यभिप्रायेण तथोक्तम् ।। **बाह्योपाधेरेवेति** ।। देहस्योपाधित्वं न प्रतिबिम्बोपादानत्वम्, अपि तु घटमठादीनामाकाशावच्छेदकत्वरूपोपाधित्वमिव देहस्यापि जीवावच्छेदकत्वमेवोपाधित्वमिति बोध्यम् । एतेन यदि बाह्यदेहस्योपाधित्वं तर्हि तन्नाशे जीवनाशो भवेदेव । उपादाननाशे उपादेयस्थित्ययोगात् । अथ न जीवरूपप्रतिबिम्बोपादानत्वं तर्हि बाह्यदेहस्योपाधित्वमिति रिक्तं वचः स्यादिति परास्तम् । 'आत्मा नित्यः सुखदुखे त्वनित्ये' इत्येका । जीवो नित्य इत्यपरेति भावेनाह – **स्मृतिद्वयेति** ।। **सर्वोपाधिविनाशे त्विति** ।। स्वरूपभूतोपाधेरपि

(अभिनवचन्द्रिका)

विनाशे 'आसौ वा आदित्यो देवमधु' (छा.३-१-१) इत्यादौ मधुत्वेनोपदिष्टाऽऽदित्य-वत्प्रतिबिम्बत्वकल्पनोपदिष्टो जीवः कथमविनाशी भवेत् । तदत्यन्ताऽभिन्नस्य देहस्य विनष्टत्वादित्येवाशयः । ननु जीवस्य वस्तुतः प्रतिबिम्बत्वात् उपाधिनाशे तदवस्थानायोग इत्याशयः कुत इति चेत् जीवस्य प्रतिबिम्बत्वाभावात् । तथा हि यदि जीवो दर्पणप्रतिबिम्बवत् ईश्वरप्रतिबिम्बः स्यात् तर्हि लक्ष्मीनारायणयोरवियोगात् तत्रैव लक्ष्मीप्रतिबिम्बोऽपि अपरो जीवः स्यात् । उपाधेः सन्निकृष्टयावत्प्रतिफलनहेतुतास्वाभाव्यात् । ततश्च विरुद्धदिक्क्रियं शरीरमुन्मथ्येत ॥ **उपाधेश्चैव नित्यत्वादिति** ॥ तदत्यन्ताऽभिन्नोपाधिनाशस्यैव जीवनाशत्वेन तदभावे जीवनाशाऽभिधानं व्याहतमिति भावः ।

पूर्वपक्षस्तु – अनित्य एव जीवः । 'ब्रह्मन् लयमभ्युपैति' इत्यनित्यत्वश्रुतेः । न च 'सोऽनादिना' इति श्रुतिर्जीवनित्यत्वेऽप्यस्तीति वाच्यम् । अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ता खलु जीवस्योत्पत्तिः 'ज्ञोऽत एव' इति । ततश्च जीवो विनाशी भावत्वे सति उत्पत्ति-मत्त्वात्' इत्यनुमानसद्भावात् । न च वक्तव्यं तत्रोपाधेरेवोत्पत्तिरुक्ता, न तु जीवस्येति उपाधेरुत्पत्ति-मत्त्वाद्विनाशे प्रतिबिम्बनाशस्यावर्जनीयत्वात् । अतः सयुक्तिकश्रुतिविरोधात् तस्याऽनादिकर्म-सम्बन्धाद्ययुक्तेः तदभिधायकश्रुतेरप्रामाण्यात् अयुक्तो ब्रह्मणि श्रुतिसमन्वय इति ।

सिद्धान्तस्तु – नित्य एव जीवः । 'नित्यः पर' इति श्रुतौ आत्मवत् जीवस्यापि नित्यत्वाऽभिधानात् । तथा 'आत्मा नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो धातुरस्य त्वनित्यः' इति स्मृतिद्वये च जीवस्य नित्यत्वमुक्त्वा तच्छरीरादेरनित्यत्वाऽभिधानात् । न च उपाधिनाशे प्रतिबिम्बस्य जीवस्य विनाशो दुष्परिहर इति वाच्यम् । जीवस्याऽप्रतिबिम्बत्वात् । न च 'रूपंरूपम्' इति श्रुतिर्जीवस्य प्रतिबिम्बत्वमावेदयतीति वाच्यम् । तस्याः श्रुतेः तदधीनत्वे सति तत्सदृशत्वरूपगौणप्रतिबिम्बत्वपरत्वेन मुख्यप्रतिबिम्बत्वानावेदकत्वात् । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा जीवोपाधौ परमेश्वरप्रतिबिम्बवत् तदविनाभूताया महालक्ष्म्या अपि प्रतिबिम्ब-सम्भवेन जीवद्वयापत्त्या विरुद्धदिक्क्रियं शरीमुन्मथ्येत । न च एकस्मिन्नुपाधौ एकस्यैव प्रतिबिम्बो नाऽन्यस्येति सम्भवति दर्पणादावपि तथा प्रसङ्गात् । अपि च प्रतिबिम्बस्य उपाध्येकदेश-वृत्तित्वनियमेन जीवस्य चिच्छरीरैकदेशवृत्तित्वं प्राप्नोति । किञ्च बाह्यशरीरे प्रतिबिम्बो भवति,

(अभिनवचन्द्रिका)

न वा आद्ये बाह्यशरीरनाशे जीवनाशो दुष्परिहरः । द्वितीये 'जीवोपाधिर्द्विधा प्रोक्तः' इत्यादौ तस्योपाधित्ववचनमयुक्तमेवापतति । अथ तस्योपाधित्ववचनं गौणं तर्हि चिच्छरीरस्यापि तद्वचनं गौणमस्तु अर्धजरतीयानुपपत्तेः । अस्तु वा जीवस्य प्रतिबिम्बत्वं तथापि बिम्बोपाधितत्सन्निधीनां नित्यत्वेन न जीवनाशो भवति कारणाभावात् । उपाध्यनित्यतावचनानि बाह्योपधिविषयाणि । अतः श्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धेः युक्तो हरौ वेदानां समन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रकृत इति ॥ उपदेशादिति ॥** पूर्वाधिकरणसूत्रखण्डोपात्ते 'बन्धान्मोक्षं तत एवाभिवाञ्छेत्' इति वाक्ये ब्रह्माधीनबन्धमोक्षवत्वेन प्रकृत इत्यर्थः । तथा च जीवस्यानित्यत्वान्न प्रागुक्तो मोक्षो युज्यत इत्याक्षेपादनन्तरसङ्गतिरिति भावः ॥ **नित्य इति ॥** अत्र जीवः किं नित्य उतानित्य इति चिन्ता । तदर्थं श्रुत्युक्तोत्पत्तिविनाशो किं जीवस्वरूपस्य तदुपाधेरेवेति । तदर्थं तदुपाधेरेवोत्पत्ति-विनाशावित्यङ्गीकारेऽपि जीवस्याप्यनित्यत्वादिकं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं जीवस्येश्वर-प्रतिबिम्बत्वघटक उपाधिः किं बाह्यो देहादिरुत जीवस्वरूपमेवेति । सफलमिति न दोष इति सूत्रांशनिरसनीयतया अनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इति भाष्ये उक्तत्वादिति भावः ॥ **अत्र जीवस्येति ॥** श्रुत्युक्तानादिकर्मसम्बन्धानन्त्योक्त्यन्यथानुपपत्या जीवनित्यत्वसिद्धेः श्रुतिर्जीवनित्यत्वे मानमिति भावः । उत्पत्तिमत्त्वमित्युक्तपूर्वपक्षन्यायप्रदर्शनपरं जीवस्याप्युत्पत्तिरिति भाष्यं व्याचष्टे अनित्यत्वश्रुतेः **सयुक्तिकत्वेनेति ॥** अनित्यत्वसाधिकाया ब्रह्मलयमिति श्रुतेः साक्षादनित्यत्वसंस्पर्शेन युक्त्या सहैकार्थप्रतिपादकत्वात्प्राबल्यम् । सोऽनादिनेति श्रुतेः साक्षान्नित्यत्वसंस्पर्शाभावेन युक्तिमात्रत्वाद्दौर्बल्यमिति भावः ॥ **न च वक्तव्यमित्यादि ॥**

ननु युक्तेश्चेति सूत्रे उपाध्युत्पत्या पराधीनविशेषलाभरूपोत्पत्तेर्जीवस्योक्तत्वादुपाधेरेवोत्पत्ति-रुक्तेति शङ्का, उपाधेरुत्पत्तिमत्व इति तत्परिहारश्चायुक्तः । नित्यत्वश्रुतेः स्वरूपविषयत्वस्य, लयश्रुतेः पराधीनविशेषापायविषयत्वस्य च सम्भवेन गतार्थं चेदमधिकरणमिति चेन्न । न च मन्तव्यमित्यादौ तत्र स्वरूपोत्पत्तिरुपाधेरेवोक्ता न तु जीवस्य किन्तु पराधीनविशेषलाभमात्रम् । अतः कथं तस्यानित्यत्वमपीति शङ्कार्थः । उपाधेरुत्पत्तिमत्वे प्रतिबिम्बस्यापि स्वरूपोत्पत्तिनियमान्न

(अभिनवचन्द्रिका)

विनाशे 'आसौ वा आदित्यो देवमधु' (छा.३-१-१) इत्यादौ मधुत्वेनोपदिष्टाऽऽदित्यवत्प्रतिबिम्बत्वकल्पनोपदिष्टो जीवः कथमविनाशी भवेत् । तदत्यन्ताऽभिन्नस्य देहस्य विनष्टत्वादित्येवाशयः । ननु जीवस्य वस्तुतः प्रतिबिम्बत्वात् उपाधिनाशे तदवस्थानायोग इत्याशयः कुत इति चेत् जीवस्य प्रतिबिम्बत्वाभावात् । तथा हि यदि जीवो दर्पणप्रतिबिम्बवत् ईश्वरप्रतिबिम्बः स्यात् तर्हि लक्ष्मीनारायणयोरवियोगात् तत्रैव लक्ष्मीप्रतिबिम्बोऽपि अपरो जीवः स्यात् । उपाधेः सन्निकृष्टयावत्प्रतिफलनहेतुतास्वाभाव्यात् । ततश्च विरुद्धदिक्क्रियं शरीरमुन्मथ्येत ॥ **उपाधेश्चैव नित्यत्वादिति** ॥ तदत्यन्ताऽभिन्नोपाधिनाशस्यैव जीवनाशत्वेन तदभावे जीवनाशाऽभिधानं व्याहतमिति भावः ।

पूर्वपक्षस्तु – अनित्य एव जीवः । 'ब्रह्मन् लयमभ्युपैति' इत्यनित्यत्वश्रुतेः । न च 'सोऽनादिना' इति श्रुतिर्जीवनित्यत्वेऽप्यस्तीति वाच्यम् । अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ता खलु जीवस्योत्पत्तिः 'ज्ञोऽत एव' इति । ततश्च जीवो विनाशी भावत्वे सति उत्पत्तिमत्त्वात्' इत्यनुमानसद्भावात् । न च वक्तव्यं तत्रोपाधेरेवोत्पत्तिरुक्ता, न तु जीवस्येति उपाधेरुत्पत्तिमत्त्वाद्विनाशे प्रतिबिम्बनाशस्यावर्जनीयत्वात् । अतः सयुक्तिकश्रुतिविरोधात् तस्याऽनादिकर्मसम्बन्धाद्ययुक्तेः तदभिधायकश्रुतेरप्रामाण्यात् अयुक्तो ब्रह्मणि श्रुतिसमन्वय इति ।

सिद्धान्तस्तु – नित्य एव जीवः । 'नित्यः पर' इति श्रुतौ आत्मवत् जीवस्यापि नित्यत्वाऽभिधानात् । तथा 'आत्मा नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो धातुरस्य त्वनित्यः' इति स्मृतिद्वये च जीवस्य नित्यत्वमुक्त्वा तच्छरीरादेरनित्यत्वाऽभिधानात् । न च उपाधिनाशे प्रतिबिम्बस्य जीवस्य विनाशो दुष्परिहर इति वाच्यम् । जीवस्याऽप्रतिबिम्बत्वात् । न च 'रूपंरूपम्' इति श्रुतिर्जीवस्य प्रतिबिम्बत्वमावेदयतीति वाच्यम् । तस्याः श्रुतेः तदधीनत्वे सति तत्सदृशत्वरूपगौणप्रतिबिम्बत्वपरत्वेन मुख्यप्रतिबिम्बत्वानावेदकत्वात् । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा जीवोपाधौ परमेश्वरप्रतिबिम्बवत् तदविनाभूताया महालक्ष्म्या अपि प्रतिबिम्बसम्भवेन जीवद्वयापत्त्या विरुद्धदिक्क्रियं शरीमुन्मथ्येत । न च एकस्मिन्नुपाधौ एकस्यैव प्रतिबिम्बो नाऽन्यस्येति सम्भवति दर्पणादावपि तथा प्रसङ्गात् । अपि च प्रतिबिम्बस्य उपाध्येकदेशवृत्तित्वनियमेन जीवस्य चिच्छरीरैकदेशवृत्तित्वं प्राप्नोति । किञ्च बाह्यशरीरे प्रतिबिम्बो भवति,

(अभिनवचन्द्रिका)
न वा आद्ये बाह्यशरीरनाशे जीवनाशो दुष्परिहरः । द्वितीये 'जीवोपाधिर्द्विधा प्रोक्तः' इत्यादौ तस्योपाधित्ववचनमयुक्तमेवापतति । अथ तस्योपाधित्ववचनं गौणं तर्हि चिच्छरीरस्यापि तद्वचनं गौणमस्तु अर्धजरतीयानुपपत्तेः । अस्तु वा जीवस्य प्रतिबिम्बत्वं तथापि बिम्बोपाधितत्सन्निधीनां नित्यत्वेन न जीवनाशो भवति कारणाभावात् । उपाध्यनित्यतावचनानि बाह्योपधिविषयाणि । अतः श्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धेः युक्तो हरौ वेदानां समन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रकृत इति ॥ उपदेशादिति ॥** पूर्वाधिकरणसूत्रखण्डोपात्ते 'बन्धान्मोक्षं तत एवाभिवाञ्छेत्' इति वाक्ये ब्रह्माधीनबन्धमोक्षवत्वेन प्रकृत इत्यर्थः । तथा च जीवस्यानित्यत्वान्न प्रागुक्तो मोक्षो युज्यत इत्याक्षेपादनन्तरसङ्गतिरिति भावः ॥ **नित्य इति ॥** अत्र जीवः किं नित्य उतानित्य इति चिन्ता । तदर्थं श्रुत्युक्तोत्पत्तिविनाशो किं जीवस्वरूपस्य तदुपाधेरेवेति । तदर्थं तदुपाधेरेवोत्पत्ति-विनाशावित्यङ्गीकारेऽपि जीवस्याप्यनित्यत्वादिकं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं जीवस्येश्वर-प्रतिबिम्बत्वघटक उपाधिः किं बाह्यो देहादिरुत जीवस्वरूपमेवेति । सफलमिति न दोष इति सूत्रांशनिरसनीयतया अनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इति भाष्ये उक्तत्वादिति भावः ॥ **अत्र जीवस्येति ॥** श्रुत्युक्तानादिकर्मसम्बन्धानन्त्योक्त्यन्यथानुपपत्त्या जीवनित्यत्वसिद्धेः श्रुतिर्जीवनित्यत्वे मानमिति भावः । उत्पत्तिमत्त्वमित्युक्तपूर्वपक्षन्यायप्रदर्शनपरं जीवस्याप्युत्पत्तिरिति भाष्यं व्याचष्टे अनित्यत्वश्रुतेः **सयुक्तिकत्वेनेति ॥** अनित्यत्वसाधिकाया ब्रह्मलयमिति श्रुतेः साक्षादनित्यत्वसंस्पर्शेन युक्त्या सहैकार्थप्रतिपादकत्वात्प्राबल्यम् । सोऽनादिनेति श्रुतेः साक्षान्नित्यत्वसंस्पर्शाभावेन युक्तिमात्रत्वाद्दौर्बल्यमिति भावः ॥ **न च वक्तव्यमित्यादि ॥**

ननु युक्तेश्चेति सूत्रे उपाध्युत्पत्त्या पराधीनविशेषलाभरूपोत्पत्तेर्जीवस्योक्तत्वादुपाधेरेवोत्पत्ति-रुक्तेति शङ्का, उपाधेरुत्पत्तिमत्व इति तत्परिहारश्चायुक्तः । नित्यत्वश्रुतेः स्वरूपविषयत्वस्य, लयश्रुतेः पराधीनविशेषापायविषयत्वस्य च सम्भवेन गतार्थं चेदमधिकरणमिति चेन्न । न च मन्तव्यमित्यादौ तत्र स्वरूपोत्पत्तिरुपाधेरेवोक्ता न तु जीवस्य किन्तु पराधीनविशेषलाभमात्रम् । अतः कथं तस्यानित्यत्वमपीति शङ्कार्थः । उपाधेरुत्पत्तिमत्वे प्रतिबिम्बस्यापि स्वरूपोत्पत्तिनियमान्न

(वाक्यार्थमुक्तावली)

पराधीनविशेषलाभमात्रमुत्पत्तिः नापि तदपाये विनाश इति परिहाराभिप्रायः। अत एवात्र तदाक्षेपेण .................. । सूत्रे ज्ञस्येत्यनुवर्तते । जीवोपाधेर्जीवस्य चेत्यर्थः । चशब्दस्तद्दर्शनाच्चे-त्यन्वेति । जीवोपाधेः स्वरूपान्तःकरणरूपस्य यावदात्मभावित्त्वाद्देशतः कालतश्च व्याप्तः परमात्मा यावत्पर्यन्तं वर्ततेऽनाद्यनन्तत्वेन तावद्भावित्वात् । बिम्बस्य सर्वगतत्वादेव बिम्बोपाधिसन्निधेश्च यावदात्मभावित्वात् । तथा च तदुपहितजीवस्यापि यावदात्मभावित्वात् अनादिकर्मबन्धानन्त्या-वाप्तिप्रतिपादकश्रुत्यप्रामाण्यदोषो न । कुतस्तस्य यावदात्मभावित्वस्य दर्शनात् नित्यःपरोनित्यो जीव इति श्रुतत्वात् । चशब्दात्स्मरणाच्चेति सूत्रार्थः । सूत्रप्रणयने नित्यत्वाच्च न दोष इति कृते उपाधिनाशाभावलाभेऽपि बिम्बोपाधिसन्निधिनाशप्रयुक्तप्रतिबिम्बनाशाभावास्यालाभात् । त्रितयनाशाभावप्रतिपादनार्थं यावदात्मभावित्वादिति बिम्बनित्यत्वम् । सान्निध्यनाशायात्मपदेन तस्य सर्वगतत्वं चोक्तमित्यभिप्रेत्य प्रवृत्तस्य यावत्परमात्मा विद्यते अनाद्यनन्तत्वेन एवं जीवोऽपीति भाष्यस्थापिपदेनोपाधितत्सन्निधी समुच्चीयेतेति भावेनार्थमाह ॥ **नित्य एव जीव इत्यादिना** ॥ स्पष्टश्च गीताभाष्ये । न ह्युपाधि बिम्बसान्निध्यनाशे प्रतिबिम्बनाश इति सौत्रात्मशब्दाभिप्रायमाह ॥ **सर्वगतविम्बस्येति** ॥

ननु 'हृदिस्था या हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः' इति वचनात्परिच्छिन्नमूर्तिविशेषस्यैव बिम्बत्वं तत्कथमुच्यते सर्वगतबिम्बस्योपाधिसन्निधेश्च नित्यत्वादितीति चेन्न । सत्यमस्त्येव परिच्छिन्नस्य बिम्बत्वं तथापि परिच्छिन्नमूर्तिविशेषस्यापि सर्वगतत्वात्तस्यान्यत्र गमनप्रयुक्तनाशो न मन्तव्यः । गमनेऽपि सान्निध्याशादित्यभिप्रेतत्वादतो जीवस्यानाद्यनन्तत्वानादिकर्मसम्बन्धाद्यनु-पपत्त्येति न दोष इति सूत्रखण्डव्याख्या परटीकयैव स्वरूपानित्यत्वेऽभीष्टमोक्षासिद्धिरिति द्योतनादभीष्टासिद्धिरिति न्यायोऽपि योजितः । अत एव भाष्योपात्तश्रुतौ नित्यो जीव अतोऽपि किमुच्यते चेत्युक्तमिति ज्ञेयम् ।

**वाह्योपाधेरेवेति** ॥ बाह्यस्य बिम्बाकारत्वाभावेऽपि उपाधित्वं, स्वसंर्गिणि स्वाभिमानवशेन स्वरूपविपरीताकारासंजनकत्वादिनेति ज्ञेयम् । तेषां यदन्यथा दृश्यं तदुदाधिकृतं उपाधिका इति वक्ष्यमाणत्वात् । जीवो नित्यो धातुरस्य त्वनित्य इति पादद्वयस्य भारते स्थानान्तरगतत्वान्न पुनरुक्तिरित्यभिप्रेत्याह ॥ **स्मृतिवचनद्वयाच्चेति** ॥ सौत्रचशब्दसमुच्चितादिति भावः । भाष्यो-

(वाक्यार्थमुक्तावली)
दाहृतश्रुतिस्मृतिभ्यां जीवस्वरूपस्य नित्यत्वं बाह्यदेहानित्यत्वमित्येवोच्यते न तु स्वरूपोपाधेरेव प्रतिबिम्बत्वघटकत्वं न बाह्योपाधेरित्येतदुक्तम् । तथा च कथं ताभ्यां उक्तासिद्धार्थप्रतिपत्तिरित्यतः स्वयमुक्तार्थशेषार्थप्रतिपादकं प्रमाणान्तरमाह ॥ **उक्तं चैतदिति** ॥ ननूपाधेर्देहादिरूपस्यात्मभिन्नस्य कथं नित्यत्वमित्यत उक्तम् ॥ **स्वरूपत्वादिति** ॥ प्रतिबिम्बत्वकल्पकोपाधेः स्वरूपत्वाद्भिन्नो-पाधिना प्रतिबिम्बकल्पना नेत्यर्थः । अत्र केचित् स्वरूपोपाधेः प्रतिबिम्बकरत्वं नास्त्येव तथात्वे स्वरूपोपाधेरीशसन्निधिवल्लक्ष्मीसन्निधेरपि भावेन विरुद्धप्रतिबिम्बद्वयोत्पादप्रसङ्गात् । प्रमेयदीपे, न च सर्वगतस्य प्रतिबिम्बासम्भवः । तदधीनसारूप्यस्य प्रतिबिम्बत्वादिति । सुधायान्तु तदधीनत्व, तत्सदृशत्वमात्रेणैषां चिदात्मनां रूपं स्वरूपम् अस्माभिराभास इति उक्तम् । सूर्यकाद्युपमा च तावन्मात्रेणेत्युक्तत्वादिति वर्णयन्ति । वस्तुतस्तु अस्यैव भगवतः स्वरूपोपाधौ प्रतिबिम्बकरत्वं, नित्यान्तःकरणं चैव प्रतिबिम्बश्च तद्गतः' इत्यादेः । न च लक्ष्म्या अपि प्रतिबिम्बकरत्वं सर्वस्यापि जीवस्वरूपस्य प्रतिबिम्बत्वात् भागभेदेन उभयप्रतिबिम्बत्वायोगात्समग्रमेव उभयप्रतिबिम्बमिति वक्तव्यं तत्रान्तिकस्थबिम्बादेव प्रतिबिम्बजननं न तु व्यवहितादित्यनुभवसिद्धम् । तथा च तदेवान्तिकमन्तिकादिति भगवत्पादोक्तरीत्या ब्रह्मस्वरूपस्यैवान्तिकादन्तिकत्वात् । ब्रह्मण एव प्रतिबिम्बजनिः न तु श्रीदेव्याः । प्रमेयदीपादौ तदधीनसादृश्याभ्यां प्रतिबिम्बवचनं तु स्वोत्तम-मात्रसाधारणसामान्यप्रतिबिम्बत्वमप्यस्तीति दर्शयितुम् । तदुक्तं न्यायविवरणे । जीवानां सामान्यत आभासत्वेऽपि विशेषादृष्टाद्वैचित्र्योपपत्तेरिति ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृतो जीव एवेति** ॥ पूर्वाधिकरणे उपदेशादिति सूत्रोपात्तबन्धान्मोक्षं तत एवाभिवाञ्छेत्' इति श्रुत्युक्तब्रह्माधीनसम्बन्धमोक्षवत्त्वेन प्रकृत इत्यर्थः । तथा च जीवस्यानित्यत्वात् न प्रागुक्तमोक्षो युज्यत इतिं आक्षेपादनन्तरसङ्गतिरिति भावः ॥ **सफलमिति** ॥ न दोष इति सूत्रांशनिरसनीयतयाऽनादिकर्मसम्बन्धानन्त्यावाप्तिश्च न युज्यत इति भाष्ये उक्तत्वादिति भावः ॥ **सयुक्तिकत्वेनेति** ॥ उत्पत्तिमत्वेन विनाशित्वमिति उक्तेति भाष्यानुसारेण पक्षधर्मतामाह ॥ **उक्ता खल्विति** ॥ ननूपाधेरुत्पत्तावपि प्रतिबिम्बस्योत्पत्तिः कुत इत्यत आह ॥ **न हीति** ॥ तथा लोके दृष्टत्वादिति भावः । सूत्रे नित्यत्वाच्च न दोष इत्येव कृते

(तत्त्वसुबोधिनी)

उपाधिनाशप्रयुक्तनाशाभावलाभेऽपि बिम्बबिम्बोपाधिसन्निधिनाशप्रयुक्त प्रतिबिम्बनाशाभावस्यालाभात् त्रितयनाशप्रयुक्तनाशाभावप्रतिपादनार्थं यावदात्मभावित्वादित्युक्तमित्यभिप्रेत्य प्रवृत्तस्य यावत्परमात्मा तिष्ठति अनाद्यनन्तत्वेनैवं जीवोऽपीति भाष्यस्याभिप्रायमाह ॥ **प्रतिबिम्बस्येत्यादिना** ॥ सौत्रात्मशब्दाभिप्रायमाह ॥ **सर्वगतेति** ॥ आत्मा नित्यः जीवो नित्यः इति पादद्वयस्य भिन्नस्थानगतत्वात् न पुनरुक्तिरिति भावेनाह ॥ **स्मृतिवचनद्वयाच्चेति** ॥ अनेन सूत्रे दर्शनाच्चेति सम्बन्धः स्मृतिसमुच्चायकचशब्द इत्युक्तं भवति । भाष्योदाहृतश्रुतिस्मृतिभ्यां जीवस्वरूपस्य नित्यत्वं, बाह्यदेहस्यानित्यत्वमित्येवोच्यते । न तु स्वरूपस्यैव प्रतिबिम्बकरत्वं न बाह्योपाधेरित्येतदुक्तम् तथा च कथं ताभ्यामुक्ताखिलार्थप्रतिपत्तिरित्यतः स्वयमुक्ताशेषार्थप्रतिपादकं प्रमाणान्तरमाह ॥ **उक्तं चैतदिति** ॥

## वाक्यार्थविवरणम्

नन्वस्यां श्रुतौ जीवनित्यत्वं न श्रूयत इत्यतोऽन्यथाऽनुपपत्त्या सिध्यतीत्याह ॥ **अत्रेति** ॥ आनन्त्यं मोक्षः । जीवस्यानित्यत्वे एतदुभयं कस्य स्यादिति भावः ॥ **सर्वगतेति** ॥ सर्वगतत्वादेव न तत्सन्निध्यपगम इति भावः ॥ **बाह्योपाधेरेवेति** ॥ तथा चानेनोपाधिना न प्रतिबिम्बः । येन च स्वरूपदेहाख्योपाधिना प्रतिबिम्बस्तस्य नोत्पत्तिविनाशाविति भावः । बाह्योपाधेर्लयः मुक्तावन्यस्य स्वरूपोपाधेः स्थितिरित्येतत्कुत इत्यतो द्वयं क्रमेणोपपादयति ॥ **सर्वेति** ॥ उपाध्यधीनः प्रतिबिम्बभूतश्च जीवो नित्य इति तावत्सिद्धम् । एवं च यदि स्वरूपबाह्यरूपसर्वोपाधिविनाशः कथ्यते, तर्हि प्रतिबिम्बभूतो जीव एव कथं स्यात् । तस्यापि नाशः स्यादिति यावत् । तदर्थमेकस्य नित्यत्वमपरस्यानित्यत्वमङ्गीकार्यम् । तर्ह्युपाधिद्वयमपि नित्यमेव किं न स्यात् । किमर्थमेकस्य नित्यत्वमन्यस्य चानित्यत्वमङ्गीकार्यमित्यत आह ॥ **कथं चेति** ॥ यद्युपाधिद्वयमपि नित्यमेव स्यात्तर्हि जीवस्वरूपाभिन्नमेव स्यात् । तथा चोपाधिविनाशाय यत्नः कर्तव्य इत्यादिश्रुतिबोधितोपाधिविनाशाय यत्नो न सम्भवेत् । न ह्यात्मविनाशाय प्रयत्नो घटते । ततस्तदन्यथानुपपत्त्या एकस्य स्वरूपोपाधेर्नित्यत्वं बाह्योपाधेरनित्यत्वं चाङ्गीकार्यमिति ॥ **भिन्नेति** ॥ स्वरूपोपाधेर्नित्यत्वं बाह्योपाधेरनित्यत्वं चाङ्गीकार्यमिति ॥ **भिन्नेति** ॥ स्वरूपभिन्नस्य देहादेः प्रतिबिम्बत्वघटकोपाधित्वं न कल्प्यत इत्यर्थः ।

## वाक्यार्थमञ्जरी

**ब्रह्मन् ब्रह्मणि ॥ आनन्त्यायेति ॥** कदापि नाशरहितमोक्षाय समर्थो भवतीत्यर्थः ॥ **सफलमिति ॥** आनन्त्यावाप्तिश्च न युज्यत इति भाष्ये उक्तत्वादिति भावः ॥ **अत्रेति ॥** न हि सादिविनाशिन एतद्द्वयं युक्तमिति भावः । **प्रतिविम्बस्यैवेति ॥** ब्रह्मप्रतिबिम्बभूतस्येत्यर्थः ॥ **न हीति ॥** प्रतिमुखादेरनित्यत्वस्यैव दर्शनादिति भावः ॥ **ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ।** जीवस्य तदुपाधेश्च यावदात्मभावित्वादात्मा परमात्मा यावत्कालं तिष्ठति तावत्काल सत्त्वान्न दोषः अनादिकर्मनिबन्धानंत्यावाप्त्यनुपपत्तिरूपदोषो नास्ति कुतः तद्दर्शनात् तस्य यावदात्मभावित्वस्य नित्यः पर इति श्रुतावुक्तेः चशब्दात्स्मृतेरित्यर्थः । नाशत्रयाभावमुपपादयति ॥ **बिम्बस्येत्यादिना ॥** आत्मा नित्यो जीवो नित्य इति पादद्वयस्य भिन्नस्थानगतत्वान्न पुनरुक्तिरिति भावेनाह ॥ **स्मृतिद्वयवचनाच्चेति ॥** भाष्योदाहृतश्रुतिस्मृतिभ्यां जीवस्वरूपस्य नित्यत्वं बाह्यदेहस्यानित्यत्वमित्येवोच्यते न तु स्वरूपस्यैव प्रतिबिम्बघटकत्वं न बाह्योपाधेरित्युक्तम् । तथा च कथं ताभ्यामुक्ताखिलार्थप्रतिपत्तिरित्यतः स्वयमुक्ताशेषार्थप्रतिपादकं प्रमाणान्तरमाह ॥ **उक्तं चैतदिति ॥** अन्यत्र चतुर्थतात्पर्ये कुतोऽन्यस्य स्थितिरित्यत आह ॥ **सर्वेति ॥** भवेत् विद्येत मास्तु प्रतिबिम्बावस्थानमित्यत आह ॥ **कथं चेति ॥ उपाधेश्चेति ॥** प्रथमतात्पर्यम् ।

॥ इति यावदधिकरणम् ॥

## १६. अथ पुंस्त्वाधिकरणम्

### सूत्रभाष्यम्

'विज्ञानात्मा सह देवैश्च सर्वैः' (प्र.उ. ४-११)। 'स आनन्दः स बलः स ओजः स परेणामुं लोकं नीयते स विमुच्यत इति जीवस्य ज्ञानानन्दादिरूपत्वमुच्यते। 'स दुःखाद्विमुक्त आनन्दी भवति। सोऽज्ञानाद्विमुक्तो ज्ञानी भवति। सोऽबलाद्विमुक्तो बली भवति। स नित्यो निरातङ्कोऽवतिष्ठत' इति पैङ्गिश्रुतावनानन्दादिरूपत्वं प्रतीयते। अत आह–

**॥ ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ ३१ ॥**

यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यत एव सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुक्तिः।

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः' इति च गौपवनश्रुतिः॥

### तत्त्वप्रदीपिका

'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' इति षट्प्रश्ने। 'स आनन्दः स बलः स ओजः' इत्यादि श्रुत्यन्तरे॥ **ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्** ॐ॥ यथा बालस्याव्यक्तमपि सदेव पुंस्त्वं स्त्रीत्वं वा यौवनेऽभिव्यज्यते, एवं पूर्वमनभिव्यक्तानां सतां ज्ञानानन्दादीनां साधनपरिपाकेऽभिव्यक्त्यपेक्षया श्रुतिपु तथोक्तिः। एवं जीवस्य प्रसाधितं ज्ञानस्वरूपत्वम्। न च ज्ञानमात्रात्मकत्वं 'ज्ञ' इति सूत्रात्, यदाह बौद्धः। न ह्यहमिदं जानामीति प्रतीयमानं ज्ञातृत्वमकस्मादेवापवादनीयम्। अतिप्रसङ्गात्। अतः स्वसंवेद्यत्वं सिद्धम्।

ननु प्रत्यक्षस्य सुखादिगुणस्याश्रयसापेक्षत्वेन तदाश्रय आत्माऽनुमीयत इति न स्वतः सिद्ध्यति। न। सुखादिप्रत्यक्षस्यैव तदुपलम्भात्मकत्वादनवसरादनुमितेः। अहं सुखी जानाम्यहमिति विशेषणस्योपलम्भो विशेष्योपलम्भनान्तरीयकः। धर्मिग्राहकेण च गृहीते तत्स्वरूपे नानुमानमुपयुज्यते। तद्विशेपे तु क्वचिदनुमानमागमो वा न निवार्यते। सुखादिप्रत्यय आत्मनो न प्रतीतिरिति

(तत्त्वप्रदीपिका)

चेत्तर्हि किं निराश्रयमेव सुखादि प्रतीयते, उताहो साश्रयमिति वाच्यम् । आद्ये कल्पेऽनुभवविरोधः । गुणत्वासिद्धेस्तदाश्रयात्मासिद्धिश्च । द्वितीये सहोपलभ्यमान आश्रयो वाच्यः । देहश्चेत्तदाश्रयत्वेनोपलब्धत्वात्कुत आश्रयान्तरानुमानम् ? अचेतनस्य सुखज्ञानाद्ययोगादिति चेन्न । अनुभवस्य युक्तिमात्रबाधादृष्टेः । न चात्र बाधो दृश्यते । एवं हि बादो भवन् भवेत्– 'अहं सुखीत्येव प्रतिभामि, न त्वहं सुखी, ममाचेतनत्वेन सुखाद्याश्रयत्वायोगात्, आत्मैव सुखि' इति । न चैवं कश्चित्प्रत्येति । अत आत्मैव सुखाश्रयत्वेनोपलभ्यत इत्याश्रयणीयम् । न च देहात्मनोरभेदः प्रतीयत इति वाच्यम् । दत्तोत्तरत्वाद्भगवतैवानुव्याख्याने 'मम देह इति ह्येव न देहोऽहमिति प्रमा' इत्यादिना ।

अथोच्येत स्वयम्प्रकाशा सती विषयसंविदेव स्वाश्रयमात्मानं ग्राहकत्वेन संवेदयतीत्याश्रयणीयम् । घटमहं जानामीत्यनुभवानुसारात् । ग्राहकस्य स्वयम्प्रकाशत्वे कर्तृकर्मभावविरोधप्राप्तेः । तदसत् । अहं मां जानामीत्यात्मनस्संविद्विषयत्वानुभवादनुभूयते कर्तृकर्मभावः । एवं न च विरोधोऽनुभूयते । कल्प्यते केवलमप्रामाणिकः । न चैकत्रादृष्ट इत्यन्यत्र दृष्टोऽप्यपलाप्यः । अतिप्रसङ्गात् । अहं ग्राहकत्वेनैव जानामि न ग्राह्यत्वेनेति वदन् कमिति पृष्टे किमुत्तरं ब्रुवीथाः ? आत्मानमित्युक्ते स्वोक्तिविरोधः । कर्तृकर्मभावश्च स्यात् । वेदनान्तरवेद्यत्वपक्षे चाऽत्मनः कर्तृकर्मभावो न परिहृतः स्यात् । तथा चात्र कः पर्यनुयोज्यः ? करणान्तरेऽप्यनपेक्ष इति चेदविप्रतिपन्नस्तर्हि कर्तृकर्मभावाविरोधः । पराभिमतं करणानपेक्षणं च स्वसंवेदनसंवेदनाश्रयणात् । तदभिमतिर्गुरुमत इति चेदन्यमतेऽपि दृश्यताम् । बुद्धिसंवित्तौ बुद्ध्यन्तरस्य करणत्वेऽनवस्थानात् । बुद्धिरबुद्धार्थबोधिको चेद्धटं बुद्ध्यामहं इत्यनुभवविरोधः । न च बुद्धिरनुमेया, लिङ्गाभावात् । प्रतीतार्थो बुद्धिलिङ्गं चेल्लिङ्गविशेषणत्वेन सिद्धिर्बुद्धेरिष्टा प्रागनुमानात् । न चार्थे प्रकटता नाम, तत्संवेद्यत्वतोऽन्या । येन तल्लिङ्गं स्यात् । शब्दमात्रं हि भिद्यते । बुद्ध्यन्तरविरहिणश्चेश्वरस्य बुद्धेर्बोधे कथमेव करणाकाङ्क्षा । स स्वबुद्धिं नैव बुद्ध्यत इति चेदसर्वज्ञः स्यात् । अस्तु तावन्मात्राज्ञतयेति चेन्मैवम् । स स्वरूपं जानाति वा न वा ? न चेत्स्वरूपाज्ञो जगतस्स्वकृतत्वाद्यज्ञः कथं सर्वज्ञः स्यात् ? य एकमपि वस्तु कात्स्न्र्यान्न जानाति । जानाति चेत्सर्वज्ञानेन वाऽन्येन वा ? तेनैव चेत्प्राप्तं तद्धयस्थानं स्वप्रकाशत्वं ज्ञानस्य, यद्गुरुमत एवेति परिजिहीर्षितम् । न हि स्वात्मानमविषयीकुर्वत्सर्वज्ञानं स्वाश्रयं सर्वज्ञमीश्वरं विषयीकरोति । करणान्तरनिरपेक्षं स्वबुद्धिबोद्धृत्वं च प्राप्तं, यद्भयात्सर्वज्ञोऽपि स्वज्ञानाज्ञ आशास्यते । जानात्येव हि जनः किञ्चिज्ज्ञोऽप्येतावन्मे ज्ञानमस्तीति ।

(तत्त्वप्रदीपिका)

कथं च गोष्पदानतिलङ्घी निस्तीर्णमहार्णव इति युज्यते । ज्ञानयोरुभयोरभ्युपगमे तयोः परस्परविषयत्वे विषयविषयिभावं द्विष्ठं विषयीकुर्वज्ज्ञानं स्वविषयं चेति स्वात्मनि वृत्तिप्रसक्तिः । अतः स्वप्रकाशेनैव व्यवहारनिर्वाहस्सर्ववादिनाम् ।

कथञ्चाऽऽत्मनोऽस्वप्रकाशत्वं एतावन्तं कालं न किञ्चिदवेदिषमिति सुप्तोत्थितपरामर्शिनो विप्रतिपद्येरन् । न हि सौप्तिकमज्ञानमननुभूतं चेदुत्थितस्यानुसन्धातुं शक्यते । न चैतदनुमानं, लिङ्गपरामर्शाभावात् । न चात्र लिङ्गं दृश्यते । नन्वस्ति लिङ्गमस्मर्यमाणत्वं सौप्तिकज्ञानाभावानुमाने । मैवम् । न ह्यनुभूते स्मृतिनियमः । अतोऽस्मर्यमाणत्वस्य व्यभिचारादलिङ्गत्वम् । न च कालेऽनुमानमाशङ्कितुमपि शक्यते । लिङ्गाभावादेव । अतः सुप्तौ स्वानुभवसिद्धः कालः । एतावन्तं कालमिति परामर्शात् । कालानुभविनो जीवस्याज्ञानानुभवे किमनुपपन्नम् ? ज्ञानाभावः प्राक्तनो गृह्यते न परामृश्यते प्रातर्गजाभाववत् । न च तदाऽसौ गृहीतः, प्रतियोगिस्मरणाभावादिति चेदेवमपि सौप्तिको धर्मिग्रहः एष्टव्यः । यत्र ज्ञानाभावः पश्चाद्गृह्यते । न हि प्रातरगृहीते प्रदेशे तत्र प्रातर्गजो नासीदित्युत्तरकालं गजाभावग्रहो दृष्टः । न च सुषुप्तौ ज्ञानाभावधर्मिण आत्मनो ग्रहणकारणं निरूपणीयमस्वसंवेद्यवादिनाम् । कथञ्चाभावापलापकाद्धर्मिग्रहणात्पृथग्ज्ञानाभावग्रहमिच्छेयुः । ते केवलधर्मिग्रहमेवेच्छन्ति चेत्कोऽयं केवलधर्मी नाम । यादृशोऽभाववादिनामभावग्रहणधर्मी तादृशोऽस्माकमभावव्यवहारविषयस्स इति चेत्तदनालोचितोद्भावितमवभाति । अपसिद्धान्तप्रसङ्गात् । अभावविशिष्टो ह्यस्माकमभावग्रहधर्मी । न च तदाऽसौ गृहीतः । न हि प्रतियोगिस्मृतेः प्रागसौ गृह्यते । अतः पश्चादभावज्ञानं तदपलापिनां केवलशब्दार्थोऽन्यो वक्तव्यः । न चासौ समस्ति । घटाद्यभावव्यवहारः केवलभूतलादाविति ब्रुवाणानामेतेषां घटादिभावव्यवहारस्तस्मिन्नेवेत्युक्ते किमुत्तरम् ? सर्वलौकिकपरीक्षकप्रसिद्धयोः सर्वव्यवहारास्पदभूतयोर्भावाभावयोरन्यतरस्याप्यपलापेऽनुभवविरोधादितुल्यमेव दूषणमित्यास्तामयं प्रासङ्गिकः प्रवादः । तस्मादात्मनः स्वयम्प्रकाशत्वमेवेष्टव्यम् । स्वयम्प्रकाशत्वेऽपि सामस्त्येनासंवित्तिः स्वात्मनि सविशेषे सम्भवति । तमःप्रतिबन्धात् । न च तदाऽप्रतीतिरित्यस्वयम्प्रकाशत्वमस्वरूपत्वं वा । तस्य विशेषस्य स्वरूपेऽपि ज्ञानाज्ञानदृष्टेः । मानसप्रत्यक्षं ग्राहकतया वा प्रत्यक्षमात्मानमाचक्षणा अप्यात्मनः सर्वव्याप्तस्य स्वरूपं न कार्त्स्न्येन प्रत्यक्षीकुर्वन्ति । न च ते सांशं सविशेषं वाऽभ्युपगच्छन्ति, येन प्रत्यक्षताप्रत्यक्षते स्याताम् । ऐक्यवादिनोऽपि स्वयम्प्रकाशस्याऽऽत्मनो निर्विशेषस्य ब्रह्मैक्यं न शास्त्रादृते जानन्ति ।

(तत्त्वप्रदीपिका)

अस्माकं तु सविशेषत्ववादिनामेष सुगमः पन्थाः । कश्चिद्विशेषमीश्वरस्तमसा प्रतिबध्नाति, भक्त्या प्रसन्नः संस्तमो निवर्तयति । तथा च भगवद्वचनम्–

'तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' ॥ इति ।

एवमचिन्त्या पारमेश्वरी शक्तिः । तदेव ह्याह–

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः' ॥ इति ।

अतः सिद्धं जीवस्य स्वयम्प्रकाशत्वम् । 'ते वा एते चिदात्मानः' 'विज्ञानात्मा' 'अस्य पुरुषस्य प्रकाशो व्याततः' इत्यादिश्रुतिबलात् ।

## तत्त्वप्रकाशिका

अत्रेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवस्वरूपविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । परमेश्वरे श्रुतिसमन्वय उक्तः । जीवस्य ज्ञानाद्यात्मकत्वाभिधायकश्रुतेः श्रुत्यन्तरविरोधेनाप्रामाण्ये तदनुपपत्तेरवश्यं निरसनीय एव । प्रकृतो जीव एव विषयः । ज्ञानादिरूपो न वेति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयति ॥ **विज्ञानात्मेति** ॥ अनानन्दादिरूपत्वम् आनन्दादिरूपत्वाभावः । न जीवो ज्ञानादिरूप इति पूर्वः पक्षः । तथा श्रुतेः । न च युक्तमस्ति विपरीताऽपि श्रुतिः । न चासावीश्वरविषया 'प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र स परेणामुं लोकम्' इति श्रुतिविरोधादिति । अनानन्दादिरूपत्वश्रुतेः सयुक्तिकत्वात् । न ह्यानन्दादिरूपत्वमात्मनोऽनुभूयते । न च प्रतिबन्धकाद्विद्यमानाप्यानन्दादिरूपता नानुभूयत इति वाच्यम् । जीवस्याहमिति नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानां व्यवधानस्यैवानुपपत्तेः । आनन्दादिरूपत्वे च जीवस्य न केनचिन्मोक्षाय प्रयतितव्यम् । अत्रावरणादननुभवो मोक्षे त्वभिव्यक्तेरनुभव इति वदन् प्रष्टव्यः । किमावरणमानन्दादीनामज्ञानं शरीरादि वा । नाद्यः । तस्यैवानुपपत्तेरुक्तत्वात् । न द्वितीयः । वैपरीत्यात् । अत एव मोक्षेऽभिव्यक्तिरित्ययुक्तम् । तदेवं सयुक्तिकश्रुतिविरोधादप्रमाणमेवान्या श्रुतिरतो नेश्वरे श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥

(तत्त्वप्रकाशिका)

**अस्येति तद्गुणसारत्वं प्रकृतं परामृश्यते। भवत्येवानन्दादिरूपो जीवः। न चोक्तश्रुतियुक्तिविरोधः। यथा पुरुषयोपिदादीनामपत्योत्पत्तिशक्तित्वरूपत्वेऽपि कालतस्तदभिव्यक्तेर्नायं पूर्वं पुमानिदानीं तु पुमानित्यादि युज्यते। एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादेनाभिव्यक्ति-निमित्तेनानन्दीभवतीत्यादिव्यपदेशोपपत्तेः। प्रागनभिव्यक्तत्वेनानुभवाभावसम्भवात्। तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नोपपत्तेरिति भावः। न चावरणानुपपत्तिः। ज्ञानाभावातिरिक्ततन्निमित्ता-विद्याभ्युपगमात्। ननु प्रागसतामुत्पत्तिवादिनी श्रुतिः किं न स्यात् किमभिव्यक्तिकल्पनयेत्यत आह ॥ बलमिति ॥ एतच्च सज्जीवविषयम्। केषाञ्चिद् दुःखादिरूपत्वं मिश्रत्वं च ज्ञातव्यम्।**

## गुर्वर्थदीपिका

स दुःखाद्विमुक्त आनन्दीभवतीत्युक्त्या प्राग्दुःखसहितानन्दवान् पश्चात्केवलानन्दवानिति सर्वत्रानन्दवत्त्वस्यैवोक्तत्वेनानानन्दरूपताया एतत् श्रुतिविरुद्धत्वादित्यर्थः। अनानन्दादिरूपत्वा-दित्यत्र दुःखाद्विमुक्ते मुक्तावानन्दवान्भवतीत्युक्त्या प्रागनानन्दरूपित्वं प्रतीयत इत्यर्थः। तस्यैवानु-पपत्तेरित्यत्र स्वरूपभूतयोर्जीवानन्दयोरहमिति जीवज्ञाने आनन्दस्यापि ज्ञानमेव स्यान्नाज्ञानमित्य-ज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः। ननु प्रतिबन्धकमात्रसाधारणमिदं दूषणं कथमाद्यविकल्पस्यैव दूषणमिति चेत्सत्यम्। अनेनैव दूषितमप्युत्तरपक्षमसाधारणदूषणान्तरेण दूषयितुं ज्ञानरूपेऽज्ञान-स्यैवायोगादिति स्पष्टं दोषं सूचयितुं च विकल्प इत्यदोषः। वैपरीत्यादित्यस्य शरीरस्य भोगायतनत्वेन भोगप्रतिबन्धकत्वस्य विरुद्धत्वादित्यर्थः। तन्निमित्ताविद्याभ्युपगमादित्यत्रा-विद्याख्यावरणमप्यहमिति जीवज्ञानमप्रतिबध्य तद्रूपमानन्दं कथं प्रतिबध्नीयादिति चोद्यं 'वामं मा दहेत्' इति मन्त्रशक्त्या वामभागस्यादाहवदीश्वरशक्त्युपोद्बलितप्रतिबन्धकशक्त्याऽभिन्नेऽपि भेदकार्यकारिविशेषशक्त्या च परिहरणीयम्।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृत इति** ॥ 'तद्गुणसारत्वात्' इत्यत्र ज्ञानानन्दादि-स्वरूपत्वेन प्रकृत इत्यर्थः। तथा च पूर्वत्र पृथगधिकरणीयाद्यसूत्रोक्तो बन्धान्मोक्षं तत एवाभि-वाञ्छेत्' इत्युपदेश उपपादितः। इह तु तदीयद्वितीयसूत्रोक्तं तद्गुणसारत्वमुपपाद्यते।

(भावबोधः)

तत्सूत्रोक्ततद्गुणसारत्वस्यात्रास्येति परामर्शादिति सङ्गतिरिति भावः ॥ **ज्ञानादिरूप इति** ॥ अत्र जीवः किं ज्ञानानन्दादिस्वरूपो न भवत्युत भवतीति चिन्ता । तदर्थं विज्ञानात्मेत्यादिरूपत्वश्रुतिः दुःखाद्विमुक्त आनन्दी भवतीति श्रुत्या बाध्यत उत न बाध्यत इति चिन्ता । तदर्थं तच्छ्रुत्युपोद्बलिका स्वगुणाननुभूतिरूपा युक्तिः किं निरवकाशोत ज्ञानानन्दादीनामावृतत्वेनान्यथासिद्धेति । तदर्थं सतोऽप्यानन्दादेरावृतत्वं किं न सम्भवत्युत सम्भवतीति । तदर्थं तदावरकत्वं किं ज्ञानाभावस्यैवोत तन्निमित्तभावरूपाज्ञानस्य । तदर्थमज्ञानरूपावरणानङ्गीकारे देवादीनां सर्वदा स्वस्वरूपानुभवो न प्रसज्यत उत प्रसज्यत इति । तदर्थमानन्दादीनां मुक्तियोग्यादिस्वरूपत्वे प्रमाणं नास्त्युतास्तीति । भाष्ये नानन्दादिरूपत्वमिति आनन्दादिविरुद्धदुःखादिरूपत्वं प्रतीयते । तच्च दुःखाद्विमुक्त इत्यनेन विरुद्धमित्यतो व्याचष्टे– **आनन्दादिरूपत्वाभाव इति** ॥ आनन्दी ज्ञानी बलीति तद्वत्त्वोक्त्या तत्स्वरूपत्वाभावस्यैव उक्तेरिति भावः । भाष्योदाहृतायां विज्ञानात्मेति षट्प्रश्नोपनिषदि आनन्द इति श्रुत्यन्तरे च जीवलिङ्गाभावात् पूर्वपक्षानुदय इति न शङ्क्यम् । आद्यश्रुतौ 'प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' इति वाक्यशेषे द्वितीयश्रुतौ च 'स परेणामुं लोकं नीयते स विमुच्यत' इति वाक्यशेषे परमात्माश्रितत्वादिजीवलिङ्गश्रवणादित्याह– **प्राणा भूतानीत्यादिना** ॥ स्वगुणाननुभूतीति न्यायविवरणांशाभिप्रायमाह– **न ह्यानन्दादिरूपत्वमिति** ॥ अनेन स्वत्वेन स्वरूपत्वेन गुणानामानन्दादीनामननुभूतिरिति व्याख्यातं भवति ।

ननु स्वरूपभूतानामप्यावृतत्वेनाननुभूत्युपपत्तेः कथमनुव्याख्याने 'स्वगुणाननुभूतिः' इत्यननुभवमात्रं तत्साधकत्वेनोक्तमित्यतो न्यायविवरणे स्वगुणाननुभूत्यनुपपत्तेरित्युक्तमित्याशयेन तदभिप्रायमाह– **जीवस्याहमिति** ॥ अनेन स्वरूपभूतानां गुणनामनुभूतेरभावो येन प्रतिबन्धेन तत्स्वरूपगुणाननुभूतिः तस्यानुपपत्तेरिति न्यायविवरणांशो व्याख्यातो भवति । पूर्वं सामस्त्येनाभाव इति न्यायविवरणगतपूर्वपदसूचितयुक्तिमाह– **आनन्दादिरूपत्वे चेति** ॥ प्रयत्नस्याभिव्यक्त्यर्थत्वमाशङ्क्य परिहरति– **अत्रावरणेति** ॥ अनेन पूर्वं संसारदशायां सामस्त्येनाभिव्यक्तत्वेन स्वरूपेण नाभाव इति न्यायविवरणाभिप्राय उक्तो भवति । **तस्यैवानुपपत्तेरिति** ॥ जीवस्याहमित्यनेन व्यवधानानुपपत्त्या ज्ञानाभावरूपाज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः । **वैपरीत्यादिति** ॥

(तत्त्वप्रकाशिका)

**अस्येति तद्गुणसारत्वं प्रकृतं परामृश्यते। भवत्येवानन्दादिरूपो जीवः। न चोक्तश्रुतियुक्तिविरोधः। यथा पुरुषयोषिदादीनामपत्योत्पत्तिशक्तित्वरूपत्वेऽपि कालतस्तदभिव्यक्तेर्नायं पूर्वं पुमानिदानीं तु पुमानित्यादि युज्यते। एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादेनाभिव्यक्तिनिमित्तेनानन्दीभवतीत्यादिव्यपदेशोपपत्तेः। प्रागनभिव्यक्तत्वेनानुभवाभावसम्भवात्।** तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नोपपत्तेरिति भावः। न चावरणानुपपत्तिः। ज्ञानाभावातिरिक्ततन्निमित्ताविद्याभ्युपगमात्। ननु प्रागसतामुत्पत्तिवादिनी श्रुतिः किं न स्यात् किमभिव्यक्तिकल्पनयेत्यत आह ॥ **बलमिति** ॥ एतच्च सज्जीवविषयम्। केषाञ्चिद् दुःखादिरूपत्वं मिश्रत्वं च ज्ञातव्यम्।

## गुर्वर्थदीपिका

स दुःखाद्विमुक्त आनन्दीभवतीत्युक्त्या प्राग्दुःखसहितानन्दवान् पश्चात्केवलानन्दवानिति सर्वत्रानन्दवत्त्वस्यैवोक्तत्वेनानानन्दरूपताया एतत् श्रुतिविरुद्धत्वादित्यर्थः। अनानन्दादिरूपत्वादित्यत्र दुःखाद्विमुक्ते मुक्तावानन्दवान्भवतीत्युक्त्या प्रागनानन्दरूपित्वं प्रतीयत इत्यर्थः। तस्यैवानुपपत्तेरित्यत्र स्वरूपभूतयोर्जीवानन्दयोरहमिति जीवज्ञाने आनन्दस्यापि ज्ञानमेव स्यान्नाज्ञानमित्यज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः। ननु प्रतिबन्धकमात्रसाधारणमिदं दूषणं कथमाद्यविकल्पस्यैव दूषणमिति चेत्सत्यम्। अनेनैव दूषितमप्युत्तरपक्षमसाधारणदूषणान्तरेण दूषयितुं ज्ञानरूपेऽज्ञानस्यैवायोगादिति स्पष्टं दोषं सूचयितुं च विकल्प इत्यदोषः। वैपरीत्यादित्यस्य शरीरस्य भोगायतनत्वेन भोगप्रतिबन्धकत्वस्य विरुद्धत्वादित्यर्थः। तन्निमित्ताविद्याभ्युपगमादित्यत्राविद्याख्यावरणमप्यहमिति जीवज्ञानमप्रतिबध्य तद्रूपमानन्दं कथं प्रतिबध्नीयादिति चोद्यं 'वामं मा दहेत्' इति मन्त्रशक्त्या वामभागस्यादाहवदीश्वरशक्त्युपोद्बलितप्रतिबन्धकशक्त्याऽभिन्नेऽपि भेदकार्यकारिविशेषशक्त्या च परिहरणीयम्।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृत इति** ॥ 'तद्गुणसारत्वात्' इत्यत्र ज्ञानानन्दादिस्वरूपत्वेन प्रकृत इत्यर्थः। तथा च पूर्वत्र पृथगधिकरणीयाद्यसूत्रोक्तो बन्धान्मोक्षं तत एवाभिवाञ्छेत्' इत्युपदेश उपपादितः। इह तु तदीयद्वितीयसूत्रोक्तं तद्गुणसारत्वमुपपाद्यते।

(भावबोधः)

तत्सूत्रोक्ततद्गुणसारत्वस्यात्रास्येति परामर्शादिति सङ्गतिरिति भावः ॥ **ज्ञानादिरूप इति** ॥ अत्र जीवः किं ज्ञानानन्दादिस्वरूपो न भवत्युत भवतीति चिन्ता । तदर्थं विज्ञानात्मेत्यादिरूपत्वश्रुतिः दुःखाद्विमुक्त आनन्दी भवतीति श्रुत्या बाध्यत उत न बाध्यत इति चिन्ता । तदर्थं तच्छ्रुत्युपोद्बलिका स्वगुणाननुभूतिरूपा युक्तिः किं निरवकाशोत ज्ञानानन्दादीनामावृत-त्वेनान्यथासिद्धेति । तदर्थं सतोऽप्यानन्दादेरावृतत्वं किं न सम्भवत्युत सम्भवतीति । तदर्थं तदावरकत्वं किं ज्ञानाभावस्यैवोत तन्निमित्तभावरूपाज्ञानस्य । तदर्थमज्ञानरूपावरणानङ्गीकारे देवादीनां सर्वदा स्वस्वरूपानुभवो न प्रसज्यत उत प्रसज्यत इति । तदर्थमानन्दादीनां मुक्ति-योग्यादिस्वरूपत्वे प्रमाणं नास्त्युतास्तीति । भाष्ये नानन्दादिरूपत्वमिति आनन्दादिविरुद्ध-दुःखादिरूपत्वं प्रतीयते । तच्च दुःखाद्विमुक्त इत्यनेन विरुद्धमित्यतो व्याचष्टे– **आनन्दादिरूपत्वा-भाव इति** ॥ आनन्दी ज्ञानी बलीति तद्वत्त्वोक्त्या तत्स्वरूपत्वाभावस्यैव उक्तेरिति भावः । भाष्योदाहृतायां विज्ञानात्मेति षट्प्रश्नोपनिषदि आनन्द इति श्रुत्यन्तरे च जीवलिङ्गाभावात् पूर्वपक्षानुदय इति न शङ्क्यम् । आद्यश्रुतौ 'प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' इति वाक्यशेषे द्वितीयश्रुतौ च 'स परेणामुं लोकं नीयते स विमुच्यत' इति वाक्यशेषे परमात्माश्रितत्वादि-जीवलिङ्गश्रवणादित्याह– **प्राणा भूतानीत्यादिना** ॥ स्वगुणाननुभूतीति न्यायविवरणांशाभि-प्रायमाह– **न ह्यानन्दादिरूपत्वमिति** ॥ अनेन स्वत्वेन स्वरूपत्वेन गुणानामानन्दादीना-मननुभूतिरिति व्याख्यातं भवति ।

ननु स्वरूपभूतानामप्यावृतत्वेनाननुभूत्युपपत्तेः कथमनुव्याख्याने 'स्वगुणाननुभूतिः' इत्यननु-भवमात्रं तत्साधकत्वेनोक्तमित्यतो न्यायविवरणे स्वगुणाननु[illegible]मित्याद्युक्तं तदभि-प्रायमाह– **जीवस्याहमिति** ॥ अनेन स्वरूपभूतानां [illegible] येन [illegible] तत्स्वरूपगुणाननुभूतिः तस्यानुपपत्तेरिति न्यायविवरणा[illegible] भवति । पूर्वं [illegible] इति न्यायविवरणगतपूर्वपदसूचितयुक्तिमाह– **आनन्दादि[illegible] चेति** ॥ [illegible]-माशङ्क्य परिहरति– **अत्रावरणेति** ॥ अनेन पूर्वं [illegible] -नाभाव इति न्यायविवरणाभिप्राय उक्तो भवति । **[illegible]** ॥ [illegible] व्यवधानानुपपत्त्या ज्ञानाभावरूपाज्ञान[illegible] [illegible]

(भावबोधः)

शरीरस्यानन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वानुपपत्तेरिति भावः । **तद्गुणसारत्वमिति** ॥ स्वरूपभूतज्ञानादिगुणसमुदाय इत्यर्थः । अत एव भाष्ये सतामेवानन्दादीनामिति गुणप्राधान्योक्तिर्बहुवचनं च । व्याख्यातं च सतो ज्ञानानन्दादेरिति । सूत्रे 'आदि'पदप्रयोगात् बालस्येति भाष्यमुपलक्षणपरमित्यभिप्रेत्य व्याचष्टे– **पुरुषयोषिदादीनामिति** ॥ दार्ष्टान्तिके तदुक्तिरिति भाष्यानुरोधादाह– **नायं पूर्वमिति** ॥ सौत्र'स्तु' शब्दो सतामेवेति भाष्येऽवधारणार्थो व्याख्यातः । तस्य तात्पर्यं मुक्तेः पूर्वमपि सत इति । सुप्तौ आनन्दादीनमभिव्यक्त्यपेक्षया मोक्षे विशेषेणाभिव्यक्तिरित्यर्थकश्च सौत्र'स्तु'शब्द इत्यभिप्रेत्य न्यायविवरणे सुव्यक्तिः इत्युक्तमित्यभिप्रेत्याह– **ईश्वरप्रसादेनेति** ॥ अभिव्यक्तानन्दी भवतीति, श्रौतव्यपदेशस्य योगादुपपत्तेरिति सौत्रांशस्यार्थमभिप्रेत्य प्रवृत्तमभिव्यक्त्यपेक्षया तदुक्तिरिति भाष्यं व्याचष्टे– **अभिव्यक्तिनिमित्तेनेति** ॥ अनेन पूर्वमव्यक्तानां पश्चात् सुव्यक्त्युपपत्तेरिति न्यायविवरणमपि सुव्यक्तानन्दी भवतीति व्यपदेशस्योपपत्तेरिति व्याख्यातं भवति । पूर्वमव्यक्तानामिति न्यायविवरणांशाभिप्रायमाह– **प्रागनभिव्यक्तत्वेनेति** ॥ पश्चात् सुव्यक्त्युपपत्तेरिति न्यायविवरणांशं प्रकारान्तरेण व्याचष्टे– **तदभिव्यक्त्यर्थमिति** ॥ अनेन सुव्यक्त्यै प्रयत्नस्योपपत्तेरिति व्याख्यातं भवति ।

## भावदीपः

साक्षाद्विरोधप्रतीत्यर्थं वक्ष्यमाणप्रतिज्ञायाः श्रुत्यविसंवादार्थं च भाष्यवाक्यार्थमाह ॥ **अनानन्देति** ॥ स्वगुणाननुभूत्यनुपपत्तेः पूर्वज्ञानादीनां सामस्त्येनाभाव इति न्यायविवरणे पूर्वस्माज्जीवस्येति पदमनुवर्त्य प्रतिज्ञार्थमाह ॥ **न जीवो ज्ञानादिरूप इति** ॥ पादसङ्गत्यर्थं युक्तिं पूर्वमनुक्त्वा भाष्योक्तश्रुतिमेव पूर्वमाह ॥ **तथा श्रुतेरिति** ॥ उक्तश्रुतिप्राबल्यायान्यत्रोक्तयुक्तिं वक्तुं शङ्कामाह ॥ **न चेति** ॥ स परेणेत्यादिशेषोक्तेरुपयोगायाह ॥ **न चासाविति** ॥ विज्ञानात्मा सह देवैश्च सर्वैरिति षट्प्रश्नवाक्ये प्रसिद्धत्वात् भाष्ये अनुक्तमपि शेषं स आनन्द इति श्रुत्यन्तरे शेषस्योपात्तत्वात्पूर्ववाक्येऽप्यभिमतं मत्त्वाह ॥ **प्राणा भूतानीति** ॥ देवैः सह विज्ञानात्मप्राणभूतानां भगवदाश्रयत्वोक्तेर्विज्ञानात्मा जीव एवेति भावः । स आनन्द इति श्रुतावपि स परेणेति वाक्यशेषे जीवलिङ्गश्रवणाज्जीवविषयैव श्रुतिरिति भावः । स्वगुणाननुभूत्यनुपपत्तेरित्यन्यत्रोक्तयुक्तिमाह ॥ **न हीति** ॥ तत्र गुणाननुभवादित्येव वाच्ये स्वगुणाननुभूत्यनुपपत्तेरित्युक्तितात्पर्यं व्यनक्ति ॥ न च

(भावदीपः)

**प्रतिबन्धादिति** ॥ स्वगुणाननुभूत्यनुपपत्तेरित्यत्र समाहारद्वन्द्वेन वा सहितसमासेन वा स्वगुणाननुभवादनुपपत्तेश्चेति हेतुद्वयमुपेत्यापादकपूर्त्यानुपपत्तेरित्येतत्प्रकारान्तरेण व्याचष्टे ॥ **आनन्दादिरूपत्वे चेति** ॥

किं चेति चार्थः ॥ **न केनचिदिति** ॥ एतेन मोक्षाय प्रयत्नानुपपत्तेरित्यर्थो दर्शितः । अन्यथापि व्याख्यातुमाह ॥ **अत्रेत्यादि** ॥ संसार इत्यर्थः ॥ **तस्यैवेति** ॥ ज्ञानाभाव एवाज्ञानमिति पूर्वपक्षिणो मम मते अज्ञानानुपपत्तेरित्यर्थः । एतेन स्वगुणाननुभूतेः स्वगुणाज्ञानस्यानुपपत्तेर्ज्ञानाभावस्यैवाज्ञानत्वादित्यर्थो दर्शितः ॥ **वैपरीत्यादिति** ॥ शरीरस्यानन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वायोगादित्यर्थः । एतेन शरीरे सति स्वगुणाननुभूत्यनुपपत्तेरित्यर्थो दर्शितः ॥ **अत एवेति** ॥ भोगायतनशरीरस्य तत्राभावादेवेत्यर्थः । तत्तस्मात् तदेव व्यनक्ति ॥ **सयुक्तिकेति** ॥ अप्रकृतत्वाद्भाष्ये सतामेवानन्दादीनामित्युक्तिः कथमित्यत आह ॥ **अस्येतीति** ॥ यद्वा जीवपरामर्शभ्रान्तिं निराह ॥ **अस्येतीति** ॥ सूत्रे ज्ञपदमनुवर्त्य साध्यं बहिरेवाह ॥ **भवत्येवेति** ॥ तथा श्रुतेरिति योज्यम् । सूत्रभाष्ये स दुःखाद्विमुक्त इति श्रुत्यादिविरोधनिरासकत्वेन व्याचष्टे ॥ **न चेत्यादिना** ॥ बालस्येत्युपलक्षणं मत्वा सौत्रादिपदार्थव्यक्त्यर्थमाह ॥ **पुरुषेति** ॥ पश्वादय आदिपदार्थ इत्याहुः । सतां पारमार्थिकानामिति भ्रमनिरासायाह ॥ **मुक्तेः पूर्वं सत इति** ॥ बहुधर्मलाभाय भाष्ये बहुवचनोक्तावपि सूत्रानुसारादेकवचनोक्तिः । वक्ष्यमाणदिशाऽनाद्यविद्यावरणस्य भावरूपस्य निवर्तकाभावादभिव्यक्तिरयुक्तेत्यतः परमाद्विभोरिति प्रमाणानुरोधादाह ॥ **ईश्वरप्रसादेनेति** ॥ व्यक्तमेतत्तदभिध्यानादित्यत्र । सौत्रयोगशब्दार्थो **निमित्तेनेति** ॥ तदुक्तिरित्यस्यार्थः **आनन्दादीति** ॥ एतेन पूर्वमव्यक्तानां पश्चात्सुव्यक्त्युपपत्तेरित्यन्यत्रोक्तेः सुव्यक्त्या व्यपदेशोपपत्तेरित्यर्थ उक्तः । अस्त्वेवं श्रुत्यविरोधः । युक्त्यविरोधस्तु कथमित्यतः पूर्वमव्यक्तानामिति षष्ठ्यन्तांशभावमाह ॥ **प्रागिति** ॥ सुव्यक्त्यर्थं प्रयत्नोपपत्तेरित्युत्तरभागार्थमुपेत्याह ॥ **तदभिव्यक्त्यर्थमिति** ॥ तस्यैवानुपपत्तेरित्युक्तदोषमाशङ्क्य निराह ॥ **न चेति** ॥ **तन्निमित्तेति** ॥ ज्ञानाभावनिमित्तेत्यर्थः । न चाभ्युपगमो निर्बीजः । वक्ष्यमाणसूत्रोक्तबाधकस्यैव बीजत्वादिति भावः । श्रुतेः सर्वजीवपरत्वेऽग्रेतनसूत्रविरोध इत्यत आह ॥ **एतच्चेति** ॥ एतेन तद्गुणसारत्वादित्युक्तिरपि व्याख्याता । उत्तरानुकूल्यायाह ॥ **केपाञ्चिदिति** ॥

## अभिनवचन्द्रिका

**विपरीतापि श्रुतिरिति** ॥ 'विज्ञानात्मा सहदेवैश्च सर्वैः' इति ज्ञानरूपत्वे, स आनन्दः स बल,' इति आनन्दरूपत्वे च श्रुतिरस्तीत्यर्थः ॥ **न चासाविति** ॥ ज्ञानरूपत्ववादिनी आनन्दरूपत्ववादिनी च श्रुतिर्नेश्वरविषयेत्यर्थः ॥ **प्राणभूतानीति** ॥ 'प्राणभूतानि सम्प्रतिष्ठन्ति यत्र' इत्यन्तम्, 'विज्ञानात्मा सहदेवैश्च सर्वैः' इति भाष्योदाहृतषट्प्रश्नवाक्यशेष इति बोध्यम् ॥ **न ह्यानन्दादिरूपमिति** ॥ योग्यत्वे सत्युपलभ्यमानत्वात्तद्रूपत्वं नेति भावः । जीवस्येति ॥ त्वन्मते जीवस्य नित्याभिव्यक्तत्वेन आनन्दादीनां तत्स्वरूपत्वे प्रतिबन्धकस्यैवाऽनुपपत्तेरित्यर्थः ॥ **किमावरणमिति** ॥ यद्यपि ज्ञानाभावापपादनाय ज्ञानाभावस्यैव आवरणत्ववचनमनुपपन्नमिति न प्रष्टव्यम्, तथापि युक्तमेव परो ब्रवीतीति नियमाभावात्प्रश्नः ॥ **तस्यैवेति** ॥ अज्ञानस्यैवानुपपत्तेरस्माभिः शङ्कितत्वात् तदुपपादनाय अज्ञानस्यैवाऽऽवरणत्वकथनमनुपपन्नमिति भावः ॥ **वैपरीत्यादिति** ॥ शरीरस्य आनन्दाद्यनुभोगायतनत्वेन भोगप्रतिबन्धकत्वानुपपत्तेरिति भावः ।

## वाक्यार्थमुक्तावली

**प्रकृत इति** ॥ तद्गुणसारत्वादित्यत्र ज्ञानानन्दरूपत्वेन प्रकृत इत्यर्थः । तथा च पूर्वत्र पृथगधिकरणाद्यसूत्रोक्तः बन्धान्मोक्षं तत एवाभिवांछेदित्युपदेश उपपादितः । इह तु तदीयद्वितीयसूत्रोक्ततद्गुणसारत्वमुपपाद्यते । अत एवात्र अस्येति परामर्श इत्यनन्तरसङ्गतिरिति भावः । अत्र जीवः किमानन्दादिस्वरूपो न भवत्युत भवतीति चिन्ता । तदर्थमानन्दादेरसत्त्वादेवानुपलब्धिरुत सत्यप्यावरणादिति । तदर्थमज्ञानस्यावरणत्वं सम्भवत्युत न सम्भवतीति । भाष्ये आनन्दादिरूपत्वमिति आनन्दादिविरुद्धदुःखादिरूपत्वं प्रतीयते । तच्च दुःखाद्विमुक्त इत्यनेन विरुद्धमित्यतो व्याचष्टे ॥ **आनन्दादिरूपत्वाभाव इति** ॥ आनन्दीभवतीत्यानन्दादेरागन्तुकत्वोक्तिरिति भावः ।

भावबोधे तु आनन्दी, बली, ज्ञानी, इत्यादिना तद्वत्वोक्त्या तस्वरूपाभावस्यैवोक्तेरित्युक्तम् । प्राणभूतानि संप्रतिष्टन्तीति षट्प्रश्नवाक्यशेषोऽयम् । आग्निवेश्यश्रुतौ आनन्दादिरूपत्वमुच्यत इति वक्तव्ये प्रतीयत इत्युक्त्या, आग्निवेश्यश्रुतावुक्तमानन्दादिरूपत्वमेवानुभूयते न त्वानन्दादिरूपत्वम्

(वाक्यार्थमुक्तावली)

इति सूचितम् । स्वगुणाननुभूतीत्युक्तपूर्वपक्षन्यायमाह ॥ **आनन्दादिरूपत्वश्रुतेरिति** ॥ **स्वरूपभूतानामिति** ॥ एतेन भाष्ये रूपपदेन न्यायमालायां स्वगुणेति स्वरूपत्वप्रतिपादकस्वपदेन सूचितं दूषणमुक्तं भवति । दुःखाद्विमुक्त आनन्दीभवतीत्यानन्दादेः प्रयत्नसाध्यत्वोक्त्या सूचितं दूषणमाह ॥ **आनन्दादिरूपत्वे जीवस्येति** ॥ सतोऽभिव्यक्तियोगादिति सिद्धान्तमप्याक्षिपति ॥ **अत्रावरणादिति** ॥ अज्ञानमावरणं वदन् प्रष्टव्यः किमज्ञानं अभावोभावरूपं वा । आद्य आह ॥ **तस्यैवानुपपत्तेरिति** ॥ ज्ञानादिरूपस्य ज्ञानाभावस्यैवानुपपत्तेः । प्रतियोगितदभावयोर्विरोधात् । दूरे तस्यावरणत्वकल्पनम् ॥ ज्ञानाभावोपपादनाय ज्ञानाभावस्यैवावरणत्वकथनायोगात् । जीवस्याहमिति नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानां व्यवधानस्यैवानुपपत्तेरुक्तत्वाच्चेति भावः । एतेन द्वितीयोऽपि निरस्तः । जीवस्वरूपानावरकस्य भावरूपाज्ञानस्य तस्वरूपभूतानन्दाद्यावरकत्वा-योगादिति ॥ **वैपरीत्यादिति** ॥ भोगसाधनशरीरादेः तत्प्रतिबन्धकत्वस्य विपरीतत्वादित्यर्थः । **अत** एव आवरणाभावादेव । सूत्रे ज्ञस्येत्यस्ति । तुशब्दोऽवधारणे । ज्ञस्तद्गुणसार इत्यन्वेति । ज्ञस्य जीवस्य सतस्तु सत एवास्य ज्ञानानन्दादिरूपत्वस्य पुंस्त्वादिवद्बाल्ये विद्यमानस्य पुंस्त्व-स्त्रीत्वादेरिवाभिव्यक्तियोगात् अभिव्यक्तेश्वरमप्रसादेन सम्यगभिव्यक्त्या निमित्तेन योगादानन्दी-भवतीत्यादिव्यपदेशोपपत्तेः । तथा प्रागनभिव्यक्तत्वेनानुभवाभावस्यापि योगादासम्भवात्तदभिव्यक्त्यर्थं मुमुक्षुणां प्रयत्नस्यापि योगाद्भवत्येवानन्दादिरूपो जीव इति सूत्रार्थमभिप्रेत्य भाष्यभावमाह **भवत्येवेत्यादिना** । पुंस्त्वादिवदिति सौत्रादिपदानुसारेण यथा बालस्य सदेव पुंस्त्वमिति भाष्य-मुपलक्षणं मत्वोक्तम् ॥ **पुरुषयोषिदादीनामिति** ॥ आदिपदेन वृक्षादीनां फलपुष्पोत्पत्ति-शक्तिस्वरूपत्वेऽपीति द्रष्टव्यम् । अभिव्यक्तिर्नामापरोक्षज्ञानजन्यप्रसादेन व्यक्तिः ।

ननु सुप्ताविव प्राज्ञप्रवेशमात्रेणैव विवक्षित्वा, सुव्यक्तीति न्यायं संयोजयितुमुक्तं **ईश्वरप्रसा-देनेति** ॥ सौत्रस्तुशब्दो भाष्ये सत एवेत्यादि व्याख्यातः तस्य तात्पर्यं **मुक्तेः पूर्वमपि सत इति** ॥ भाष्ये तदुक्तिरित्युपलक्षणं मत्वा योगादित्यस्यार्थान्तरमुक्तं **प्रागनभिव्यक्तेत्यादि** ॥ किमावरण-मानन्दादीनामित्यस्योत्तरमाह ॥ **न चावरणेति** ॥ कुतो नानुपपत्तिरित्यतः अज्ञानावरण-त्वादित्युत्तरं वाच्यं अज्ञानं च नाभावो येन तस्य ज्ञानेनासौ विरोधः ज्ञानाभावोपपादनाय । तदभावस्यावरणत्वोक्त्याऽनुपपत्तिश्च किन्तु ज्ञानाभावातिरिक्तायास्तन्निमित्ताया अविद्याया

(वाक्यार्थमुक्तावली)

अज्ञानपदवाच्यतयाऽवरणतया चाभ्युगमात् । तस्याश्चाहमिति स्वरूपे भासमानत्वेऽपि तद्विशेषानन्दाद्यावरकतयैव अहमज्ञो, मामन्यं च न जानामि' इति धर्मिग्राहकप्रमाणसिद्धत्वादिति भावः । ननु ज्ञानप्रागभावात्यंताभावयोरनादित्वादविद्यायास्तन्निमित्तत्वं कथमिति चेदनादिप्रयोज्य-प्रयोजकभावसम्भवात् । उत्तरसूत्रे तमोयोग्यनित्यसंसारिणामप्यावरणानङ्गीकारे बाधकस्य वक्ष्यमाणत्वात् । व्यामिश्रतापरिहाराय विभागमाह ॥ **एतच्चेति** ॥ पुंस्त्वादिति सूत्रमित्यर्थः । उत्तरसूत्रापेक्षया तथापि ज्ञानरूपत इति पूर्वभाष्यानुसारेणाह पूर्वसूत्रमुपलक्षणं मत्वाह ॥ **केषाञ्चिदिति** ॥

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृत इति** ॥ तद्गुणसारत्वात् इत्यत्र ज्ञानानन्दादि-स्वरूपत्वेन प्रकृत इत्यर्थः । तथा च पूर्वं पृथगधिकरणीयाद्यसूत्रोक्तो बन्धान्मोक्षं तत एवाभिवाञ्छेत् इत्युक्त उपदेश उपपादितः । इह तु तदीय(द्वितीय)सूत्रोक्तं तद्गुणसारत्वस्यात्रास्येति परामर्शात् सङ्गतिरिति भावः । भाष्ये आनन्दादिरूपत्वमिति अनानन्दादिविरुद्धदुःखादिरूपत्वं प्रतीयते । तत्र दुःखाद्विमुक्त इत्यनेन विरुद्धमित्यतो व्याचष्टे ॥ **आनन्दादिरूपत्वाभाव इति** ॥ आनन्दी, ज्ञानी, बलीति तद्वत्वे श्रुतेरित्यर्थः । न च युक्तमित्यस्य इतीत्यनेन सम्बन्धः । भाष्योदाहृतायां विज्ञाना-त्मेति षट्प्रश्नोपनिषदि, आनन्द इति श्रुत्यन्तरे च जीवलिङ्गाभावात् पूर्वपक्षानुदय इति न शङ्क्यम् । आद्यश्रुतौ प्राणा भूतानि सम्प्रतिष्ठन्ति इति वाक्यशेषे द्वितीयश्रुतौ सपरेणामुं लोकं नीयते मुच्यते इति वाक्यशेषे जीवलिङ्गश्रवणादित्याह ॥ **प्राणा भूतानीत्यादिना** ॥ **सयुक्तिकत्वादिति** ॥ आनन्दादिरूपत्वासम्भवरूपयुक्तिसहितत्वादित्यर्थः । सयुक्तिकत्वमेवाह ॥ **न हीति** ॥ न चानुभवोऽन्यथोपपन्न इति वाच्यम् किमनुभवप्रतिबन्धकस्य विद्यमानत्त्वात् उतावरण-सत्वात् अनभिव्यक्तेर्वा । नाद्य इत्याह ॥ **न च प्रतिवन्धकादिति** ॥ **जीवस्येति** ॥ अन्यथा स्वरूपत्वमेव न स्यादिति भावः । दूषणान्तरं चाह ॥ **आनन्दादीति** ॥ सिद्धे प्रयत्नस्य कुत्राप्यदृष्टेरिति भावः । न द्वितीय इत्याह ॥ **अत्रावरणादिति** ॥ **तस्यैवानुपपत्तेरिति** ॥ आवश्यकत्वान्यथानुपपत्युक्ततया ज्ञानाभावरूपाज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः ॥ **वैपरीत्या-दिति** ॥ शरीरस्यानन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वायोगादित्यर्थः ॥ **अत एवेति** ॥

(तत्त्वसुबोधिनी)

आवरणासम्भवादित्यर्थः ॥ **तद्गुणसारत्वमिति** ॥ स्वरूपभूतज्ञानादिगुणसमुदाय इत्यर्थः । गुणप्राधान्योक्तिर्बहुवचनं च व्याख्यातम् ॥ **सतो ज्ञानानन्दादेरिति** ॥ सूत्र आदिपदप्रयोगात् बालस्येति भाष्यं उपलक्षणतापरमित्यभिप्रेत्य व्याचष्टे ॥ **पुरुषेति** ॥ दार्ष्टान्तिके तदुक्तिरिति भाष्यानुरोधादाह ॥ **नायं पूर्वमिति** ॥ सौत्रस्तुशब्दः सतामेवेति भाष्येऽवधारणार्थत्वेन व्याख्यातः तस्य तात्पर्यं **मुक्तेः पूर्वं सत इति** ॥ सुप्तौ आनन्दादीनां व्यक्त्यपेक्षया मोक्षे विशेषेणाभि-व्यक्तिरित्यर्थकश्च सौत्रस्तुशब्द इत्यभिप्रेत्याह ॥ **ईश्वरप्रसादेनेति** ॥ अभिव्यक्त्यानन्दी भवति इति श्रौतव्यपदेशस्य योगादुपपत्तेरिति सौत्रांशस्यार्थमभिप्रेत्य प्रवृत्तमभिव्यक्त्यपेक्ष चेति भाष्यं व्याचष्टे ॥ **अभिव्यक्तीति** ॥ आनन्दादीनां स्वरूपत्वेऽनुभवः कुतो नेत्यत आह ॥ **प्रागिति** ॥ आनन्दादीनां स्वरूपत्वे मोक्षस्य सिद्धत्वात् तद्विषयक प्रयत्नोऽनर्थक इति तत्राह ॥ **तदभिव्यक्त्यर्थमिति** ॥ तन्निमित्ता आवरणनिमित्ता । ननु सर्वेषामप्यानन्दरूपत्वे मोक्षापातेन नरकादिदुःखं कस्यापि न स्यादित्यत आह ॥ **एतच्चेति** ॥ आनन्दादिरूपत्वकथनमिति ।

## वाक्यार्थविवरणम्

**निरातङ्कः** ॥ निर्भयः ॥ **तत्स्वरूपभूतानामिति** ॥ तथा च तत्स्वरूपतया च भूतानाम-प्यानन्दादीनां नित्याभिव्यक्तत्वप्राप्त्या नाननुभवरूपं व्यवधानमुपपन्नमिति भावः ॥ **अभिव्यक्ति-रिति** ॥ आनन्दादिरूपत्वस्यानुभव इति शेषः । **अज्ञानं** ज्ञानाभावः ॥ **उक्तत्वादिति** ॥ जीवस्याहमित्यादिनेत्यर्थः ॥ **वैपरीत्यादिति** ॥ शरीरस्य भोगायतनत्वादिति भावः ॥ **अत एवेति** ॥ आनन्दादिरूपत्वासम्भवादेव ॥ **अयुक्तमिति** ॥ सत एवाभिव्यक्तिर्न त्वसत इति भावः ॥ **ज्ञानाभावातिरिक्तेति** ॥ ज्ञानाभावस्यावरणत्वे हि व्यवधानानुपपत्तिरित्युक्तदोषः न चैवमिति भावः ॥ **तन्निमित्तेति** ॥ स्वरूपभूतानन्दादेरननुभवनिमित्तभूतेत्यर्थः ॥ **अविद्या** ॥ गुणत्रयाख्या भावरूपा अविद्या । सत्त्वादिगुणात्मिक्या विद्यादिविरोधित्वेनाविद्ययेत्यादिसुधावचनादिति ज्ञेयम् । अत एव सिद्धान्ते आवरकत्वान्यथानुपपत्त्यैव भावरूपाज्ञानसिद्धिरङ्गीकृता । ज्ञानाभावस्यावरकत्वा-भावादेवेति मन्तव्यम् ॥ **असताम्** ॥ आनन्दादीनाम् । भाष्य अनाकुलं बाह्योपप्लवशून्यं ज्ञानम् ॥ **ईश्वरप्रसादेनेत्यादि** ॥ तथा चेश्वरप्रसादाभिव्यक्त्योरुभयोरपि कल्पनं युक्तमिति भावः ।

## वाक्यार्थमञ्जरी

**आनन्दादिस्वरूपत्वाभाव इति ॥** आनन्दी भवतीति मुक्तौ तद्वत्त्वोक्त्या तत्स्वरूपत्वाभाव-स्यैवोक्तेरित्यर्थः ॥ **प्राणा भूतानीति ॥** यत्र जीवे प्राणा इन्द्रियाणि भूतान्याकाशादी निबन्धकतया सम्यक् तिष्ठन्ति स परमात्मप्रसादेन परलोकं यातीति भाष्योदाहृतश्रुतिशेषार्थः । व्यवधानस्य प्रतिबन्धकस्य एवमावरणत्वेनाभिमतस्यावरकत्वं न सम्भवतीत्युक्तम् इदानीमावरणमेव नेत्याह ॥ **अत्रेति ॥** संसार इत्यर्थः ॥ **तस्यैवेति ॥** जीवस्याहमित्यादिनाऽवरणानुपपत्त्युक्त्या ज्ञानाभाव-रूपाज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः । न ह्यावरणाभावेऽज्ञानाभावे निर्निमित्तं भवितुमर्हतीति भावः ॥ **वैपरीत्यादिति ॥** शरीरस्यानन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वानुपपत्तेरिति भावः। अत एव इदानीमावरणाभावादेव ॥ **ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ** ॥ जीवस्य सतस्तु सत एव प्राग्विद्यमानस्यैवास्य ज्ञानानन्दादिरूपत्वस्य पुंस्त्वादिवत् बाल्येऽसतः पुंस्त्वस्त्रीत्वादेरिवाभिव्यक्तियोगात् अभिव्यक्त्याऽभितः सुष्ठु व्यक्त्या निमित्तेन योगादानन्दीभवती-त्यादिव्यपदेशोपपत्तेरित्यर्थः । कालतः यौवने ॥ **तन्निमित्तेति ॥** ज्ञानाभावनिमित्तत्रिगुणात्मक-स्वगुणाच्छादिकाऽविद्याङ्गीकारादित्यर्थः । वक्ष्यमाणानुरोधेनाह ॥ **केपाश्चिदिति ॥**

## सूत्रभाष्यम्

**॥ ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ ॥ ३२ ॥**

व्यक्त्यनङ्गीकारे देवानां च नित्योपलब्धिरानन्दादीनामसुराणां नित्यानुपलब्धिर्मनुष्याणां च नित्योपलब्ध्यनुपलब्धी च प्रसज्यन्ते । 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्या' इति ह्याग्निवेश्यश्रुतिः । भविष्यत्पर्वणि च–

'नित्यानन्दज्ञानबला देवा नैवं तु दानवाः ।
दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ॥
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।
विज्ञानेनाऽऽत्मयोगेन निजरूपे व्यवस्थितिः ॥
सम्यज्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ।
विपरीतं च दैत्यानां ज्ञानस्यैवं व्यवस्थितिः' ॥ इति ।

॥ इति पुंस्त्वाधिकरणम् ॥

## तत्त्वप्रदीपिका

पूर्वं सतोऽप्यव्यक्तस्य ज्ञानानन्दादेः पश्चाद्व्यक्तिरित्यनङ्गीकारे मुक्तियोग्या विनैव साधनसम्पत्त्या नित्यव्यक्तानन्दा भवेयुः, तमोयोग्यास्संसृतावपि सुखलेशहीना नित्यदुःखिनः स्युः, संसृतियोग्या नित्यमिश्राः स्युः, यथा स्वरूपावस्थाने । परमात्मनो नित्यानन्दत्वोक्त्या देवानां च नित्यानन्दत्वं विवक्षितम् । देवभागत्वात्तस्य ।

## तत्त्वप्रकाशिका

यदुक्तं जीवस्वरूपभूतानामानन्दादीनां प्रागनभिव्यक्तानां मोक्षेऽभिव्यक्तिरिति तदयुक्तम् । जीवस्वरूपस्य नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानामीश्वरप्रसादेनाभिव्यक्त्ययोगादिति चेत्तत्र प्रष्टव्यम् । किं जीवस्यानन्दादिरूपत्वमङ्गीकृत्य तदावरणाभावात्तन्निवृत्तिर्नाभ्युपगम्यते किं वाऽनन्दादि रूपत्वमेवानङ्गीकृत्येदमुच्यते । प्रथमपक्षदूषणाय सूत्रमुपन्यस्य व्याचष्टे ॥ **नित्येति** ॥ यदि जीवस्वरूपस्यानन्दादिरूपत्वमङ्गीकृत्यावरणाभावात् व्यक्तिरावरणनिवृत्तिर्मोक्षे नाङ्गीक्रियते तर्हि देवादीनां मोक्षयोग्यानां नित्यमानन्दाद्यनुभवः स्यात् । असुरादीनां न कदाप्यानन्दाद्यनुभवः स्यात् दुःखाद्यनुभव एव भवेत् । मध्यममानुषाणां च नित्यमानन्दादीनामुपलब्धिः । केवलं तदुपलब्ध्यभावो दुःखाद्युपलब्धिश्च समैव स्यात् । आवरणाभावेऽनुभवाभावायोगादिति । अतोऽस्त्येवाविद्यावरणं भगवत्प्रसादेन तन्निवृत्तिश्चेति भावः । द्वितीयं प्रमाणविरोधेन पराचष्टे ॥ **नित्येति** ॥ एवं सुरा इति हृदयम् । यद्यप्यत्र प्रागुक्तश्रुतिरतिदेष्टुं युक्ता तथापि तत्राशेषार्थानुक्तेः श्रुत्यन्तरोदाहरणम् । अधिकरणार्थे स्मृतिं चाह ॥ **भविष्यदिति** ॥ दुःखोपलब्धिमात्रास्तद्योग्याः । उपाधिर्बाह्यः । तदेवं श्रुत्यविरोधेन जीवस्यानन्दादिरूपत्वसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

सूत्रोक्तान्यथेतिपदस्यार्थस्तु व्यक्त्यनङ्गीकार इति भाष्य एवोक्तः । तस्यार्थकथनं यदीत्यादि । सूत्रकृता **'नित्योपलब्ध्यनुपलब्धिप्रसङ्ग'** इति वाक्ये देवानां नित्यानन्दोपलब्धिः । असुराणामनुपलब्धिपदेन नित्यानन्दानुपलब्धिमात्रं फलतयोक्तं न तु नित्यदुःखानुभवः । अतो वाक्यशेषस्थान्यतरनियमपदस्याऽऽकर्षणेन नित्यानन्दोपलब्धेरन्यतरनित्यदुःखोपलब्धिनियम उक्त इति

(गुर्वर्थदीपिका)

भाष्यकृतो भावं विवेचयति । **दुःखाद्यनुभव एव भवेदिति** ॥ एवेति नियमपदार्थकथनम् । मध्यममानुषाणां तूभयस्वरूपत्वान्नित्योपलब्धिपदेनैवोभयोपलब्धिरुक्ता । अनुपलब्धिपदेन तु केवलदुःखानुपलब्धिः केवलसुखानुपलब्धिश्च गृहीतेति भावेनाऽऽह **केवलं तदुपलब्ध्यभाव** इति ॥ समैव स्यादिति वदता अन्यतरनियम इति सूत्रवाक्यस्यैकानुभवे अन्यतरानुभवनियम इत्यर्थस्सूचितो भवति । वाशब्दस्तु पूर्वोक्तपक्षद्वयादस्य पक्षान्तरत्वद्योतनार्थम् । अतो जीवत्रयस्यावरक-लिङ्गभङ्गाख्यमुक्त्यनन्तरं स्वस्वरूपानुभवो न प्रागिति सूत्रवाक्यसमुदायार्थः । 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा' इति परमात्मन एव नित्यानन्दत्वादिप्रतिपादकश्रुते-र्बिम्बप्रतिबिम्बतया जीवस्यापि तदायाति । अन्यथोत्तमजीवस्वरूपाकथनेन न्यूनता स्यादिति भावेनोक्तम् एवं सुरादय इति हृदयमिति वस्तुगत्या सूत्र एव व्यवस्थितविकल्पार्थक-वाशब्दप्रयोगादन्यतरनियम इत्यस्य तृतीयपक्षदूषणता प्रतीयते । अतोऽन्यतरशब्दार्थं पृथग्वदता भाष्यकृताऽप्यविरुद्धत्वे सदैवोपलब्धिः, विरुद्धत्वे कदाऽप्यनुपलब्धिरित्युपलब्ध्यनुपलब्धि-पदाभ्यामेवान्यतरनियमशब्दस्यार्थ उक्तो वेदितव्यः ।

## भावबोधः

सूत्रे पूर्वसूत्रादस्येत्यनुवृत्तिः । वाशब्दो व्यवस्थितविकल्पे । तथा चान्यथा अभिव्यक्त्य-नङ्गीकारे मध्यमजीवानामस्य ज्ञानानन्दादेर्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः अन्यतरनियमः । मुक्ति-योग्यानामानन्दादेरुपलब्धिनियमः । तमोयोग्यानामानन्दादेरनुपलब्धिनियम इति योजना । उक्तिलाघवाय मध्यमजीवानां प्रथममापादनमित्यभिप्रेत्य नित्यानन्दज्ञानबला इत्यादिप्रमाणानुसारेण सौत्रक्रममुल्लङ्घ्य प्रवृत्तं व्यक्त्यनङ्गीकारे देवानामित्यादिभाष्यं व्याचष्टे– **यदि जीवस्वरूप-स्येत्यादिना** ॥ व्यक्त्यभावस्य नित्योपलब्ध्याद्यनापादकत्वादाह– **व्यक्तिरावरणनिवृत्तिरिति** ॥ आवरणनिवृत्त्यभावस्यापि नित्योपलब्ध्याद्यनापादकत्वात्तत्र हेतुभूतावरणाभाव एवापादक इत्यभिप्रेत्योक्तम् । भाष्येऽसुराणामावरणाभावेनानन्दाद्युपलब्ध्यापादनमयुक्तम्; स्वरूपभूतानन्दादेर-भावादेवा-नुपलब्ध्युपपत्तेरनावरणस्याविद्यमानानुपलब्धिं प्रत्यप्रयोजकत्वाच्चेत्यतो नेदमावरणाभावस्य साक्षादापाद्यप्रदर्शनपरम्; किं त्वावरणाभावेन सर्वदा दुःखोपलब्धिरेवापाद्यते । तथा च नेय-मानन्दाद्यनुपलब्धिरापाद्यत इत्यभिप्रेत्याह– **दुःखाद्यनुभव एव स्यादिति** ॥ भाष्ये मध्यम-

(भावबोधः)

मनुष्याणामानन्दोपलब्धितदभावावापादितौ । तत्र उपलब्ध्यभावापादनमयुक्तम् । आवरणाभावस्योपलब्धिं प्रत्येव प्रयोजकत्वादित्याशङ्क्य न सुखानुपलब्धेरित्यनेन केवलाया सुखोपलब्धेरेवाभाव आपाद्यते । **किं तु** दुःखाद्यनुपलब्धिविशिष्टायाः सुखोपलब्धेरभावः । ततश्च सुखाद्यनुपलब्ध्यापादनेन दुःखाद्युपलब्धिरेवापादिता भवति । अतो न दोष इत्याह– **केवलतदुपलब्ध्यभाव इत्यादिना ॥ समैवेति ॥** मध्यममनुष्याणां निश्चयरूपत्वात् सुखस्य दुःखस्य चोपलब्धिः समैव स्यादित्यर्थः ॥ **अविद्यावरणमिति ॥** स्वप्रकाशजीवस्वरूपभूतस्याप्यानन्दादेरविद्यया आवरणं विशेषबलाद्युज्यत इति भावः । नित्यानन्द इति स्मृत्यनुसारेण श्रुत्यभिप्रायमाह– **एवमिति ॥** अन्यथोक्तयावदर्थाप्रतिपादकत्वेन प्रकृतासङ्गतेरिति भावः । संसारदशायां तन्मात्रोपलब्ध्यभावादाह– **तद्योग्या इति ॥** अत्राद्ये जीवस्यानन्दादिरूपत्वे बाधकत्वेनोक्तश्रुतियुक्त्योः सदृष्टान्तं गत्युक्त्या तद्रूपत्वसमर्थनम् । द्वितीये प्रथमसूत्रोक्ताभिव्यक्त्यनङ्गीकारे बाधकोक्तिरिति सूत्रक्रमः ।

## भावदीपः

वक्ष्यमाणश्रुतिसाफल्यायाह ॥ **किमिति ॥** सौत्रान्यथाशब्द विवरणपरभाष्यस्थव्यक्तिपदार्थमाह ॥ **व्यक्तिरावरणनिवृत्तिरिति ॥** तदनङ्गीकारे हेतुः **आवरणाभावादिति ॥** न हि प्रतियोगिनोऽभावे तन्निवृत्तिर्युक्ता । शशशृङ्गादेर्निवृत्तेरदृष्टेरिति भावः । मनुष्योत्तमानां परिग्रहाय देवादीनामित्येतद्व्याचष्टे ॥ **मोक्षयोग्यानामिति ॥** मनुष्याधमाद्युपसङ्ग्राय असुरादीनामित्यादिपदम् । भाष्ये असुराणामित्यत्रानन्दादीनामित्यनुवर्त्य असुरादीनां न कदाचिदानन्दाद्यनुभवः स्यादिति कृतापादनमयुक्तम् । स्वरूपानन्दादेरभावादेवानुपलब्ध्युपपत्तेरनावरणस्यानुपलब्धिं प्रत्यप्रयोजकत्वाच्चेत्याशङ्क्यानन्दाद्यनुपलब्धिर्नापाद्यते । किं तु तत्प्रयोजिकासुखाद्युपलब्धिविरुद्धा स्वरूपदुःखाद्युपलब्धिरापाद्यत इत्याह ॥ **दुःखाद्यनुभव एवेति ॥** उत्तमाधममानुषयोः प्राग्गृहीतत्वात्तद्व्यावृत्त्यर्थं मनुष्यपदं व्याचष्टे ॥ **मध्यमेति ॥** ननु भाष्ये तेषामानन्दोपलब्धितदभावावापादितौ । तत्रोपलब्ध्यभावापादनमयुक्तम् । आवरणाभावस्योपलब्ध्यभावं प्रत्यप्रयोजकत्वादित्याशङ्क्य केवलायाः सुखोपलब्धेरेवाभावो नापाद्यते किं तु दुःखाद्यनुपलब्धिविशिष्टायाः सुखोपलब्धेरभावः । ततश्च सुखाद्यनुपलब्ध्यापादनेन दुःखाद्युपलब्धिरेवापादिता स्यात् । अतो न दोष इत्याह ॥ **केवलं तदुपलब्ध्यभाव इत्यादिना ॥ समैवेति ॥** मध्यममनुष्याणां मिश्रत्वात्सुखस्य दुःखस्य चोपलब्धिः

(भावदीपः)

समैव स्यादित्यर्थः । सूत्रार्थस्तु तन्त्रदीपिकायां व्यक्तः ॥ **अत इति** ॥ बाधकाभावादित्यर्थः । अनादेर्भावस्य निवृत्त्युपायमाह ॥ **भगवदिति** ॥ तथा च स्मृतिः । तेषामेवानुकम्पार्थम् 'अहम-ज्ञानजं तमः । 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति ॥ **एवं सुरा इतीति** ॥ श्रुतौ परमात्मशब्देनोत्तमजीवराशिर्वा परमात्मेत्येतस्यानन्तरं'' शेषो वा विवक्षणीयः । उत्तरस्मृत्यनु-रोधादिति भावः । संसारे दुःखोपलब्धिमात्रत्वाभावादाह ॥ **तद्योग्या इति** ॥ तत्तस्मादेवमुक्तरीत्या दुःखाद्विमुक्त इति श्रुतेरभिव्यक्तिनिमित्तत्वेन सावकाशत्वादानन्दरूपत्वे आवरणाभावे च प्रमाणाभावाच्चेत्यर्थः । **जीवस्य** त्रिविधस्य । आनन्दादीत्यादिपदेन दुःखादिमिश्रत्वं च ग्राह्यम् ।

## अभिनवचन्द्रिका

तटस्थः शङ्कते **यदुक्तमिति** ॥ एतेन पूर्वपक्षिणा जीवस्य ज्ञानानन्दादिरूपत्वं नास्तीति विस्पष्टमुक्तत्वात् 'तत्र प्रष्टव्यम्' इत्यादिना वक्ष्यमाणविकल्पानुपपत्तिरिति परास्तम् । अत्र गुणसूत्रम् 'ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ' इति । अत्र अनुपलब्धिग्रहणम्, अन्यतर नियमग्रहणं, वाग्रहणं च शक्यमकर्तुम् । 'नित्योपलब्धिप्रसङ्गोऽन्यथा' इत्येतावतैव यस्य यादृशं स्वरूपं तस्य तन्नित्यमुपलभ्येतेत्येवमापादनसम्भवादिति चेत्, सत्यम् तावतैव त्रिविधजीवानां नित्यं स्वस्वरूपानुभवः स्यादित्यापादयितुं शक्यत इति । आपाद्यते च सूत्रकृता सर्वमिदं तावतैव, तथापि आवरणसद्भावान्नोपलब्धिरितिपरः परिहर्तुमुत्सहेत तन्निराकरणार्थम्, 'अनुपलब्धिप्रसंग' इत्यापाद्यान्तरमुक्तम् । तत्र द्वयोरापाद्ययोरापादकविवेचनाय 'अन्यतरनियम' इत्युक्तम् । आपाद्यापादकयोर्व्यवस्थितत्वद्योतनाय 'वा' इत्युक्तम् । ततश्च एवं सूत्रयोजना - **अन्यथा** ईश्वरप्रसादादावरणनिवृत्तिरित्यनङ्गीकारे, **नियमेन** अवर्जनीयतया, अन्यतरत् स्यात्, नास्त्येवावरणमिति वा स्यात्, अस्त्यावरणं तच्चावरणमनिवर्त्यमिति वा स्यात्, आवरणनिवृत्तिर्नेति वचनस्य उभयथापि सम्भवात् । नास्त्येवावरणमितिपक्षे यस्य यत्स्वरूपं तस्य नित्योपलब्धिप्रसङ्गः । अनिवर्त्यमावरणमिति पक्षे नित्यमनुपलब्धिप्रसङ्ग इति ॥ **जीवस्याऽऽनन्दादिरूपत्वमिति** ॥ अत्र 'अभावात्' इति प्रक्षिप्तम् । ततश्च एवं टीकावाक्यपाठः 'किं जीवस्यानन्दादिरूपत्वमङ्गीकृत्य तदावरणनिवृत्तिर्नाभ्युपगम्यते' इति ॥ **जीवस्वरूपस्येति** ॥ अत्र आवरणाभावादित्यतः परं 'तन्नित्यत्वाद्वा' इत्येतदुच्छिन्नम् । ततश्चैवं टीकावाक्यपाठः 'स्वरूपस्याऽऽनन्दादिरूपत्वमङ्गी-कृत्याऽऽवरणाभावात्, तन्नित्यत्वाद्वा व्यक्तिरावरणनिवृत्तिर्मोक्षे नाङ्गीक्रियते' इति । व्यक्त्यनङ्गीकारे

(अभिनवचन्द्रिका)

आवरणाभावो मूलमित्यस्मिन् पक्षे बाधकमाह– **तर्हीति** ।। तत्रैव बाधकमुदाहरणान्तरमाह– **असुरादीनामिति** ।। असुरादीनां स्वरूपदुःखानुभव एव स्यात् न कदाऽप्यानन्दानुभवः स्यात् स्वरूपदुःखस्यावरणाभावे वैषयिकसुखोत्पत्त्ययागादिति भावः । तत्रैव बाधकोदाहरणान्तरं वदन् आवरणनिवृत्त्यनङ्गीकारे आवरणस्याऽनिवर्त्यत्वं मूलमिति पक्षे बाधकोदाहरणमाह– **मध्यममानुषाणामिति** ।। अत्र 'केवलम्' इति पदं प्रक्षिप्तम् । 'तदुपलब्ध्यभाव' इति वाक्यं तु 'समैवस्यात्' इत्यतः परं द्रष्टव्यम् । ततश्चैवं टीकावाक्यपाठः मध्यममानुषाणां च नित्यमानन्दादीनामुपलब्धिः दुःखाद्युपलब्धिश्च समैव, तदुपलब्ध्यभावः स्यादिति । अत्रायं विवेकः मध्यममानुषाणां च नित्यमानन्दादीनामुपलब्धिः, दुःखाद्युपलब्धिश्च समैव स्यादिति प्रथमपक्षे बाधकोदाहरणान्तरम् । 'तदुपलब्ध्यभावः स्यात्' इति द्वितीयपक्षबाधकोदाहरणम् । तस्यार्थः यद्यावरणमनिवर्त्यं स्यात् मध्यममानुषाणां सुखदुःखयोर्नित्यमनुपलब्धिः स्यादिति । अस्मिन्पक्षे देवादीनां नित्यमानन्दाद्यनुपलब्धिः स्यादित्याद्युदाहरणान्तरमनयैव दिशा ज्ञातुं शक्यमिति नोक्तम् । **आवरणाभाव इति** ।। 'आवरणस्य नित्यत्वे अनुभवायोगात्' इत्यपि ग्राह्यम् । अत्र 'इतिशब्दः' प्रक्षिप्तः मूलकोशेषु अदर्शनात् ।। **अत इति** ।। आवरणभावे बाधकसद्भावात् आवरणमङ्गीकृत्य तन्निवृत्त्यनङ्गीकारे च बाधकसद्भावादित्यर्थः । एतेन आवरणानङ्गीकारे बाधकस्योक्तत्वात् अस्त्येवाविद्यावरणमित्युपसंहारो युक्तः, आवरणमङ्गीकृत्य तन्निवृत्त्यनङ्गीकारे बाधकस्यानुक्तत्वात् अस्त्येव भगवत्प्रसादेन तन्निवृत्तिश्चेत्युपसंहारोऽनुपपन्न इति परास्तम् । आवरणानङ्गीकारे उपलब्धिप्रसङ्ग इति, आवरणमङ्गीकृत्य आवरणानिवृत्त्यनङ्गीकारे अनुपलब्धिप्रसंग इति उभयानङ्गीकारे बाधकस्योक्तत्वात् । अत्रैवं भाष्ययोजना **व्यक्त्यनङ्गीकार इति** ।। आवरणाभावात् आवरणस्य नित्यत्वाद्वा व्यक्त्यनङ्गीकारे देवानां नित्योपलब्धिरानन्दादीनां स्यात् । असुराणां स्वरूपदुःखस्यावरणाभावे वैषयिकसुखाद्युत्पत्त्ययोगात् नित्यमानन्दादीनामनुपलब्धिः स्यात् । मध्यममुक्तियोग्यानां मनुष्याणां सुखदुःखयोर्नित्यमुपलब्धिः स्यात् । तथा नित्यमनुपलब्धिः स्यादिति । अत्रायं विवेकः आवरणानङ्गीकारे देवानामानन्दादीनां नित्योपलब्धिः; असुराणां वैषयिकसुखादीनां अनुपलब्धिः, मनुष्याणां नित्योपलब्धिरिति दूषणोदाहरणत्रयम् । आवरणनित्यत्वपक्षे तु मनुष्याणां स्वरूपभूतसुखदुःखानुपलब्धिरित्येकं दूषणम् । उदाहरणद्वयन्तु ज्ञातुं शक्यमिति नोक्तम् ।। **भगवत्प्रसादेन तन्निवृत्तिश्चेति** ।। इदन्तु देवानाम्, दैत्यानान्तु आनन्दात्मकभगवत्कोपेन आवरणनिवृत्तिः, मध्यममनुष्याणां तु ईषत्प्रसादयुक्तेषत्कोपेन

(अभिनवचन्द्रिका)

आवरणनिवृत्तिरिति बोध्यम् । न च मध्यममनुष्याणां मुक्त्यङ्गीकारे नित्यबद्धत्व-नित्यसंसारित्वादिव्यपदेशविरोध इति वाच्यम् । केषाञ्चिदेव मनुष्याणां मिश्रमोक्षाङ्गीकारेण नित्यबद्धादिव्यवहारस्य तद्रहितमनुष्यविषयतोपपत्तेः कुतो वैरूप्यमिति चेत्, केषाञ्चित् तावन्मोक्षोऽङ्गीकार्यः । मानुषाणां विमिश्रितमिति मिश्रज्ञानस्य मोक्षसाधनत्वाभिधानात् । न च सर्वेषां मोक्षोऽयुक्तः 'शृण्वे वीर उग्रमुग्र' इति श्रुतौ संसारस्य नित्यत्वाभिधानादिति ।

पूर्वपक्षस्तु – न जीवो ज्ञानानन्दादिरूपः । 'स दुःखाद्विमुक्त आनन्दी भवति'त्यादि श्रुतेः । न च आनन्दादिरूपत्वेऽपि आनन्दः सबलः' इत्यादि श्रुतिरस्तीति नानन्दादि-रूपत्वाभावनिर्णयः सम्भवतीति वाच्यम् । जीवो नानन्दादिरूपः तथोपलब्धियोग्यत्वे सति तथाऽनुपलभ्यमानत्वादिति युक्तिसद्भावेन अनानन्दत्वश्रुतेः सयुक्तिकत्वात्, न जीवस्यानन्दादि-रूपत्वेन केनचिन्मोक्षाय प्रयतितव्यमिति बाधकसद्भावाच्च । न च प्रतिबन्धकवशात् अनुपलब्धिः, तन्निवृत्त्यर्थं प्रयत्नश्च सम्भवतीति वाच्यम् । जीवस्य 'अहम्' इति नित्याभिव्यक्तत्वेन तत्स्वरूप-भूतानां व्यवधानस्यैवानुपपत्तेः । किञ्च आवरणवशादननुभव इति वदन्प्रष्टव्यः । किमावरणम् अज्ञानं, शरीरादि वा । नाद्यः जीवस्यानन्दादिरूपत्वे आनन्दाद्यज्ञानमनुपपन्नमिति चोदिते अज्ञानवशादज्ञानमुपपन्नमिति परिहारायोगात् । न द्वितीयः वैपरीत्यात् । तदेवं सयुक्तिक-श्रुतिविरोधादप्रमाणमेवाऽन्यश्रुतिः । अतो नेश्वरे श्रुतिसमन्वयो युक्त इति ।

सिद्धान्तस्तु – भवत्येव आनन्दादिरूपो जीवः । तथा श्रुतेः । न च 'आनन्दीभवति' इत्यादि श्रुतिविरोधः । यथा पुरुषयोषिदादीनाम् अपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालतस्त-दभिव्यक्तेर्नायं पूर्वपुमान् इदानीं पुमानित्यादि युज्यते । एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादेनाऽभिव्यक्तिनिमित्तेन 'आनन्दी भवति' इत्यादि व्यपदेशोपपत्तेः । नापि प्रयत्नानुपपत्तिः । तदभिव्यक्त्यर्थमेव मुमुक्षूणां प्रयत्नोपपत्तेः । न चावरणानुपपत्तिः । ज्ञाना-भावातिरिक्ताऽविद्याया एवाऽऽवरणत्वाभ्युपगमात् । ननु जीवस्वरूपभूतानामानन्दादीनां प्रागनभि-व्यक्तानां मोक्षे अभिव्यक्तिरित्ययुक्तं, जीवस्वरूपस्य नित्याभिव्यक्तत्वादिति चेत्, अत्र वक्तव्यम् । किं जीवस्वरूपस्याऽऽनन्दादिरूपत्वमङ्गीकृत्य आवरणनिवृत्तिर्नाभ्युपगम्यते, उतानङ्गीकृत्येति । आद्येऽपि वक्तव्यम् । आवरणनिवृत्त्यङ्गीकारे आवरणाभावो मूलम्, उत तस्यानिवर्त्यत्वम् । नाद्यः । देवदानवमानवानां नित्यं स्वस्वरूपोपलब्धिप्रसङ्गात् । आवरणाभावेऽनुभवाभावायोगात् ।

(अभिनवचन्द्रिका)
न द्वितीयः । देवदानवमानवानां कस्यापि स्वस्वरूपस्यानुपलब्धिप्रसङ्गात् प्रतिबन्धकस्य सदातनत्वात् । नान्त्यः – 'नित्यानन्द' इति श्रुतिविरुद्धत्वात् । तदेवं श्रुत्यविरोधेन जीवस्य आनन्दादिरूपत्वसिद्धेः युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वसूत्रे मुखत उपात्तसज्जीव विवक्षया शङ्कते ॥ **यदुक्तमिति** ॥ उपलक्षणमेतत् । तमोयोग्यस्वरूपस्य नित्याभिव्यक्तत्वेन तत्स्वरूपदुःखादीनामीश्वरकोपेनाभिव्यक्त्ययोगात् । मिश्रस्वरूपस्याहमिति नित्याभिव्यक्तत्वेन तत्स्वरूपभूत सुखदुःखोभयमिश्रत्वस्यावरणत्वायोगा-दित्यपि द्रष्टव्यम् ॥ **किं जीवस्येति** ॥ अस्माभिर्जीवस्य नित्यानन्द इत्यादिश्रुत्या आनन्दादिरूपत्वे उपपादिते । अस्त्वानन्दादिरूपत्वं ज्ञस्य तथाप्यावरणं नोपेयं इत्यङ्गीकारवादेन दूषणं ब्रूषे वा किं वा तदेव नाङ्गीकृत्येति विकल्पाशयः ॥ **सूत्रे अस्येत्यस्ति** ॥ ज्ञस्य नेत्यनुवर्तते । तच्च त्रिविधजीवपरम् । वाशब्दो व्यवस्थितविकल्पे । अन्यतरनियम इत्युभयनियम इत्यर्थः । स्वाप्ययसंपत्योरन्यतरापेक्षमित्यत्रान्यतरशब्दस्योभयार्थे प्रयोगादित्यभिप्रेत्यान्यथेत्यादे-रर्थकथनपरं व्यक्त्यनङ्गीकार इत्यादिभाष्यं व्याचष्टे ॥ **यदि जीवेत्यादिना** ॥ यदि सज्जीव-स्यानन्दरूपत्वं तमोयोग्यस्यादिपदोपात्तदुःखरूपत्वं नित्यसंसारिणस्तदुभयरूपत्वमङ्गीकृत्या-नन्दादेरावरणस्यैवाभावादागन्तुक व्यक्त्यनङ्गीकारे नित्यव्यक्त्यङ्गीकार इति यावदितीदमापादकं त्रितयसाधारणम् । आवरणनिवृत्तिर्मोक्षे नाङ्गीक्रियत इति तु सदसद्विवक्षयैव न तु नित्यसंसारि-विवक्षयेति ध्येयम् ।

एवमन्यथेत्यापादकांशव्याख्यापरं व्यक्त्यनङ्गीकार इत्यंशं व्याख्याय ज्ञस्य ज्ञानां देवानां अस्य तद्गुणसारत्वस्यानन्दादीनां नित्यमुपलब्धिः स्यादित्यापाद्य विवरणपरं देवानामित्यादिभाष्यं व्याचष्टे तर्हि **देवानामिति** ॥ ज्ञस्य ज्ञानामसुराणामानन्दादेः नित्यमुपलब्धिरित्यापाद्यान्तरप्रतिपादक-मसुराणामिति भाष्यं व्याचष्टे **असुरादीनामिति** ॥ नन्वसुराणां स्वरूपानन्दादेरभावादावरणाभावे तदनुपलब्ध्यापादनमयुक्तमित्यत उक्तं **न कदापीति** ॥ संसारेऽपीत्यर्थः । आनन्दानुभवाभावे किं स्यादित्यतस्तात्पर्यमाह ॥ **दुःखाद्यनुभव एवेति** ॥ तद्दुःखाद्यनुभव एवेत्युपस्कारेण व्याख्येयम् । ज्ञस्य ज्ञानां नित्यसंसारिणाम् अस्यानन्दादेरन्यतरनियमः उपलब्ध्यनुपलब्ध्युभयनियम

(वाक्यार्थमुक्तावली)

इत्यापाद्यान्तरप्रदर्शनपरं मनुष्याणामिति भाष्यं व्याचष्टे **मध्यमेति** ॥ सुखोपलब्धिनियमं सुखानुपलब्ध्यापादनमयुक्तमित्यतस्तद्व्याचष्टे **केवलमिति** ॥ केवलायाः दुःखोपलब्ध्यसहकृतायाः सुखोपलब्धेरभाव इत्यर्थः ।

तात्पर्यमाह **दुःखेति** ॥ मध्यममनुष्याणां मिश्रत्वात्सुखस्य, दुःखस्य चोपलब्धिः समैव स्यादित्यर्थः । तदुक्तं तत्त्वप्रदीपे । पूर्वं सतोऽप्यव्यक्तस्य ज्ञानादेः पश्चाद्व्यक्त्यनङ्गीकारे मुक्तियोग्या विनैव साधनसम्पत्त्या नित्यव्यक्तानन्दा भवेयुः । तमोयोग्याः संसृतावपि सुखलेशहीना नित्यदुःखिनः स्युः । संसृतियोग्या नित्यमिश्रा स्युरिति । अत्र यद्वक्तव्यं तदुक्तं प्रमेयमुक्तावल्याम् । भावबोधे तु मध्यमजीवानामस्य ज्ञानानन्दादेः नित्योपलब्ध्यनुपलब्धिप्रसङ्गः अन्यतरनियमः मुक्तियोग्यानामानन्दादेरुपलब्धिनियमः तमोयोग्यानामानन्दादेरनुपलब्धिनियम इति योजना । उक्तिलाघवाय मध्यमजीवानां प्रथममापादनमित्यभिप्रेत्य नित्यज्ञानानन्दबला इत्यादिप्रमाणानुसारेण सौत्रक्रममुल्लङ्घ्य प्रवृत्तं व्यक्त्यनङ्गीकारे देवानामित्यादिभाष्यं व्याचष्टे **यदि जीवस्वरूपस्येत्यादिना** ॥ योजनोक्ता चन्द्रिकाभावबोधयोः । दुखाद्यनुभव एव भवेदित्येतद्भाष्ये असुराणामावरणाभावेनानन्दाद्यनुपलब्ध्यापादनमयुक्तम् । स्वरूपभूतानन्दादेरभावादेवानुपलब्ध्युपपत्तेः । आवरणस्याविद्यमानानुपलब्धिविरुद्धस्वरूपदुःखाद्युपलब्धिरापद्यत इत्यतः दुःखानुभव एव भवेदिति व्याख्यातम् ।

ननु नित्योपलब्धिप्रसङ्गोऽन्यथेत्येतावतैव यस्य यादृशं रूपं तस्य तन्नित्यमुपलभ्येतेत्येवं स्वस्वरूपानुभवस्यापादयितुं शक्यत्वादनुपलब्धीत्यादिव्यर्थमिति चेन्न । पूर्वमानन्दादेरेवास्येति परामर्शितत्वात् । अन्यथा आवरणानङ्गीकारे आनन्दादेर्नित्योपलब्धिप्रसङ्ग इत्यस्य सूत्रस्यैकविषयत्वाभावप्रसङ्गेन तमोयोग्यनित्यसंसारिविषयत्वस्फोरणाय सर्वसार्थक्यादिति ज्ञेयम् । नित्यानन्द इति स्मृत्यनुसारेण श्रुत्यभिप्रायमाह ॥ **एवमिति** ॥ अन्यथोक्तयावदर्थप्रतिपादकत्वेन श्रुत्युदाहरणमसङ्गतं स्यादिति भावः ॥ **अशेषार्थानुक्तेरिति** ॥ इतरेषां दुःखस्वरूपत्वाद्यनुक्तेरित्यर्थः । संसारदशायां तन्मात्रोपलब्ध्यभावादाह ॥ **तद्योग्या इति** ॥ भविष्यत्पर्ववचनार्थस्तु प्रमेयमुक्तावल्यामनुसन्धेयः । अत्राद्ये जीवस्यानन्दादिरूपत्वे बाधकत्वेनोक्तश्रुतियुक्त्योः सदृष्टान्तं गत्युक्त्या तद्रूपत्वसमर्थनम् । द्वितीये प्रथमसूत्रोक्ताभिव्यक्त्यङ्गीकारे बाधकोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

सूत्रे पूर्वसूत्रास्येत्यनुवृत्तिः वाशब्दो व्यवस्थितविकल्पे । तथा च अन्यथा व्यक्त्यङ्गीकारे मध्यमजीवानां तस्य ज्ञानानन्दादेः नित्योपलब्ध्यनुपलब्धिप्रसङ्गः । अन्यतरनियमः मुक्तियोग्यानामानन्दादेरुपलब्धिनियमः । तमोयोग्यानामानन्दादेरनुपलब्धिनियम इति योजना । युक्तिलाघवाय मध्यमजीवानां प्रथममापादनमित्यभिप्रेत्य 'नित्यानन्दा' इति प्रमाणानुसारेण सौत्रक्रममुल्लङ्घ्य प्रवृत्तं व्यक्त्यनङ्गीकारे देवानामित्यादिभाष्यं व्याचष्टे ॥ **यदि जीवस्वरूपस्येत्यादिना** ॥ व्यक्त्यभावास्य नित्योपलब्ध्यापादकत्वादाह ॥ **व्यक्तिरावरणनिवृत्तिरिति** ॥ भाष्येऽसुराणामावरणाभावेनानन्दाद्यनुपलब्ध्यापादनमयुक्तम् । स्वरूपानन्दादेरभावादेवानुपलब्ध्युपपत्तेः । अनावरणस्यानुपलब्धिं प्रत्यप्रयोजकत्वाच्चेत्याशङ्क्यानन्दाद्यनुपलब्धिरापाद्यते किन्तु तत्प्रयोजिका सुखाद्युपलब्धिविरुद्धा स्वरूपदुःखाद्युपलब्धिरापाद्यत इत्याह ॥ **दुःखाद्यनुभव एव भवेदिति** ॥ भाष्ये मध्यममनुष्याणामानन्दोपलब्धितदभावावापादितौ । तत्रोपलब्ध्यभावापादनमयुक्तमावरणाभावस्यानुपलब्धिं प्रत्यप्रयोजकत्वादित्याशङ्क्य केवलायाः सुखोपलब्धेरेवाभावो नापाद्यते किन्तु दुःखाद्यनुपलब्धिविशिष्टायाः सुखोपलब्धेरभावः । ततश्च सुखाद्यनुपलब्ध्यापादनेन दुःखाद्युपलब्धिरेवापादिता भवति । अतो न दोष इत्याह ॥ **केवलं तदुपलब्ध्यभाव इत्यादिना** ॥ **समैवेति** ॥ मध्यममनुष्याणां मिश्रत्वात् सुखस्य दुःखस्य चोपलब्धिः समैव स्यादित्यर्थः ॥ **अविद्यावरणमिति** ॥ स्वप्रकाशजीवस्य स्वरूपभूतस्याप्यनानन्दादेः अविद्याद्यावरणविशेषबलाद्युज्यत इति भावः । नित्यानन्द इति स्मृत्यनुसारेण श्रुत्यभिप्रायमाह ॥ **एवमिति** ॥ अन्यथोक्तयावदर्थाप्रतिपादनेन प्रकृतासङ्गतेरिति भावः ॥ **एवं सुरा इति हृदयमिति** ॥ श्रुतौ परमात्मशब्देनोत्तमजीवराशिर्वा परमात्मेत्यस्यानन्तरम् एवं सुरा इत्यध्याहारो वा विवक्षणीयः । नैवमसुरा इत्युत्तरवाक्येऽसुरजीवानां प्रतियोगित्वेनोक्तेः । भाष्योक्तस्मृतिसमाख्यानाच्चेति भावः । संसारदशायां तन्मात्रोपलब्ध्यभावादाह ॥ **तद्योग्या इति** ॥ अत्राद्ये जीवस्यानन्दादिरूपत्वसमर्थनम् । द्वितीये अभिव्यक्त्यङ्गीकारे बाधकोक्तिः ।

## वाक्यार्थविवरणम्

**तन्निवृत्तिर्नाभ्युपगम्यत इति** ॥ सत एव हि निवृत्तिः । तथा च तन्निवृत्तिद्वाराऽभिव्यक्त्यर्थमीश्वरप्रसादो नापेक्षित इत्यर्थः ॥ **अनङ्गीकृत्येति** ॥ तथा चानन्दादिरूपत्वमेव जीवेऽनङ्गी-

**(वाक्यार्थविवरणम्)**

कृत्याभिव्यक्त्ययोगादित्युच्यते । तथा च जीवस्वरूपभूतानामानन्दादीनां प्रागनभिव्यक्तानां मोक्षेऽभिव्यक्तिरित्युक्तमिति भावः ॥ **मोक्षयोग्यानामिति** ॥ तथा च भाष्ये देवशब्देन ब्रह्माणमारभ्य मनुष्योत्तमपर्यन्ताः सज्जना ग्राह्या इत्युक्तं भवति । इष्टापत्तिपरिहारायाह ॥ **दुःखादीति** ॥ नित्यमिति वर्तते । भाष्यस्यानुपलब्धिपदं व्याख्याति ॥ **केवलेति** ॥ तस्याप्यर्थमाह ॥ **दुःखादीति** ॥ न्यूनतापरिहारायाह ॥ **एवमिति** ॥ परमात्मवन्नित्यज्ञानानन्दादिरूपा इत्यर्थः ॥ **अत्रेति** ॥ द्वितीयशङ्कानिरासे ॥ **प्रागुक्तेति** ॥ 'बलमानन्द ओजश्च' इति प्रागुक्तेत्यर्थः । तथा च 'बलमानन्द' इति श्रुतावपि जीवस्य ज्ञानानन्दरूपत्वोक्तेस्तच्छ्रुत्यतिदेशे आनन्दादिरूपत्वमेवानङ्गीकृत्येदमुच्यत इति द्वितीयशङ्कानिरासो भवतीति नित्यानन्द इति श्रुत्युदाहरणं व्यर्थमित्यर्थः ॥ **अशेषार्थेति** ॥ तत्र सज्जीवानामानन्दादिरूपत्वोक्तावपि परमात्मनो ज्ञानादिरूपत्वम् असुराणां दुःखादिरूपत्वं मनुष्याणामुभयरूपत्वमित्येवरूपाशेषार्थस्य 'बलमानन्द इति श्रुतावनुक्तत्वान्नित्यानन्द इति श्रुतौ चाशेषार्थोक्तेस्तदुदाहरणं युक्तमिति भावः । इदानीं दुःखोपलब्धिमात्रत्वाभावादाह ॥ **तद्योग्या इति** ॥ एवं सति जीवा उत्तमा मध्यमा अधमाश्चेति त्रिविधाः । भाष्ये मनुष्यशब्दो मध्यमभूतनित्यसंसारिपरः । असुरशब्दस्तमोयोग्यपरः । देवताशब्दो मोक्षयोग्यपर इति स्थिते केचित्स्वयूथ्याः सूत्रे 'नित्योपलब्ध्यनुपलब्धि' इत्युक्त्या भाष्ये च 'मनुष्याणां नित्योपलब्ध्यनुपलब्धी' इत्युक्त्या, 'सुखदुःखमध्य सम्प्राप्तये' इत्यन्यत्रोक्त्या, टीकायां च मिश्रत्वं च ज्ञातव्यमित्युक्त्या उत्तमाधमवन्मध्यमानामपि सुखदुःखात्मकस्वरूपाभिव्यक्तिरूपमोक्षोऽस्ति । तथा टीकायामतोऽस्त्येवाविद्यावरणं भगवत्प्रसादेन तन्निवृत्तिश्चेत्युक्त्या तेषामपि लिङ्गदेहभङ्गोऽस्तीत्यादिकं वर्णयन्ति । तत्संप्रदायाननुगुणम् । अनुव्याख्याने 'मुक्तिश्च द्विविधा मता' इति । सदसन्मुक्तिरूपमुक्तिद्वयस्यैवोक्तेः । 'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः' इति श्रुतावुत्तमाधमयोरेव मोक्षतमःप्राप्त्युक्तेः । न च वाच्यमसुराणां दमनमेवोच्यते न तमःप्राप्तिरिति । तमसि स्थापनस्यैव तेषां दमनत्वात् । यथोक्तम् । 'अथ च दैत्यहतिस्तमसि स्थिरा नियत संस्थितिरेव न चान्यथा' इति । 'असुरान् दमयन् विष्णुः स्वपदं च सुरान्नयन् । पुनः पुनर्मानुषांस्तु सृतावावर्तयत्यजः' इति प्रमाणे पुनः पुनः सृतावावर्तनस्यैवोक्तेः । 'त्रिदिवनिरयभूगोचरान्नित्यबद्धान्' इति तत्त्वप्रदीपिकाकारैरपि नित्यबद्धत्वस्यैवोक्तेर्नित्यसंसारीति प्रसिद्धिबलान्निरवकाशबहुतरप्रमाणान्तरबलाच्च नित्यसंसार्यपरपर्यायमध्यमानां मोक्षकल्पनस्यायुक्तत्वात् । लिङ्गदेहभङ्ग-

(वाक्यार्थविवरणम्)

कल्पनमप्यप्रामाणिकम् । मोक्षे योग्यानां तन्निवृत्तिकथनात् अधमानां वायुगदाप्रहारत इत्यादौ वायुगदाप्रहारेण लिङ्गभङ्गकथनान्मध्यमानां लिङ्गभङ्गः कथम् । न चापरोक्षज्ञानेनेति वाच्यम् । तस्यैवानुपपन्नत्वात् । तथा हि । 'पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः' इत्युत्तमाधमयोरेवा-परोक्षज्ञानोक्तेः । तन्यायेन अत्रापि तत्कल्पने तेषां सुखदुःखरूपमोक्षप्राप्त्यर्थं सुखदुःखवत्त्वेन भगवदुपासनं सुखदुःखविशिष्टभगवत्साक्षात्कार इत्याद्यप्रामाणिकं बहुतरं कल्पनीयं स्यात् । सूत्रभाष्यादिकं तु मोक्षयोग्योत्तमाधमसाहचर्यान्मध्यमेषु छत्रिन्यायेनोपचरितं ज्ञातव्यम् । बहुबाध-स्यान्याय्यत्वात् । त्यजेदेकं कुलस्यार्थे' इति न्यायादिति । भाष्ये आत्मयोग्यं ज्ञानमेव, दर्शयति । सम्यग्ज्ञानं त्विति ।

## वाक्यार्थमञ्जरी

**तदा मुक्तौ** । अन्यथावरणानङ्गीकारे मध्यमजीवानामानन्दादेर्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः नित्यमानन्दादेरुपलब्धिस्तथा अनुपलब्धिः आनन्दोपलब्ध्यभावः दुःखाद्युपलब्धिरिति यावत । तदुभयं समं स्यात् अन्यतरनियमः मुक्तियोग्यानामानन्दादेरुपलब्धिनियमः तमोयोग्यानामा-नन्दाद्यनुपलब्धिनियमः स्यादित्यर्थः । व्यक्तिरित्यनुवादः । ऋग्भाष्यादिसङ्ग्रहायाह ॥ **मोक्ष-योग्यानामिति** ॥ नन्वसुरादीनामानन्दस्वरूपत्वाभावादेव तदनुपलब्धिरित्यतस्तस्य तात्पर्यमाह ॥ **दुःखाद्यनुभव एवेति** ॥ स्वरूपदुःखस्यावरणाभावे वैषयिकसुखोत्पत्तेरप्ययोगादिति भावः । आवरणाभावस्योपलब्धिं प्रत्येव प्रयोजकत्वेन कथमनुपलब्धिः सम्पद्यत इत्यत आह ॥ **दुःखाद्यनुप-लब्धिश्चेति** ॥ **समैवेति** ॥ मध्यममनुष्याणां मिश्रस्वरूपत्वेन सुखदुःखस्य चोपलब्धिः समैव स्यादित्यर्थः । नित्यानन्द इति स्मृत्यनुसारेणाह ॥ **एवमिति** ॥ अन्यथोक्तयावदर्थाप्रतिपादकत्वेन प्रकृतासङ्गतेरिति भावः । संसारदशायां तन्मात्रोपलब्ध्यभावादाह ॥ **तद्योग्या इति** ॥

॥ इति पुंस्त्वाधिकरणम् ॥

## १७. अथ कर्तृत्वाधिकरणम्

## सूत्रभाष्यम्

ईश्वरस्यैव कर्तृत्वमुक्तम् । 'यत्कर्म कुरुते तदभिसम्पद्यत' (बृ.उ. ६-४-५) इति जीवस्योपलभ्यते । अत आह–

**॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ ३३ ॥**

जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्ता ।

## तत्त्वप्रदीपिका

जीवस्य कर्तृत्वाभावे स्वर्गादिफलार्थं प्रवर्तमानं शास्त्रमनर्थकं स्यात् । तथाहि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवञ्जातीयकं विधिप्रतिषेधात्मकमिष्टं प्रेप्सन्तमनिष्टं परिजिहीर्षन्तमधिकारिणं शास्ति ।

## तत्त्वप्रकाशिका

अत्रेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवकर्तृत्वविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । ईश्वरे श्रुतिसमन्वय उक्तः । स च जीवकर्तृताविषयश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः स्यादिति तन्निरासः कार्य एव । प्रकृतो जीव एव विषयः । किं कर्ता न वेति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयति ॥ **ईश्वरस्येति** ॥ ईश्वरस्यैव कर्तृत्वमुक्तमित्यनेन नान्यः कर्तेत्यादि श्रुतिं सूचयति । जीवो न कर्तेति पूर्वः पक्षः । तत्कर्तृत्वाभावस्य श्रुतत्वात् । जीवकर्तृत्वेऽप्यस्ति श्रुतिः न चासावीश्वर-विषया । 'तदभिसम्पद्यते' इति फलसम्पत्तिश्रवणादिति चेन्न । अकर्तृकत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । समर्थितं हीश्वरस्यैवानन्ययोगेन कर्तृत्वमितरव्यपदेशादित्यादौ । अत एव द्वयोः कर्तृत्व-मित्यपि प्रत्युक्तम् । ईश्वरस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवं च स्यात् । जीवस्यापि तदङ्गीकारे तु गौरवं स्यात् । न खलु लाघवाय श्रुत्यादिसिद्धमीश्वरस्य कर्तृत्वं हातुं युक्तम् । अतः सयुक्तिक-श्रुतिविरोधेन कर्तृत्वश्रुतेरप्रामाण्यादयुक्तो नारायणे श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ अस्त्येव जीवस्यापि कर्तृत्वम् । तदभावे विधिनिषेधशास्त्रवैयर्थ्यप्रसङ्गात् । न हि कर्तारमन्तरेणारण्यरोदनायमानशास्त्रस्य सार्थक्यं भवति । न च जडं प्रति तौ भवतो नापीश्वरं

(तत्त्वप्रकाशिका)
प्रति । **तथा सति पुण्यपापलेपप्रसङ्गेनानीश्वरत्वापत्तेः । अतो जीवस्य कर्तृत्वाङ्गीकारे शास्त्रस्यार्थवत्त्वसिद्धेः सोऽपि कर्ताऽङ्गीकार्य इति भावः ।**

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृत इति** ॥ अभिव्यक्तज्ञानानन्दबलकर्तृत्वादिगुण-स्वरूपत्वेन प्रकृत इत्यर्थः । तथा चास्त्वानन्दादीनां सतामभिव्यक्तिः, न तु कर्तृत्वस्य तस्य कदाप्यभावादिति पूर्वपक्षोत्थानात् सङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र जीवः कर्ता न भवत्युत भवतीति चिन्ता । तदर्थं **'यत् कर्म कुरुत'** इत्यादिजीवकर्तृत्वश्रुतिः कल्पनालाघवयुक्त्युपोद्बलितया 'नान्यः कर्त्ता' इति श्रुत्या बाधितोत नेति । तदर्थं जीवस्य कर्तृत्वं किं काल्पनिकमुत स्वाभाविकमिति । तदर्थं 'नान्यः कर्ता' इत्यादिश्रौतो निषेधः किं नोपपद्यत उतोपपद्यत इति । तदर्थं सा श्रुतिर्जीवस्य कर्तृत्वमात्रनिषेधपरोत स्वतन्त्रकर्तृत्वनिषेधपरेति । तदर्थमीश्वराधीनशक्तित्व-रूपं पराधीनकर्तृत्वं जीवस्य किं नोपपद्यत उतोपपद्यत इति । तदर्थं विधिप्रतिषेधशास्त्रस्य पराधीनकर्तृत्वादौ प्रमाणं नास्त्युतास्तीति । भाष्योक्तपूर्वोक्तश्रुत्योः सन्देहबीजत्वप्रतीतावप्यस्मिन् पादे सर्वत्र श्रुतिविगानमेव सन्देहबीजमित्यभिप्रेत्योक्तम् श्रुतिविगानं सूचयति । तदुपपादयति **ईश्वरस्यैव कर्तृत्वमुक्तमित्यनेनेति** ॥ न्यायविवरणे इतरव्यपदेशादित्यत्रास्याः श्रुतेरुदाहृतत्वादिति भावः । ईश्वरस्यैव कर्तृत्वमिति, भाष्योक्तयुक्तिमाह– **समर्थितं हीति** ॥ अनेन हिताक्रियादिरूपा युक्तिरुक्ता भवति । ईश्वरस्यैव कर्तृत्वे कल्पनालाघवमिति न्यायविवरणोक्तयुक्तिमाह– **ईश्वरस्यैवेति** ॥ तर्हि लाघवाय जीवस्यैव कर्तृत्वं भवत्वित्यत आह– **न खल्विति** ॥ जीवकर्तृत्वे हिताक्रियादिदोषप्रसक्तेर्बाधकस्योक्तत्वाच्चेत्यपि ग्राह्यम् । अत्र 'शास्त्रार्थवत्त्वात्' इति हेतूक्त्या सूचितं जीवस्य कर्तृत्वाभाव इति भाष्ये जीवस्याकर्तृत्वे शास्त्रवैयर्थ्यादिति हेतूक्त्या सूचितं, जीवस्याकर्तृत्वे शास्त्रवैयर्थ्यादिति न्यायविवरणे चोक्तं विपक्षे बाधकतर्कमाह– **तदभाव इति** ॥ सौत्रप्रतिज्ञाव्याख्यानपरेण जीवोऽपि कर्तेति भाष्येण हेतुव्याख्यानपरं तस्यापि कर्तृत्वे शास्त्रार्थ-सिद्धेश्चेति न्यायविवरणं संयोजयति– **अतो जीवस्येति** ॥

## भावदीपः

भाष्ये उक्तमित्यस्य श्रुतौ उक्तमित्यप्यर्थमुपेत्य पादसङ्गत्यर्थं तत्सूचितमाह ॥ **ईश्वरस्यैवेति** ॥ **न कर्तेतीति** ॥ स्वतन्त्रकर्ता परतन्त्रकर्ता वा नेत्यर्थः । भाष्ये श्रुतिशेषोक्तेरुपयोगं व्यनक्ति ॥ **न चेत्यादिना** ॥ सयुक्तिकत्वेन लाघवादिरूपयुक्तिसाहित्येनेत्यर्थः । ईश्वरस्यैव कर्तृत्वे कल्पनालाघव-मित्यन्यत्रोक्तलाघवयुक्तिं वक्तुमनुभवसिद्धजीवकर्तृत्वादप्यप्रामाणिकस्येश्वरकर्तृत्वस्य स्वीकार एव गौरवमित्याशङ्कानिवृत्तये तस्य प्रामाणिकत्वायेश्वरस्यैवेत्यादि भाष्यं व्याचष्टे ॥ **समर्थितं हीति** ॥ एवकारार्थोऽन्ययोगेनेति । यद्यपीतरव्यपदेशादित्यधिकरणे जीवकर्तृत्वमेव निराकृतं तथापि क्षीरवद्धि देवादिवदपि लोके इत्यनेन तस्याप्युक्तेरिति भावः । आदिपदेन प्रवृत्तेश्च अन्यत्राभावात्र अन्यथानुमितौ च ज्ञशक्तिवियोगात् तेजोऽतस्तथा ह्याह इत्यादिग्रहः । एवकारतात्पर्यमाह ॥ **अत एवेति** ॥ हिताक्रियादिना अन्यकर्तृत्वनिरासपूर्वमीशकर्तृत्वसमर्थनादेवेत्यर्थः । एतेन जीवेशयोर्द्वयोः कर्तृत्वायोगादिति युक्तिर्दर्शिता । एवं भाष्योक्तां युक्तिमुक्त्वाधुनान्यत्रोक्तां च युक्तिं व्यनक्ति ॥ **ईश्वरस्यैवेति** ॥ **गौरवमिति** ॥ विधिनिषेधशास्त्रवैयर्थ्यं तु सिद्धान्तेऽपि समम् । दारुयोषवज्जीव-स्यापि परतन्त्रकर्तृत्वोपगमादिति भावः । वैपरीत्यं किं नेत्यत आह ॥ **न खल्विति** ॥ नापि नान्यः कर्तेति श्रुत्या हिताक्रियादियुक्त्या च निषिद्धं जीवकर्तृत्वमुपादातुं युक्तमित्यपि योज्यम् । एतेन भाष्ये ईश्वरस्यैव कर्तृत्वमुक्तं समर्थितमित्युक्तेरुपयोगो दर्शितः ॥ **अत इति** ॥ द्वयोः कर्तृत्वा-योगादीश्वरस्यैव कर्तृत्वे लाघवाच्चेत्यर्थः । सयुक्तिकत्वेऽयं हेतुः । जीवोऽपि कर्तेति भाष्यार्थमाह ॥ **अस्त्येवेति** ॥ जीवस्याकर्तृत्वे शास्त्रस्य वैयर्थ्यादित्यन्यत्रोक्त्यनुरोधेन भाष्यार्थमाह ॥ **तदभाव इति** ॥ ज्योतिष्टोमेन स्वर्गकामो यजेत ब्राह्मणो न हन्तव्य इत्यादिविधिनिषेधरूपस्येत्यर्थः । तर्कस्याप्रयोजकत्वं निराह ॥ **न हीति** ॥ अस्त्वन्यदेव कर्तृ इत्यत आह ॥ **न चेति** ॥ तौ विधिनिषेधौ । नापि मुक्तं प्रति व्याहतेरिति भावः । भाष्यं सौत्रहेतोर्व्यतिरेकमुखेनोपपादकमिति भावेन तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्चेत्यन्यत्रोक्त्यनुरोधेन भाष्यस्य विपर्यये पर्यवसानमुखेन सूत्रार्थमाह ॥ **अत इति** ॥ विपक्षे बाधकभावादित्यर्थः ॥ **सोऽपीति** ॥ सूत्रे ज्ञ इत्यनुवृत्तिरिति भावः ।

## अभिनवचन्द्रिका

**श्रुतिसमन्वयसिध्यर्थमिति** ।। 'एष उ एव साधुकर्म कारयति' इत्यादि श्रुतिसमन्वय-सिद्ध्यर्थमित्यर्थः ।। **अनुपपन्नः स्यादिति** ।। कर्तुरभावे ईश्वरस्य कारयितृत्वायोगादिति भावः । शङ्कते – **जीवकर्तृत्वेऽपीति** ।। **विवेकाग्रहोऽस्त्येवेति** ।। परमतकर्तृत्वविषये आत्मीयता-कल्पनमस्त्येवेत्यर्थः ।

## वाक्यार्थमुक्तावली

अस्त्वानन्दादीनां सतामेवाभिव्यक्तिः न तु कर्तृत्वस्य कदाप्यभावादिति पूर्वपक्षोत्थानादनन्तर-सङ्गतिः । अत्र जीवः कर्ता न भवत्युत भवतीति चिन्ता । तदर्थं यत्कर्मकुरुत इत्यादि जीवकर्तृत्व-श्रुतिः किं कल्पनालाघवादियुक्त्यनुगृहीततया नान्यः कर्तेत्यादिश्रुत्या बाधितोत नेति । तदर्थमकर्तृकत्वश्रुतिः किं सर्वथा कर्तृत्वनिषेधपरा उत स्वतन्त्रकर्तृत्वनिषेधपरा । तदर्थं जीवस्येश्वर-वत्स्वतन्त्रकर्तृत्वाभावेऽपि परतन्त्रकर्तृत्वमात्रेण विध्यादिविषयत्वमयुक्तमुत युक्तमिति ।। **श्रुतिं सूचयतीति** ।। तथा च स्ववाक्यश्रुति विरोधस्यात्रापाक्रियमाणत्वादसङ्गतिरिति निरस्तमिति भावः ।। **न कर्तेति पूर्वपक्ष इति** ।। स्वातन्त्र्येण, पारतन्त्र्येण वा न कर्तेति पूर्वपक्षः । नान्यः कर्तेति जीवस्य कर्तृत्वसामान्याभावस्य श्रुतत्वादित्यर्थः ।। **अकर्तृकत्वश्रुतेरिति** ।। कर्तृत्वसामान्यनिषेधक-श्रुतेरित्यर्थः ।। **तथा हि** ।। कर्तृत्वं जीवस्य वदन् प्रष्टव्यः, स्वतन्त्रः कर्ता परतन्त्रो वेति । आद्ये स एक एव स्वतन्त्रः कर्ता ईश्वरोऽपि वेति । आद्योत्तरत्वेन नेश्वरस्यैव कर्तृत्वमिति भाष्यं योजयति ।। **समर्थितं हीति** ।। अनन्ययोगेनान्यसहायं विना स्वातन्त्र्येणेति यावत् ।। स्वातन्त्र्येण कर्तृत्व-मीश्वरस्यैव न तु जीवस्येतीतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरित्यत्र समर्थितयुक्त्या साधित-मित्यर्थः । अतिदेशेन द्वितीयं दूषयति ।। **अत एव द्वयोरिति** ।। द्वितीयं दूषयितुमल्पकत्वे-नेत्युक्तन्यायमीश्वरस्यैव कर्तृत्वमुक्तमिति भाष्यसूचितमाह ।। **ईश्वरस्यैवेति** ।। ईश्वरस्यैव कर्तृत्वं जीवस्य परतन्त्रकर्तृत्वमपि नास्तीत्यङ्गीकारे कल्पनालाघवं च स्यात् । ईश्वरकर्तृत्वस्य श्रुतियुक्तिभ्यां पूर्वं समर्थितत्वेन प्रामाणिककल्पनारूपत्वादिति भावः ।। **जीवस्यापीति** ।। पारतन्त्र्येण जीवस्यापि कर्तृत्वाङ्गीकारे गौरवम् । अवश्यं नियामकतयाऽभ्युपेयेनेश्वरेणैवोपपत्तौ व्यसनितया जीवकर्तृत्वाङ्गी-

(वाक्यार्थमुक्तावली)

कारस्यायुक्तत्वात् । दारुयोषावद्विधिनिषेधविषयत्वानुपपत्तेश्चेति भावः । लाघवाय जीवत्यागे प्रत्यक्षसिद्धे जीव एव कर्ताङ्गीक्रियताम् । ईश्वरस्त्याज्यो लाघवादित्यत आह ॥ **न खल्विति** ॥ प्रत्यक्षसिद्धजीवस्य कर्तृत्वे धर्मिकल्पनालाघवमस्तीत्येतावता श्रुतियुक्तिसिद्धं कर्तृत्वं हातुं शक्यम् । जीवकर्तृत्वं श्रुतावापातत उपलभ्यते न युक्तिसहमतस्त्याज्यमिति भावः । शास्त्रस्यार्थवत्त्वाज्जीवः कर्तेत्यसङ्गतमित्यतः कर्तृत्वानङ्गीकारे विपक्षे बाधकप्रदर्शनमभिप्रेत्य विपर्यये पर्यवसन्नहेतुप्रदर्शनपरं सूत्रमिति भावेन प्रवृत्तभाष्यमाह ॥ **अस्त्येवेति** ॥ तर्कोऽप्यप्रयोजक इत्यत आह ॥ **न हीति** ॥ विधिनिषेधशास्त्रं हि प्रवर्तकं तच्च विहितकर्तारमुद्दिश्य प्रवर्तते ॥ कर्तृत्वाभावे स्वोद्देश्यप्रवृत्त्य-हेतुत्वाद्वैयर्थ्यमिति भावः । तदेव पारिशेष्येणोपपादयति ॥ **न च जडमिति** ॥ अचेतनस्याविधि-नियोज्यत्वादिति भावः । भाष्ये तर्कमुक्त्वा जीवोऽपि कर्तेत्यापादकविपर्ययपर्यवसानमुच्यते नत्वापाद्यविपर्यये पर्यवसानं सूत्रप्राप्तमित्यतः स्वयमाह ॥ **अत इति** ॥ यत एवं जीवस्य कर्तृत्वानङ्गीकारे जडमीश्वरं चादाय न शास्त्रस्यार्थवत्वमतो जीवस्य कर्तृत्वाङ्गीकार एव शास्त्रस्यार्थवत्वसिद्धेः सोऽपि कर्ताङ्गीकार्य इत्यर्थः ॥ **सूत्रे ज्ञ इत्यस्ति** ॥ जीवस्य कर्तृत्वानङ्गीकारे विधिनिषेधशास्त्रस्याप्रवर्तकत्वलक्षणवैयर्थ्यं स्यात् । शास्त्रं चार्थवत् अतः शास्त्रस्यार्थवत्वाज्जीवोऽपि कर्तेति सूत्रार्थः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृत इति** ॥ अभिव्यक्तज्ञानानन्दबलकर्तृत्वादि-गुणस्वरूपत्वेन प्रकृत इत्यर्थः । तथा च स्वानन्दादीनां सतामभिव्यक्तिः । न तु कर्तृत्वस्य तस्य कदाप्यभावात् इति पूर्वपक्षोत्थानात् अनन्तरसङ्गतिरिति भावः । सन्देहबीजं श्रुतिविगानं सूचयतीति । एतच्च भाष्ये पूर्वोक्तिः श्रुत्योः सन्देहबीजत्वप्रतीतावपि अस्मिन् पादे सर्वत्र श्रुतिविगानस्यैव सन्देहबीजत्वमित्यभिप्रेत्योक्तम् । तदेवोपपादयति ॥ **ईश्वरस्यैव कर्तृत्वमुक्तमित्यनेनेति** ॥ न्यायविवरणे इतरव्यपदेशादित्यत्रास्य श्रुतेरुदाहृतत्वादिति भावः । शङ्कते ॥ **कतृत्वेऽपीति** ॥ भाष्ये तदभिसम्पद्यत इति अधिकांशोदाहरणस्य प्रयोजनं वक्तुं तद्व्यावर्त्यामाशङ्कामाह ॥ न चेति ॥ **सयुक्तिकत्वेनेति** ॥ ईश्वरस्यैवानन्ययोगेन कर्तृत्वरूपयुक्तिसहितत्वेनेत्यर्थः । सयुक्तिकत्वे-नेत्युक्तामेव युक्तिमाह ॥ **समर्थितं हीति** ॥ **अत एव** ॥ अनन्ययोगेनेश्वर कर्तृत्वस्य

(तत्त्वसुबोधिनी)
समर्थितत्वादेवेत्यर्थः । कल्पनालाघवाच्चेश्वरस्यैव कर्तृत्वमित्याह ॥ **ईश्वरस्यैवेति** ॥ तर्हि लाघवाय जीवस्यैवकर्तृत्वं भवत्वित्यत आह ॥ **न खल्विति** ॥ जीवकर्तृत्वे हिताक्रियादिदोषप्रसक्ते- र्बाधकस्योक्तत्वाच्चेत्यर्थः । अत्र शास्त्रार्थत्वोक्त्या सूचितं 'जीवस्य कर्तृत्वाभावे' इति भाष्ये चोक्तं विपक्षे बाधकान्तरमाह ॥ **तदभाव इति** ॥ ननु कर्तृत्वाभावेऽपि शास्त्रवैयर्थ्यं कुत इत्यत आह ॥ **न हीति** ॥ सकर्तृकत्वेऽपि जीवकर्तृत्वं कुत इत्यतः शेषादिभावेन प्रसक्तपक्षान् प्रतिषेधति ॥ **न चेति** ॥ विधिनिषेधबद्धत्वे जडत्वभङ्गप्रसङ्गादित्यर्थः ।

## वाक्यार्थविवरणम्

भाष्ये यत्फलमुद्दिश्य कर्म कुरुते तत्फलमभिसम्पद्यते प्राप्नोतीत्यर्थः ॥ **श्रुतत्वादिति** ॥ नान्यः कर्ता' इति श्रुतावन्यस्य कर्तृत्वनिषेधादिति भावः । शङ्कते ॥ **जीवकर्तृत्वेऽपीति** ॥ **अत एवेति** ॥ ईश्वरस्यैव कर्तृत्वसमर्थनादेवेत्यर्थः । ननु गौरवपरिहारायैकस्य कर्तृत्वेऽङ्गीकरणीये जीवस्यैव तत्किमिति नाङ्गीक्रियत इत्यत आह ॥ **न खल्विति** । वैय्यर्थ्यप्रसङ्गादित्यनेन भाष्येऽप्रयोजकत्व- प्राप्तेर्वैय्यर्थ्यप्राप्तेरिति व्याख्यातं भवति । ननु जीवस्य कर्तृत्वाभावेऽपि शास्त्रस्य न निरधिकारित्वेन वैय्यर्थ्यं प्रसज्यते । जडं प्रतीश्वरं प्रति वा विधिनिषेधात्मकशास्त्रप्रवृत्यङ्गीकारादित्यत आह ॥ **न चेति** ॥ न हीत्यर्थः । तौ विधिनिषेधौ । ननु कुत ईश्वरं प्रति तौ न भवत इति आशङ्काया 'विधेर्निषेधस्य च नैव गोचरः पुमान् यदि स्याद्भवतो हि तौ हरेः । तेनैव लेपश्च भवेदमुष्य पुण्येन पापेन च नैव चासौ । लिप्येत ताभ्यां परमः स्वतन्त्रः' इति महाभारततात्पर्यनिर्णयं हृदि निधायोत्तरमाह ॥ **तथा सतीति** ॥ **अर्थवत्त्वेति** ॥ अधिकारिप्राप्त्या सार्थक्यसिद्धेरित्यर्थः ।

## वाक्यार्थमञ्जरी

अन्यः ईशात् । शङ्कते ॥ **जीवकर्तृत्वेति** ॥ तत्कर्मफलं सम्पद्यते प्राप्यते । अनन्ययोगेन अन्यसाहाय्यत्यागेन । हि यस्मादत एवेत्यन्वयः । तथा च स्ववचनविरोध इति भावः । तर्हि लाघवाय जीवस्यैव कर्तृत्वमस्त्वित्यत आह ॥ **न खल्विति** ॥ **ॐ कर्ताशास्त्रार्थवत्वात् ॐ** । जीवः कर्तैव कुतः तथात्वे शास्त्रस्य विधिनिषेधरूपस्य प्रयोजनवत्त्वलाभात् अन्यथा तद्वैय्यर्थ्या- पत्तेरित्यर्थः ।

(वाक्यार्थमुक्तावली)

कारस्यायुक्तत्वात् । दारुयोषावद्विधिनिषेधविषयत्वानुपपत्तेश्चेति भावः । लाघवाय जीवत्यागे प्रत्यक्षसिद्धे जीव एव कर्ताङ्गीक्रियताम् । ईश्वरस्त्याज्यो लाघवादित्यत आह ॥ **न खल्विति** ॥ प्रत्यक्षसिद्धजीवस्य कर्तृत्वे धर्मिकल्पनालाघवमस्तीत्येतावता श्रुतियुक्तिसिद्धं कर्तृत्वं हातुं शक्यम् । जीवकर्तृत्वं श्रुतावापातत उपलभ्यते न युक्तिसहमतस्त्याज्यमिति भावः । शास्त्रस्यार्थवत्त्वाज्जीवः कर्तेत्यसङ्गतमित्यतः कर्तृत्वानङ्गीकारे विपक्षे बाधकप्रदर्शनमभिप्रेत्य विपर्यये पर्यवसन्नहेतुप्रदर्शनपरं सूत्रमिति भावेन प्रवृत्तभाष्यमाह ॥ **अस्त्येवेति** ॥ तर्कोऽप्यप्रयोजक इत्यत आह ॥ **न हीति** ॥ विधिनिषेधशास्त्रं हि प्रवर्तकं तच्च विहितकर्तारमुद्दिश्य प्रवर्तते ॥ कर्तृत्वाभावे स्वोद्देश्यप्रवृत्य-हेतुत्वाद्वैयर्थ्यमिति भावः । तदेव पारिशेष्येणोपपादयति ॥ **न च जडमिति** ॥ अचेतनस्याविधि-नियोज्यत्वादिति भावः । भाष्ये तर्कमुक्त्वा जीवोऽपि कर्तेत्यापादकविपर्ययपर्यवसानमुच्यते नत्वापाद्यविपर्यये पर्यवसानं सूत्रप्राप्तमित्यतः स्वयमाह ॥ **अत इति** ॥ यत एवं जीवस्य कर्तृत्वानङ्गीकारे जडमीश्वरं चादाय न शास्त्रस्यार्थवत्वमतो जीवस्य कर्तृत्वाङ्गीकार एव शास्त्रस्यार्थवत्वसिद्धेः सोऽपि कर्ताङ्गीकार्य इत्यर्थः ॥ **सूत्रे ज्ञ इत्यस्ति** ॥ जीवस्य कर्तृत्वानङ्गीकारे विधिनिषेधशास्त्रस्याप्रवर्तकत्वलक्षणवैयर्थ्यं स्यात् । शास्त्रं चार्थवत् अतः शास्त्रस्यार्थवत्वाज्जीवोऽपि कर्तेति सूत्रार्थः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृत इति** ॥ अभिव्यक्तज्ञानानन्दबलकर्तृत्वादि-गुणस्वरूपत्वेन प्रकृत इत्यर्थः । तथा च स्वानन्दादीनां सतामभिव्यक्तिः । न तु कर्तृत्वस्य तस्य कदाप्यभावात् इति पूर्वपक्षोत्थानात् अनन्तरसङ्गतिरिति भावः । सन्देहबीजं श्रुतिविगानं सूचयतीति । एतच्च भाष्ये पूर्वोक्तिः श्रुत्योः सन्देहबीजत्वप्रतीतावपि अस्मिन् पादे सर्वत्र श्रुतिविगानस्यैव सन्देहबीजत्वमित्यभिप्रेत्योक्तम् । तदेवोपपादयति ॥ **ईश्वरस्यैव कर्तृत्वमुक्तमित्यनेनेति** ॥ न्यायविवरणे इतरव्यपदेशादित्यत्रास्य श्रुतेरुदाहृतत्वादिति भावः । शङ्कते ॥ **कतृत्वेऽपीति** ॥ भाष्ये तदभिसम्पद्यत इति अधिकांशोदाहरणस्य प्रयोजनं वक्तुं तद्व्यावर्त्यामाशङ्कामाह ॥ **न चेति** ॥ **सयुक्तिकत्वेनेति** ॥ ईश्वरस्यैवानन्ययोगेन कर्तृत्वरूपयुक्तिसहितत्वेनेत्यर्थः । सयुक्तिकत्वे-नेत्युक्तामेव युक्तिमाह ॥ **समर्थितं हीति** ॥ **अत एव** ॥ अनन्ययोगेनेश्वर कर्तृत्वस्य

(तत्त्वसुबोधिनी)
समर्थितत्वादेवेत्यर्थः । कल्पनालाघवाच्चेश्वरस्यैव कर्तृत्वमित्याह ॥ **ईश्वरस्यैवेति** ॥ तर्हि लाघवाय जीवस्यैवकर्तृत्वं भवत्वित्यत आह ॥ **न खल्विति** ॥ जीवकर्तृत्वे हिताक्रियादिदोषप्रसक्ते-र्बाधकस्योक्तत्वाच्चेत्यर्थः । अत्र शास्त्रार्थत्वोक्त्या सूचितं 'जीवस्य कर्तृत्वाभावे' इति भाष्ये चोक्तं विपक्षे बाधकान्तरमाह ॥ **तदभाव इति** ॥ ननु कर्तृत्वाभावेऽपि शास्त्रवैयर्थ्यं कुत इत्यत आह ॥ **न हीति** ॥ सकर्तृकत्वेऽपि जीवकर्तृत्वं कुत इत्यतः शेषादिभावेन प्रसक्तपक्षान् प्रतिषेधति ॥ **न चेति** ॥ विधिनिषेधबद्धत्वे जडत्वभङ्गप्रसङ्गादित्यर्थः ।

## वाक्यार्थविवरणम्

भाष्ये यत्फलमुद्दिश्य कर्म कुरुते तत्फलमभिसम्पद्यते प्राप्नोतीत्यर्थः ॥ **श्रुतत्वादिति** ॥ नान्यः कर्ता' इति श्रुतावन्यस्य कर्तृत्वनिषेधादिति भावः । शङ्कते ॥ **जीवकर्तृत्वेऽपीति** ॥ **अत एवेति** ॥ ईश्वरस्यैव कर्तृत्वसमर्थनादेवेत्यर्थः । ननु गौरवपरिहारायैकस्य कर्तृत्वेऽङ्गीकरणीये जीवस्यैव तत्किमिति नाङ्गीक्रियत इत्यत आह ॥ **न खल्विति** । वैय्यर्थ्यप्रसङ्गादित्यनेन भाष्येऽप्रयोजकत्व-प्राप्तेर्वैय्यर्थ्यप्राप्तेरिति व्याख्यातं भवति । ननु जीवस्य कर्तृत्वाभावेऽपि शास्त्रस्य न निरधिकारित्वेन वैय्यर्थ्यं प्रसज्यते । जडं प्रतीश्वरं प्रति वा विधिनिषेधात्मकशास्त्रप्रवृत्यङ्गीकारादित्यत आह ॥ **न चेति** ॥ न हीत्यर्थः । तौ विधिनिषेधौ । ननु कुत ईश्वरं प्रति तौ न भवत इति आशङ्काया 'विधिर्निषेधस्य च नैव गोचरः पुमान् यदि स्याद्भवतो हि तौ हरेः । तेनैव लेपश्च भवेदमुष्य पुण्येन पापेन च नैव चासौ । लिप्येत ताभ्यां परमः स्वतन्त्रः' इति महाभारततात्पर्यनिर्णयं हृदि निधायोत्तरमाह ॥ **तथा सतीति** ॥ **अर्थवत्त्वेति** ॥ अधिकारिप्राप्त्या सार्थक्यसिद्धेरित्यर्थः ।

## वाक्यार्थमञ्जरी

अन्यः ईशात् । शङ्कते ॥ **जीवकर्तृत्वेति** ॥ तत्कर्मफलं सम्पद्यते प्राप्यते । अनन्ययोगेन अन्यसाहाय्यत्यागेन । हि यस्मादत एवेत्यन्वयः । तथा च स्ववचनविरोध इति भावः । तर्हि लाघवाय जीवस्यैव कर्तृत्वमस्त्वित्यत आह ॥ **न खल्विति** ॥ **ॐ कर्ताशास्त्रार्थवत्वात् ॐ** । जीवः कर्तैव कुतः तथात्वे शास्त्रस्य विधिनिषेधरूपस्य प्रयोजनवत्त्वलाभात् अन्यथा तद्वैय्यर्थ्या-पत्तिरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ विहारोपदेशात् ॐ ॥ ३४ ॥**

'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' (छां.उ. ८-१२-३) इत्यादि मोक्षेऽपि ।

## तत्त्वप्रदीपिका

अविद्याप्रत्युपस्थापितत्वेनापरमार्थत्वान्मोक्षपर्यन्तमेव कर्तृत्वमिति चेन्नेत्याह ॥ ॐ **विहारोपदेशात् ॐ** ॥ 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति मोक्षं प्रस्तुत्य तस्य मुक्तस्य परञ्ज्योतिःसामीप्यजुषो विहारं सञ्चरणं क्रीडां चोपदिशति– 'स तत्र पर्येति जक्षन्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' इति । आदिशब्दादन्यत्र च 'ब्रह्मविदाप्नोति परम्' इति प्रस्तुत्य 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति, तथा 'एतमानन्दमय-मात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्' इत्यादि च । न चायं विहारोपदेशः संसारिविषयः । परब्रह्मोपसम्पत्तेः स्वरूपाभिनिष्पत्तेश्च परं संसरणस्यायुक्तत्वादनिष्टत्वाच्च ।

## तत्त्वप्रकाशिका

जीवस्य स्वतः कर्तृत्वाभावेऽपि परगतकर्तृत्वे विवेकाग्रहोऽस्त्येवातस्तादृशं कर्तारं प्रति शास्त्रं प्रवर्ततामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **विहारेति** ॥ न जीवस्य काल्पनिकं कर्तृत्वं किं तु पारमार्थिकमेव । विगलिताखिलकल्पनेऽपि कैवल्ये विहारादिकर्तृत्वोपदेशादिति भावः ।

## भावबोधः

**पारमार्थिकमेवेति** । अनेन 'कर्ता' इति पूर्वसूत्रादनुवृत्तस्य कर्तैव न त्वारोपितकर्तृत्ववानित्यर्थ इत्युक्तं भवति । मोक्षेऽपीत्यपिशब्दाभिप्रायमाह– **विगलिताखिलकल्पनेऽपीति** ॥

## भावदीपः

**परेति** ॥ बुद्धीत्यर्थः ॥ **तादृशं कर्तारम्** ॥ काल्पनिककर्तारम् । भाष्यस्य सूत्रेणान्वयमुपेत्य योग्यसाध्योक्त्यार्थमाह ॥ **न जीवस्येति** ॥

## अभिनवचन्द्रिका

**तादृशकर्तारमिति ॥** काल्पनिककर्तृत्वोपेतमितित्यर्थः ।

## वाक्यार्थमुक्तावली

कर्तुरीश्वस्य शरीरसन्निधानात्परगतकर्तृत्वविषये विवेकाग्रहमूलकात्मीयताकल्पनमस्त्येवेत्यर्थः । ज्ञः कर्तेव न तु काल्पनिककर्तृत्वमिति सूत्रेऽनुवृत्याऽन्वयो बोध्यः ।

## तत्त्वसुबोधिनी

**पारमार्थिकमेवेति ॥** अनेन कर्तेति पूर्वसूत्रात् अनुवृत्तस्य कर्तेव नत्वारोपित कर्तृत्ववानित्यर्थ इत्युक्तं भवति । मोक्षेऽपीति भाष्यस्यार्थमाह **विगलिताखिलकल्पनेऽपीति ॥** विगलिताखिल-कल्पना यस्मिन् तत्तथोक्तम् ।

## वाक्यार्थविवरणम्

**परगतेति ॥** अन्तःकरणगतेत्यर्थः । तथा च जीवान्तःकरणयोर्विवेकाग्रहादन्तःकरणगतं कर्तृत्वं जीव आरोप्यत इति भावः ॥ **तादृशं कर्तारम् ॥** आरोपितकर्तृत्ववन्तम् ॥ **विगलितेति ॥** कल्पनाया अज्ञानकार्यत्वान्मोक्षे च तदभावादिति भावः ।

## वाक्यार्थमञ्जरी

**परगतेति ॥** ईश्वरगतेत्यर्थः ॥ **विवेकाग्रह इति ॥** इदं कर्तृत्वं नेश्वरगतमपि तु मद्गतमेवेत्यात्मीयतयाकल्पनमस्त्येवेत्यर्थः । तादृशं काल्पनिककर्तृत्वोपेतम् । न जीवस्य कर्तृत्वं भ्रान्तिकल्पितं कुतः विहारस्य क्रीडाकर्तृत्वस्योपदेशात् मोक्षेऽपि जक्षन् क्रीडन्नित्यभिधानादित्यर्थः । मोक्षेऽपीत्यस्यार्थो **विगलितेति ॥** निवृत्ताशेषभ्रमेऽपीत्यर्थः । अत एवाह ॥ **कैवल्य इति ॥** केवलं यथार्थज्ञानादि स्वरूपाविर्भावरूप इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ उपादानात् ॐ ॥ ३९ ॥**

साधनाद्युपादानप्रतीतेश्च ।

## तत्त्वप्रदीपिका

न केवलं शास्त्रार्थत्वाज्जीवस्य कर्तृत्वं प्रतिपद्यामहे । प्रत्यक्षत एव च सिद्धमिदमित्याह– ॐ **उपादानात्** ॐ ॥ छेदादिक्रियासु कुठारकाष्ठादिसाधनविषयाद्युपादानं तत्करणं च प्रतीयते । च शब्दान्न च बाधो दृश्यते ।

## तत्त्वप्रकाशिका

अस्तु मोक्षे जीवस्य स्वाभाविकं कर्तृत्वं प्रामाणिकत्वात् । संसारे तु काल्पनिकमेव किं न स्यात्तावतापि च शास्त्रसार्थक्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **उपादानादिति** ॥ न जीवस्य संसारेऽपि कर्तृत्वं काल्पनिकम् । मोक्षाद्यर्थं साधनाद्युपादानप्रतीतेः ततश्च फलदर्शनात् । न हि परानुष्ठितसाधनेष्वात्मीयताकल्पनमात्रेण फलाभिसम्बन्धो भवत्यतिप्रसङ्गादिति भावः ।

## गुर्वर्थदीपिका

तमसि परकृतगेहे स्वकृतत्वभ्रमेणान्तःप्रवेशेऽपि बलान्निष्कासनदर्शनेन फलाप्राप्तेरिति भावेनाऽऽह **अतिप्रसङ्गादिति** ॥

## भावबोधः

भाष्ये साधनपदप्रयोगानुरोधादाह– **संसारेऽपीति** ॥ उक्तरीत्या क्रमेण शङ्काद्वयनिवर्तकत्वात् सूत्रे 'च' शब्दाभावः । भाष्ये तु 'विहारोपदेशात्' इत्यनेन युक्त्या साधितमेव कर्तृत्वस्य पारमार्थिकत्वोपपादनादित्यनेनापि प्रत्यक्षेण साध्यत इति भावेन प्रतीतेश्चेति 'च' शब्द इति ज्ञातव्यम् । यद्वा, 'च' शब्दोऽप्यर्थको भिन्नक्रम इत्यभिप्रेत्योक्तम्– **संसारेऽपीति** । कारयितृ-नियतत्वं कर्तृत्वं चेति भाष्येण सूत्रे 'उभयथा च' इति 'च' शब्दसम्बन्ध उक्तो भवति ।

## भावदीपः

प्रत्यक्षस्याप्युक्तेरुपयोगायावतारयति ॥ **अस्त्विति** ॥ साध्यपूर्त्या भाष्यं व्याचष्टे ॥ **न जीवस्येति** ॥ चशब्दार्थमाह ॥ **ततश्चेति** ॥ यद्वोत्तरसूत्रे चशब्दस्यात्राप्यन्वयमुपेत्योक्तहेतुसमुच्चयेन भाष्ये प्रतीतेश्चेत्युक्तम् अत एवाग्रे टीकायां प्रत्यक्षेण चेत्यनुवादः ।

## वाक्यार्थमुक्तावली

भाष्ये साधनपदप्रयोगादाह– **संसारेऽपीति** ॥ ज्ञः संसारेऽपि कर्तैव न तु काल्पनिककर्तृत्ववान् मोक्षार्थं साधनेतिकर्तव्यतोपादानानुभवादिति सूत्रार्थः । भाष्ये चशब्दस्तु ज्ञःकर्तेत्यनुकर्षसूचकः । चशब्दस्यार्थान्तरमाह ॥ **ततः फलेति** ॥ साधनोपादानप्रतीतेर्नारोपरूपत्वं साधनोपादाने फलदर्शनादित्यर्थः । यद्वा विध्यपवादरूपबाधकाभावाच्च न साधनोपादानप्रतीतेर्भ्रमत्वमिति समुच्चये चशब्दः । तदुक्तं शब्दान्न च बाधो दृश्यत इति तत्त्वप्रदीपे ।

## तत्त्वसुबोधिनी

भाष्ये साधनपदप्रयोगादाह ॥ **संसारेऽपीति** ॥ उक्तरीत्या क्रमेण शङ्काद्वयनिवर्तकत्वात् सूत्रे चशब्दाभावः । भाष्ये तु विहारोपदेशादित्यनेन साधितमेव कर्तृत्वस्य पारमार्थिकत्वं उपादानादित्यनेनापि साध्यत इति भावेन प्रतीतेश्चेति चशब्दवृत्तिर्ज्ञातव्या ।

## वाक्यार्थविवरणम्

**तावतापि** ॥ काल्पनिककर्तृत्वाङ्गीकारेणापि ।

## वाक्यार्थमञ्जरी

मोक्षाद्युद्देशेन साधनाद्युपादानस्य प्रत्यक्षसिद्धत्वान्न काल्पनिकं कर्तृत्वमित्यर्थः । **अतिप्रसङ्गादिति** ॥ परकृतभोजने स्वकृतानुसन्धानमात्रेण स्वात्मनस्तृप्तिः स्यादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ॥ ३६ ॥**

'आत्मानमेव लोकमुपासीत' (बृ.उ.३-४-१५) इति क्रियायां व्यपदेशाच्च। अन्यथाऽऽत्मैव लोकमिति निर्देशः स्यात् ॥

## तत्त्वप्रदीपिका

अनादेरध्ययनपरिगृहीतस्य स्वतःप्रमाणस्य शास्त्रस्याप्रयोजकत्वानुपपत्त्या प्रत्यक्षतश्च कर्तृत्वमवधारितम्। प्रत्यक्षतोऽपि विधत्ते श्रुतिरित्याह– **'व्यपदेशाच्च' इत्यादि** सूत्रम्। परमात्मानमेव लोकमाश्रयं स्वामिनमुपासीतेति क्रियायां कर्तृत्वेन सम्बन्धव्यपदेशाच्च जीवः कर्ता। अकर्तृत्वे जीवस्य परमात्मैव स्वात्मानमन्यं वा लोकमुपासीतेति निर्देशः स्यात्। कर्तुर्ऋते क्रियाविधिवैयर्थ्यात्। न च परे स्वतन्त्रे नित्यनिर्दोष आप्तकामे विधिः प्रतिषेधो वा पदं निधत्त इति युज्यते। न चैतावता श्रुतिस्मृतियुक्तिसिद्धं स्वेच्छया कर्तृत्वं चालयितुं पार्यते। अतो जीवोऽपि कर्तेत्युक्तम्।

## तत्त्वप्रकाशिका

एवमुपपत्त्या प्रत्यक्षेण च साधितजीवकर्तृत्वं श्रुत्याऽपि समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **व्यपदेशाच्चेति ॥** 'आत्मानमेव लोकमुपासीत' इत्यादावुपासनादिक्रियायां कर्तृत्वेनात्मनो व्यपदेशात्तस्यापि कर्तृत्वमस्त्येव। अत्र जीव उपासीतेत्युक्त्यभावात्कथमयं जीवस्य कर्तृत्वव्यपदेश इति। मैवम्। न हि तावत्क्रिया कर्तृशून्या युक्ता। न तावज्जडं कर्तृ। जीवस्यात्र कर्तृत्वेन श्रुत्यनभिमतत्वे परमात्माऽभिप्रेतः स्यात्। अन्यथा श्रुतिवैयर्थ्यापातात्। तथा च तस्य कर्तृत्वेन व्यपदेशः स्यान्न तु कर्मत्वेन। अतो जीवस्यैवात्र कर्तृत्वमुच्यते। तथा च प्रामाणिकत्वान्न गौरवमिति भावः।

## भावदीपः

**उपपत्त्येति ॥** शास्त्रार्थवत्त्वान्यथानुपपत्तिमुक्तिकालीनकर्तृत्त्वश्रवणान्यथानुपपत्तिरूपोपपत्त्येत्यर्थः। सूत्रे चशब्दादाह ॥ **श्रुत्यापीति ॥** तथा चोक्तं हटवादे प्रत्यक्षैषा कर्तृता जीवसंस्था

(भावदीपः)
तथागमादनुमानाच्च सर्वमिति ॥ **समर्थयदिति** ॥ समाहितोऽयं शब्दः प्रागस्माभिर्नामपादे छन्दोनये ॥ **कर्तृत्वेनेति** ॥ 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति कर्तरि लकारविधानादिति भावः । ज्ञः कर्तेत्यनुवृत्तिं मत्वाऽर्थमाह ॥ **तस्यापि कर्तृत्वमिति** ॥ अन्यथेत्यादि भाष्यं व्याख्यातुं परिष्करोति । अत्रेत्यादिना तथा चेत्यन्तेन ॥ **तथा चेति** ॥ जीवस्याकर्तृत्वे इत्यर्थः । प्रागुक्तदोषं निराह ॥ **तथा चेति** ॥ श्रुत्यादिना जीवकर्तृत्वे सिद्धे सतीत्यर्थः ।

## वाक्यार्थमुक्तावली

**उपपत्त्येति** ॥ जीवस्य हि विहितकर्तृत्वाभावे नियोज्याभावेन यजेतेत्यादिविधिशास्त्रस्यारण्यरोदनायमानस्य वैयर्थ्यप्रसङ्ग इत्युपपत्त्येत्यर्थः ॥ **श्रुत्यापीति** ॥ 'आत्मानमेव लोकमुपासीत' इत्यत्र उपासीतेत्युक्तक्रियायां जीव इति कर्तृवाचकप्रथमान्तपदेन जीवस्य कर्तृत्वप्रतिपादनात् । आगमप्रमाणेनापीत्यर्थः । सूत्रे ज्ञः कर्तेत्यस्ति ज्ञस्येति विपरिणामेनाप्यनुवर्तते । 'आत्मानमेव लोकमुपासीत' इत्यत्रोपासीतेत्यत्र क्रियायां उपासनालक्षणायां जीव इति प्रथमान्तपदेन कर्तृत्वव्यपदेशाच्च जीवः कर्तेति सूत्र खण्डार्थमभिप्रेत्य व्यपदेशाचेत्यन्तभाष्यभावमाह ॥ **आत्मानमिति** ॥ न चेदित्यादिसूत्रव्यावर्त्यं शङ्कते ॥ **अत्र जीवस्येति** ॥ जीव उपासीत' इति साक्षादुक्त्यभावेऽपि अध्याहारेण जीवपदस्यान्वय इति वक्तुमध्याहारस्य श्रुतपदेनान्वयपूर्त्यभाव एव कर्तव्यत्वात् श्रुतमात्रेण नान्वय इत्याह ॥ **न हि तावदिति** ॥ उपासना क्रियाकर्तारं विना न सम्भवतीति कर्तृवाचकपदाध्याहारेण तावद्भवितव्यमिति भावः । एवं सामान्यतः कर्तृवाचकपदाध्याहारसिद्धिमुक्त्वा परिशेषमाह ॥ **न तावदिति** ॥ ज्ञानेच्छाप्रयत्नरूपकर्तृत्वस्याचेतने शङ्कितुमनर्हत्वादिति भावः । ईश्वरवाचिपदस्याध्याहारप्रसक्तिं सम्पाद्य प्रतिषेधति ॥ **जीवस्येति** ॥ **श्रुतिवैयर्थ्यादिति** ॥ लोकमुपासीत' इति वाक्यस्य कर्तारं विना अरण्यरोदनायमानत्वेन वैयर्थ्यप्रसङ्गादित्यर्थः । ततः किमित्यतो न चेदित्यादिव्याख्यापरं अन्यथेत्यादिभाष्यं व्याचष्टे ॥ **तथाचेति** ॥ तथासति जीवस्य कर्तृत्वेनानभिप्रेतत्वे, परमात्मन एव तत्प्रसक्तौ सत्यामित्यर्थः । ततश्च न चेज्जीवस्यात्राध्यहारेण कर्तृव्यपदेशो न चेत् परमात्मन एवकर्तृत्वापत्या तस्य कर्तृत्वलाभायात्मानमिति निर्देशस्य विपर्यये प्रथमान्ततया व्यत्यासः स्यात् न तु कर्मत्वेनेति खण्डार्थ उक्तो भवति । इदानीं परिशेषेण जीवपदाध्याहार एव कार्य इत्याह ॥ **अत इति** ॥ यतो न जडस्य, नापीश्वस्यात्र विवक्षा अत इत्यर्थः । सूत्रचतुष्टयार्थमुपसंहरन् जीवकर्तृत्वे गौरवमिति पूर्वपक्षं प्रतिक्षिपति ॥ **तथा चेति** ॥

## तत्त्वसुबोधिनी

**तस्यापीति** ॥ जीवस्यापीत्यर्थः ॥ **न तावदिति** ॥ तस्य ज्ञानाद्यभावादित्यर्थः ॥ अन्यथेति ॥ सर्वथा कर्तृत्वाभाव इत्यर्थः । क्रियायाः कर्तृव्याप्तत्वेन कर्त्रभावे उपासीतेति क्रियाप्रतिपादक-श्रुतिवैयर्थ्यं स्यादिति भावः । ननूभयोः कर्तृत्वे गौरवमित्यत आह ॥ **तथा चेति** ॥

## वाक्यार्थविवरणम्

**आत्मनः** ॥ जीवस्य ॥ **श्रुतीति** ॥ उपासीतेति श्रुतीत्यर्थः । कर्तृशून्यत्वादिति भावः ॥ **तस्य** ॥ परमात्मनः ॥ **तथा चेति** ॥ एवं जीवकर्तृत्वाङ्गीकार इत्यर्थः ।

## वाक्यार्थमञ्जरी

जीवः कर्तैव कुतः उपासनारूपायां क्रियायां तस्य कर्तृत्वेन व्यपदेशात् आत्मानमेव लोक-मुपासीतत्यभिधानात् जीवस्य कर्तृत्वं न चेत्तर्हि निर्देशस्यात्मानमित्यस्य विपर्ययः आत्मेति व्यत्यासः स्यादित्यर्थः । लोकं सर्वाधारम् । **न हीति** ॥ कर्तुः क्रियाश्रयत्वेन तदभावे निराश्रयक्रियायोगादिति भावः ।

## सूत्रभाष्यम्

**तर्हि कथमीश्वरस्यैव कर्तृत्वमित्यतो वक्ति –**

**॥ ॐ उपलब्धिवदनियमः ॐ ॥ ३७ ॥**

**यथा ज्ञाने इदं ज्ञास्यामीत्यनियमः प्रतीयते एवं कर्मण्यपि जीवस्य । 'य आत्मानमन्तरो यमयति' इति च श्रुतिः ।**

## तत्त्वप्रदीपिका

**अथ कथम् 'मतरव्यपदेशात्' इत्यादिना कर्तृत्वनिराकरणमित्यतो वक्ति ॐ उपलब्धिवद-नियमःॐ ॥ यथा ज्ञान इदं सुरूपं सुगन्धं सुस्वरं वा ज्ञास्यामि विपरीतं न पश्यानि न जिघ्राणि**

(तत्त्वप्रदीपिका)
न शृणवानीत्येवं स्पृहयतोऽपि तदुपलब्धावनियमो दृश्यते । एवं चिकीर्षाविशेषवतोऽपि कर्मण्य-नियमोऽस्वातन्त्र्यं दृश्यते । अतः कर्तृत्वनिराकरणमिति ।

## तत्त्वप्रकाशिका

नन्वेवं जीवस्यापि कर्तृत्वे कथमीश्वरस्यैव कर्तृत्वं पूर्वं समर्थितं कथं च श्रुतिरुपपद्येत । अतस्त-द्विरोधोऽस्त्येवेत्याशयेनाशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे ॥ **तर्हीति** ॥ इदं वस्त्वहं ज्ञास्यामीत्येवं निरूपितेऽपि यथा जीवस्य न ज्ञाने नियमोऽस्ति । स्वेच्छानुसारेण न ज्ञानलाभः । तथा करिष्यामीति निरूपितेऽपि कर्मणि नियमाभावादीश्वरस्य तु तद्भावात्स एव कर्ता न जीव इत्युक्तं प्राङ् न तु सर्वथा कर्तृत्वाभावादिति भावः । न चायं दृष्टान्तः साध्यसमः । न हि जिज्ञासुर्ज्ञानक्रियायामेव साक्षाद् व्याप्रियते किं तु तत्साधन एवेति । ईश्वरस्यैव नियमेन कर्तृत्वं न जीवस्येत्यत्र प्रमाणमाह ॥ **य इति** ॥

## गुर्वर्थदीपिका

न चायं दृष्टान्तस्साध्यसम इत्यस्य परचित्तवृत्तिजिज्ञासायास्तल्लभ्यज्ञानानियमस्य च परेषाम-योग्यत्वेन निर्णेतुमशक्यत्वात्साध्यसमः सन्दिग्धः । न च स्वात्मनि द्वयमप्यनुभूयत इति वाच्यम् । अन्यस्मिन्नियमसद्भावे तस्य कर्तृत्वसम्भवेन सर्वजीवकर्तृत्वाभावसाधनोपयोग्युपलब्ध्यनियमाख्य-दृष्टान्तासिद्ध्या प्रकृतानुपयोगित्वात् । न हि जिज्ञासुरित्युत्तरवाक्येऽपि साक्षाज्ज्ञान एव तस्य व्यापारे भवत्यनिर्णयः । न हि कोऽपि साक्षात्सुहृद्दर्शनादिरूपज्ञाने व्याप्रियते । किन्तु तद्दर्शनानुकूलतद्ग्रामगमनादिव्यापारे । अतस्तदीयजिज्ञासापरावृत्त्या गमने मुखमालिन्यादिना ज्ञानाभावश्च कथमन्येनापि न गृह्यते । कथमन्यथा परदेहस्य सजीवतासिद्धिरिति भावः ।

## भावदीपः

**श्रुतिरिति** ॥ नान्यः कर्तेति श्रुतिरित्यर्थः ॥ **अत इति** ॥ श्रुतिसमर्थनयोर्निरवकाशत्वा-दित्यर्थः । भाष्यं व्याचष्टे ॥ **इदमिति** ॥ निरूपितेऽपि उद्दिष्टेऽपीत्यर्थः । ज्ञान इत्यनेनान्वयः ॥ **साध्यसम इति** ॥ विप्रतिपन्न इत्यर्थः । समाधत्ते ॥ **न हीति** ॥ **साक्षाद्व्याप्रियत इति** ॥ तथात्वे

(भावदीपः)

हि ज्ञाननियमानुपलम्भः प्रयत्नाभावनिमित्तक इति कथञ्चित्कल्प्येत । यदा तु साधन एव व्याप्रियते तदा सुन्दरवस्त्वादिदर्शनार्थं गमनादिव्यापारे प्रत्यक्षेऽपि तज्ज्ञानानियमदर्शनं सर्वजनसिद्धमिति भावः ॥ **इत्यत्र प्रमाणमिति** ॥ अत्र च श्रुतावीशजीवयोः स्वातन्त्र्यास्वातन्त्र्यप्रतीतेरिति भावः ।

## अभिनवचन्द्रिका

**न हीति** ॥ जिज्ञासुर्जीवः ज्ञानक्रियायामेव साक्षाव्द्याप्रियते स्वेच्छामात्रेण ज्ञानवान् भवति। येन दृष्टान्तः साध्यसमः स्यात् । किन्तु साधने व्याप्रियते । ततश्च कदाचित् ज्ञानं लभते कदाचिन्नेति हेतोः न दृष्टान्तः साध्यसमः सन्दिग्धश्च इति भावः ।

## वाक्यार्थमुक्तावली

**कथं च श्रुतिरिति** ॥ नान्यः कर्तेत्यादिश्रुतिरित्यर्थः । सूत्रे क्रियायामित्यस्ति ॥ तत्र **तस्यैवेति** ॥ सप्तम्यर्थे वतिः । उपलब्धावनियमो यथैवं क्रियायामनियम इत्यर्थमभिप्रेत्य नियमप्रकारप्रदर्शनपरं भाष्यं व्याचष्टे **इदं वस्त्विति** ॥ ज्ञास्यामीत्यतः परं शेषमाह ॥ **एवं निरूपितेऽपीति** ॥ इच्छितेऽपीत्यर्थः ॥ **न चायं दृष्टान्त इति** ॥ परकीयज्ञानस्याप्रत्यक्षत्वेन परज्ञानेष्वनियमस्य ज्ञातुमशक्यत्वात्साध्यसमो दृष्टान्त इति वाच्यमित्यर्थः ॥ **न हीति** ॥ ज्ञानस्य साक्षात्प्रयत्नविषयत्वाभावात् ज्ञानार्थं साधने यतमानस्य तदलाभं ज्ञातुम् शक्यत्वादिति भावः । नियमेन कर्तृत्वमनन्याधीनेच्छादिमत्वेनाविफलप्रयत्नवत्वम् ।

## तत्त्वसुबोधिनी

ननु ज्ञानेऽपि जीवस्य न नियतकर्तृत्वम् । ज्ञास्यामीति इच्छायां साक्षाज्ज्ञानस्य नियमेनालाभात् । तथा च नायं दृष्टान्त इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **न हि जिज्ञासुरिति** ॥ यदि जिज्ञासोर्ज्ञान एव साक्षात् व्यापारस्यात् तदा नियमेन ज्ञानं सम्भवतीति वक्तव्यम् । मैवम् । किन्तु तत्साधन एव व्यापारः । साधनलाभस्तु कदाचिद्भवति कदाचिन्नेति न दृष्टान्तः साध्य सम इति भावः ।

## वाक्यार्थविवरणम्

**कथं च श्रुतिरिति** ॥ अन्यस्य कर्तृत्वनिषेधपरा नान्यः कर्तेति श्रुतिरित्यर्थः ॥ **एवं निरूपितेऽपीति** ॥ एवं संकल्पितेऽपीत्यर्थः ॥ **ज्ञाने** ॥ तद्वस्तुज्ञाने । एतदेव विवृणोति ॥ **स्वेच्छयेति** ॥ **कर्मणि नियमेति** ॥ स्वेच्छानुसारेण कर्मकरणाभावादित्यर्थः ॥ **प्राक्** ॥ इतरव्यपदेशादित्यत्र ॥ **साध्यसम इति** ॥ ज्ञास्यामीत्येवं स्वेन संकल्पिते स्वेच्छानुसारेण ज्ञानलाभो भवत्येवेति साध्यवद्दृष्टान्तोऽपि सन्दिग्ध इत्यर्थः ॥ **न हि जिज्ञासुरिति** ॥ ज्ञास्यामीति ज्ञानेच्छायां सत्यां यदि साक्षात्फलीभूतज्ञान एव व्यापारवान् स्यात्तदा स्वेच्छानुसारेण ज्ञानप्राप्त्या साध्यसमत्वं दृष्टान्तस्य स्यात् । न चैवम् । न हि ज्ञानेच्छुरिच्छानन्तरं साक्षाज्ज्ञान एव व्यापारवान् भवति, किन्तु ज्ञानसाधनीभूतसन्निकर्षादिसंपादन एव । तत्साधने लाभोऽपि कदाचित् स्वेच्छानु-साराद् भवति कदाचिन्नेति । तत्साधने लाभो न स्वेच्छानुसारेण नियमेन भवतीत्यस्वातन्त्र्यमिति भावः ।

## वाक्यार्थमञ्जरी

यथोपलब्धौ ज्ञानेऽनियमः इच्छानुसारेण प्राप्त्यभावस्तथा क्रियायामपीत्यर्थः । निरूपिते अपेक्षिते ज्ञानविशेषणमेतत् साध्यसमः पक्षसमः कर्मणीव ज्ञानेऽप्यनियमस्य प्रत्यक्षेणानिश्चयादिति भावः । स्वज्ञाने तावदयं प्रत्यक्षः परकीये प्रकारान्तरमाह ॥ **न हीति** ॥ व्याप्रियते व्यापारवान्भवति येन परकीयज्ञानेच्छादेरतीन्द्रियत्वेनानिश्चय इति भावः ॥ **तत्साधन इति** ॥ स्वाभिलषितज्ञानाय तत्साधनं सम्पादयति तच्च प्रत्यक्षसिद्धं तथा च तेन तदनुगुणज्ञानेच्छाऽनुमानमनन्तरं फलविशेषेण ज्ञानविशेषानुमानं च सुलभमिति भावः ।

## सूत्रभाष्यम्

कुतः ?

**॥ ॐ शक्तिविपर्ययात् ॐ ॥ ३८ ॥**

**अल्पशक्तित्वाज्जीवस्य ।**

## तत्त्वप्रदीपिका

कुत एतत्– ॐ **शक्तिविपर्ययात्** ॐ ॥ हरेः पूर्णा शक्तिः, तद्विपरीताऽल्पाऽस्य शक्तिरिति।

## तत्त्वप्रकाशिका

**ननूभयोः कर्तृत्वाविशेषेऽपीश्वरस्यैव नियमेन कर्तृत्वं न जीवस्येत्येतत् किं निबन्धनं वैलक्षण्यमिति पृच्छति ॥ कुत इति ॥ स्वातन्त्र्यपारतन्त्र्यनिमित्तौ नियमानियमाविति परिहारं वक्तुमीशजीवयोः स्वातन्त्र्यपारतन्त्र्ये साधयत्सूत्रं पठित्वा व्याचष्टे ॥ शक्तीति ॥ ईश्वरस्य पूर्णशक्तित्वात्स्वातन्त्र्यम् । जीवस्य तद्विपर्ययादस्वातन्त्र्यं प्रतीयत इति भावः ।**

## गुर्वर्थदीपिका

स्वातन्त्र्यपारतन्त्र्यनिमित्तौ नियमानियमाविति परिहारं वक्तुमित्यत्र न हि सूत्रकृताऽप्यस्वातन्त्र्यमेव सूत्रयितव्यम् । शक्त्यभावः कुतस्सूत्रित इति चेन्न । अस्वातन्त्र्यमपि कुतो जीवस्येति शङ्कायां कारणतया पूर्णशक्त्यभावस्यैव वक्तव्यत्वादिति सूत्रकृतोऽभिसन्धिसम्भवादिति समाधानमूह्यम् ।

## भावदीपः

पूर्वमनियमपदं नियमस्याप्युपलक्षकं व्याख्याय तस्यैव कुत इति भाष्ये नियमपदानुषङ्गमुपेत्यार्थमाह ॥ **नन्वित्यादिना** ॥ **वक्तुमिति** ॥ अत इति भाष्येणेति भावः । सूत्रमुपलक्षणं मत्वा व्याचष्टे ॥ **ईश्वरस्येति** ॥ पूर्णशक्तित्वतो हरेरिति स्मृतेरिति भावः । ज्ञस्येत्यनुवृत्तिं मत्वाह ॥ **जीवस्येति** ॥ वक्ष्यमाणं साध्यमत्रापि संयोजयति ॥ **अस्वातन्त्र्यमिति** ॥

## अभिनवचन्द्रिका

**ननूभयोः कर्तृत्वेति** ॥ उभयोर्जीवेश्वरयोः साधनान्तरसापेक्षत्वेन कर्तृत्वाविशेषेऽपि तत्कुत ईश्वरस्यैव फलस्वातन्त्र्यं न जीवस्येत्यर्थः ॥ **स्वातन्त्र्यपारतन्त्र्ये इति** ॥ साधनस्वातन्त्र्यपारतन्त्र्याभ्यां फलस्वातन्त्र्यपारतन्त्र्ये इतिवक्तुमित्यर्थः । अयमाशयः – सत्यम् उभावपि जीवेश्वरौ

(अभिनवचन्द्रिका)
साधनान्तरमपेक्ष्य कर्म कुरुत इति, तथापि ईश्वरस्य साधनेषु स्वातन्त्र्यात्, तदिच्छानुसारेण साधनानि लभ्यन्त इति तस्य फले स्वातन्त्र्यम् । जीवस्य तु तदभावात् न स्वातन्त्र्यमिति ।

## वाक्यार्थमुक्तावली

**उभयोः कर्तृत्वेति** ॥ ज्ञानेच्छाप्रयत्नलक्षणकर्तृत्वाविशेषेऽपीत्यर्थः ॥ **किं निवन्धनमिति** ॥ प्रामाणिकत्वेऽपि किं निमित्तकमित्यर्थः ॥ **स्वातन्त्र्यपारतन्त्र्येति** ॥ साधनस्वातन्त्र्यनिमित्तौ फलनियमानियमाविति अत इत्यत्र वक्तुमित्यर्थः । ज्ञस्य पूर्णशक्तिविपरीताल्पशक्तित्वादस्वातन्त्र्यं प्रतीयत इति वक्ष्यमाणशेषेणान्वयं मत्वा सूत्रार्थमाह **ईश्वरस्येति** ॥

## वाक्यार्थविवरणम्

**नियमानियमौ** ॥ कर्तृत्वनियमानियमौ । नियमेन कर्तृत्वतदभावाविति यावत् ।

## वाक्यार्थमञ्जरी

न जीवः स्वतन्त्रः कुतः जीवशक्तेः परमात्मशक्त्यपेक्षया विपर्ययादल्पत्वादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ समाध्यभावाच्च ॐ ॥ ३९ ॥**

**समाध्यभावाच्चास्वातन्त्र्यं प्रतीयते ।**

## तत्त्वप्रदीपिका

**मनस्समाधानं चातिदुष्करं जीवस्य प्रतीयते । स्मर्यते च–**

> **'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।**
> **तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।**
> **असंशयं महाबाहो मनो दुर्निग्रहं चलम्'** ॥ इति ।

**अतश्चास्वातन्त्र्यं गम्यते ।**

## तत्त्वप्रकाशिका

युक्त्यन्तरेणैतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **समाधीति** ॥ समाधानमलम्बुद्धिरस्तीश्वरस्येति तस्य स्वातन्त्र्यं जीवस्य च तदभावादस्वातन्त्र्यं प्रतीयते । स्वतन्त्रस्य पूर्णकामत्वादिति भावः । एवं चेत्किं तर्हीत्यत आह ॥ **अत इति** ॥ यत एवमीशजीवयोः स्वातन्त्र्यपारतन्त्र्ये प्रतीयेते अतः स्वातन्त्र्यपारतन्त्र्याभ्यां नियमानियमाविति भावः ।

## गुर्वर्थदीपिका

सम्यक् आ मनसो धारणं बाह्यविषयेष्वप्रेष्यान्तरेव धारणं समाधानमिति व्युत्पत्तिमभिप्रेत्याऽऽह– **अलम्बुद्धिरिति** ॥ न च वाच्यं मुनीनामस्त्यलम्बुद्धिरिति । 'विषया विनिवर्तन्ते निराहारस्य देहिनः । रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तत' इति गीतावचनेन तेषां मुनीनामप्यपरोक्षज्ञानात्प्राग्रसशब्दवाच्याऽऽकाङ्क्षासद्भावेन सम्यगलम्बुद्धेरभावात् । भगवद्दर्शनोत्तरकालं निमित्तार्थकत्वाप्रत्ययमहिम्ना भगवत्प्रसादायत्तत्वेन स्वतोऽलम्बुद्धेरभावाद्रसोऽपीति गर्ह्यार्थकापिपदेन ज्ञानोत्तरकालमपि भिक्षाटनादौ प्रवृत्तिदर्शनेन साऽपि न सर्वविषयेऽपीति गर्हितवान् । अतः सामस्त्येन स्वतोऽलम्बुद्धिर्भगवत एवासाधारणो धर्म इति भावस्सूत्रकारस्य ।

## भावदीपः

चशब्दादाह ॥ **युक्त्यन्तरेणेति** ॥ अत इत्यनुवादः । स्वातन्त्र्येत्यादिव्याख्या ।

## वाक्यार्थमुक्तावली

समाधिर्मनःसमाधिरलम्बुद्धिरिति यावत् । अलम्बुध्यभावेऽस्वातन्त्र्यं कुत इत्यत आह ॥ **स्वतन्त्रस्येति** ॥ स्वतन्त्रस्यैव पूर्णकामत्वादलम्बुध्यभावलक्षणापूर्णकामत्वेन पारतन्त्र्यमनुमीयत इति भावः ॥ **एवं चेदिति** ॥ यद्येवं स्वातन्त्र्यपारतन्त्र्ये प्रकृते तर्हि किं प्रकृत इत्यर्थः । अत इत्यस्य सौत्रेणानियम इत्यनेनान्वय इति भावेनाह– **यत एवमिति** ॥

## तत्त्वसुबोधिनी

**तदभावादिति** ॥ अलम्बुध्यभावादित्यर्थः ।

## वाक्यार्थविवरणम्

एतत् ॥ ईशजीवयोः स्वातन्त्र्यपारतन्त्र्यरूपं प्रमेयम् ॥ **अलम्बुद्धिः** ॥ पूर्णकामत्वम् । एवं **चेत्किं तर्हीति** ॥ यदीशजीवयोः स्वातन्त्र्यपारतन्त्र्ये स्तस्तर्हि किमायातं प्रकृत इत्यर्थः ।

## वाक्यार्थमञ्जरी

समाधेः अलम्बुद्धेः जीवेऽभावाच्च तस्यास्वातन्त्र्यमित्यर्थः ॥ **स्वतन्त्रस्येति** ॥ स्वसत्तादौ परानपेक्षस्यैवेत्यर्थः ॥ **किमिति** ॥ कुत इति प्रश्नोत्तरं किमित्यर्थः ।

## सूत्रभाष्यम्

अतः –

**॥ ॐ यथा च तक्षोभयथा ॐ ॥ ४० ॥**

यथा तक्ष्णः कारयितृनियतत्वं कर्तृत्वं च विद्यते एवं जीवस्यापि ।

## तत्त्वप्रदीपिका

अतोऽस्वातन्त्र्यप्रमाणेभ्यः कर्तृत्वप्रमाणेभ्यश्च । यथा च तक्षोभयथा ।

## तत्त्वप्रकाशिका

नन्वेवं यदि जीवस्य न स्वातन्त्र्येण कर्तृत्वमपि त्वीश्वरेच्छयैव कथं तर्हि कर्तोच्यते । स्वतन्त्रः खलु कर्तेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **यथेति** ॥ यथा तक्षा प्रासादकारयितृनियतोऽपि कर्तोच्यते तथेश्वरनियतोऽपि जीवः कर्तेति व्यपदेष्टुं शक्यत इत्यर्थः ।

## भावदीपः

सौत्रचशब्दो दार्ष्टान्तिकसमुच्चय इति भावेन भाष्ये एवं जीवस्याप्युक्तिरिति मत्वा तद्व्याचष्टे ॥ तथेश्वरेति ॥

## अभिनवचन्द्रिका

जीवास्वातन्त्र्यमाक्षिपति – **नन्वेवं यदीति ॥ तर्हीति ॥ श्रुतिस्मृत्यादौ** कर्त्तेत्युच्यत इत्यर्थः। कर्तृशब्दो हि स्वतन्त्रकर्तृरेव प्रत्यायको नास्वतन्त्रस्य कर्तुः । यदा हि देवदत्तो यज्ञदत्तेन पुनःपुनर्बोधितः पाकक्रियां निर्वर्तयति, तमन्यो ब्रवीति किमस्य पाकस्य भवान् कर्तेति । स आह नाहमस्य पाकस्य कर्ता किन्तु यज्ञदत्त एव कर्ता अहं तु तेन बोधितः करोमीति । तेन मन्यामहे कर्तृशब्दो नास्वतन्त्रस्य प्रत्यायक इति । ततश्चैवं योजना यदि जीवोऽस्वतन्त्र एव कर्ता स्यात् तर्हि श्रुतिस्मृत्यादौ तस्य कर्तृत्वव्यपदेशो न स्यात् स्वतन्त्र एव हि खलु प्राज्ञैः कर्तेति व्यपदिश्यते, नास्वतन्त्रः । अस्ति च श्रुतिस्मृत्यादौ जीवे कर्तृशब्दः तस्मन्नास्वतन्त्रो जीवः कर्ता, अपि तु स्वतन्त्र एवेति । एतेन जीवस्य कर्तृत्वात् कर्तरि कर्तृशब्दप्रयोगानुपपत्त्यभावेन 'कथं तर्हि कर्तोच्यत' इत्ययुक्तमिति परास्तम् ॥ **इत्याशङ्कां परिहरदिति** ॥ अस्वतन्त्रेऽपि कर्तरि कर्तृशब्दप्रयोगप्रदर्शनमुखेन आपाद्यापादकयोः व्याप्त्यभावप्रदर्शनेन शङ्कां परिहरत् सूत्रमुपन्यस्येत्यर्थः ।

## वाक्यार्थमुक्तावली

कारयितृनियंतृत्वं कर्तृत्वं चेति भाष्येण सूत्रे उभयथा चेति चशब्दसम्बन्ध उक्तो भवति । यद्वा एवं ज्ञस्यापीति भाष्येण दार्ष्टान्तिकसमुच्चये चशब्द इत्युक्तं भवति ।

## तत्त्वसुबोधिनी

कारयितृनियतत्वं कर्तृत्वं चेति भाष्येण उभयथा चेति चशब्दसम्बन्ध उक्तो भवति ।

## वाक्यार्थविवरणम्

खल्वित्यनेन स्वतन्त्रः कर्ता । क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यादिति वैय्याकरणप्रसिद्धिं दर्शयति ।

## वाक्यार्थमञ्जरी

स्वतन्त्रः क्रियायाम् । यथा तक्षा वर्धकी उभयथा वेतनदातृनियम्यत्वेन कर्तृत्वेन चोच्यते तथा जीवोऽपीशनियम्यः कर्तेत्यर्थः । चशब्दो दार्ष्टन्तिकसमुच्चायकः ।

## सूत्रभाष्यम्

**॥ ॐ परात्तु तत् श्रुतेः ॐ ॥ ४१ ॥**

**सा च कर्तृत्वशक्तिः परादेव ।**

**'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।**
**यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' ॥ इति हि पैङ्गिश्रुतिः ।**

## तत्त्वप्रदीपिका

अयमनयोर्दृष्टान्तदार्ष्टान्तिकयोर्विशेषः । यद्यपि तक्ष्णः कारयित्रा द्रव्यदानादिना नियतत्वं, तथाऽपि न तु तक्षणादिशक्तिस्तन्नियत्ता । जीवस्य तु सा च कर्तृत्वशक्तिः परादेव ।

## तत्त्वप्रकाशिका

ननु किं तक्ष्ण इव जीवस्य कर्तृत्वशक्तिर्जीवाधीनैवेश्वराधीनता तु वचनवेतनदानादिवदुत कर्तृत्वशक्तिरपीश्वराधीना । यद्याद्यस्तर्हि ईश्वरस्यैव कर्तृत्वमिति गतः पक्षः । द्वितीये न जीवस्य कर्तृत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **परादिति** ॥ नास्माभिस्तत्कर्तृत्वसामर्थ्यं जीवाधीनमुच्यते येनापसिद्धान्तः स्यात् किं तु परमात्माधीनमेव । तथा श्रुतेरिति भावः ।

## गुर्वर्थदीपिका

वचनवेतनदानादीत्यत्र विष्टिगृहीतकर्तृसङ्ग्रहाय वचनमपि सङ्गृहीतम् । बलवतो बलात्कारवचनमित्यर्थः । वेतनदाता हि बहिरेव स्थित्वा कारयति न तु तान् क्षणमन्तः प्रविश्य तत्करचरणादिकमपि प्रेरयति । भगवांस्तु 'योऽन्तः प्रविश्य' इति स्मृतेर्जीवान्तः प्रविश्य तदीयवाङ्मनःकरचरणादिकमपि फलाभिमुखीकृत्य कारयति । अतः कर्तृत्वमपि भगवदधीनमिति भावः ।

## भावबोधः

**परमात्माऽधीनमेवेति** ॥ अनेन परा देवेति भाष्येण सौत्रस्तुशब्दोऽवधारणार्थो व्याख्यात इत्युक्तं भवति ।

## भावदीपः

**गतः पक्ष इति** ॥ एतेन कर्तृशक्तेरीशायत्तत्वोक्तेः पूर्वोक्तिविरोधनिरासः फलमिति दर्शितम् ॥ **द्वितीय इति** ॥ दारुप्रतिमावदिति भावः । परात्तु परादेवेत्युक्त्यवधारणव्यावर्त्योक्तिपूर्वं भाष्यं व्याचष्टे ॥ **नास्माभिरिति** ॥

## अभिनवचन्द्रिका

ननु अत्र भाष्ये 'कर्तृत्वं च युज्यत' इति कर्तृत्वसमर्थनमयुक्तम् । पूर्वपक्षिणा कर्तृशब्द-प्रयोगानुपपत्तेरेवाऽऽशङ्कितत्वादित्यतस्तदभिप्रायमाह ॥ **तथेश्वरनियतोऽपीति वचनवेतनदानादि-वदिति** ॥ अत्र 'दिवा' इति प्रक्षिप्तम् । ततश्चैवं पाठः ईश्वराधीनता तु वचनवेतनदानादुतेति ॥ **इत्याशङ्कामिति** ॥ द्वितीयपक्षस्वीकारमुखेन आद्यपक्षस्याऽनङ्गीकारात् न तत्रोक्तो दोष इति परिहरत्सूत्रमुपन्यस्येत्यर्थः । एतेन द्वितीयेन तस्य कर्तृत्वमिति शङ्कायाः अनेन सूत्रेणाऽपरिहारात् 'इत्याशङ्कां परिहरत् सूत्रम्' इत्ययुक्तमिति परास्तम् ।

## वाक्यार्थमुक्तावली

**वचनवेतनेति** ॥ वचनं मृदुवचनम् आदिपदेन विष्टिग्रहणम् । तुशब्दोऽवधारणेऽप्यर्थे । अत एव भाष्ये सा चेत्युक्तम् । शक्तिरिति विभज्यानुवर्तते । ज्ञस्य कर्तृत्वशक्तिरपि परादेव तत्र श्रुतेरिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **नास्माभिरिति** ॥

## तत्त्वसुबोधिनी

परादेवेति भाष्येण सौत्रस्तुशब्दोऽवधारणार्थो व्याख्यातः ।

## वाक्यार्थविवरणम्

**गतः पक्ष इति** ॥ तथा चापसिद्धान्त इति ज्ञेयम् ।

## वाक्यार्थमञ्जरी

**वचनवेतनेति** ॥ इत्थं कुर्विति वचनानुसारेण करणे न द्रव्यदानादिना च तक्ष्णः शक्तेः कारयित्रधीनत्ववदित्यर्थः ॥ **गतः पक्ष इति** ॥ तथाचापसिद्धान्त इति भावः ॥ **न जीवस्येति** ॥ कर्तृत्वशक्तेरीश्वराधीनत्वे तस्यैव कर्तृत्वादिति भावः । जीवस्य कर्तृत्वशक्तिः परात्तु इशादेव कुतः तच्छ्रुतेः तस्य कर्तृत्वशक्तेरीश्वराधीनत्वस्यैव कर्तृत्वं करणत्वं चेति श्रुतिसिद्धत्वादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ ४२ ॥**

ततोऽप्रयोजकत्वं शास्त्रस्य नापद्यते । कृतप्रायत्नापेक्षत्वात्तत्प्रेरकत्वस्य । आदिशब्देनावैषम्यादि ।

> 'पूर्वकर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्य तु ।
> ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं स्वयम् ॥
> अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः' ॥ इति भविष्यत्पर्वणि ।

'एतदेवं न चाप्येवमेतदस्ति च नास्ति च' ॥ इति च मोक्षधर्मे ।

॥ इति कर्तृत्वाधिकरणम् ॥

## तत्त्वप्रदीपिका

तर्हि विहितकरणे प्रतिपिद्धवर्जने चाशक्तं प्रति प्रवर्तमानं शास्त्रमप्रयोजकमिति न वाच्यम् । पूर्वकृतप्रयत्नापेक्ष एव हीश्वरस्तं भोगे प्रेरयति । तत्संस्कारमपेक्ष्य कर्मणि प्रेरयति । अतो विहितकारिणं पुण्यं भोजयति, कारयति च । निपिद्धकारिणं दुःखं भोजयति, पुनः पापं कारयति च । ततोऽप्रयोजकत्वं शास्त्रस्य नाऽपद्यते । धर्मात्सुखमधर्माद्दुःखमिति शास्त्रस्य स्थितिः । न च तत एवाप्रयोजकत्वं शास्तुरापद्यते । स्वकारितप्रयत्नापेक्षत्वात्तत्प्रेरकत्वस्य । प्रागेव प्रपञ्चितमेतत् । न च पूर्वपूर्वकर्मणां कार्यकारणरूपाणामीश्वरकारितत्वे तत एवाप्रयोजकत्वं शास्त्रस्येति वाच्यम् ।

(तत्त्वप्रदीपिका)

ईश्वरः शास्त्रेण धर्ममधर्मं च प्रकाशयति, पुण्यस्वभावं तत्रावतारयति, पापाद्यावर्तयति, अपरमपरत्र। तं च चीर्णपुण्यं दुःखात्तारयति, सुखेन योजयति। अपरमपरथा करोति। एवं कृतप्रयत्नापेक्षः परमो नारायणः सर्वांस्तत्तत्कारयति, विधिप्रतिषेधावैयर्थ्याय वैषम्याभावाय नैर्घृण्याभावाय चेति रमणीयम्। वैषम्यनैर्घृण्ये परस्य स्वातन्त्र्यप्रसङ्गागते पुनर्निरस्ते इत्यदोषः। उक्तमेव मुहुर्मुहुर्मोक्षधर्मवचनेनापि संवादयति।

## तत्त्वप्रकाशिका

नन्वस्मिन्नपि पक्षे दोष उक्तः। कर्तृत्वशक्तेरीश्वराधीनत्वे तस्यैव कर्तृत्वं न जीवस्येति पुनः शास्त्रवैयर्थ्यमित्येतामाशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **कृतेति** ॥ यतोऽयं परो विधिनिषेध-शास्त्रावैयर्थ्यायैव स्वस्य वैषम्यनैर्घृण्यपरिहाराय च जीवस्यानादिकर्मप्रयत्नयोग्यतापेक्ष एव जीवं प्रेरयति न त्वनपेक्षोऽतो न जीवशक्तेरीश्वराधीनत्वेऽपि शास्त्रवैयर्थ्यम्। अनपेक्षया प्रेरणे हि तत्स्यादिति भावः। अवैषम्यादिसङ्गृहीतमिति शेषः। उक्तोऽपि दोषपरिहारः स्मारयितुं पुनरत्रोक्तः। सूत्रार्थे स्मृतिसंमतिमाह ॥ **पूर्वेति** ॥ संस्कारो योग्यता। कर्मापेक्षया प्रेरकत्वे न तत्कर्मकर्तृत्वमीश्वरस्येत्यत आह ॥ **तच्चेति** ॥ तर्हि तत्प्रेरणापेक्षाभाव इत्यत आह ॥ **अनादित्वा-दिति** ॥ तर्हि कर्मणामानन्त्यात्कथं तत्कारयितृत्वमीश्वरस्येति तत्राह ॥ **पूर्णेति** ॥ अधिकरणार्थे स्मृतिं चाह ॥ **एतदिति** ॥ एतज्जीवस्य कर्तृत्वमेवं प्रामाणिकम्। न चाप्येवमीश्वरवत्स्वातन्त्र्येणात एतदस्ति न चास्ति चेत्युच्यत इत्यर्थः। अतः श्रुत्यविरोधेन जीवस्य कर्तृत्वसिद्धेर्युक्तो भगवति श्रुतिसमन्वय इति सिद्धम्।

## गुर्वर्थदीपिका

कृतप्रयत्नापेक्षस्त्विति वदतोऽयमभिसन्धिः यदा तु लोके तत्कृतसेवादिमननुसन्दधदेव बलात्प्रेरयित्वा विष्टिगृहीतेन किञ्चित्कार्यं कारयति। तदा तस्य न किञ्चित्फलं ददाति। यदा तु प्राक्तत्कृतसेवादिकमनुसन्दधत्तस्मिन्ननुरक्त एव तेन किञ्चित्कारयति तदा तस्य फलं च दिशत्येव। अत ईश्वरेणापि प्राकृततत्कर्मादिकमपेक्ष्य केनचित्किञ्चित्कार्यं कार्यते तदा तस्य फलोपलब्धिरुचिता नान्यथेति ॥ **उक्तोऽपि** इत्यत्र 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यत्रोक्तोऽपीत्यर्थः। ननु भगवत एव स्वतन्त्रकर्तृत्वे फलमपि तस्यैव पूर्णं स्यान्न जीवस्येति चेन्न। विधिनिषेधबद्धतया करणे

(गुर्वर्थदीपिका)
कारयितृत्वे फलकामनासद्भावे च स्याद्भगवतोऽपि फलम् । न चैवं नित्यमुक्ततया बन्धाभावात् । पूर्णतया फलकामनाभावाच्च । कुतस्तर्हि करोति कारयतीति चेत् शिशूनामर्थे पाककर्तृ-भोजनकारयितृमातृवत् भक्तकुटुम्बितया केवलं लीलयैव सर्वस्यापि सम्भवात् । अत एव हि 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति श्रुतिः । संस्कारो योग्यतेत्यत्र सम्यक्कारयति स्वस्वयोग्यं शुभमशुभं मिश्रं वेति संस्कार इति व्युत्पत्त्या संस्कारो योग्यतेत्यर्थः ।

## भावबोधः

सूत्रे पूर्वसूत्रात् विभक्तिविपरिणामेन पर इत्यनुवर्तते ।

'पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु'

इति स्मृत्यनुसारेण कृतशब्दः कर्मपरः । योग्यतापि ग्राह्या । 'तु' शब्द एवार्थः । तस्यावैयर्थ्यादिभ्य एवेत्यपि सम्बन्ध इत्यभिप्रेत्य सूत्रे योजयति– **अयं पर इत्यादिना** ॥ 'वैषम्य-नैर्घृण्ये न सापेक्षत्वात्' इत्यनेन गतार्थतामस्य सूत्रस्याशङ्क्य परिहरति– **उक्तोऽपीति** ॥ **इत्युच्यत इति** ॥ तेन न व्याहतिरिति भावः । अत्र सूत्रक्रमस्त्ववतारक्रमेण टीकायामेव स्पष्टः ।

## भावदीपः

दोष उक्त इत्येतदेव व्यनक्ति ॥ **कर्तृत्वेति** ॥ भाष्ये तत इत्यस्य परामर्शविषयं दर्शयन् भाष्यसूत्रयोरर्थमाह ॥ **यत इति** ॥ पूर्वस्मात्पर इत्यनुवृत्तिम् मत्वाह ॥ **अयं पर इति** ॥ अवैयर्थ्यायैव न त्वशक्तस्य स्वस्य सहायार्थमित्येवार्थः । कृतपदार्थः कर्मेति । सूत्रोक्तमुपलक्षणं मत्वाह ॥ **योग्यतेति** ॥ सौत्रतुशब्दार्थ एवेति । शेषमाह ॥ **जीवं प्रेरयतीति** ॥ एवकार-व्यावर्त्योक्तिः **न त्विति** ॥ तत इत्यादिभाष्यवाक्यं व्याचष्टे ॥ **अत इति** ॥ विवृतमेतद्गीताभाष्ये अष्टादशेऽध्याये । अकर्तृत्वेऽपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थी भवतीत्यादिना वैषम्यनैर्घृण्येनेत्यनेनापौनरुक्त्यायाह ॥ **उक्तोऽपीति** ॥ स्मारणं च कर्तृशक्ते-रीशाधीनत्वप्रयुक्तवैषम्यादिशङ्कानिवृत्त्यर्थमिति ॥ **उच्यत इति** ॥ नान्यः कर्तेत्यादावित्यर्थः ॥ **अत इति** ॥ युक्तिप्रत्यक्षश्रुतीनां भावात् । अकर्तृत्वश्रुतेः स्वातन्त्र्यनिषेधपरत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

ननु शास्त्रवैयर्थ्यादिकं 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यनेन परिहृतमेव। वैषम्यनैर्घृण्यग्रहणस्य उदाहरणमात्रत्वेन शास्त्रवैयर्थ्यस्यापि तत्र विवक्षितत्वात्, पुनरिह शास्त्रवैयर्थ्यादिपरिहारे पौनरुक्त्यमित्यत आह– **उक्तोऽपीति** ॥ स्मरणन्तु दार्ढ्यार्थम्। ततश्च प्रयोजनसद्भावात् न पौनरुक्त्यमित्यर्थः। यद्यपि वचनमनुभावकमेव न स्मारकम्, तथापि उक्तस्य पुनर्वचने अनुभवानन्तरं स्मृतिर्भवतीति स्मारयितुमित्युक्तम्।

पूर्वपक्षस्तु – जीवो न कर्ता, 'नान्यः कर्ता' इति श्रुतेः। न च 'यत्कर्म कुरुते तदभिसम्पद्यते' इति जीवकर्तृत्वेऽप्यस्ति श्रुतिरिति वाच्यम्। अकर्तृत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात्। समर्थितं खलु ईश्वरस्यैव अनन्ययोगेन कर्तृत्वम्' इतरव्यपदेशादित्यादौ। ततश्च जीवस्य कर्तृत्वमेव नास्तीति 'एष उ एव साधु कर्म कारयती' त्यादि श्रुतिसमन्वयो न युक्त इति।

सिद्धान्तस्तु – युक्त एव 'एष उ एव साधु कर्म कारयति' इत्यादि श्रुति समन्वयः। जीवस्यापि कर्तृत्वेन तत्प्रेरकत्वसम्भवात्। अन्यथा विधिनिषेधशास्त्रवैयर्थ्यं स्यात्। नन्वथापि जीवस्य न वास्तवं कर्तृत्वमभ्युपगन्तव्यम्, व्यावहारिकेणैव कर्तृत्वेन विधिनिषेधशास्त्रस्य सार्थक्यसम्भवादिति चेत्, न। मोक्षेऽपि 'स्त्रीभिर्वा यानैर्वा' इत्यादिना विहारकर्तृत्वोपदेशात्। न च मोक्षे सतः व्यावहारिकत्वं सम्भवति। अस्तु तर्हि मोक्षे कर्तृत्वं पारमार्थिकम्, संसारे तु व्यावहारिकमेव किं न स्यादिति चेत्, न मोक्षार्थं साधनाद्युपादानदर्शनात्। न च तदपि परगतमेव जीवे आरोप्यत इति वाच्यम्। फलाभावप्रसङ्गात्। न हि अन्यगतसाधनं स्वकीयत्वाभिमानमात्रेण फलं भवति। अतिप्रसंगात्। 'आत्मानमेव लोकमुपासीत' इति श्रुतौ जीवस्य कर्तृत्वव्यपदेशाच्च। कथं तर्हि ईश्वर एव कर्ता न जीव इत्युक्तिरिति चेत्, इत्थम् यथा इदमहं ज्ञास्यामीति इच्छायामपि न स्वेच्छानुसारेण ज्ञानलाभो जीवस्य एवमिदं करिष्यामीति सङ्कल्पेऽपि न स्वेच्छानुसारेण कार्यसिद्धिः। ईश्वरस्य तु स्वेच्छानुसारेण कार्यसिद्धिर्भवतीति स्वातन्त्र्याभिप्रायेण ईश्वर एव कर्ता न जीवः कर्तेत्युच्यते।

ननु ईश्वरस्य जीववत् साधनसापेक्षकर्तृत्वेनाऽविशेषात्, ईश्वरस्यैव स्वातन्त्र्यं न जीवस्येत्येतत् कुत इति चेत्, न। ईश्वरस्य सकलसाधननियामकत्वेन साधनस्वान्त्र्यसद्भावात् कार्यसिद्धौ

(अभिनवचन्द्रिका)

स्वातन्त्र्यम्, जीवस्य तु साधनस्वातन्त्र्याभावात् फलस्वातन्त्र्याभावः । किञ्च । ईश्वरस्य पूर्णकामत्वात् फलस्वातंत्र्यं जीवस्य तु तदभावात्स्वातन्त्र्याभावः । ननु यदि जीवस्य न स्वातन्त्र्येण कर्तृत्वं कथं श्रुतिस्मृत्यादौ कर्तोच्यते, अस्वतन्त्रकर्तरि कर्तृशब्दप्रयोगाभावेन तस्य स्वतन्त्रकर्तृमात्रप्रत्यायकत्वनियमाऽभावात् । न चैवं तक्ष्ण इव जीवकर्तृत्वशक्तिः जीवाधीनैवाऽऽपन्ना । ततश्च अपसिद्धांत इति वाच्यम् । 'कर्तृत्वं करणत्वं च' इति श्रुतिबलेन जीवकर्तृत्व-शक्तेरीश्वराधीनत्वाङ्गीकारात् । न चैवं सति जीवस्याकर्तृत्वमेव प्राप्तमिति विधिनिषेधशास्त्र-वैयर्थ्यमिति वाच्यम् । विधिप्रतिषेधशास्त्रवैयर्थ्यपरिहाराय स्वस्य वैषम्यनैर्घृण्यपरिहाराय च जीवकर्मप्रयत्नयोग्यतापेक्षयैव ईश्वरो जीवं प्रेरयतीत्यङ्गीकारात् । तदुक्तं 'पूर्वकर्मप्रयत्नं च' इत्यादिना । अतः श्रुत्यविरोधेन जीवस्य कर्तृत्वसिद्धेः युक्तो भगवति समन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वसूत्राद्विभक्तिविपरिणामेन पर इत्यनुवर्तते । पूर्वकर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्यत इति स्मृत्यनुसारेण कृतशब्दः प्रयत्नपरः योग्यतापि ग्राह्या । तुशब्द एवार्थः । तस्य यथाश्रुतमपेक्षत एवंति अवैयर्थ्यादिभ्य इत्यनेनान्वयः । प्रेरयतीति शेषः । आदिपदेनावैषम्यमनैर्घृण्यं च गृह्यते यतस्ततोऽ-प्रयोजकत्वं शास्त्रस्य नोपपद्यत इति च शेष इत्यभिप्रेत्य प्रवृत्तस्य भाष्यस्य भावमाह ॥ **यतोऽय-मित्यादिना** ॥ **स्मारयितुमिति** ॥ विस्मृतस्य पुनःस्मरणहेतुसंस्काराय । अधानानुभवार्थमित्यर्थः । तेन वचनस्यानुभावकत्वात्कथमेतदिति निरस्तम् । अयमाशयः । युक्तिप्रत्यक्षश्रुतिभिर्जीवः कर्ता 'न चान्यः कर्ता' इत्यादि श्रुत्या इतरव्यपदेशादिपूर्वोक्तयुक्त्या विरोधः । तत्र जीवे स्वतन्त्रकर्तृत्व-निषेधात् इह च स्वतन्त्रकर्तृत्वोक्तेः । न च परतन्त्रत्वे पुरुषेण नृत्यमानदारुयोषेव विध्यादिविषयत्वं न स्यादिति वाच्यम् । तस्य चेतनत्वात् । नापि चेतनत्वेऽपि दुर्बलस्य जलौघादिनेश्वरेण बलान्नुद्यमानत्वादीश्वरस्य जीवकर्मानुसारेणेच्छाप्रयत्नाद्युत्पाद्य कारयितृत्वेन जीवेच्छाधीनत्व-स्यानुभवसिद्धत्वात् । नापीश्वरोत्पादितेच्छादिमत्वेन स्वतः प्रवृत्यभावात्कारयितृनियतस्य तक्ष्ण इव राजभटाद्युत्पादितेच्छादिमतो विष्टिगृहीतस्येव सम्बन्धितया विधिज्ञानेच्छादिमात्रेण विधिविषयत्वो-पपत्तेः । नापि कर्तृत्वशक्तेरीशायत्तत्वेन स्वातन्त्र्याभावात्स्वतन्त्रः कर्तेत्युक्तलक्षणाभावात् । जडं प्रतीव चेतनत्वेऽपि विध्यनुपपत्तिः । स्वातन्त्र्यं तु जडान्प्रतीत्युक्तत्वेनेशदत्तस्वातन्त्र्यस्य सत्त्वेन

(वाक्यार्थमुक्तावली)

जडवैलक्षण्यात् । नापि क्वचित्कृतिविध्यायत्तप्रयत्नेऽपि फलाभावात् क्वचिद्व्यभिचारस्या-स्वातन्त्र्योपपादकत्वेऽपि प्रायः फलभोक्तृत्वात् । तावता विध्यविषयत्वेऽपि चेत्यादिविधि-विषयत्वानुपपत्तेः । पाकार्थयत्नेऽपि तत्फलपर्यवसानाभावात् स्याज्जीवेऽपि विध्यविषयेभ्यो ईशजडमुक्तेभ्यो व्यावृत्तस्य स्वसम्बन्धितया विधिज्ञानस्य तज्जन्यायाः फलसाधनेच्छायाः साधनविषयकृतेश्चानुभवसिद्धत्वात् । पारतन्त्र्येऽपि तावन्मात्रेण विधिविषयत्वं कर्मफलभोक्तृत्वं च । एतदेवाभिप्रेत्योक्तं भगवत्पादैः गीताभाष्ये, अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्या उक्तकरणे कर्मकर्तुः पुरुषार्थो भवतीति न प्रवृत्तिविधिवैयर्थ्यम् । विस्तरस्तु चन्द्रिकायाम् । अत्राद्यं सूत्रचतुष्टयं स्वपक्षसाधकं शिष्टं बाधकपरिहारकम् । तत्राद्ये सर्वप्रमाणानुग्राहकस्य तर्कस्य विधिनिषेध शास्त्रवैयर्थ्यप्रसङ्गरूपस्योक्तिः । द्वितीये तर्कसिद्धकर्तृत्वस्वाभाविकत्वसमर्थनम् । तृतीये कर्तृत्वस्य तर्कसिद्धस्य संसारे प्रत्येक्षेणास्वाभाविकत्वसमर्थनम् । चतुर्थे श्रुत्या कर्तृत्वसमर्थनम् । पञ्चमे कर्तृत्वाभावोक्तेर्नियतकर्तृत्वाभावविषयत्वेन सावकाशत्वोक्तिः । षष्ठसप्तमयोर्नियतकर्तृत्वाभाव-समर्पकपारतन्त्र्ये हेतुद्वयोक्तिः । अष्टमे पारतन्त्र्ये कर्तृत्वानुपपत्तिपरिहाराय दृष्टान्तोक्तिः । नवमे तक्ष्ण इव जीवस्य कर्तृत्वशक्तेरन्यायत्तत्वनिरासः । दशमे कर्तृत्वशक्तेरपि अन्याधीनत्वे पुनः कर्तृत्वानुपपत्तिमाशङ्क्य परिहार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

सूत्रे पूर्वसूत्रात् विभक्तिविपरिणामेन पर इत्यनुवर्तते । 'पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु' इति स्मृत्यनुसारेण कृतशब्दः कर्मपरः । योग्यतापि ग्राह्या । तुशब्द एवार्थः । तस्यावैय्यर्थ्यादिभ्य एवेत्यपि सम्बध्यत इत्यभिप्रेत्य सूत्रं योजयति ॥ **अयं पर इति** ॥ **विधिनिषेधशास्त्रावैयर्थ्यायै-वेति** ॥ न त्वशक्तस्य स्वस्य सहायार्थमित्यर्थः । वैषम्यनैर्घृण्येनेत्यनेन गतार्थतामाशङ्क्य परिहरति ॥ **उक्तोऽपीति** ॥ **इत्युच्यत इति** ॥ तेन न व्याहतिरिति भावः । अत्र सूत्रक्रमस्तु अवतारक्रमेण टीकायामेव स्पष्टः ।

## वाक्यार्थविवरणम्

**अनपेक्षयेति** ॥ कर्मादिकमनपेक्ष्यैव जीवं प्रेरयतीति यद्युच्येत तर्हि हरेरेव कर्तृत्वं प्राप्तं, न जीवस्येति शास्त्रवैय्यर्थ्यवैषम्यादिकं च स्यात् । न चैवम् । किन्तु तदपेक्ष्यैव । तथा च

(वाक्यार्थविवरणम्)
कर्माद्यनुसारेण जीवेऽपि कर्तृत्वं ददातीश्वरः । तद्दत्तकर्तृत्वस्य सत्त्वाच्छास्त्रावैय्यर्थ्यादियुक्तमिति भावः ॥ **उक्तोऽपीति** ॥ वैषम्यनैर्घृण्येनेत्यनेनेति शेषः । अतो न पुनरुक्तिरिति भावः ॥ **अपेक्ष्याभाव इति** ॥ तथा च वैषम्यादिति भावः ॥ **आहेति** ॥ अपेक्ष्यं तत्पूर्वकर्मास्ति । कर्मपरम्पराया अनादित्वादित्याशयेनेति भावः । व्याहतिपरिहारायाह ॥ **इत्युच्यत इति** ॥ अतोऽ-स्वातन्त्र्यस्वातन्त्र्यकर्तेति । अस्वातन्त्र्यविवक्षया एवैतत्कर्तृत्वं जीवस्य । 'यत्कर्म कुरुत' इत्यादि-श्रुतावस्तीत्युच्यते । 'नाप्यकर्ता' इत्यादौ च नचास्तीत्युच्यते । अतो न विरोध इति भावः ।

## वाक्यार्थमञ्जरी

कृतं कर्म ईशः जीवस्य कर्मप्रयत्नादिकमपेक्ष्यैव तं प्रेरयति किमर्थं विधिनिषेधशास्त्र-वैयर्थ्याभावाय वैषम्यादिनिरासाय चेत्यर्थः । उक्तोऽपि वैषम्यनैर्घृण्य इत्यादिना ॥ **तत्कर्मेति** ॥ अपेक्ष्यकर्मेत्यर्थः ॥ **तत्प्रेरण इति** ॥ तादृशकर्मप्रेरण इत्यर्थः ॥ **इत्युच्यत इति** ॥ अतो न व्याहतिरिति भावः ।

॥ इति कर्तृत्वाधिकरणम् ॥

## १८. अथ अंशाधिकरणम्

## सूत्रभाष्यम्

'अंशा एव हीमे जीवा अंशी हि परमेश्वरः ।
स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः' ॥

इति गौपवनश्रुतौ अंशत्वं जीवस्योपलभ्यते ।

'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य ।
तथाऽपि तु यथायोगं फलदः प्रभुरेकराट् ।
न नियम्यः स कस्यापि स सर्वस्य नियामकः' ॥

इति च भाल्लवेयश्रुतौ ।

अतो ब्रवीति –

**॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥४३॥**

'मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः' । 'अवः परेण पितरं यो अस्यानुवेद पर एनावरेण' (ऋ.सं. १-१६४-१८) । 'यस्तद्वेद स पितुष्पिताऽसत्' (म.ना.उ. २-४) । 'यस्ता विजानात्स पितुष्पिताऽसत्' (ऋ.सं. १-१६४-१६) ।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिपस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ॥ (मुं.उ.३-१-१)

इत्यादिना नानाव्यपदेशादंशो जीवः । तथा च पाराशर्यायणश्रुतिः –

'अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति च' इति । 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चन' इत्यन्यथा च कापायणश्रुतिः । 'ब्रह्म दाशा ब्रह्म कितवाः, ब्रह्मैवेमे दाशा' इत्यभेदेनाप्येकेऽधीयते । तथा चाग्निवेश्यश्रुतिः – 'अंशो ह्येष परस्य भिन्नं ह्येनमधीयिरेऽभिन्नं ह्येनमधीयिर' इति । वाराहे च–

(सूत्रभाष्यम्)

> 'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः ।
> बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु ॥
> यतो भेदेन तस्यायमभेदेन च गीयते ।
> अतश्चांशात्वमुदिष्टं भेदाभेदौ न मुख्यत' ॥ इति ।

## तत्त्वप्रदीपिका

'नानाव्यपदेशः' पितृपुत्रत्वादिनानप्रकारसम्बन्धव्यपदेशः । 'अवः परेण' इत्यस्यायमर्थः । अवः अवरः जीव इति यावत् । योऽवरः अस्य स्वस्य जगतो वा पितरं यथावद्वेद, परेण न तु स्वतः, स तु परो भवति । अनेनावरभूतेन दर्शनक्रममपेक्ष्य । स्वरूपदृष्ट्यनन्तरं हि भगवन्तं पश्यति ।

'स्त्रियः सतीः' इत्यस्यायमर्थः । स्त्रियः सतीः पुंस आहुर्वेदादिशब्दैः । अभिमान्यपेक्षया चायं व्यपदेश उपपद्यते । ज्ञानदृष्टिमानेव तान्पश्यति नाज्ञानी । कविः पुत्रो ब्रह्मा । ''यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा'' इति श्रुतेः 'तेने ब्रह्म हृदा य आदिकवय' इत्यादिस्मृतेश्च । स एव आ समन्ताद्वेद यस्तानि च्छन्दांसि विशिष्टत्वेन जानाति, साक्षाद्विष्णुवाचकत्वेन, स पितुर्विष्णोः पिता भवति व्यञ्जकत्वात् ।

नानाव्यपदेशोंऽशत्वं पर्यवसाययतीत्यत्र प्रमाणमाह– **तथा चेत्यादिना ॥** 'अन्यथाव्यपदेशः' सम्बन्धराहित्यव्यपदेशः पितृत्वादिना लोकवदानुरूप्या भावापेक्षया परस्यानुपकार्यत्वापेक्षया च, न तु सर्वथा । नियम्यनियामकलक्षणस्य तत्र तत्र प्रसिद्धत्वात् । 'न सम्बन्धो नापेक्ष्यो जीवः परस्य' इत्युक्त्वाऽपि 'स सर्वस्य नियामकः' इति ह्याह । अभेदेनाप्येकेऽधीयते, अतश्चांशः । न च क्वाप्य-भेदस्याध्ययनात्स्वरूपांशत्वमापतति, बहुत्वाद्भेदश्रुतीनां तदनुग्रहो न्याय्य इति । न हि मुख्याऽभेदोक्तिः, तद्गुणसारत्वादिति गत्युक्तेश्च । उक्तं चानुव्याख्याने–

> 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
> सादृश्ये चैक्यवाक्सम्यक्सात्रकाशा यथेष्टतः' ॥ इति ।

## तत्त्वप्रकाशिका

अत्र परमात्मनि श्रुतिसमन्वयसिद्ध्यर्थं जीवविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । हरौ श्रुतिसमन्वयो निरूपितः । स च जीवविषयश्रुतिविरोधेनाप्रामाण्येऽनुपपन्नः स्यादिति

(तत्त्वप्रकाशिका)

निराकार्यः । प्रकृतो जीवोऽत्र विषयः । किमीश्वरांशो न वेति सन्देहः । संशयबीजं श्रुतिविगानं दर्शयति ॥ **अंशा एवेति** ॥ तत्र न जीवो हरेरंशः नाप्यनंश इति निर्णयो युज्यत इति पूर्वः पक्षः । न तावदंशत्वं निर्णेतुं शक्यम् । नैवांश इति श्रुतेः । न च तत्र परस्येति जीवान्तरविवक्षा । तथापीत्यादिवाक्यशेषविरोधात् । नाप्यनंशत्वनिर्णयः । 'अंशा एव' इति श्रुतेः । न च विकल्पेनाविरोधो यवव्रीहिश्रुत्योरिव वस्तुविकल्पायोगात् । 'अंशा एव' नैवांश इति सावधारणत्वात् । न च देशकालविभेदेन व्यवस्थितो विकल्पः । विशेषप्रमाणमन्तरेण तादृश-निश्चयायोगात् । न च जीवेशाभेदस्य सयुक्तिकं निरस्तत्वादनंशत्वश्रुतिर्बलवतीति वाच्यम् । अभेदाभावेऽप्यंशत्वस्याविरोधात् । समस्तपटाद्भिन्नस्याप्येकस्य तन्तोस्तदंशत्वदर्शनात् । अतः श्रुतिद्वयस्यापि नानात्वादप्रामाण्यमेवेति नोक्तसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥

जीवः परमात्मनोंऽशो भवत्येव । मां रक्षत्वित्यादिना नानप्रकारेण जीवस्येशसम्बन्धित्व-व्यपदेशात् । तत्सम्बन्धित्वमेव तदंशत्वमिति वक्ष्याम इति भावः । यः पराद्धरेरवमो जीवोऽस्य जगतः पितरं वेदानेनावरेणायं परो जात इति व्यपदिश्यते तज्ज्ञानं च दुर्लभं को नु सर्वज्ञकल्पः प्रजासु ब्रह्म प्रावोचत् कस्य चैतदेवं मनो ज्ञानमाधिक्येन जातमित्यर्थः । यस्तद् ब्रह्म वेद स तस्य पितुः पिताभवदित्यर्थः । या भगवन्मूर्तयो मदुपास्याः स्त्रीलिङ्गशब्दवाच्यास्ता एव परमपुरुषानाहुः । यस्ताः पश्यति स एव चक्षुष्मान् यश्च जानाति स तस्य जगत्पितुरभिव्यञ्जकत्वात् पिताभवदित्यर्थः । एतद्दीर्घतमो वाक्यम् । नानाव्यपदेशादंशो जीव इत्यत्र श्रुतिं चाह ॥ **तथा चेति** ॥ हेत्वन्तरेणैतत्समर्थयति ॥ **अन्य इति** ॥ अन्यथा वक्ष्यमाणाभेदापेक्षया । एतत् श्रुतिद्वयेन जीवेशयोर्भेदाभेदावुच्येते । न चान्यतरश्रुतिबाधो युक्तः । न च साक्षाद्भेदाभेदावुपपन्नौ । विरोधात् । अतः श्रुतिद्वयान्यथानुपपत्त्या भेदमङ्गीकृत्याभेदस्थानेंऽशत्वं वक्तव्यमिति भावः । उक्तं चाभेदश्रुतयोंऽशत्वादिति । भेदाभेदोक्त्यन्यथानुपपत्त्यांऽशो जीव इत्यत्रापि श्रुतिमाह ॥ **तथा चेति** ॥ समस्तसूत्रार्थे स्मृतिं चाह ॥ **वाराहे चेति** ॥

## गुर्वर्थदीपिका

यवव्रीहिश्रुत्योरिवेति वैधर्म्यदृष्टान्तः । यवव्रीहिश्रुत्योरिवेह वस्तुद्वयविषयत्वाभावात् । एकस्मिन्वस्तुनि च विकल्पायोगादित्यर्थः । अभेदाभावेऽपीति तार्किकरीत्या पूर्वपक्षः । तस्य मते

(गुर्वर्थदीपिका)

एकतन्तोः पटांशत्वात्ततोऽत्यन्तभिन्नत्वाच्च । 'यस्ता विजानात्स पितुः पिताऽसत्' इति श्रुतिसमाख्ययाऽयं परो जात इति व्यपदिश्यत इत्युक्तम् । ज्ञाताऽपरो जीवः परस्यापि पितेति फलितोऽर्थः । एतद्देवमित्यत्र उद्दिश्येति शेषः । एष पूर्वोक्तश्चासौ देवश्चेति विग्रहः । मे मम सम्बन्धिन्य इत्यस्य तात्पर्यकथनं **मदुपास्या इति** ॥ शत्रन्तपश्यत्पदस्य तात्पर्यकथनं पश्यतीति । ई इत्यस्यार्थकथनं **स एवेति** । मे इत्यनेनोक्त उपासको मुनिः क इत्यत आह **एतद्दीर्घतमोवाक्य-मिति** ॥ दीर्घतमसो ऋषेर्वाक्यं दीर्घतमोवाक्यम् । अन्यथा च काषायाणश्रुतिरिति भाष्येऽर्थानुसारेण 'ब्रह्मदाशा ब्रह्मकितवा' इत्यारभ्य 'अभेदेनाप्येके अधीयत' इत्यन्तं वाक्यं प्राग्योजनीयम् । 'अन्यः परो अन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चन' इति काषायणश्रुतिः । अन्यथोक्ता-भेदादन्यथा भेदेनेति यावत् । अधीयत इति योग्यक्रियाध्याहारेण पूर्ववाक्यं पश्चाद्योजनीयम् । यत्तु नानाव्यपदेशात् द्वासुपर्णेत्यादिभेदव्यपदेशात् अन्यथा भेदादन्यथा ऐक्येनेति यावत् दाश-कितवादित्वमधीयते । अतो भिन्नाभिन्नत्वाज्जीवोंऽश इति व्याख्यानं तत्तु न सूत्रकृतोऽभिमतम् । तथा सति नानाव्यपदेशादैक्यव्यपदेशाच्चेत्यवक्ष्यत् । 'एके दाशकितवादित्वमधीयते' एके 'अन्यथा चाधीयत' इति सूत्रखण्डस्य वैयर्थ्यमेव स्यात् । अन्यथा चैके अधीयते ततोऽपीति व्याख्यानमपि सूत्रस्याल्पाक्षरताभङ्गादुपेक्षणीयम् । तथाऽप्युत्तरांशस्य पुनर्वैयर्थ्यमेव । तस्मादधीयत एक इत्युक्त्वा अन्यथा चेति वदता चशब्दात्पूर्वक्रियामाकृष्य ततोऽन्यथा च केचिदधीयते । अपि ततोऽप्युक्तविधया भेदाभेदव्यपदेशादंश इत्यंशत्वे हेत्वन्तरमेवोत्तरवाक्येन सङ्गृहीतम् । पूर्ववाक्येन च नानाव्यपदेशात् भेदव्यपदेशादित्येवोक्ते पौनरुक्त्यप्रसङ्गात्केवलं तदीयत्वस्फोरकपितृत्वभ्रात्रादित्वेन नानाव्यपदेशादंश इति प्राथमिको हेतुरुक्त इति सौत्रपदरत्नावलिमहिम्ना लब्धोऽर्थः । अतः सूत्रपदपद्मवासनां वायुरेव सङ्गृहीतुं दक्षो न त्वपरः कोऽपि सुरः । किमुतान्यो दानवो मानवो वा ।

## भावबोधः

अनन्तरसङ्गतिं सूचयति– **विषयमिति ॥ प्रकृतो जीव इति ॥** ईश्वराधीनकर्तृत्ववत्त्वेन पूर्वाधिकरणे प्रकृत इत्यर्थः । तथा च 'तद्गुणसारत्वात्' इत्यत्र यदीश्वरसादृश्यमुक्तं जीवस्य यच्च 'परात्तु तच्छ्रुतेः' इति परमात्माधीनत्वमुक्तं तदुभयरूपस्यांशत्वस्यात्र समर्थनादनन्तरसङ्गतिरिति भावः । यथोक्तमनुव्याख्याने 'सादृश्यं चांशतास्य तु' इति । व्याख्यातं च सुधायामस्य जीवस्य

(भावबोधः)

परमेश्वरांशता तु तत्सादृश्यम्, 'च' शब्दात्तदधीनसत्तादित्वं चेत्यर्थ इति ॥ **किमिति** ॥ अत्र न वेत्यनन्तरमित्यनिर्णय उत ईश्वरांश एवेति शेषपूरणेन व्याख्येयम् । अत्र जीवः किमीश्वरांश उत नेति चिन्ता । तदर्थं श्रुत्योः सावधारणतया निरवकाशत्वेन परस्परविरोधेनाप्रामाण्यमेवोत भिन्नांशत्वस्वरूपांशत्वाभावविषयत्वेनाविरोधात् **प्रामाण्यमिति** । तदर्थं परमात्मांशत्वे जीवानां मत्स्यादिसाम्यं प्राप्नोत्युत नेति । तदर्थं मत्स्यादिभ्यो जीवानां प्रवृत्त्यादौ भगवदधीनत्वादि-रूपवैलक्षण्यं नास्त्युतास्तीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । भाष्ये विशिष्य पूर्वपक्षानुक्तेः न्यायविवरणे च नानाश्रुतेरप्रामाण्यमिति अंशत्वानंशत्वश्रुत्योः परस्परविरोधेनाप्रामाण्यमित्य-निर्णयेनैव पूर्वपक्षोक्तेस्तदनुसारेण पूर्वपक्षमाह– **तत्र न जीव इति** ॥ **वाक्यशेषविरोधादिति** ॥ तथा च युक्तेरप्रयोजकत्वेन तदुपोद्बलितश्रुतेः प्राबल्यमिति भावः । वक्ष्याम इति । 'अंशो ह्येष' इति 'पुत्रभ्रात्रि'त्यादिश्रुतिस्मृत्युदाहरणेनेत्यर्थः । परेणेति तृतीया पञ्चम्यर्थ इत्याह– **परादिति** ॥ जात इति व्यपदिश्यत इति शेषोक्तिः । कुत इत्यस्य तात्पर्यं **कस्य वेति** ॥ अधीत्यस्याधिकत्वेनेत्यर्थः । स्त्रियः सतीरिति ऋचमादितो व्याचष्टे– **या इति** ॥ मे इति षष्ठ्यर्थः ॥ **मदुपास्या इति** ॥ को वक्तीत्यत आह– **एतद्दीर्घतमो वाक्यमिति** ॥ **उक्तं चेति** ॥ अनुव्याख्यान इति शेषः ।

## भावदीपः

किमीश्वरांशो न वेतीति वक्ष्यमाणपूर्वपक्षानुगुण्याय जीवानां ब्रह्मांशत्वं निर्णेतुं शक्यमुत नेति सन्देहकोटिप्रदर्शने कार्येऽप्येवमुक्तिः भाष्ये श्रुतिविगानरूपसन्देहबीजोक्त्यनुरोधेन वा एवं संशय-कोटिकीर्तने तद्विरुद्धसिद्धान्तकोटिरर्थलब्धेति वा बोध्यम् । नानाश्रुतेरप्रामाण्यमित्यन्यत्रोक्त्यनुरोधेन श्रुतिद्वयाप्रामाण्यमुपपादयन् अनिर्णयेन पूर्वपक्षमाह ॥ **तत्रेत्यादिना** ॥ श्रुतिशेषोक्तेरुपयोगं व्यनक्ति ॥ **न चेत्यादि** ॥ अंशा एवेति श्रुतेरिति भाष्ये श्रुतिशेषोक्तिः । सिद्धान्ते भिन्नांशत्वोपपादक-तयोपयोज्यत इति भावः । श्रुतिद्वयस्थावधारण व्यावर्त्यमाशङ्क्य बीजोक्त्या निरस्यति ॥ **न चेति** ॥ व्रीहिभिर्यजेत यवैर्यजेतेति श्रुत्योरित्यर्थः । उक्तं च जैमिनिसूत्रे द्वादशस्य तृतीयपादे एकार्थास्तु विकल्प्येरन् समुच्चये चावृत्तिः स्यात् प्रधानस्येति व्रीहीणां यवानां चोभयेषामपि पुरोडाशप्रकृतित्वेन पुरोडाशसाधनत्वरूपैकार्थेन विरोधप्राप्तौ कदाचिद् व्रीहीणामनुष्ठानं प्रयोगान्तरे च यवानामिति विकल्पस्तथेत्यर्थः ॥ **वस्त्विति** ॥ अनुष्ठानरूपक्रियायाः कृतिसाध्यत्वे-

(भावदीपः)

नैच्छिकत्वेऽपि इह जीवाख्ये वस्तुनि अंशत्वमनंशत्वं चायुक्तमित्यर्थः । अवधारणस्यान्यथोपपत्तिमाशङ्क्य देशादिविशेषोक्तिरहितसामान्यश्रुतिद्वयोक्त्या लब्धं समाधिमाह ॥ **न च देशेत्यादिना** ॥ यथा एकस्यैव वस्तुनो घटादेर्देशकालभेदेन सत्त्वमसत्त्वं च तथेत्यर्थः । श्रुतावंशैरिदं कारयतीति कर्तृत्वकारयितृत्वाभ्यां जीवपरयोर्भेदप्रतीतेरंशत्वोक्तिरयुक्तेति प्रतीतं विरोधमाशंक्य भिन्नस्याप्यंशत्वं सदृष्टान्तमाह ॥ **न चेत्यादिना** ॥ **समस्तपटाद्भिन्नस्यापीति** ॥ यद्यपि समस्तपटेन सर्वतन्तूनामत्यंताभेदः एकैकस्य तु खण्डपटेनात्यन्तभेदः समस्तेन तु भेदाभेदौ । यथोक्तम् 'अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यन्ते नैवमेव हि चेतना' इति इतरव्यपदेशादित्यधिकरणानुव्याख्याने सुधायां चांशिना **भिन्नाभिन्ना इति** ॥ तथापि भेदांशमात्रस्यायमनुवादः । उक्तं सर्वं नानाश्रुतेरप्रामाण्यमित्यन्यत्रोक्तनानात्वोपपादकमिति दर्शयन्नर्थतस्तदनुवादेन फलोक्त्योपसंहरति ॥ **अत इति** ॥ विकल्पेन वान्यतरबाधेन वा निर्णयासम्भवादित्यर्थः । श्रुतेरिति जात्येकवचनमिति भावेन श्रुतिद्वयस्येत्युक्तम् । नानात्वात् भिन्नार्थत्वादित्यर्थः । सूत्रे परस्येति ज्ञ इति च पदद्वयानुवृत्तिं मत्वा भाष्यं सूत्रानुरोधेन व्युत्क्रमेण व्याचष्टे ॥ **जीव इति** ॥ अनिर्णयपूर्वपक्षनिरासाय भवत्येवेत्युक्तिः ॥ **वक्ष्याम इति** ॥ अंशो ह्येष इत्यादिप्रमाणैरित्यर्थः । जीवेशसम्बन्धपरत्वप्रतीत्यर्थं शेषोक्त्या श्रुत्यर्थमाह ॥ **य इति** ॥ परेणेत्यस्य परादित्यर्थः । अवोऽवमः । एना एनेन अनेनेत्यर्थः । द्वितीयाटौ स्वेनः । कवीयमानः क इह प्रवोचद्देवं मनः कुतो अधिप्रजातमित्युत्तरार्धमवतारयति ॥ **तज्ज्ञानं च दुर्लभमिति** ॥ इह प्रजासु । कुतः कस्य । ब्रह्मपरत्वस्फोरणायोत्तरार्धोक्तिः । न हीशादन्यस्य ज्ञानं दुर्लभमिति भावः । अत एव ब्रह्मेति शेषोक्तिः तच्छब्दपरामर्शविषयं दर्शयन् 'स्त्रियः सतीस्ताम् उमे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः । कविर्यः पुत्रः स इमाचिकेतेति पूर्ववाक्यद्वयमपि व्याचष्टे ॥ **या इति** ॥ तच्छब्दश्रवणाद्या इत्युक्तिः । मे मत्सम्बन्धिन्यः मदुपास्या इति यावत् । उ एव । मे इत्यस्मच्छब्दस्याहं शतधा सहस्रधा चेत्यादाविवेश्वरवाचित्वभ्रमनिरासायाह ॥ **एतदिति** ॥ दीर्घतमा नाम कश्चिदृषिः । अतो मदुपास्या इति व्याख्या युक्तेति भावः । सूत्रादावन्यथा चेति चशब्दो हेतुसमुच्चय इति भावेनाह ॥ **हेत्वन्तरेणेति** ॥ तत्त्वप्रदीपरीत्यांशो ह्येष इत्येतदपेक्षयैवेति प्रतीतिनिरासायाह ॥ **वक्ष्यमाणेति** ॥ दृष्टभेदानुसारेण तासामर्थोपपत्तेरित्यन्यत्रोक्तिसूचितं भावमाह ॥ **एतच्छ्रुतिद्वयेनेत्यादिना** ॥ अभेदस्थानेंशत्वमित्यत्रैतदधिकरणानुभाष्यसंमतिमाह ॥ **उक्तं चेति**

(भावदीपः)

**।। समस्तसूत्रार्थ इति ।।** नानाव्यपदेशादंशो जीव इत्यर्थे अन्यथाऽधीयते दाशकितवादित्वमधीयते अतश्चांश इत्यर्थे चेत्यर्थः ।

## अभिनवचन्द्रिका

**श्रुतिसमन्वयो निरूपित इति ।।** वाक्यान्वयेन जीवविषयकवक्ष्यमाणश्रुतेः, जीवार्थकत्व-मङ्गीकृत्य समन्वयोऽभिहितः । जीवविषये च श्रुतेरप्रामाण्ये भगवति समन्वयोऽनुपपन्नः स्यादिति भावः **।। किमीश्वरांशो न वेति ।।** यद्यप्ययं संशयो न वक्ष्यमाणपूर्वपक्षकोट्यवलम्बी, तथापि जीवो नेश्वरांश इत्यपि पूर्वपक्षः कार्य इति द्योतयितुमेवं प्रदर्शितः । पूर्वपक्षमाह– **तत्रेति ।।** यद्यपि सिद्धान्ते अंशत्वसाधनादनंश इत्येव पूर्वपक्षः कार्यः, तथापि यावान् सूत्रनिरस्यो विपर्ययः, स सर्वोऽपि पूर्वपक्ष इति दर्शयितुमयं पूर्वपक्षो दर्शितः । अयं च 'श्रुती अनिर्णायके' इति विपर्ययः, श्रुत्या 'अंश' इति निर्णये कृते अर्थान्निरस्तो भवति' इति सूत्रनिरस्यो भवति । व्रीहियवश्रुत्योरिव व्यवस्थितविकल्पेनाऽविरोधमाशंक्य निषेधति – **न चेति ।। वस्तुविकल्पेति ।।** भवेत्तत्र विकल्पः श्रुतिद्वयोक्तक्रियायाः श्रुत्युक्तसाधनयोर्द्वयोरन्यतरोपादानेन स्वेच्छया निष्पादयितुं शक्यत्वात् । इह तु सिद्धस्वरूपस्य जीवस्य इच्छानुसारेण अंशत्वानंशत्वयोरयोगेन विकल्पो न युज्यत इति भावः । बाधकान्तरमाह– **अंशा एवेति ।।** व्यवस्थितविकल्पमाशङ्क्य निषेधति– **न चेति ।।** एकस्यैव सिन्धुनद्याः परभागे स्थित्या ब्राह्मण्यं, तत्परभागे स्थित्याऽ-ब्राह्मण्यामितिवत्, जीवस्य भूलोकादिस्थित्याऽनंशत्वं स्वर्गादिस्थित्यांऽशत्वमिति देशभेदेन वा, एकस्यैव सुद्युम्नस्य कालभेदेन स्त्रीत्वपुंस्त्ववत्, इदानीमनंशत्वं कालान्तरेंऽशत्वमिति कालभेदेन वा, व्यवस्थितो विकल्पो भविष्यतीति न वक्तव्यमित्यर्थः **।। विशेषप्रमाणमन्तरेणेति ।।** सुद्युम्नादौ 'आचार्यानुग्रहात्कामं लब्ध्वा पुस्त्वं व्यवस्थया' इत्यादि प्रमाणसद्भावात् निर्णयो युज्यते । प्रकृते तु प्रमाणाभावान्न निर्णयो युज्यत इति भावः **।। अत इति ।।** अस्यैव विवरणं **श्रुतिद्वयस्यापि नानात्वादिति ।।** श्रुत्योश्च नानात्वं नाम परस्परविरुद्धत्वमिति बोध्यम् । 'अवः परेण पितरं यो अस्यानुवेद पर एनावरेण कवीयमानः क इह प्रवोच देवं मनः कुतो अधिप्रजातम्' इति ऋचः पूर्वार्धं व्याचष्टे – **यः परादिति ।।** अवरस्य जगत्पितृवेत्तृत्वेऽपि जगत्पितुः तज्ज्ञातत्वव्यपदेशः कुतः । देवदत्तस्य स्वज्ञातपुत्रत्वव्यपदेशाभावादित्यत आह – **तज्ज्ञानं च दुर्लभमिति ।।** चशब्दो हिशब्दार्थः । यस्मात्तज्ज्ञानं दुर्लभं तस्मात्तज्ज्ञात इति व्यपदिश्यत इत्यर्थः । देवदत्तस्य

(अभिनवचन्द्रिका)

स्वज्ञातपुत्रत्वव्यपदेशाभावेऽपि परमेश्वरस्य स युज्यत एव । असतः सत्तासम्बन्धवत् अनभिव्यक्तव्यक्तेरपि उत्पत्तिशब्दार्थत्वादिति भावः । न च तज्ज्ञानस्य दुर्लभत्वमसिद्धम्, उत्तरार्धे तथोक्तत्वादिति भावेनोत्तरार्धं व्याचष्टे – **को नु सर्वज्ञकल्प इति** ।। 'स्त्रियः सतीस्तां उभे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः । कविर्यः पुत्रः स ईमाचिकेत यस्ता विजानात् सवितुष्पितासत्' इति ऋचं व्याचष्टे – **याः भगवन्मूर्तय इति** ।। ऋषिज्ञानमवश्यं सम्पादनीयमिति भावेनाह– **एतद्दीर्घतमोवाक्यमिति** ।। **श्रुतिं चाहेति** ।। सूत्रार्थे स्मृतेर्वक्ष्यमाणत्वात् तद्विवक्षयाऽयं चः पठितः ।। **हेत्वन्तरेणेति** ।। हेत्वन्तरप्रतिपादकसूत्रखंडव्याख्यानेनैतत्समर्थयत इत्यर्थः ।। **अभेदस्थानेंऽशत्वमिति** ।। सम्बन्धित्वमित्यर्थः । भिन्नेऽपि अत्यन्तं प्रीत्यास्पदे भृत्ये 'अयमेव राजा' इत्यादि प्रयोगदर्शनादिति भावः ।। **उक्तं चेति** ।। अनुव्याख्यान इति शेषः ।

## वाक्यार्थमुक्तावली

जीवस्य परात्तु तच्छ्रुतेरिति यत्पराधीनत्वमुक्तं यच्च तद्गुणसारत्वादिति ईश्वरसादृश्यं तदुभयरूपम् अंशत्वं इह समर्थ्यत इत्यनन्तरसङ्गतिः ।। **यथोक्तम्** ।। सादृश्यं चांशताऽस्य तु इति । सुधायां च चशब्दात्तदधीनसत्तादित्वं चेति ।। **किमीश्वरांशो न वेति सन्देह इति** ।। अत्र नेत्यस्यानंश इत्यर्थः । अत एव न जीवो हरेरंशो **नाप्यनंश इति निर्णयो युज्यत इति** ।। उभयोरनिर्णयेन पूर्वपक्षं प्रतिज्ञाय न तावदंशत्वं निर्णेतुं शक्यं नाप्यनंशत्वमिति निर्णय इति विवरणं क्रियते । न्यायविवरणे च नानाश्रुतेरप्रामाण्यमित्युभयश्रुत्यप्रामाण्येन पूर्वपक्षं प्रापय्य दृष्टभेदानुसारेण तासामर्थोपपत्तेः । अप्रामाण्यकल्पनस्य च विपरीतज्ञानमूलत्वादित्युभयप्रामाण्येन सिद्धान्तितम् । सूत्रे चांशो नानेति अंशनिर्णयेन प्रकाशादिवन्नेत्यत्र स्वरूपांशत्वाभावेनानंशत्वनिर्णयेन सिद्धान्तो वर्तिष्यते । ततश्च जीवानां ब्रह्मांशत्वमनंशत्वं वा निर्णेतुमशक्यमुत शक्यमिति चिन्ता । तदर्थमंशा एव नैवानंशा इति सावधारण श्रुत्योर्निरवकाशत्वेनाप्रामाण्यमुत विभिन्नांशत्वरूपांशाभावपरत्वेनोभयोरपि प्रामाण्यमिति । तदर्थमंशत्वनिर्णये मत्स्यावतारादिसाम्यप्रसङ्गो भवति न वेति ।। **सन्देहबीजमिति** ।। सावधारणश्रुत्योरवधारणमहिम्नांशत्वानंशत्वकोट्युपस्थापकत्वं विरुद्धत्वादेवानिर्णयकोट्युपस्थापकत्वमिति भावः । भावबोधे तु अत्र न वेत्यनन्तरम् इत्यनिर्णय उतेश्वरांश एवेति निर्णयो वेति शेषः । ततश्च जीवः किमीश्वरांश इति निर्णयो न सम्भवत्युत सम्भवतीत्युक्तम् ।

(वाक्यार्थमुक्तावली)

टीकायामपि सन्देहात्मकपूर्वपक्षकोटिकीर्तनेन तद्विरुद्धसिद्धान्तकोटिरर्थलब्धेति पृथङ्नोक्तेत्युक्तम् । चन्द्रिकायामपि जीवानां किं ब्रह्मांशत्वं निर्णेतुमशक्यमुत शक्यमिति चिन्तेत्युक्तम् । केचित्तु यद्यपीश्वरांशो न वेति संशयेन वक्ष्यमाणपूर्वकोटाववलम्बी । तथापि जीवो नेश्वरांश इत्यपि पूर्वपक्षः कार्य इत्यपि द्योतयितुम् । अत एवांश इति सिद्धान्तो वर्तिष्यत इत्याहुः । भाष्ये सावधारणतया निरवकाशश्रुतिरित्युक्तपूर्वपक्षन्यायं विवृण्वन् पूर्वपक्षमाह ॥ **नैवांश इति** ॥ श्रुतेः सावकाशत्व-माशङ्क्य तत्परिहारव्याजेन वाक्यशेषोदाहरणकृत्यमाह ॥ **न च तत्रेति** ॥ श्रुतौ सम्बन्ध इत्यस्य विवरणं नापेक्ष्यत इति । तथापि जीवेनानुपकृतत्वेऽपि योग्यतामनतिक्रम्य फलदः । न च योग्यता-पेक्षायां स्वातन्त्र्यभङ्ग इत्युक्तम् ॥ **एकरादिति** ॥ तदपेक्षा च लीलया दण्डावलम्बनमिव वैभवेनेति भावेनोक्तं **प्रभुरिति** ॥ **न च विकल्पेनेति** ॥ कुतो न विकल्पेनाविरोध इति चेदत्र वक्तव्यम् । यागसाधनीभूतपुरोडाशस्य यजमानेच्छया व्रीहिभिर्यवैर्वा संपादयितुं शक्यत्वेनोभयप्रकृतिकत्वात् । अव्यवस्थितविकल्पाश्रयणेन व्रीहिभिर्यजेत यवैर्यजेतेति श्रुत्योरिव किमत्राव्यवस्थितो विकल्पः । उत देशकालादिभेदेन व्यवस्थितो विकल्प इति विकल्पं हृदि निधायाद्यमाह ॥ **यवेति** ॥ पुरोडाशस्य साध्यत्वादिच्छानुसारेणोभयप्रकृतिकत्वसम्भवेन यवव्रीहिश्रुत्योरव्यवस्थितविकल्पः सम्भवति । व्रीहिभिरेव यवैरेवेति । निरवधारणत्वाज्जीवस्य सिद्धं स्वरूपत्वेनेच्छानुसारेणांशत्वानंशत्वरूपोभय-प्रकृतिकत्वासम्भवेन यवव्रीहिश्रुत्योरिवाव्यवस्थितो वस्तुविकल्पोऽनयोरुपपद्यते । अंशा एव नैवांश इति सावधारणत्वेनोभयप्रकृतिकतया सावकाशत्वस्य कल्पयितुमशक्यत्वादिति भावः । द्वितीय-माशङ्क्य निषेधति ॥ **न चेति** ॥ होलकादीनां देशभेदेनाचारत्वानाचारत्ववदश्वालम्भनस्य कालभेदेनाचारत्वनाचारत्ववच्च देशकालभेदेनांशत्वानंशत्वयोर्व्यवस्थितेऽपि विकल्पो नेति भावः ॥ **विशेषप्रमाणमिति** ॥

> अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम् ।
> देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥

इत्यश्वालम्भस्य कालभेदकर्तव्यत्वे विशेषप्रमाणवदत्र प्रमाणाभावात् । एतेनैतदपि निरस्तम् । केषाञ्चिज्जीवानामंशत्वं केषाञ्चिदनंशत्वमिति व्यक्तिभेदेन व्यवस्थितविकल्पः किं न स्यादिति विशेषप्रमाणाभावात् । अंशा एव हि मे जीवा इति सर्वेषामंशस्योक्तत्वादिति भावः । ननु

(वाक्यार्थमुक्तावली)

मत्स्यादिभेदानिमित्तकोंऽशशब्द इति जीवानामंशत्वे भेद एव प्रवृत्तिनिमित्तं स्यात् । न च प्राङ्निरस्त इत्यनंशत्वश्रुतिर्भेदसाधकप्रत्यक्षादिसाहाय्याब्दलवतीत्याशंक्य निषेधति ॥ **न च भेदाभावेति** ॥ मत्स्यादिष्विवाभेदाभावेऽपि निमित्तविशेषेणांशशब्दवाच्यत्वाविरोधात् इत्यर्थः । अभेदाभावेऽप्यंशत्वं कुत्र दृष्टमित्यत आह ॥ **समस्तेति** ॥ विशिष्टपटाद्भिन्नस्य ततः पृथुतरस्यापेकस्य तन्तोरयं पटस्तदंश इत्यनुभवादित्यर्थः । अत एव समस्तपटादखण्डपटाद्भिन्नस्येत्युक्तम् । सुधायां च सिद्धान्ते त्वंशत्वं, सादृश्यं चांशताऽस्य त्विति निर्वक्तुम् । अंशत्वं नारम्भकत्वम् । परमात्मनोऽनारब्धत्वात् । नापि खण्डत्वमच्छेद्यत्वात् । न च प्रदेशत्वम् । पटादिवदनित्यत्वप्रसङ्गात् इति प्रसक्तप्रतिषेधदशायां समस्तपटाद्विभक्ते ततोऽत्यन्तभिन्नेऽपि तन्त्वादौ खण्डत्वेनांशत्वमुक्तमिति ज्ञेयम् । परादिति सूत्रात्परस्येत्यनुषङ्गमभिप्रेत्य नानाव्यपदेशात् रक्ष्यत्वपुत्रत्वादिनानाप्रकारेण जीवस्येशसम्बन्धित्व व्यपदेशात् ज्ञः परस्यांश इत्यभिप्रेत्य प्रवृत्तभाष्यभावमाह ॥ **ज्ञ इति** ॥

ननु रक्ष्यत्वपुत्रत्वादिव्यपदेशेन रक्ष्यत्वादिकमस्तु अंशत्वं कुत इत्यत आह ॥ **तत्सम्बन्धित्वमेवेति** ॥ रक्ष्यत्वपुत्रत्वाद्यविनाभूततदधीनत्वतत्सादृश्यलक्षणतत्सम्बन्धित्वमेव तदंशत्वमिति । विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्यमात्रयुक्' इत्यत्र वक्ष्याम इत्यर्थः । रक्ष्यत्वादिव्यपदेशे तदधीनत्वलाभात् । पुत्रत्वादिव्यपदेशेन सादृश्यलाभात् । तदधीनसारूप्यस्यैवांशशब्दार्थत्वस्य सादृश्यं चांशतास्य त्वित्यनुव्याख्याने चशब्दात्तदधीनत्वं चेति सुधायां चोक्तत्वादिति ज्ञेयम् । परेणेत्यस्यार्थः **परादिति** ॥ **जायत इति** ॥ **व्यपदिश्यत इति** शेषोक्तिः । जीवेन ज्ञातत्वमात्रेण पुत्रव्यपदेशोऽपि प्रसङ्ग इत्यतः कवीयमानः क इह प्रवोचद्देवं मनः कुतोऽधिप्रजातमित्युत्तरार्धं प्रवृत्तमिति भावेन तदवतारयति ॥ **तद्ज्ञानं चेति** ॥ इत्युत्तरार्धं वक्तीति शेषः । तथा च परमात्मज्ञानस्यातिदुर्लभत्वेन प्रागनभिव्यक्तस्य ब्रह्मणो ज्ञानेनाभिव्यक्तत्वेन पुत्रत्वव्यवहारः । यज्ञदत्तादिज्ञानस्यादुर्लभत्वात् देवदत्तादिना ज्ञातत्वेऽपि तत्पुत्रत्वाव्यवहार इति नातिप्रसङ्ग इति भावः । अन्यथा प्रकृतानुपयुक्तस्योत्तरार्धस्येहाव्याख्येत्वप्रसङ्ग इति बोध्यम् । व्यवहारगोचरत्वाभावेऽपीश्वरज्ञानस्य दुर्लभत्वात् ज्ञानमात्रेण गौण्या जनितत्वव्यपदेश विषयत्वमिति भावेनोत्तरार्धं प्रवृत्तमिति भावेनावतारयति तद्ज्ञानं चेति । दुलभमित्युत्तरार्धं वक्तीति शेषः । उत्तरार्धं व्याचष्टे

(वाक्यार्थमुक्तावली)

**कोन्विति** ॥ को वा कवीयमानः सर्वज्ञकल्पः इह प्रजासु ब्रह्मेति शेषः । **प्रवोचत्** प्रावोचत् । कुतः कस्य च दैवं देवविषयं मनः ज्ञानम् ।

ननु मनःशब्द इन्द्रिये रूढः । सत्यं अनुवेदेति ज्ञानस्य प्रकृतत्वादिति भावेनोक्तम् ॥ **एतदिति** ॥ अधि आधिक्येन प्रजातमित्यर्थः । यस्तद्वेदेति नानाव्यपदेशरूपं वाक्यान्तरं व्याचष्टे ॥ **यस्तदिति** ॥ असदित्यस्य प्रतिपदं अनुभवदिति । स्त्रियःसतीस्ता उमे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः ॥ कविर्यः पुत्रः स इमा चिकेत यस्ताविजानात्सपितुष्पिता सत्' । इति वामनसूक्त एव अवः परेणेत्यतःपूर्वं विद्यमानां ऋचं व्याचष्टे ॥ **या भगवन्मूर्तय इति** ॥ याः मे सम्बन्धिन्यः मदुपास्याः स्त्रियः स्त्रीलिङ्गवाच्याः सतीः सतीभवत्यः न तु व्यवस्थितस्त्रियः । सतीः निर्दुष्टा वा । ताः उत एव पुंसः परमपुरुषानाहुः । यस्ता इत्यनुकृष्यते । यः पुरुषः ताः पश्यन् पश्यति स एव अक्षण्वान् चक्षुष्मान् नविचेतत् स अन्धः । यः कविः सर्वज्ञः पुत्रो भगवत्पुत्रो विरिञ्चः स एवेमा भगवन्मूर्तीः चिकेतत् सम्यग् जानाति । यश्च ताः विजानात् जानाति सः तस्य जगत्पितुरभिव्यञ्जकत्वात्पिता अभवदित्यर्थः । मदुपास्या इति को वक्तीत्यत आह ॥ एतद्दीर्घेति ॥ **नानाव्यपदेशादिति** ॥ नानाव्यपदेशेऽप्यंशत्वं कुत इत्याशङ्कायामिति शेषः । सूत्रार्थे स्मृतेर्वक्ष्यमाणत्वात् श्रुतिं चेति चशब्दः । यद्वा न केवलं परमाप्तबादरायणवाक्यादवसीयते श्रुतिं चेत्यर्थः । अत एव तथा च तथैव पाराशर्यायणश्रुतिरिति भाष्यार्थः ॥ **हेत्वन्तरेति** ॥ पूर्वं रक्ष्यत्वपुत्रत्वादिसम्बन्धव्यपदेशात्तदधीनसारूप्यलक्षणमंशत्वमङ्गीकार्यमित्युक्तम् । अधुना भेदाभेदान्यथानुपपत्तिलक्षणहेत्वन्तरेणैतदंशत्वं समर्थयत्सूत्रखण्डं व्याचष्टे इत्यर्थः । पूर्वोक्तादन्यथेति प्रतीतिनिरासायाह ॥ **वक्ष्यमाणाभेदापेक्षयेति** ॥ एके शाखिनः परस्परांशं कितवादित्वमप्यधीयते जीवस्य ब्रह्माभेदमधीयत इति यावत् । अन्यथा वा अन्यः परो अन्यो जीव इति भेदं चाधीयत एके यतोऽतश्च जीवोंश इत्यर्थः । भाष्ये नासावस्य कुतश्च नेत्यस्यायमर्थः । असौ परमात्मा अस्य जीवस्य कुतश्चन केनापि प्रकारेण नोपकर्तेति । अन्यःपरोऽन्यो जीव इत्यंशस्यैव प्रकृतोप-योगान्नासावस्येत्यंशस्योदाहरणं व्यर्थमिति चेन्न । जीवस्य परोपकार्यत्ववत्परस्यापि जीवोपकार्यत्वे परोऽपि जीवांशः प्रसज्येत । तदधीनत्वप्राप्तेः पुत्रत्वेन गुणाः पितुरिति न्यायेन तत्सादृश्येन जीवस्य तदंशत्वे सादृश्यस्योभयत्र सत्त्वेनेश्वरोऽपि जीवांशः प्रसज्येतेत्यतो नासावस्योदाहरणं ब्रह्मण

(वाक्यार्थमुक्तावली)
उपकार्यत्वाभावान्न जीवाधीनत्वम् अत एव तेन गुणलाभाभावान्न तन्निरूपितसादृश्यमस्येति न तदंशत्वमिति । अत एव तत्त्वप्रदीपे अन्यथा व्यपदेशः पितृत्वादिना लोकसारूप्याभावापेक्षया परस्यानुपकार्यत्वापेक्षया चेति । अन्यथा चाप्यधीयत एके इत्ययमंशः पूर्वत्रापि योजितो बोध्यः । अत एव नैवांशो न सम्बद्धो नापेक्ष्यो जीवः परस्येत्यत्र जीवस्यानंशत्वमुक्त्वा तर्हि किमंशित्वमिति शङ्कानिरासाय सम्बन्धो नापेक्ष्यो जीवः परस्येत्यंशत्वं निषिध्यत इति ज्ञेयम् ॥ **उक्तश्चेति** ॥ अनुव्याख्यायामिति शेषः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृतो जीव इति** ॥ ईश्वराधीनकर्तृत्वेन पूर्वाधिकरणे प्रकृत इत्यर्थः । परमात्माधीनत्वमुक्तम् । तदुभयरूपस्यांशत्वस्यात्र समर्थनात् अनन्तरसङ्गतिरिति भावः । नैवांश इति भाष्यस्यायमर्थः । जीवपरस्परानाह । स्वरूपांशो नैव जीवः परस्परेण सम्बद्धो न स्वसम्बन्धेन परमात्मनि दुःखित्वापादकसम्बन्धवान् नेत्यर्थः । जीवः परेणापेक्ष्यो न, जीवापेक्षः परस्परं नास्तीत्यर्थः । भाष्ये विशिष्य पूर्वपक्षानुक्तेः न्यायविवरणे च नानाश्रुतेरप्रामाण्यमिति अनिर्णयेनैव पूर्वपक्षोक्तेः तदनुसारेणैवानिर्णयेन पूर्वपक्षमाह ॥ **तत्र न जीव इति** ॥ भाष्ये वाक्यशेषोदाहरणनिवर्त्याशंकामुत्थापयति ॥ **न चेति** ॥ **वाक्यशेषविरोधादिति** ॥ तत्र यथायोग्यफलदातृत्वरूपविष्णुलिङ्गस्य सत्त्वात् जीवान्तरविवक्षायां तद्विरोधः स्यादित्यर्थः । एतदर्थमेव वाक्यशेषोदाहरणमिति भावः ॥ **वस्तुविकल्पायोगादिति** ॥ अंशत्वानंशत्वयोः परस्परविरुद्धत्वेन एकस्य विरुद्धरूपद्वयवत्तायोगादित्यर्थः । प्रकारान्तरेणानंशत्वश्रुतिः किं न व्याख्यायत इत्यत आह ॥ **अंशा एवेति** ॥ द्वयोरपि समबलत्वेन एकानुपूर्वीत इति भावः । **अंशत्वस्याविरोधादिति** ॥ तथा च युक्तेरप्रयोजकत्वेन तदुपोब्दलितश्रुतेः प्राबल्यमिति भावः । तत्सम्बन्धित्वव्यपदेशोऽपि तदंशत्वं कुत इत्यत आह ॥ **तत्सम्बन्धित्वमेवेति** ॥ **वक्ष्याम इति** ॥ अंशो ह्येष इत्यादिश्रुतिस्मृत्युदाहरणेनेत्यर्थः । परेणेति तृतीया पञ्चम्यर्थ इत्याह ॥ **परादिति** ॥ जात इति व्यपदिश्यत इति शेषोक्तिः । कवीयमान इत्यस्यार्थः सर्वज्ञकल्प इति । इहेत्यस्य प्रजास्विति । ब्रह्मेति शेषोक्तिः । कुत इत्यस्य तात्पर्यं कस्य वेति । दैवं देवविषयम् । मन इत्यस्यार्थो ज्ञानं मन ज्ञाने इति धातोः अधीत्यस्याधिकत्वेनेत्यर्थः । ब्रह्म दाशाः इत्यस्यायमर्थः

(तत्त्वसुबोधिनी)

दाशाः दाशवाच्याः कितवाः कितवशब्दवाच्या जीवाः ब्रह्म । ब्रह्म इमे दाशाः एव । अन्यः परः जीवात् जीवः अन्यः परात् । असावीश्वरः कुतश्चन केनापि प्रकारेण नोपकर्तव्यः । अयं जीवः तस्येश्वरस्य कुतश्चन नोपकर्ता । स्त्रियः सतीत्यृचमादितो व्याचष्टे ॥ **या इति** ॥ मे इति षष्ठ्यर्थो मदुपास्या इति को वक्तीत्यत आह ॥ **एतद्दीर्घतमोवाक्यमिति** ॥ उक्तं चानुव्याख्यान इति भावः ।

## वाक्यार्थविवरणम्

**विकल्पेनेति** ॥ कदाचिदंशः, कदाचिदनंश इति विकल्पेनेत्यर्थः ॥ **वस्त्विति** ॥ यवव्रीहि-द्रव्ययोर्भिन्नत्वात् तत्र युक्तो विकल्पः । अत्र त्वेकस्मिन्नेव जीवेऽशत्वानंशत्वरूपविरुद्धधर्मद्वया-लिङ्गितत्वप्राप्तेर्न विकल्पो युक्त इत्यर्थः । तत्र व्यक्तिभेदवदत्र तदभावादिति भावः । विकल्पपक्षे दूषणान्तरमाह ॥ **अंशा एवेति** ॥ यवव्रीहिश्रुत्योर्निरवधारणत्वेन युक्तस्तत्र विकल्पः । अत्र त्वंशा एवेति श्रुतानंशत्वस्य निषिद्धत्वान्नैवांश इति श्रुतावंशत्वस्य निषेधादतो न विकल्पावसर इत्यर्थः ॥ **व्यवस्थित इति** ॥ कस्मिंश्चिद्देशे कस्मिंश्चन काले केचिज्जीवा अंशाः केचन जीवा अनंशा इति व्यवस्थित विकल्प इत्यर्थः ॥ **निरस्तत्वादिति** ॥ अंशत्वस्याभेदाविनाभूतत्वेन तदभावेऽयोगा-दित्याशयः । तथा च 'जीवोंऽशो न भवति । अभेदशून्यत्वात् । घटवत्' । इत्यनुमानमुक्तं भवति । अत्राप्रयोजकमाह ॥ **अभेदाभावेऽपीति** ॥ व्यभिचारं चाह ॥ **समस्तेति** ॥ नानात्वात् । परस्पर-विरुद्धार्थप्रतिपादकत्वात् । भाष्ये कस्यापीत्यस्य केनापीत्यर्थः । कुत इत्यतस्तत्साधनीभूतस्य ज्ञानस्यैव कस्याप्यसम्भवादित्याहुः ॥ **कस्य वेति** ॥ **दैवं मन इति** ॥ तद्धि दैवं मनो येनानन्येव भवतीति श्रुतेः । मे मदुपास्याः स्त्रिय इति भगवत्स्त्रीमूर्तीनां स्वोपास्यत्वं दीर्घतमा वक्ति । न चैतद्युक्तम् । 'नैनमस्त्री पुमांन् ब्रुवन्' इति भगवत्स्त्रीमूर्तिध्यानस्य निषिद्धत्वात् । अत एवोक्तं प्राक् प्रकृत्यधिकरणे । निषेधस्त्वज्ञेयतामात्रार्थः:' इति । अतः कथमेतदित्यत आह ॥ **स्त्रीलिङ्गवाच्या इति** ॥ स्त्रीलिङ्गान्तशब्दवाच्या इत्यर्थः । न विचेतदित्यस्य व्याख्यानं न जानातीति । ई इत्यस्यार्थ एवेति । आ इत्यस्यार्थः सम्यगिति । मदुपास्या इति को वक्तीत्यत आह ॥ **एतदिति** ॥ दीर्घतमा ऋषिः ॥ **हेत्वन्तरेणेति** ॥ सम्बन्धित्वरूपनानाव्यपदेशेनांशत्वं समर्थ्य भेदाभेदव्यपदेशा-न्यथानुपपत्तिरूपहेत्वन्तरेणैतदंशत्वं समर्थयत इत्यर्थः ॥ **वक्ष्यमाणेति** ॥ दाशकितवादित्वमिति वक्ष्यमाणेत्यर्थः । तथा च 'दाशकितवादित्वमधीयतेऽन्यथा चाप्यधीयत' इति सूत्रेऽन्वयो द्रष्टव्यः ।

(वाक्यार्थविवरणम्)

दाशकितवाद्यभेदेनाधीयते, तदपेक्षयाऽन्यथा चाप्यधीयते । तथा च भेदाभेदव्यपदेशा-न्यथानुपपत्तिरुक्ता भवतीति ध्येयम् ॥ **अन्यतरेति** ॥ भेदाभेदश्रुत्योर्मध्येऽन्यतरेत्यर्थः । उभयोरपि स्पष्टतया निरवकाशत्वेनार्थान्तरकल्पनाऽनवकाशादिति भावः । भाष्ये 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कुतश्चन' इति श्रुतेः । परो भगवान् जीवादन्यः । जीवश्च परमात्मनोऽन्य इति प्रतिज्ञाद्वयम् । तत्र हेत्वाकाङ्क्षायां विरुद्धधर्माधिकरणत्वादित्याह ॥ **नासा-वित्यादिना** ॥ असौ भगवान् कुतश्चन कारणादस्य जीवस्योपकर्तव्यो न । जीवकृतोपकारवान्न भवतीति यावत् । जीवस्तु तत्कृतोपकारवानिति पूरणीयम् । परः अयं जीवः कुतश्चन कारणात्तस्यापि परमात्मन उपकर्ता न । परमात्मा च तस्योपकर्तेति चन्द्रिकोक्तरीत्याऽर्थो ज्ञातव्यः । असौ परः अस्य जीवस्य भृत्यो न । अयं च जीवस्तस्यापि परमात्मनः स्वामी नेत्यर्थो ज्ञातव्यः । अस्य तस्येति षष्ठ्योः स्वस्वामिभावार्थकत्वेन पूर्ववदध्याहाराभावादिति प्राहुः । असौ परः । अस्य जीवस्य ये दुःखादिधर्मास्तद्वान्न भवति । अयं जीवस्तस्य परमात्मनो ये धर्माः सार्वज्ञाद्यास्तद्वान्न भवतीत्यर्थ इत्यप्याहुः । भाष्ये तस्य हरेरंशत्वं जीवस्योद्दिष्टमित्यन्वयः ॥ **भेदाभेदेति** ॥ जीवानां भेदो मत्स्यादीनामभेद इति विवेकः ।

## वाक्यार्थमञ्जरी

**यवव्रीहिश्रुत्योरिति** ॥ यथा यवैर्यजेत व्रीहिभिर्यजेतेति श्रुत्योर्यवैर्वा यजेत व्रीहिभिर्वा यजेतेत्य व्यवस्थितविकल्पेन विरोधपरिहारस्तथा जीवोंऽशो वाऽनंशोऽस्त्वित्यव्यवस्थितविकल्पेनांशानंश श्रुत्योर्विरोधपरिहार इत्यर्थः ॥ **वस्तुविकल्पेति** ॥ तत्र श्रुतिद्वयस्य निरवधारणत्वेनोक्तरीत्या विकल्पसम्भवेऽपि प्रकृते श्रुतिद्वयस्य सावधारणत्वेनोभयथाऽर्थग्रहे एकस्मिञ्जीवाख्ये वस्तुन्यंशत्वा-नंशत्वरूपद्वैरूप्यायोगादित्यर्थः ॥ **न चेति** ॥ यथैकस्यैव घटस्य देशकालभेदेन सत्त्वासत्त्वे तथेत्यर्थः ॥ **समस्तेति** ॥ अत्र सर्वेषां तन्तूनां पटाद्भेदाभेदाङ्गीकारादेकस्येत्युक्तम् एकस्यापि तन्तोः खण्डपटाद्भेदाभेदाङ्गीकारात् समस्तपटेति नानात्वात् विरुद्धार्थप्रतिपादकत्वात् । **ॐ अंशो नाना-व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ** । जीवः परमात्मनोंश एव कुतः नानाव्यपदेशात् पितापुत्रत्वादिनानाप्रकारेण तस्येशसम्बन्धित्वोक्तेः । किं च ब्रह्मदाशाब्रह्मकितवा इत्येके शाखिनः दाशाः मत्स्यग्राहिणः ब्रह्मकितवा वञ्चकाः ब्रह्मेत्येवं ब्रह्मणो दाशकितवादित्वं

(वाक्यार्थमञ्जरी)

दाशाकितवोपलक्षितसर्वजीवाभेदमधीयन्ते पठन्ति एके च अन्यः परोऽन्यो जीव इत्यन्यथा च भेदेनाधीयते अत एतदुभयान्यथानुपपत्त्यांशत्वमित्यर्थः ॥ **वक्ष्याम इति** ॥ अंशो ह्येषः पुत्रभ्रात्रित्यादिश्रुतिस्मृत्युदाहरणेनेति शेषः । परेणेत्यस्यार्थः परादिति अव इत्यस्यावम इति जात इति व्यपदेश इति शेषोक्तिः व्यञ्जकत्वादिति भावः ॥ **तज्ज्ञानं च दुर्लभमिति** ॥ कवीयमानः क इह प्रवोचद्देवं मनः कुतो अधिप्रजातमित्युत्तरार्धं तज्ज्ञानं च दुर्लभमित्याहेत्यर्थः । तद्व्याचष्टे ॥ **कोन्विति** ॥ कवीयमान इत्यस्यार्थः सर्वज्ञकल्प इति इहेत्यस्य प्रजास्विति ब्रह्मेति शेषोक्तिः कुत इत्यस्य तात्पर्यं कस्य चेति अधीत्यस्याधिक्येनेति 'स्त्रियः सतीस्ताम् उमे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः कविर्यः पुत्रः सईमाचिकेतयस्ताविजानात्सपितुष्पितातसत्' इति ऋचं व्याचष्टे ॥ **य इति** ॥ तां उ इत्यस्यार्थः तानेवेति । उ इत्यस्यार्थः एवेति आङोऽर्थः सम्यगिति । मदुपास्या इति को वक्तीत्याकाङ्क्षायामाह ॥ **एतद्दीर्घतमो वाक्यमिति** ॥ उक्तं चानुव्याख्याने ।

## सूत्रभाष्यम्

**॥ ॐ मन्त्रवर्णात् ॐ ॥ ४४ ॥**

**'पादोऽस्य विश्वा भूतानि'** (ऋ.सं. १०-९०-३) इति ।

## तत्त्वप्रकाशिका

**श्रुत्या चैतमर्थं साधयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ मन्त्रेति ॥** पादोंऽशः ।

## गुर्वर्थदीपिका

श्रुत्या चैतमर्थं साधयदितीत्यत्र यद्यपि भाष्यकारोदीरितसूत्रोपलक्षितपाराशर्यायणश्रुतौ 'अंशो ह्येष' इति साक्षादंशत्वमप्युदीरितम् । तथापि 'नानाव्यपदेशात्' इति सूत्रकृता साक्षात्सङ्गृहीतश्रुतौ सूत्रशेषोपात्तश्रुतिद्वये चांशत्वस्यानुकीर्तनात्साक्षादंशत्वकथनरूपत्वान्न पूर्वसूत्रस्यापि वैयर्थ्यमित्यूह्यम् । श्रौतांशत्वे विवदमानं प्रति साधकयुक्तिप्रतिपादकश्रुतिस्मृतिसङ्ग्रहायोत्तरसूत्रद्वयम् । अतो न गतार्थेति ज्ञेयम् ।

## वाक्यार्थमुक्तावली

अपेराकर्षः । ज्ञः परस्यांश इत्यनुवृत्तिरत्रानुसन्धेया ।

## तत्त्वसुबोधिनी

कथमनेनांशत्वमुक्तमित्यतः पाद इत्येतत् अंशपरतया व्याख्याति ॥ **पादोऽशः इति** ॥

## वाक्यार्थमञ्जरी

पादोऽस्येति श्रुतेश्च जीव ईशांश इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अपि स्मर्यते ॐ ॥ ४५ ॥**

**'ममैवांशो जीवलोके जीवभूतः सनातन'** (भ.गी.१५-७) इति ।

## तत्त्वप्रकाशिका

**स्मृत्याप्येतमर्थं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ अपीति ॥ जीवलोके जीवच्छरीरे जीवभूतो जीवाख्यः ।**

## भावदीपः

श्रुत्या चेति ।

## अभिनवचन्द्रिका

**तथा सतीति** ॥ जीवस्येश्वरांशत्वे सति मत्स्यादिसाम्यापातात् न जीवस्येश्वरांशत्वमिति पूर्वेण सम्बन्धः । अस्तु जीवस्यांशत्वं तथापि न मत्स्यादिसाम्यं मत्स्यादीनां महत्त्वापादक-स्यांशत्वस्य विजातीयत्वादित्यत उक्तम्– **अंशत्वाविशेषादिति** ॥ अंशत्वे तारतम्यादर्शनात् जीवस्यांऽशत्वे मत्स्यादिसाम्यमवर्जनीयमिति भावः । **मत्स्याद्यसाम्यमिति** ॥ अंशत्वविषये मत्स्याद्यसाम्यं चार्थ इत्यर्थः । यद्यपि सूत्रे अनंशत्वश्रुतेः साक्षात् गतिर्नोक्ता, तथापि अर्थात् सिध्यतीति भाष्ये तथोक्तम् ॥ **जीवानामिति** ॥ जीवानां मत्स्यादीनां च भगवदंशत्वेन

(अभिनवचन्द्रिका)

श्रौतत्वाविशेषेऽपि आनन्दादिसाम्यं न प्रयुज्यत इत्यर्थः । तत्र हेतुमाह– **मत्स्यादीनामिति** ॥ **न चांशत्वाविशेषादिति** ॥ अंशत्वे विशेषस्य क्वाप्यदर्शनात् जीवा भिन्नांशाः, मत्स्यादयस्त्व-भिन्नांशा इति भेदाभेदानुपपत्तिरिति नेति भावः । **अंशत्वाऽविशेषेऽपीति** ॥ अंशत्वोक्त्य-विशेषेऽपीत्यर्थः ।

## वाक्यार्थमुक्तावली

अत्र एवमित्यस्याकर्षः । यतोऽत इत्यध्याहारः । ज्ञः परांश इत्यनुवृत्तिः । ततश्च यतो ज्ञः एवं स्मर्यतेऽतोऽपि परस्यांश इत्यर्थः ॥ **सनातनो नित्यः** ॥

## तत्त्वसुबोधिनी

जीवलोके जीवभूत इत्यस्यास्मिंल्लोके जीवात्मक इत्यन्यथा प्रतीतिनिरासायाह ॥ **जीवलोक इत्यादिना** ॥

## वाक्यार्थमञ्जरी

न केवलमंशत्वं श्रूयते किन्तु ममैवांश इति स्मर्यतेऽपीत्यर्थः ।

## सूत्रभाष्यम्

**अनंशत्वश्रुतेर्गतिं चाह–**

**॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ ४६ ॥**

**अंशत्वेऽपि न मत्स्यादिरूपी पर एवंविधः । यथा तेजोंऽशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च । यथा च पृथिव्यंशस्य मेरोर्विष्टादेश्च । अभिमानिदेवतापेक्षयैतत् ।**

## तत्त्वप्रदीपिका

अंशत्वेऽपि न मत्स्यादिरूपी भगवान् जीववद्भिन्नो दुःखी वा भवति । अतो जीवस्यानंशत्व-श्रुतिः । यथा तेजसश्च तदंशस्य कालाग्नेश्चैकोऽग्निदेवोऽभिमानी न तस्य स्वरूपभेदः, तथाऽत्र न

(तत्त्वप्रदीपिका)

स्वरूपभेदः । अभिमानिदेवतापेक्षयैतदिति भाष्यात् । खद्योतस्तु तेजोंऽशोऽप्यन्यो जीवः । तथा जलांशभूतावमृतसमुद्रो मूत्रादिश्च । तथाऽपि तयोर्नैकप्रकारता । जलाभिमानी वरुणोऽमृतसमुद्रस्य च । मूत्राद्यभिमानी भिन्नोऽस्ति । एवं पृथिव्यामपि गमनीयम् ।

'भिन्नांशस्यैव जीवस्य वन्धमोक्षौ न मे क्वचित् ।
अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत् ।
जीवा भिन्नांशकास्तत्र तेजसः प्रतिविम्ववत्' ॥ इति च वैलक्षण्ये ।

'स्वात्मानं परमं विष्णुं विदित्वाऽपि स राघवः ।
दैत्यानां मोहनार्थाय दर्शयामास मूढताम्' ॥ इति च पाद्मे ।

'नित्यपूर्णसुखज्ञप्तिस्वरूपोऽसौ यतो विभुः ।
अतोऽस्य राम इत्याख्या तस्य दुःखं कुतोऽण्वपि ॥
तथाऽपि लोकशिक्षार्थमदुःखो दुःखवर्तिवत् ।
अन्तर्हितां लोकदृष्ट्या सीतामासीत्स्मरन्निव ॥
ज्ञापनार्थं पुनर्नित्यसम्वन्धं स्वात्मनः श्रिया ।
अयोध्याया विनिर्गच्छन्सर्वलोकस्य चेश्वरः ।
प्रत्यक्षं तु तया सार्धं जगामानादिरव्ययः ।
नाक्षत्रमासगणितं त्रयोदशसहस्रकम् ।
ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम् ॥
रामो रामो राम इति सर्वेषामभवत्तदा ।
सर्वो राममयो लोको यदा रामस्त्वपालयत्' ॥ इति च स्कान्दे ।

## तत्त्वप्रकाशिका

न जीवस्येश्वरांशत्वं युक्तम् । तथा सत्यंशत्वाविशेषान्मत्स्यादिसाम्यापातादनंशत्व-श्रुतिविरोधाच्चेत्याशङ्कां परिहरत्सूत्रमवतारयति ॥ **अनंशत्वेति** ॥ मत्स्याद्यसाम्यं चार्थः । सूत्रं व्याचष्टे ॥ **अंशत्वेऽपीति** ॥ जीवानां मत्स्यादीनां च भगवदंशत्वाविशेषेऽपि न सर्वसाम्यम् । मत्स्यादीनां स्वरूपांशत्वात् जीवानां भिन्नांशत्वात् । न चांशत्वाविशेषाद्भेदाभेदानुपपत्तिः । कालाग्निखद्योतादिष्वग्न्याद्यंशेष्वंशत्वाविशेषेऽपि तद्दर्शनादिति भावः । ननु कालाग्निखद्योतादीनां

(तत्त्वप्रकाशिका)

**तेजःप्रभृतिभूतकार्याणां भेदाभेदसाम्यात्कथमत्रैते दृष्टान्ता इत्यत आह ॥ अभिमानीति ॥ तेजोजलपृथिव्यभिमानिनां कालाग्न्यमृताब्धिमेवाभिमानिनामभिन्नत्वात्खद्योताद्यभिमानिनां भिन्नत्वाद्युक्तं दृष्टान्तत्वमिति भावः ।**

## गुर्वर्थदीपिका

**मत्स्याद्यसाम्यं चार्थ** इत्यत्रांशत्वेऽपीति शेषः । न चांशत्वाविशेषाद्भेदाभेदानुपपत्तिरित्यत्र जीवानां चांशत्वाविशेषाज्जीवेषु भेदो मत्स्यादिष्वभेद इत्यनुपपत्तिरित्यर्थः । कालाग्निखद्योतादीनामित्यत्र कालाग्निखद्योतप्रकाशयोरमृतसमुद्रजलमूत्रजलयोर्मेरुविष्ठारूपपृथिव्यंशयोश्च जडयोरुभयोरप्युपादानभूततेजोमहाजलपृथिवीकार्यत्वेन भेदाभेदसाम्यात्कथं द्वैविध्यमित्यर्थः । खद्योताद्यभिमानिनां तु भिन्नत्वादित्यनेनेदमभिप्रैति यथा सर्वगृहाभिमानिन्यपि यजमानिनी स्वगृहस्थतुच्छधूलीशिशुमलमूत्रादौ तद्योग्यामेव काश्चिद्दासीमभिमानिनीं करोति । तथा प्रकृतेऽपि तेजआद्यभिमानिन्योऽतिसमर्था अग्न्यादिदेवताः तुच्छखद्योतप्रकाशमूत्रमलादिषु स्वतोऽत्यन्तभिन्नां स्वाधीनतया स्वस्या एवांशभूतां काश्चिदपकृष्टदेवतामभिमानिनीं करोति । कालाग्न्यमृतसमुद्रमेर्वादौ प्रशस्तवस्तुनि गृहस्थधनकनकादि प्रशस्तवस्तुषु यजमानिनी स्वयमिव स्वांशमेव तत्रतत्राभिमानिनं करोति । अतस्तेजोजलपृथिव्याद्यंशेषु क्वचिद्भेदस्य क्वचिदभेदस्य च दर्शनाद्भगवदंशभूतेष्वपि तुच्छजीवेषु भेदोऽतिसमर्थमत्स्यकूर्मादिष्वभेद इति विभागोपपत्तेरिति । यद्यपि मेरौ मेरुनामकः कश्चिन्मेर्वभिमानी पुमानप्यस्ति । तथाऽपि पृथिवीत्वजात्याक्रान्तत्वात्पृथुत्वात् (प्रशस्तत्वाच्च) मेरौ साक्षात्पृथिव्यंशोऽपि कश्चिदस्त्यतो न विरोध इति ज्ञेयम् । 'प्रकाशादिवन्नैवं पर' इति सूत्रस्य मत्स्याद्यंशरूपी परः एवं हीनजीवांशवन्न, किंतु साक्षादभिन्न एव । तत्कथमिव प्रकाशादिवत् । यथा द्विविधप्रकाशादिषु स्वरूपभूतास्तेजोंशादयः नीचखद्योताद्यंशवन्न तथेति सूत्रपदयोजनिकां हृदि निधायाऽऽह– **अंशत्वेऽपीत्यादिना** ॥ तथा चायमभिसन्धिस्सूत्रकारस्य यथा प्रकृष्टप्रकाशादिषु मूलभूततेजआदिदेवतानां प्रकृष्टांशैः कालाग्न्याद्यभिमानिभूतस्वांशैरत्यन्ताभेद एव । अप्रकृष्टखद्योतादिप्रकाशाद्यभिमान्यंशदेवताभिरत्यन्तभेदः स्वाधीनत्वेनांशता च । एवमंशी भगवानप्यतिसमर्थमत्स्याद्यंशेष्वत्यन्ताभिन्न एव । स्वाधीनतयांशपदवाच्येष्वसमर्थजीवाख्यांशेष्वत्यन्तभिन्न एवेति । एवं च जीवस्यानंशत्वप्रतिपादिका श्रुतिः मत्स्यकूर्मादिस्वरूपांशत्ववदंशत्वाभावपरा । अतो न कश्चित्क्षुद्रोपद्रव इति ।

## भावबोधः

जीवानामशत्वं सूत्रत्रयेणोक्त्वा अनंशत्वश्रुतेर्गतिं चाह । मत्स्यादिसाम्यप्रतीतिनिरासायाह– **मत्स्याद्यसाम्यं चार्थ इति** ॥ अन्यथोत्तरसूत्रपञ्चके मुखतो मत्स्याद्यसाम्यस्यार्थत अनंशत्व-श्रुतिगतेश्च प्रतीतेरवतारभाष्यस्य न्यूनत्वप्रसङ्गादिति भावः ॥ **भेदाभेदेति** ॥ जीवादीनां भेदो मत्स्यादीनामभेद इत्यर्थः ।

'सूर्यमण्डलमान्येकस्तत्प्रकाशाभिमानवान् ।
सूर्योऽथ सप्तमाब्धेश्च बाह्योदस्य च वारिपः ॥
कठिनत्वेन मेर्वादिपृथिव्या अपि देवता ।
धरादेव्येवमेवैको भगवान् विष्णुरव्ययः ॥
नानावताररूपेण स्थितः पूर्णगुणः सदा ।
विण्मूत्राद्यभिमानिन्यो यथाऽपभ्रष्टदेवताः ॥
सूर्यादिभ्यस्तथैवायं संसारी परमात् पृथक् ॥'

इति भाष्यविवरणपरानुव्याख्यानं मनसि निधाय भाष्यं व्याचष्टे– **तेजो जलेति** ॥

## भावदीपः

सूत्रे पूर्वस्माच्चापिशब्दयोरन्यतराकर्षं सूचयति ॥ **चार्थ इति** ॥ च शब्दार्थ इत्यर्थः । मत्स्यादेर्जीवसाम्यनिरासमात्रपरत्वप्रतीतेर्जीवेषु मत्स्याद्यसाम्योक्तिपरतयापि दृष्टान्तभाष्योक्त्यनुरोधेन सूत्रभाष्ययोरर्थमाह ॥ **जीवानामिति** ॥ दृष्टान्तोक्तेर्वैयर्थ्यनिरासायाह ॥ **न चांशत्वेति** ॥ **भेदाभेदसाम्यादिति** ॥ 'खण्डिते भेद ऐक्यं च' इत्युक्त्योपादानोपादेययोर्भेदाभेदस्वीकारात् । कार्यमात्रे भेदाभेदौ समौ । इह तु जीवानां भेदो मत्स्यादेरभेद इति कथं दृष्टान्त इत्यर्थः । अनंशत्वश्रुतिगतिस्तु सूत्रपञ्चकव्याख्यानानन्तरं विवरिष्यते इति भावः ।

## वाक्यार्थमुक्तावली

जीवानामंशत्वं सूत्रत्रयेणोक्त्वाऽनंशत्वश्रुतिं चाहेति प्रतीयते । तथात्वे मत्स्यादिसाम्यापातात् स्वोक्तावतारो न भाष्यारूढः स्याद्भाष्यावतारस्य सूत्राक्षरानुगुण्यं च न स्यात् । उत सूत्रपञ्चके

(वाक्यार्थमुक्तावली)

मुखतो मत्स्याद्यसाम्यस्यार्थतोऽनंशत्वश्रुतेर्गतेश्च प्रतीतेरवतारभाष्यस्य न्यूनत्वप्रसङ्गात् । सूत्रे अपिरनुवर्तते । एवमावर्तते । ततश्चैवमपि ज्ञपरयोरंशत्वेन श्रुत्युक्तत्वाविशेषेऽपि परो मत्स्यादिरूपी परमात्मा एवं जीववद्भिन्नांशो न कथं प्रकाशादिवत् प्रकाशशब्दे न तेजोंऽशः कालाग्निरुच्यते । अभिमानिव्यपदेशश्चायम् । यथा प्रकाशः अतिशयितप्रकाशवान्, तेजोंऽशः कालाग्न्यभिमानी खद्योताभिमानिवन्न, जलांशः अमृताब्ध्यभिमानीच्च मूत्राद्यभिमानिवन्न, पृथिव्यंशः मेर्वाद्यभिमानी च विश्वाभिमानिवन्न । कालाग्न्याद्यभिमानिनां तेज आद्यभिमान्यंशानामंश्यभिन्नत्वात् खद्योताभिमानिनां तदत्यन्तभिन्नत्वादिति सूत्रार्थं हृदि निधायांशत्वेऽपीत्यादिभाष्यभावमाह ॥ **जीवानामित्यादिना** ॥ यद्यप्यनुव्याख्याने, 'सूर्यमण्डलमान्येकः तत्प्रकाशाभिमानवान् । सूर्योऽथ सप्तमाब्धेश्च बाह्योदस्य च वारिपः । कठिनत्वेन मेर्वादिः पृथिव्या अपिदेवताः । धरादेर्व्येवमेवैको भगवान् विष्णुरव्ययः । नानावताररूपेण स्थितः पूर्णगुणः सदा । विण्मूत्राद्यभिमानिन्यो यथाऽपभ्रष्टदेवताः । सूर्यादिभिस्तथैवायं संसारी परमात्पृथक्' इति । प्रकाशादिवदित्यस्य यथा प्रकाशः सौरप्रकाशाभिमानी आदित्यः खद्योताभिमानिजीववन्नेति प्रकाशशब्दस्यालोकाख्यगुणपरत्वमङ्गीकृत्य तदभिमानिनो मण्डलाभिमानिसूर्यस्वरूपांशत्वम् । खद्योतादेस्तद्भिन्नांशत्वमिति व्याख्यातम् । तथा पीह प्रकाशशब्देन प्रकाशगुणककालाग्निपरत्वम् । तस्य चाग्निदेवस्वरूपांशपरत्वम् । खद्योतादेस्तद्भिन्नांशत्वमिति रीत्यन्तरेण व्याख्यातम् । कालाग्निखद्योतादिष्वग्न्याद्यंशेष्विति टीकायां यथा तेजसः तदंशस्य कालाग्नेश्चैकोऽग्निदेवोऽभिमानीति तत्त्वप्रदीपे स्पष्टत्वात् । केचित्तु अनुव्याख्यानानुसारेण तेजोंऽशः प्रकाशः खद्योतश्च । तत्र तेजोऽभिमानी सूर्यः अंशेन प्रकाशाभिमानी च खद्योताभिमानी त्वन्यो जीवः स च तेजोंऽशाभिमानित्वसाम्येन सूर्यांश इत्युच्यत इत्याहुः । भेदाभेदसाम्यादित्यर्थः ।

ननु सादृश्यं चांशताऽस्य तु' इत्यनुव्याख्याने 'विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सादृश्यमात्रयुक्' । इत्येतद्भाष्योक्तरीत्या तदधीनत्वे सति तत्सदृशत्वरूपे अंशत्वे प्रतिज्ञाते टीकायां जीवस्येश्वरांशत्वं युक्तम् । तथा सत्यंशत्वाविशेषात् मत्स्यादिसाम्यापातादिति मत्स्यादिसाम्यचोदनमयुक्तम् । चोदने वा नैवं जीव इति सूत्रे वक्तव्यं न तु नैवंपर इति चेन्न । मत्स्यादिसाम्यापातादित्यस्य मत्स्यादेर्जीवसाम्यापातादित्यर्थसम्भवात् । तदधीनसारूप्यमंशत्वमित्यंश-

(वाक्यार्थमुक्तावली)

शब्दनिर्वचनस्याधिकरणमथनलभ्यत्वात् । सामान्यत अंशित्वे साधितेऽशशब्दवाच्यत्वाविशेषान्मत्स्यादिसाम्ये चोदिते मत्स्यादेर्जीवविलक्षणांशत्वोक्त्या मत्स्यादिसाम्यव्यवच्छेदः स्यात् । अत एवांशत्वश्रुतेरभिन्नांशत्वाभावपरत्वेनात्रगतेश्चात्रोक्तेरविरोधात् । तदुक्तं तत्वप्रदीपे । अतो जीवस्यांशतानाम किञ्चित्सादृश्यमात्रयुक्तत्वमिति मथितोऽर्थ इति ।

## तत्त्वसुबोधिनी

जीवानामंशत्वं सूत्रत्रयेणोक्त्वाऽनंशत्वश्रुतेर्गतिं चाहेति प्रतीतिनिरासायाह ॥ **मत्स्याद्यसाम्यं चार्थ इति** ॥ अन्यथोत्तरसूत्रपञ्चके मुख्यतो मत्स्याद्यसाम्यस्यार्थतः अनंशत्वश्रुतिगतेश्च प्रतीतेरवतारभाष्यस्य (न) न्यूनत्वप्रसङ्गादिति भावः ॥ **भेदाभेदेति** ॥ जीवानां भेदो मत्स्यादीनामभेद इत्यर्थः ।

## वाक्यार्थविवरणम्

तद्दर्शनात् ॥ भेदाभेदेत्यर्थः ॥ **भेदाभेदेति** ॥ कार्यकारणयोर्भेदाभेदनियमादित्यर्थः ।

## वाक्यार्थमञ्जरी

परो मत्स्यादिरूपो परमात्मा एवं जीववत् भिन्नांशो न कथं प्रकाशाद्यभिमानिवदित्यर्थः । चार्थः चशब्दार्थः ॥ **भेदाभेदानुपपत्तिरिति** ॥ मत्स्यादीनामभेदो जीवानां भेद इत्यनुपपत्तिरित्यर्थः ॥ **भेदाभेदसाम्यादिति** ॥ उभयोरपि खण्डितत्वेन स्वोपादानेन तेजआदिना भिन्नाभिन्नत्वेन कालाग्न्यादेरभेदः खद्योतादेर्भेद इति कथमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ स्मरन्ति च ॐ ॥ ४७ ॥**

**'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्'** (भागवते) ।

**'अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।**
**अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः'** (भागवते) ॥

(सूत्रभाष्यम्)

'स्वांशश्चाथो विभिन्नांश इति द्वेधांऽश इष्यते ।
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ॥
तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् ।
विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सादृश्यमात्रयुक्' ॥ इति वाराहे ।

'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' (भ.गी.११-४३) इत्यादि ।

## तत्त्वप्रदीपिका

'जगृहे पौरुपं रूपम्' इत्यारभ्य प्रस्तुतावतारा एत इत्युच्यन्ते । एते पुरुपस्य स्वांशकलाः । स्वांशरूपाः कलाः स्वांशकलाः । कल्प्यन्त इति च कलाः । स्वांशकला इत्युक्तेऽपि भेदाभेदाशङ्का स्यादिति कृष्णो भगवान्स्वयमेवेत्युक्तम् । 'नाणुमात्रोऽपि भेदः स्वांशांशिनोः' इति चोपरिप्रमाण-वाक्यम् । अतः पुरुपोत्तमाज्जडाच्च यत्परम् अन्यदित्यर्थः । 'कस्तं त्वनादृत्य परानुचिन्ताम्' इतिवत् । अव्यक्तम् अनैन्द्रियकम् । अनादिकालादृष्टाश्रुतवस्तुत्वादनपोढसत्त्वादि गुणबृंहितं स जीव इत्युच्यते । अंशिनो यत्तु सामर्थ्यं जगत्सृष्ट्यादौ यत्स्वरूपं ज्ञानानन्दादि यथा स्थितिः देशतः कालतो गुणतो व्याप्तत्वेन तदेव स्वांशस्य । 'न त्वत्समोऽस्ति' इत्यादि च कृष्णं प्रति पार्थवचनम् । उक्तं चात्र भगवतैवान्यत्र–

'यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ।
दर्शिता चैव पार्थाय निस्सीमाः शक्तयोऽस्य हि ॥' इति ।

अतो जीवस्यांशत्वं नाम किञ्चित्सादृश्यमात्रयुक्तत्वमिति मथितार्थः ।

## तत्त्वप्रकाशिका

ननु तत्र तथात्वेऽपि जीवानां मत्स्यादीनां स्वरूपांशत्वं चाभेदः किं न स्यादित्याशङ्कां स्मृतिभिः परिहरत्सूत्रमुपन्यस्य ताः स्मृतीरुदाहरति ॥ **स्मरन्ति चेति** ॥ परमपुरुपांशैः सर्वमवतिष्ठतः इत्युक्ते के तेंऽशा इत्याशङ्कायां सविस्तरं वराहादीनां भगवदंशत्वमुक्त्वा जीवानामपि तदुक्तम् । 'ऋपयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः' इति । तत्र वराहादीनां स्वरूपांशत्वमभिधीयते । एते परमपुरुपस्य स्वरूपांशविभागाः स्वयं कृष्णो भगवान्मूलरूप्येव ।

(तत्त्वप्रकाशिका)

**वराहादयो लोकं मृडयन्तीति जीवानामंशत्वेनोक्तानां भिन्नत्वमुच्यते । यदतः परमपुरुषाद्भिन्न-मकार्यमनाद्यनपगतसत्त्वादिगुणयुक्तं चैतन्यं स जीवः । यश्चादृष्टाश्रुतभगवत्स्वरूपत्वात्संसरतीति । कृष्णशब्दश्च नारायणेऽपि दृष्टः 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादौ मत्स्यादीनां जीवानां च स्वरूपास्वरूपांशलक्षणयोगित्वाच्चांशिना भेदाभेदाविति भावेन स्वरूपास्वरूपांशलक्षणं तावत्स्मृत्या दर्शयति ॥ स्वांशश्चेति ॥ यत्स्वरूपं यथानन्दादि यथास्थितिर्यथासर्वोत्तमत्वादि तदेव स्वरूपांशस्य भवति । एतच्च स्वरूपांशलक्षणं कृष्णाद्यवतारेष्वस्तीति स्मृत्याह ॥ नेति ॥ जीवेषु विभिन्नांशलक्षणं त्वनुभवसिद्धम् ।**

## गुर्वर्थदीपिका

वराहादयो लोकं मृडयन्तीत्यत्र 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' इति स्मृत्या वराहादयो लोकं मृडयन्ति । लोकास्तु तैः पाल्या इति भेदोक्त्या च जीवानां भिन्नांशत्वमिति भावः । मत्स्यादीनां स्वांशत्वेन विशेषणादभिन्नांशत्वम् । ऋषय इत्युत्तरश्लोके जीवानां केवलं कला इत्येवोक्तेर्भिन्नांशत्वमिति भावेनाऽऽह **जीवानामिति** ॥ व्यक्तिरुत्पत्तिस्तद्रहितमकार्यमिति भावेनाऽऽह– **अकार्यमिति** ॥ पुनर्भवनं पुनर्भव इति व्युत्पत्त्या संसारवाचकमपि पुनर्भवपदं पुनःपुनर्भवतीति व्युत्पत्त्या संसारिणमेव वक्तीत्याह **संसरतीति** ॥ देहसम्बन्धान्निमित्ताज्जीवांशस्य प्राकृतदेहेन सम्यग्बन्धनं निर्बन्धोऽस्तीति हेतोरित्यर्थः । अत एव सूत्रसूचितश्रुतौ स्मृतौ च जीवा बन्धादिसंयुताः ।

## भावबोधः

सर्वमवतिष्ठत इत्युक्त इति ।

> 'भावयन्नेव सत्त्वेन लोकान् वै लोकभावनः ।
> लीलावतारनुगतस्तिर्यङ्नरसुरादिषु' ॥

इत्यनेनेत्यर्थः । एते वराहाद्याः स्वांशरूपाः कलाः । कृष्णस्तु वसुदेवपुत्रः, न स्वयं भगवानित्यन्यथाप्रतीतिनिरासाय स्वांशकला इत्यस्य फलितप्रदर्शनपरतया कृष्णस्त्विति पदम् एते प्रोक्ता अवतारा मूलरूपो हरिः **स्वयमेवेति** ॥ भागवततात्पर्यानुसारेण व्याचष्टे– **स्वयं**

(भावबोधः)

**भगवानिति** ॥ अनेन 'तु' शब्द एवार्थ इत्युक्तं भवति । वराहादयो लोकं मृण्डयन्तीति । अनेनैत इत्यनूद्य भगवान् स्वयमित्यन्तेन मूलरूपाभेदः,

'इन्द्रादिव्याकुलं लोकं मृडयन्ति युगे युगे' ।

इत्यनेन लोकसुखदत्वं चोच्यत इत्युक्तं भवति । 'अतः' जडेश्वररूपयोः 'परम्' अव्यूढगुणबृंहितम् । अनादिकाले कदाचिदप्यनपगतसत्त्वादिरूपम् । 'अदृष्टाश्रुतवस्तुत्वात् पुनर्भवः' इति भागवततात्पर्यानुसारेणातः परम्' इत्यादि व्याचष्टे– **यदत इति** ॥ परमित्यस्यार्थो भिन्नमिति । अव्यक्तमित्यस्य **आकार्यमिति** ॥ **व्यूढगुणेत्यस्यानाद्यनपगतेति** । वस्तुशब्दार्थो भगव-**त्स्वरूपेति** ॥ पुनर्भव इत्यस्य **संसरतीति** ॥ तदेव स्वरूपांशस्य भवतीति शेषोक्तिः । अत्र 'अपि स्मर्यते' इत्यनेन जीवस्येश्वरांशत्वे स्मृतिरुक्ता । 'स्मरन्ति च' इत्यनेन त्वंशत्वेऽपि मत्स्याद्यवताराणां स्वरूपांशत्वं जीवानां भिन्नांशत्वमित्यत्र स्मृतिरुक्तेति भेदः ।

## भावदीपः

सूत्रे बहुवचनानुरोधादाह ॥ **स्मृतिभिरिति** ॥ **इत्युक्त इति** ॥ प्रथमस्कन्धे तृतीयेऽध्याये 'जगृहे पौरुषं रूपम्' इत्यादिना यस्यांशांशे न सृज्यन्ते देवतिर्यङ्नरादय इत्यन्तेनोक्त इत्यर्थः । सृष्ट्युक्त्यैवावस्थितिरपि लब्धेत्यवतिष्ठत इत्युक्त इत्युक्तम् । यद्वा 'भावयन्नेव सत्त्वेन लोकान्वै लोकभावन' इति । 'लीलावतारानुगतस्तिर्यङ्नरसुरादिषु' इति द्वितीयाध्यायान्तिमश्लोकेनेत्यर्थः ॥ **उक्त्वेति** ॥ 'द्वितीयं तु भवायास्य रसातलगतां महीम् । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः इत्यादिनेत्यर्थः । यद्यपि 'स एव प्रथमं देवः कौमारं सर्गमाश्रितः' इति कुमारावतारस्य प्रथममुक्तेः कुमारादीनामित्यनुवादो युक्तः । तथापि भगवदवतारवदन्यस्यापि कुमाराख्यजीवस्य सत्वात्तद् भ्रान्तिनिरासाय वा जीवास्तत्प्रतिबिम्बांशा वराहाद्याः **स्वयं हरिरिति** ॥ नारायणवराहाद्याः परमं रूपमीशितुः । जैवं तु प्रतिबिम्बाख्यम् इति च तत्रैव तात्पर्योक्तब्रह्मवैवर्तपाद्मस्मृत्योरनुरोधेन वा वराहादीनामित्युक्तम् । तदुक्तं भगवदंशत्वमुक्तमित्यर्थः । कुत्रेत्यतस्तत्पठति ॥ **ऋषय इति** ॥ एतदित्येतच्छब्देनाव्यवहितऋष्यादिजीवपरामर्शभ्रान्तिं निराह ॥ **तत्र वराहादीनामिति** ॥ कला-शब्दार्थो विभाग इति । तात्पर्योक्तार्थमाह ॥ **मूलरूप्येवेति** ॥ ब्रह्मलिङ्गस्फोरणाय 'इन्द्रारिव्याकुलं

(भावदीपः)

लोकं मृडयन्ति युगे युगे' इत्युत्तरार्धार्थमाह ॥ **वराहादय इति** ॥ अतःपरमित्यादि व्याचष्टे ॥ **जीवानामिति** ॥ ऋषय इत्यादिनोक्तानामित्यर्थः । क्रमेण स्मार्तपदानामर्थोऽतः परमपुरुषा-दित्यादि । पुनर्भवः संसारी. कृष्णस्त्वित्यस्य मूलरूप्येवेति कथं व्याख्येत्यत आह ॥ **कृष्णेति** ॥ कृष्णो यज्ञैरिज्यते सोमपूतैः कृष्णो वीरैरिज्यते विक्रमद्भिः । 'कृष्णो वन्यैरिज्यते संमृशानैः कृष्णो मुक्तैः' इति द्वितीयाध्यायभारततात्पर्योक्तस्मृतौ त्रिपाद्यां मूलरूपार्थत्वस्यास्पष्टत्वेऽप्यंत्यपादे मुक्तैरित्याद्युक्त्या मूलरूपत्वप्रतीतेरिति भावः ॥ **भेदाभेदाविति** ॥ यथायोगमन्वयः । वक्ष्यमाणस्मृत्यनुरोधादाह ॥ **यथा सर्वोत्तमत्वादीति** ॥ **कृष्णेति** ॥ गीतायामर्जुनेन कृष्णं प्रति 'न त्वत्समोऽस्ति' इत्याद्युक्तेरिति भावः ।

## अभिनवचन्द्रिका

**जीवानां मत्स्यादीनामिति** ॥ मत्स्यादीनामिव जीवानां स्वरूपांशत्वं किं न स्यादित्यर्थः ॥ **इत्यक्त इति** ॥ 'भावयन्नेष सत्त्वेन लोकान्वै लोकभावनः । लीलावतारानुगतः तिर्यङ्नरसुरादिषु' इत्यनेनोक्त इत्यर्थः ॥ **उक्तेति** ॥ द्वितियन्तु भावायाऽस्य रसातलगतां महीम् । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः' इत्यादिनोक्तेत्यर्थः ॥ **एते परमपुरुषस्येति** ॥ 'पुंस' इत्यस्य व्याख्यानं 'परमपुरुषस्य' इति । 'स्वांशकला' इत्यस्य व्याख्यानं 'स्वरूपांशाविभागा' इति । 'स्वयं भगवान् कृष्ण' इति अन्वयं प्रदर्श्य मूलरूप्येव' इति कृष्णशब्दस्य तुशब्देन सह व्याख्यानम् । नारायण एवेत्यर्थः । 'एते स्वांशकलाः पुंसः' इति पूर्वार्थस्य 'इन्द्रारि व्याकुलं लोकं मृडयन्ति' इत्युत्तरार्धेन सम्बन्ध इत्यभिप्रेत्याह– **वराहादयो लोकं मृडयन्ति' इति** ॥ ततश्च एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् । इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' इति भागवतश्लोकस्य एवं योजना । **पुंसः** परमपुरुषस्य, **स्वांशकलाः** स्वरूपांशविभागाः, **भगवान्** कृष्णः, **स्वयमेव** मूलरूपी नारायणत्मक इति यावत् । **एते** वराहाद्याः, इन्द्रारिरव्याकुलं लोकं युगे युगे रक्षन्तीति । सिंहावलोकनन्यायेन कृष्णशब्दस्य मूलरूपिनारायणवाचित्वे प्रतिज्ञापूर्वकं प्रमाणमाह– **कृष्णशब्दश्चेति** ॥ भाष्ये एते स्वांशकला इति । अत्रायं विवेकः 'एते स्वांशकला इत्यारभ्य स जीवो यः पुनर्भव' इत्यन्तं भागवतवचनम्, 'न त्वत्समश्चाभ्याधिकः कुतोऽन्य' इति गीतावचनम् ।

## वाक्यार्थमुक्तावली

**परमपुरुषांशैरिति** ॥ 'भावयन्नेव सत्त्वेन लोकान्वै लोकभावनः । लीलावतारानुगतस्तिर्यङ्नरसुरादिभिः' इत्यनेनेत्यर्थः ॥ **सविस्तरं वराहादीनामिति** ॥ द्वितीयन्तु 'रसायास्य रसातलगतां महीं' इत्यादिनेत्यर्थः । यद्यपि 'स एव प्रथमं देवः कौमारं सर्गमास्थितः' इत्युक्तेः कुमारादीनामिति वक्तव्यम् । तथापि सनत्कुमारान्तर्यामित्वेनैव लोकरक्षकत्वाद्वराहादीनामित्युक्तम् । सनत्कुमारनामासौ ब्रह्मचर्यवपुर्हरिः । 'सनत्कुमारमपरं ब्रह्मपुत्रं विवेशह' इति तात्पर्योक्तेरिति ज्ञेयम् । एते वराहाद्यास्वांशकलाः कृष्णस्तु वसुदेवपुत्रस्तु स्वयं भगवान् स्वयमंश्येवेत्यन्यथा प्रतीतिं वारयन्नंशकलाशब्दयोः पौनरुक्त्यं परिहरन्नेते प्रोक्ता अवताराः मूलरूपी हरिः स्वयम्' 'एवेति भागवततात्पर्यं मनसि निधाय एते स्वांशकला इत्यनूद्य स्वयं भगवान् कृष्णस्तु कृष्ण एव मूलरूप्येवेति मूलरूपात्यन्ताभेदो विधीयत इति भावेन व्याचष्टे ॥ **एते परमपुरुषस्येति** ॥ स्वरूपांश इत्युक्तावेवाभेदसिद्धावपि भेदाभेदशङ्कानिवृत्यर्थं कृष्णो मूलरूप्येवेत्युक्तमिति तत्त्वप्रदीपे । पुंसः परमपुरुषस्य स्वरूपांशविभागा एते वाराहादय इत्यस्य विधेयान्तरप्रतिपादनपरमिन्द्रादिव्यापृतं लोकं मृडयन्ति युगेयुगे इत्युत्तरार्धं सङ्ग्रहेण व्याचष्टे ॥ **वराहादय इति** ॥ मृडयन्ति रक्षन्ति सुखयन्ति वा । यदव्यक्तं यःपुनर्भव इति यच्छब्दद्वयदर्शनात्स जीव इति विधेयमावर्तते इति भावेन अतो जडेश्वरयोः परं अव्यूढगुणबृंहितं अनादिकाले कदाप्यनपगतसत्त्वादिरूपं अदृष्टाश्रुतवस्तुत्वात्पुनर्भवतीति भागवततात्पर्यं मनसि निधाय व्याचष्टे ॥ **यदत इत्यादिना** ॥ प्रकाशादिवन्नैवंपर इत्युक्तेर्मत्स्यादेरभिन्नांशत्वं जीवानां भिन्नांशत्वमित्यत्र विषये स्मरन्ति ग्रन्थं कुर्वन्ति व्यासादयः । स्मरणं ग्रन्थकृतिः । स्मरन्ति चेत्यादेरिति भागवततात्पर्योक्तेः । व्यासकृतग्रन्थस्यान्योत्त्यनुवादरूपत्वान्नानुपपत्तिः । न केवलं मत्स्यादिनामभिन्नांशत्वे, जीवानां भिन्नांशत्वे स्मरन्ति किंनाम स्वरूपास्वरूपांश लक्षणयोगित्वयुक्तिसिद्धं तदिति सौत्रश्चशब्दः । किं तत्स्वरूपास्वरूपांशलक्षणम् । कथं मत्स्यादौ जीवेषु तत्सिद्धिरित्यतः । स्मरन्तीति बहुवचनात्तदपि स्मरन्तीत्यर्थ इति भावेन स्वांशश्चेत्यादिभाष्यं व्याचष्टे **मत्स्यादीनामित्यादिना** ॥

## तत्त्वसुबोधिनी

**सर्वमवतिष्ठत इत्युक्त इति** ॥ 'व्याख्यन्नेव सत्त्वेन लोकान् वै लोकभावनः । लीलावतारानुगतः तिर्यङ् नर सुरादिषु' इत्यनेनेत्यर्थः ॥ **तदुक्तमिति** ॥ अंशत्वयुक्तमित्यर्थः ॥ कुत इत्यत आह ॥ **ऋषय इति** ॥ एते वराहाद्याः स्वांशरूपाः कलाः । कृष्णस्तु वसुदेव पुत्रः स्वयं भगवान् इत्यन्यथाप्रतीतिनिरासाय स्वांशकला इत्यस्य फलितप्रदर्शनपरतया **कृष्णस्त्विति** ॥ एते प्रोक्ता अवताराः । मूलरूपं हरिः स्वयमेव इति भागवततात्पर्यानुसारेण व्याचष्टे ॥ **स्वयं भगवानिति** ॥ अनेन तुशब्द एवार्थ इत्युक्तं भवति ॥ **वराहादयो लोकं मृडयन्तीति** ॥ अनेनैतत् इत्यनूद्य 'भगवान् स्वयम्' इत्यन्तेन मूलारूपाभेदः 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे इत्यनेन सुखदत्वं चोच्यत इत्युक्तं भवति । अतः परमित्यादि व्याचष्टे ॥ **यदतः इति** ॥ परमित्यस्यार्थः **भिन्नमिति** ॥ अव्यक्तमित्यस्या**कार्यमिति** ॥ अव्यूढगुणेत्यस्य **'अनाद्यनपगतेति** । वस्तुशब्दार्थो **भगवत्स्वरूपेति** । पुनर्भव इत्यस्य **संसरतीति** ॥ ननु कृष्णशब्दस्यावताररूपे एव प्रयोगात् कथं कृष्णो मूलरूपीति व्याख्यातमित्यत आह ॥ **कृष्णशब्दश्चेति** ॥ प्रयोगस्थलमाह ॥ **कृष्ण इति** ॥ तदेव स्वरूपांशस्य भवतीति शेषोक्तिः । ननु न जीवस्य भिन्नांशत्वं, भिन्नांशलक्षणाभावात् इत्यत आह ॥ **जीवेष्विति** ॥ भगवत्स्वरूपानादित्वादिकं त्वनुभवसिद्धमिति भावः ।

## वाक्यार्थविवरणम्

अभेदः ॥ भगवत्त्वरूपांशत्वमित्यर्थः ॥ **अभिधीयते** ॥ 'एते स्वांशकला इत्यनेनेति शेषः । पुंस इत्यस्य व्याख्यानं **परमपुरुषस्येति** ॥ स्वरूपांशविभागा इति पाठः । मूलरूपभगवदंशः पद्मनाभः । तस्मादेव च नानावतारा भवन्ति । पश्चात्तेनैव चैकीभूता भवन्ति । अत एवोद्बर्हात्मनः केशान्' इति पद्मनाभकेशत्वमेव कृष्णरामयोरुक्तम् । 'एतन्नानावताराणां निधानं बीजमव्ययम् । यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादय इति च तत्रैव प्रथमस्कन्धे चतुर्थाध्याये स्पष्टमुक्तम् । अतः पुंसः परमपुरुषस्य मूलरूपिणो भगवतः स्वांशकला स्वरूपभूतो योऽशः पद्मनाभस्तस्य कलाः विभागा विभज्यन्त' इति विभागास्तस्माद्विभक्तास्तदुद्भूतास्तस्माद्बहिर्निर्गता इति यावदिति योज्यम् । अत्र 'स्वांशकला एत' इत्युद्दिश्य कृष्ण इति विधेयम् । 'इन्द्रारिव्याकुलं

(वाक्यार्थविवरणम्)

लोकं मृडयन्ति युगे युगे' इत्यस्यार्थमाह ॥ **वराहादय इति** ॥ मृडयन्ति । सुखयन्ति । मृड् सुखन इति धातोः । उच्यते । अतः परमित्यनेनेति शेषः । कृष्णो मूलरूप्येवेति व्याख्यातम् । नत्र कृष्णशब्दस्य मूलरूपिवाचित्वे प्रयोगं दर्शयति ॥ **कृष्णशब्दश्चेति** ॥ 'कृष्णो यज्ञैरिज्यते सोमपूतैः । कृष्णो वीरैरिज्यते विक्रमद्भिः । कृष्णो वन्यैरिज्यते संमृशानैः । कृष्णो मुक्तैरिज्यते वीतमोहैः' इति द्वितीयाध्यायनिर्णयोदाहृतस्मृतिरियम् । एतद्विभिन्नांशलक्षणं जीवेष्वस्तीति स्मृत्या वक्तव्यम् । कुतस्तत्रोक्तमित्यत आह ॥ **जीवेष्विति** ॥

## वाक्यार्थमञ्जरी

जीवस्याभिन्नांशत्वं मत्स्यादेरभिन्नांशत्वं च स्मृतिकर्तारः स्मरन्ति चेत्यर्थः इत्युक्त इति ॥ प्रथमभागवते 'जगृहे पौरुषं रूपम्' इत्यादिना 'यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः' इत्यन्तेनोक्त इत्यर्थः । द्वितीयं तु 'भवायास्य रसातलगतां महीम् । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः' इत्यादिनोक्तेरित्यर्थः । 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' इत्युत्तरार्धं व्याचष्टे ॥ वराहादय **इति** ॥ मृडयन्ति सुखयन्तीत्यभिधीयत इति सम्बन्धः । परमित्यस्यार्थोऽभिन्नमिति । अव्यक्तमित्यस्याकार्यमिति अव्यूढगुणेत्यस्यानाद्यनपगतेति वस्त्वित्यस्य भगवत्स्वरूपेति पुनर्भव इत्यस्य संसारीति इत्युच्यत इत्यन्वयः कृष्णशब्दस्यावतारे प्रसिद्धत्वेन कथं मूलरूप्येवेति व्याख्यानमित्यत आह ॥ **कृष्णशब्दश्चेति** ॥ ईज्यते पूज्यते इदं वाक्यं मुक्तवर्गसेव्ये मूलरूपे प्रयुक्तमिति भावः । तदेवस्वरूपांशस्य भवतीति शेषोक्तिः । कृष्णाद्यवतार इति तस्य कृष्णं प्रत्यर्जुनवाक्यत्वादिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ॥ ४८ ॥

**परानुज्ञया प्रवृत्तिः, परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयते, अंशत्वेऽपि देहसम्बन्धात् । 'य आत्मानमन्तरो यमयति' । 'तमेवं विद्वान्'** (तै.आ. ३-१२) **त्यादिना । न तु परस्य । 'वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाऽहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा**

(सूत्रभाष्यम्)

न बन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परानन्दा' इति हि चतुर्वेदशिखायाम् । युज्यते च ज्योतिरादिवत् यथाऽऽदित्यो वियद्गतस्तत्प्रकाशश्चैकप्रकारः । 'शुक्लं कृष्णं कनीनिका' (ऐ.आ.२-१-५) इति तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः । तदनुग्राह्यत्वं तेनैवावृतिपरिहारश्च । यथा बाह्यामृतजलस्यामृतसमुद्रस्य चैकत्वं तदंशस्यापि श्लेष्मणस्तदनुग्राह्यत्वं तेनैव विरोधिनिवृत्तिश्च । मोक्षधर्मे च–

'यत्किञ्चिदिह लोकेऽस्मिन्देहवद्धं विशांपते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥
ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च ॥
भूतप्रलयमव्यक्तं शुश्रूपुर्नृपसत्तम' ॥ इति ।

वाराहे च–

'अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः ।
अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः ॥
अदेहबन्धयोग्यत्वाद्यथासूर्यप्रभाक्षिणी ।
यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता ।
अनुग्राह्यत्वमन्यस्य तेनैवावृतिरोधनम्' ॥ इति ।

## तत्त्वप्रदीपिका

जीवस्य प्रवृत्तये परानुज्ञाऽपेक्षितैव । शतधानामाष्टशतवाच्यत्वेन । शतर्चिन इतिवत्सामीप्याद-विरोधः । सहस्रधा सहस्रनामवाच्यत्वेन । अमितः असङ्ख्येयः । 'शुक्लं कृष्णं कनीनिका' इत्यादित्यसादृश्यात्तदंशत्वमक्ष्णः । 'अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम्' 'अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम्' इति श्रुतेः ।

'कनीनिका परः कृष्णं सगुणो निर्गुणोऽपि च ।
अगुणोऽगुणदेहत्वात्सगुणो गुणधारणात् ।
ऐश्र्यादिगुणित्वाद्वा वासुदेव उदीर्यते' ॥ इत्याग्नेये ।

(तत्त्वप्रदीपिका)

भूतप्रलयस्थानभूताऽव्यक्तशब्दिता श्रीः शुश्रूषुरित्युक्तत्वात् । 'ये चाप्यक्षरमव्यक्तम्' इति स्मृतेश्च । यथा सूर्यप्रभाक्षिणी सूर्यांशत्वेनोदितेऽपि मिथो विलक्षणे सूर्य एव स्वप्रकाशाभिमानी न तत्रानुग्राह्यानुग्राहकभावः । अक्ष्यभिमान्यन्यो जीवोऽस्ति स तु तदनुग्राह्यः । देहसम्बन्धनिबन्धनं दुःखं चाऽप्नोति । तेनैव तस्य व्यापारविरोधिनो विषयावृत्तिभूतस्य तमसः परिहारः । एवं द्वितीयदृष्टान्तेऽपि योजनीयम् । तत्र विरोधि पित्तम् ।

## तत्त्वप्रकाशिका

एवं जीवानां मत्स्यादीनां चांशिना भेदाभेदसद्भावान्नैकविधतेत्युक्तम् । युक्त्यन्तरेणैकविधतां पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अनुज्ञेति** ॥ जीवानां प्रवृत्तिमोक्षयोरंशिपरमात्माधीनत्वात्तेषां मत्स्यादीनां चांशत्वसाम्येऽपि नैकविधतेत्यर्थः । केन प्रतीयत इत्यत आह ॥ **देहेति** ॥ परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च जीवस्येत्यत्र क्रमेण श्रुती चाह ॥ **य इति** ॥ मत्स्यादीनामपि प्रवृत्तिमोक्षयोरीश्वराधीनत्वात्कथं न जीवविधतेत्यत आह ॥ **नेति** ॥ तदेव कुत इत्यत आह ॥ **वासुदेव इति** ॥ शतधा नारायणादिः । सहस्रधा विश्वादिः । अमितोऽतिबहुरूपः परादिः । अनन्तोऽजितादिः । यदुक्तं जीवोंऽश्यधीनप्रवृत्त्यादिमान् देहसम्बन्धित्वादिति तद्व्याप्त्यभावान्न युज्यत इत्यत आह ॥ **युज्यते चेति** ॥ तदेव स्फुटयति **यथेति** ॥ आदित्यो मण्डलाभिमानी वियद्गतस्तत्प्रकाशाभिमानी तदंशश्चैकप्रकारोऽनुज्ञादिरहितः । 'त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका' इति श्रुतावक्ष्णः सूर्यमण्डलसाम्योक्त्या तदंशत्वमुच्यते । अत एव तदभिमानिनोऽपि तदभिमान्यंशत्वं तस्य चापभ्रष्टस्य देहदोपलिप्तत्वादंश्यधीनप्रवृत्त्यादिमत्त्वमिति भावः । आवरणं तमः । एवमुत्तरत्राप्यभिमानिविवक्षा द्रष्टव्या । विरोधी पित्तधातुः । अत्रायं प्रयोगो भवति । जीवः स्वांश्यधीनप्रवृत्त्यादिमान् स्वांशिकर्मानिर्मितशरीरसम्बन्धित्वादपभ्रष्टवदिति । यदुक्तं मत्स्यादीनां नांश्यधीनप्रवृत्त्यादिमत्वमिति । तदसत् । तेषामप्युक्तविधदेहसम्बन्धित्वात् । तथा च न विशेषः । अथ देहसम्बन्धित्वेऽपि नांश्यधीनप्रवृत्तित्वं तर्हि तत्रैव हेतोर्व्यभिचार इत्यत आह ॥ **मोक्षधर्मे चेति** ॥ शुश्रूषुः तस्येति शेषः । अवतारप्रसङ्गे चैतदुक्तम् । अत्राप्ययं प्रयोगः । मत्स्यादिः स्वांश्यधीनप्रवृत्त्यादिर्न भवति स्वांशिकर्मानिर्मितदेहासम्बन्धित्वात् वियद्गतप्रकाशाद्यभिमानि-वदिति । अत एव दृष्टान्तो विवृतः । सूत्रार्थे स्मृतिं चाह ॥ **वाराहे चेति** ॥ देहयोग्यत्वादित्युक्त्या मुक्तानामपि सङ्ग्रहो भवति । सूर्यप्रभाक्षिणी नैकप्रकारे ।

## गुर्वर्थदीपिका

अदेहबन्धयोग्यत्वादित्यादिना वदिष्यति । 'अनुज्ञापरिहारौ परानुज्ञया' परितो विहरणाख्या ऐहिका प्रवृत्तिः संसारपरिहारश्चेति द्वौ भवतः । अतोऽप्यसौ भिन्नांश इति सूत्रार्थं हृदि निधायाऽऽह परानुज्ञया प्रवृत्तिरित्यादिना । अन्यथा प्रवृत्तिरूपार्थस्यासूत्रितत्वप्रसङ्गाद्देह-सम्बन्धमात्रस्य परमात्मन्यपि सत्त्वाच्चोक्तैव योजना भाष्यकारस्याभिमता । देहसम्बन्धादिति विशेषणं विविधसांसरिकनिर्बन्धपरिहारासमर्थस्य जीवस्य परानुज्ञयैवेति स्वोक्तहेतुदृढीकरणार्थमिति ज्ञेयम् । केन प्रतीयत इत्यत्र केन निमित्तेनेत्यर्थः । अक्ष्णः सूर्यमण्डलसाम्योक्त्येत्यत्र अक्षिपदेन गोळकं गृह्यते । न चक्षुरिन्द्रियम् । तस्य केवलं सूर्याभिमानित्वाद्गोळकाभिमानिनी काचनाऽप-कृष्टदेवताऽप्यस्ति । सा च सूर्याद्भिन्नैवेति विज्ञेयम् । स्वांशिकर्मानिर्मितशरीरसम्बन्धित्वादित्यत्र वियद्गतसूर्यप्रकाशाभिमानिनि स्वांशिकर्मनिर्मितसूर्यशरीरसम्बन्धिनि व्यभिचारपरिहाराय स्वांशि-कर्मानिर्मितेति विशेषणमिति ज्ञेयम् । भूतानां प्रलयो यस्मिन्निति भूतप्रलयम् । अव्यक्तमव्यक्त-तत्त्वम् । अहं शुश्रुषुरिति वैशम्पायनस्यैव न तावदिदं वाक्यम् । स्वस्याव्यक्ततत्त्वसेवकत्वाभावात् । भगवदवतारकथायामव्यक्ततत्त्वस्य स्वातन्त्र्येण प्रस्तावायोगाच्च । अतो भूतप्रलयमव्यक्तम् । अव्यक्ततत्त्वाभिमानिनी श्रीः तस्य प्रागुक्तनारायणस्य शुश्रूषुः सेवाकर्त्रीत्येवार्थो वक्तव्यः । अत एतदभिमानिनी प्रकृतिः प्राकृतदेहादिकं च तत्र बध्नातीति हेतुं सूचयितुमेतद्वाक्योदाहरणमिति भावेनाऽऽह तस्येति शेष इति । अत एव शुश्रूषुरिति स्त्रीलिङ्गप्रयोग इति भावः । स्वांशि-कर्मानिर्मितदेहासम्बन्धित्वादित्यत्र स्वांशिकर्मानिर्मितो यो मत्स्यादिनां देहः तदसम्बन्धित्वं मत्स्यादिषु नास्ति । अतः स्वरूपासिद्धिरिति चेन्न देहपदेन पाञ्चभौतिकदेहस्यैव ग्रहणात् । अतो न स्वरूपासिद्धिः । तर्हि देहसम्बन्धित्वादित्येवालमिति चेन्न । सौरप्रभाभिमानिनि सूर्यांशे भौतिकसूर्यदेहसम्बन्धिनि च साधनवैकल्यं स्यात् । अतः स्वांशिकर्मानिर्मितेत्युक्तम् । एवं च स्वांशिकर्मनिर्मितसूर्यदेहे स्वांशिकर्मानिर्मितत्वाभावेन तत्कर्मानिर्मितदेहः अस्मदादिदेह एव स्यात् । तेन च प्रभाभिमानिदेवतायाः न बन्धकः सम्बन्ध इति न दृष्टान्ते साधनवैकल्यम् । नापि स्वरूपासिद्धिरिति ज्ञेयम् ।

## भावबोधः

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मसहस्रकः ।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः ॥'

इति बृहदारण्यकभाष्योदाहृतप्रमाणानुसारेणाऽऽह– **शतधा नारायणादिरित्यादिना ।**

'देहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवताः ।
अन्याः सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैः सदा' ॥

इत्यनुव्याख्यानं मनसि निधाय भाष्यं व्याचष्टे– **तस्य चापभ्रष्टस्येति ॥** शरीरसम्बन्धित्वस्याभिन्नांशेऽपि सत्त्वाद्व्यभिचारस्ततो स्वांशिकर्माऽनिर्मितेत्युक्तम् । शरीरसम्बन्धित्वं तद्योग्यत्वम् । तेन न मुक्तेषु भागासिद्धिः ॥ **इत्यत आहेति ॥** तथा च स्वांशिकर्माऽनिर्मितभौतिकशरीरसम्बन्धित्वस्य विवक्षितत्वान्न व्यभिचार इति भावः । शुश्रूषुस्तस्येति शेष इति । समस्तश्लोकव्याख्यानं तु– शरीराणि हि भौतिकानि भवन्ति, भूतानि चेश्वरबुद्धिजानि, तत्कथं तानि बध्नीयुरित्यर्थः । अत्रेश्वरो हीत्यादिनाऽन्ये हेतवोऽभिधीयन्ते– विराट्, नित्याभिव्यक्तरूपः । वरदो मोक्षदः । सगुणः स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिन् तत् अव्यक्तं तदभिमानिदेवता तस्य शुश्रूषुर्लिङ्गव्यत्यासश्छान्दस इति गीताभाष्यटीकयाऽवगन्तव्यम् । अस्त्वेतन्मूलरूपविषयमवताराणां तु देहसम्बन्धित्वं तु स्यादेवेत्यत अवतारप्रसङ्गे चैतदुक्तमतोऽनवताराश्च पृथक् शङ्क्या इति गीताभाष्यं मनसि निधायाऽऽह– **अवतारप्रसङ्ग इति ॥** 'यत्तद्दर्शितवान् ब्रह्मरूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्ग एतस्योक्तत्वात् । युक्तिसाम्यात् सर्वावतारेष्वपि देहसम्बन्धशङ्का न कार्येति भावः । स्वरूपासिद्धिदृष्टान्तसाधनवैकल्यं च परिहर्तुं स्वांशिकर्माऽनिर्मितेत्युक्तम् । स्वांशिकर्मनिर्मितदेहसम्बन्धित्वस्य दृष्टान्ते सत्त्वेऽपि पक्षे तदभावान्नत्रूद्वयगर्भत्वम् । तथा च पक्षे विशेष्याभावेन दृष्टान्ते विशेषणाभावेन विशिष्टाभावोऽनुगत इति भावः । 'प्रकाशादिवत्' इत्यनेनास्मदादीनां जीवानां च स्वरूपांशत्वभिन्नांशत्वात्मके उक्तवैषम्ये तेजआद्यभिमानिवह्न्यादिदेवतांशयोः कालाग्न्याद्यभिमानिखद्योताद्यभिमानिनोः स्वरूपांशत्वभिन्नांशत्व-

(भावबोधः)
रूपं वैषम्यं दृष्टान्तितम् । 'ज्योतिरादिवत्' इत्यनेन त्वंशत्वेऽप्यवताराणां जीवानां च असाम्ये हेत्वन्तरत्वेनोक्तदेहासम्बन्धसम्बन्धप्रयुक्ते अंश्यननुग्राह्यत्वानुग्राह्यत्वयो रूपवैषम्ये सूर्यमण्डला-द्यभिमानिन्यादित्यां शयोर्वियद्गतप्रकाशाद्यभिमानि अक्षिगोलकाद्यभिमानिनोः परदेहसम्बन्धा-सम्बन्धप्रयुक्तमंश्यननुग्राह्यत्वानुग्राह्यत्वरूपं वैषम्यं दृष्टान्तितमिति भेदः टीकायामेव स्पष्टः ।

## भावदीपः

भाष्यं व्याचष्टे ॥ **जीवानामिति** ॥ **केनेति** ॥ निमित्तेनेत्यर्थः । शतं नारायणाद्यात्मा विश्वाद्यात्मसहस्रकः । परादिरूपो बहुधा सोऽनंतात्माऽजितादिक इति चतुर्थाध्याय बृहद्भाष्यादिशाऽर्थमाह ॥ **शतधेति** ॥ अपौनरुक्त्यायोक्तममितेति ॥ **बहुरूप** इति ॥ सूर्यमण्डलमान्येकस्तत्प्रकाशाभिमानवान् इत्याद्यनुभाष्यदिशा भाष्यं व्याचष्टे ॥ **आदित्य इति** ॥ **सूर्यमण्डलसाम्योक्त्येति** ॥ 'अथ यदेतदादित्यस्य शुक्लम्भाः सैवर्गथयन्नीलं परः कृष्णम् अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क अथ यन्नीलं परः कृष्णम्' इति । तत्त्वप्रदीपोदाहृतछान्दोग्य-प्रथमाध्यायस्थ श्रुत्यन्तरोक्तस्याक्षिगतस्य शुक्लादिरूपत्रयवत्त्वेनादित्यसाम्यस्य त्रिवृदिव वै चक्षुः' इत्यैतरेये कथितत्वादित्यर्थः । देहसम्बन्धादित्यादिभाष्यस्थदेहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवता इत्याद्यनुभाष्यदिशा भावमाह ॥ **तस्य चेति** ॥ आवृतीत्यस्याज्ञानभ्रान्तिं निराह ॥ **तम इति** ॥ अन्धकार इत्यर्थः । सूत्रे हेतुदृष्टान्तोक्त्याऽभिमतं प्रयोगप्रकारं दुर्ज्ञानत्वाद्दर्शयति ॥ **अत्रायमिति** ॥ स्वरूपांशे व्यभिचारव्युदासाय स्वांशिकर्मानिर्मितेति । प्रकाशाद्यभिमानिरूपांशसम्बन्धिशरीरस्य सूर्यमण्डलाद्यभिमानिरूपस्वांशिकर्मानिर्मितत्वात् न व्यभिचारः । न च जीवांशिनो भगवतः पुण्यपापकर्म नेति वाच्यम् । तदभावादेव तेनानिर्मितत्वोपपत्तेरिति भावः ॥ इत्यत **आहेति** ॥ स्मृतौ यत्किञ्चिज्जीवजातं देहसम्बद्धं तत्सर्वम् ईश्वरबुद्धिजैः पञ्चभिर्भूतैराविष्टम् । भूतप्रलयं भूतसम्बन्धाधीनप्रलयोपेतम् अकार्यत्वादव्यक्तशब्दितमिति जीवानां देहबन्धमुक्त्वा ईश्वरो हीत्यादिनांशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहासम्बन्धस्योक्तत्वादिति भावः ॥ **शुश्रुषु-स्तस्येति** ॥ देहबद्धं भूतप्रलयमव्यक्तं जीवजातं तस्य प्रकृतनारायणस्य शुश्रूषुः श्रोतुमिच्छावत् जिज्ञासु इति योजना सूचिता । तत्त्वप्रदीपे तु भूतप्रलयस्थानभूताव्यक्तशब्दिता श्रीः प्रकृत-नारायणस्य शुश्रूषुः 'ये चाप्यक्षरमव्यक्तम्' इति स्मृतेरिति प्रकारान्तरेण योजितमित्युक्तं

(भावदीपः)

चन्द्रिकायाम् । नवमे प्रमेयदीपिकायां तु कृष्णस्य मानुषवपुष्ट्वं कुतो नेत्यत आहेत्यवतार्य शरीराणि हि भौतिकानि भवन्ति । भूतानि चेश्वरबुद्धिजानि तत्कथमवतारान्निबध्नीयुरित्यर्थः । अत्रेश्वरो हीत्यादिनान्ये हेतवोऽभिधीयन्ते विराट् नित्याभिव्यक्तरूपः वरदो मोक्षदः सगुणः स्वातन्त्र्यादिगुणवान् भूतानि प्रलीयन्ते यस्मिन् तत् अव्यक्तम् । तदभिमानिदेवता तस्य शुश्रुषुः लिङ्गव्यत्यासः छान्दस इति व्याख्यानं कृतम् । नन्वीश्वरो हीत्यादिनांशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहासम्बन्ध उक्तो न त्ववताराणामंशानामित्यत आह ॥ **अवतारप्रसङ्गे चेति** ॥ प्रकरणादवतारविषयमेवेदं वाक्यं नारायणशब्दस्त्वंशांश्यभेदाभिप्राय इत्यर्थः । तथा चोक्तं गीताभाष्ये नवमे अवतारप्रसङ्गे चैतदुक्तमतो नावताराश्च पृथक् शङ्क्या इति व्याख्यातं च तत्रैव टीकायां यत्तद्दृशिवान्ब्रह्मा रूपं हयशिरोधरमिति हयग्रीवावतारप्रसङ्ग इत्यादि ॥ **अत्रापीति** ॥ मत्स्यादेरंश्यधीनप्रवृत्तिर्नेत्यत्रापीत्यर्थः । अत्र स्वांशिकर्मनिर्मितदेहसम्बन्धित्वादित्युक्तावार्जवं दृष्टान्ते साधनानुगतिश्चास्ति तथाप्यसिद्धिनिरासाय नञ्द्वयप्रक्षेपः । तथा च दृष्टान्ते स्वांशिकर्मा-निर्मितत्वाभावेन पक्षे देहसम्बन्धित्वाभावेन पक्षदृष्टान्तयोः साधनानुगम इति भावः । ननु सूत्रभाष्ययोः स्पष्टमप्रतीतोऽप्ययं प्रयोगः कस्मादुच्यते इत्यत आह ॥ **अत एवेति** ॥ एवं रूपप्रयोगस्याभिमतत्वादेव पूर्वं भाष्ये यथादित्येत्यादिना ज्योतिरादिवदिति दृष्टान्तो विवृत इत्यर्थः । शेषमाह ॥ **नैकप्रकारे इति** ॥

## अभिनवचन्द्रिका

**जीवानां प्रवृत्तिमोक्षयोरिति** ॥ जीवानां प्रवृत्त्यादौ भगवदधीनत्वात् मत्स्यादीनां तदभावात् उभयोरंशत्वोक्तिसाम्येऽपि नैकप्रकारतेत्यर्थः । **स्वांशिकर्मानिर्मितेति** ॥ स्वांशिकर्मा-निर्मितप्राकृतदेहसम्बन्धित्वादित्यर्थः । भाष्ये यत्किञ्चिदिति ॥ हे विशांपते! इह चेतनवर्गे अस्मिन् लोके, यत्किञ्चित् देहबद्धं, तत्सर्वम्, ईश्वरबुद्धिनिर्मितैः, पञ्चभिर्भूतैः, आविष्टं बद्धमिति यावत् । ईश्वरस्तु महद्भूतम् । नारायणो मुक्ताश्रयः । अत एव प्रभुः । विशेषेण राजत इति विराट् । नित्यमुक्तः । भूतान्तरात्मा भूतान्तर्यामी । विज्ञेयो मुमुक्षुभिः । सगुणः स्वातन्त्र्यादिगुणवान् । निर्गुणः सत्त्वादिगुणशून्यः । हे नृपसत्तम, भूतप्रलयं भूतानि प्रलीयन्ते यस्मिन्तत् । अव्यक्तं महालक्ष्मीः । तस्य विष्णोः । शुश्रूषुरिति लिङ्गव्यत्ययः छान्दसः । ईश्वरस्य नित्यमुक्तत्वात् न

(अभिनवचन्द्रिका)

तस्य प्राकृतदेहसम्बन्ध इति भावः । नन्वस्तु मूलरूपस्य एवम्भूतत्वेन देहाभावः, अवतारस्य तु देहसम्बन्धः स्यादेवेत्यत आह – **अवतारप्रसङ्गे चेति ॥ स्वांशिकर्मानिर्मितेति ॥** स्वांशिकर्मानिर्मितप्राकृतदेहसम्बन्धित्वादित्यर्थः । स्वरूपासिद्धिवारणाय प्राकृतेति देहविशेषणम् । तावन्मात्रस्य दृष्टान्तेऽभावेन व्याप्यत्वासिद्धिः । तत्परिहाराय स्वांशिकर्मानिर्मितेति प्राकृतदेहविशेषणमिति बोध्यम् ।

ननु – प्रकाशाभिमानिनि स्वांशिना साम्यस्यासिद्धत्वात् साध्यविकलो दृष्टान्त इत्यत आह– अत एव दृष्टान्तोऽपीति । अवतारप्रसङ्ग उदाहृतात् मोक्षधर्मवचनादेव दृष्टान्तोऽपि विवृत इत्यर्थः । यद्यपि तत्र, देवावताराणां देवसाम्यं नोक्तम्, तथापि ईश्वरावताराणामीश्वरसाम्योक्त्या न्यायसाम्येन देवावताराणामपि देवसाम्यं लब्धमिति भावः ।

## वाक्यार्थमुक्तावली

**ज्ञस्येति ॥** परादिति वर्तते । अनुज्ञेति तत्पूर्वकप्रवृत्तिरुच्यते । परिहारेति बन्धनिवृत्तिः । अंशत्वसाम्येऽपि ज्ञस्य देहसम्बन्धाद्धेतोः परादनुज्ञापरिहारौ ईशानुज्ञाधीनप्रवृत्तिमोक्षौ स्तः ॥ **ज्योतिरादिवत् ।** यथा ज्योतिषोऽक्ष्यभिमानिनोपभ्रष्टस्य श्लेष्माद्यभिमानिनश्च तत्तद्देहसम्बन्ध-सूर्यवरुणानुज्ञायत्तप्रवृत्यादिस्तथेत्यर्थः । परस्य मत्स्यादेः देहसम्बन्धाभावात् । एवं जीववत्तौ नस्तः कथं ज्योतिरादिवत् ज्योतिषः प्रभाद्यभिमानिनोऽमृताः बुध्यभिमानिनश्च यथा सूर्याद्यधीनप्रवृत्या नास्ति तथेति सूत्रार्थं हृदि निधाय प्रवृत्तं परानुज्ञेत्यादिभाष्यं व्याचष्टे **जीवानामित्यादिना ॥** केन प्रतीयत इति प्रतीयत इत्युक्तं तत्केन प्रकरणेनेत्यर्थः ॥ **श्रुती चाहेति ॥** न केवलं देहसम्बन्धित्व-युक्तिसिद्धमेतत् श्रुती चाहेत्यर्थः ॥ **इत्यत आहेति ॥**

इत्यतो नैवं पर इत्यनुवृत्तिलब्धमाहेत्यर्थः । स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ॥ 'शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रधा ॥ परादिबहुधा चासावनन्तात्माजितादिकः' इति बृहद्भाष्यं मनसि निधायाह ॥ **शतधेत्यादिना ॥ यदुक्तं जीव इति ॥** उपलक्षणमेतत् । यदप्युक्तं मत्स्यादिर्नांश्यधीन प्रवृत्त्यादिमान् देहबन्धयोग्यत्वादितीत्यपि ग्राह्यम् ॥ **त्रिवृदिव वै चक्षुरिति ॥** असौ आदित्यः त्रिवृदित्यादित्यस्य रूपत्रयमुक्त्वेति पूरणीयम् ॥ कनीनिकाशब्देन केवलकृष्णवर्णं

(वाक्यार्थमुक्तावली)

मध्यवर्त्युच्यते । तदुक्तं तत्वप्रदीपे । 'अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथः 'यन्नीलं परःकृष्ण' इति श्रुतेः । कनीनिकापरः कृष्णमिति । ''देहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवताः । अन्याः सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैः सदेत्यनुव्याख्यानं मनसि निधाय व्याचष्टे ॥ **तस्यचापभ्रष्टस्येति** ॥ **तम एवेति** ॥ विषयावरकं प्रसिद्धं तम एवेत्यर्थः ॥ **पित्तधातुरिति** ॥ जलपानैः श्लेष्म विरोधिपित्तपरिहारादिति भावः । प्रभाभिमानिसूर्यांशे व्यभिचारवारणाय स्वांशिकर्मनिर्मितेति विशेषणम् । देहसम्बन्धित्वं तद्योग्यत्वं विवक्षितम् । तेन न मुक्तेषु भागासिद्धिः । न च मत्स्यादिषु स्वांशिकर्मनिर्मितोऽस्मदादिशरीरसम्बन्धिषु व्यभिचारः । शरीरसम्बन्धित्वपदेन तद्दोषलिप्तत्वस्य विवक्षितत्वात् । न चैवं प्रभाभिमानिसूर्यांशे देहदोषलिप्तत्वाभावात्तेनैव व्यावृत्तिसिद्धौ विशेषण-वैयर्थ्यमिति वाच्यम् । तेषामस्मदादिदेहदोषलिप्तत्वाभावेऽपि स्वीयदेहदोषबद्धत्वेन व्यभिचारादिति यत्किञ्चिदित्यस्यायमर्थः । हे विशांपते प्रजानांपते राजन् यत्किञ्चिद्देहबद्धं तत्सर्वमीश्वरबुद्धिनिर्मितैः पञ्चभिर्भूतैराविष्टं बद्धम् । हि यस्मात्तस्मादीश्वरो महद्भूतं भूतेभ्योपि महत् । अत एव भूतान्तरात्मा भूतान्तर्यामी । तदुपपदनं प्रभुःशक्त इति । तथा तं कथं तानि बध्नीयुरिति भावः । हेत्वंतरमुच्यते नारायणो मुक्ताश्रयः । विराट् विशेषेण राजत इति विराट् । नित्याभिव्यक्तरूपो नित्यमुक्त इति यावत् । वरदो मोक्षदः । विज्ञेय इति क्वचित्पाठः । सगुणो निर्गुणोऽपि च । 'अगुणो गुणदेहत्वा-त्सगुणो गुणधारणात् । ऐश्वर्यादिगुणत्वाद्वा वासुदेव इतीर्यते' । भूतानि प्रलीयन्तेऽत्रेति भूत-प्रलयस्थानं भूताव्यक्ताभिमानिनी श्रीः ॥ **शुश्रूषुस्तस्येति** ॥ उक्तं च प्रमेयदीपे । भूतानि प्रलीयन्ते यस्मिन् तदव्यक्तं तदभिमानिदेवता तस्य शुश्रूषुः ॥ **लिङ्गव्यत्यासश्छान्दस इति** ॥ चन्द्रिकायान्तु भूतसम्बधाधीनप्रलयादित्वात् कार्यप्रवृत्तिनिमित्ताभ्यां भूतप्रलयाव्यक्तशब्दाभ्यां मुक्तो जीवसमूहस्तस्य नारायणस्य शुश्रूषुः । तत्त्वप्रदीपे तु भूतप्रलयस्थानभूताव्यक्तशब्दिता श्रीः प्रकृतस्य नारायणस्य शुश्रूषुः । ये चाक्षरमव्यक्तमिति श्रुतेरिति प्रकारान्तरेण योजितमित्युक्तमिति व्याख्यातम् । अस्त्वेतन्मूलरूपविषयम् अवताराणान्तु देहसम्बन्धित्वं स्यादेवेत्यतः अवतारप्रसङ्गे चैतदुक्तम् अतो नावताराश्च पृथक्शङ्क्या इति गीताभाष्यं मनसि निधायाह ॥ **अवतारप्रसङ्ग इति** ॥ यत्तद्दर्शितवान् ब्रह्मा रूपं हयशिरोऽभिधम्' इति हयग्रीवावतारप्रसङ्गे तस्योक्तत्वाद्युक्तिसामान्यात्सर्वावतारेष्वपि देहसम्बन्धशङ्का न कार्येति भावः ॥ **स्वांशीति** ॥ अत्राप्यसिद्धिवारणाय विशेषणं ग्राह्यम् । दृष्टान्ते विशेषणाभावाद्विशिष्टाभावः । पक्षे विशेष्याभावात् ॥ **अत एव दृष्टान्त इति** ॥ दृष्टान्ते

(वाक्यार्थमुक्तावली)
विशेषणाभावाद्विशिष्टाभावोपपादनेन साध्यवैकल्यं परिहर्तुमेव दृष्टान्तो विवृतः । यथादित्य इत्यादिना भाष्यकृतेति शेषः ।

## तत्त्वसुबोधिनी

शतधेत्यादिभाष्यं व्याचष्टे ॥ **शतधा नारायणादिरित्यादिना** ॥ अत्र चापिस्मर्यत इत्यनेन जीवस्येश्वरांशत्वे स्मृतिरुक्ता । स्मरन्ति चेत्यनेन त्वंशत्वेऽपि मत्स्यादीनां स्वरूपांशत्वं, जीवानां विभिन्नांशत्वमित्यत्र स्मृतिरुक्तेति भेदः ॥ **व्याप्त्यभावादिति** ॥ स्थलाभावेन व्याप्तेर्वक्तुमशक्य-त्वादित्यर्थः । मत्स्यादेर्देहसम्बन्धित्वेऽपि अंशयधीनप्रवृत्यादिमत्वाभावेन व्यभिचारात् व्याप्त्यभावः अत एव परिहारग्रन्थे देहदोषसत्त्वादिति देहसम्बन्धविवरणं क्रियते इति द्रष्टव्यम् ॥ **सूर्यमण्डल-साम्योक्त्येति** ॥ 'अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम् । अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम्' इति तत्त्वप्रदीपोदाहृत श्रुत्यन्तरोक्तस्याक्षिगतस्य शुक्लादि-रूपत्रयवत्वेन आदित्यसाम्यस्य त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति महैतरेयोपनिषदि कथितत्वेनेत्यर्थः । तदंशत्वं सूर्यमण्डलांशत्वम् ॥ **अत एवेति** ॥ अक्ष्णः सूर्यमण्डलांशत्वादे वेत्यर्थः । तदभिमानिनः अस्याभिमानिनः । तदभिमान्यंशत्वं सूर्यमण्डलाभिमान्यंशत्वम् ॥ **तस्य चेति** ॥ आवृत्तिशब्दार्थमाह ॥ **आवरणं तम इति** ॥ एवमुत्तरत्रापि । तदंशस्यापि श्लेष्मणः इत्यादौ अभिमानिविवक्षा द्रष्ठव्येत्यर्थः ॥ **स्वांशीति** ॥ देहदोषलिप्तत्वरूपशरीररूपभिन्नांशेऽपि सत्त्वाद्व्यभिचारः । ततः स्वांशिकर्मनिर्मितेत्युक्तम् । शरीरसम्बन्धित्वं तद्योग्यर्द्धिः । जीव इव मत्स्यादावप्यंश्यधीन प्रवृत्तिमत्वसाधकस्य स्वांशिकर्मानिर्मितदेहदोषलिप्तत्वस्य सद्भवाधीन-प्रवृत्त्यादिमत्वमेवेति न मत्स्यादीनां जीवानां च वैलक्षण्यमिति शङ्कते ॥ **यदुक्तमित्यादि** ॥

ननु तत्रोक्तविधदेहदोषलिप्तत्वेऽपि नांश्यधीनप्रवृत्यादिमत्वमङ्गीक्रियते । अतो नाविशेष इत्यत आह ॥ **अथेति** ॥ **तत्रैवेति** ॥ मत्स्यादावेवेत्यर्थः । तत्र स्वांशिकर्मानिर्मितदेहसम्बधित्वेऽपि अंश्यधीन प्रवृत्यादिमत्त्वाभावादिति भावः ॥ **इत्यत आहेति** ॥ स्यादयं व्यभिचारो यदि मत्स्यादीनां जीववद् स्वांशिकर्मानिर्मितदेहदोषलिप्तत्वं भवेत् । न च तदस्तीति भावेन परिहरतीति भावः । मोक्षधर्मे जीवनिष्ठ शुश्रूषां प्रति प्रकृतो नारायण एव विषयत्वेन सम्बध्यत इत्याह

(तत्त्वसुबोधिनी)

॥ **शुश्रूषुस्तस्येति** ॥ एवं च भूतसम्बन्धाधीनप्रलयादिमत्वात् कार्यत्वाकार्यत्वनिमित्तकाभ्यां भूतप्रलय अव्यक्तशब्दाभ्यां मुक्तजीवसमूहः तस्य नारायणस्य शुश्रूषुः मोक्षार्थं जिज्ञासुरिति योजनेति भावः। समस्तश्लोकं व्याख्यातुं शरीराणि हि भौतिकानि भवन्ति, भूतानि चेश्वरबुद्धिजानि तत्कथं तानि बध्नीयुरित्यर्थः। अत्रेश्वरो हीत्यादिनेह तत्त्वान्यभिधीयन्ते। विराट् नित्याभिव्यक्तरूपः। वरदो मोक्षदः। सगुणस्वातन्त्र्यादिगुणवान्। भूतानि प्रलीयन्तेऽस्मिन्निति। अव्यक्तं तदभिमानिदेवता। तस्य शुश्रूषुः। लिङ्गव्यत्यासः छान्दसः।

ननु कर्मणि द्वितीया' इति प्राप्तद्वितीयाऽपवादभूत 'कर्तृकर्मणोः कृति' इति विहित षष्ठ्या अपि 'न लोकाव्ययनिष्ठाकलर्थतृणाम्' इति निषेधात् 'अपवादाभावे पुनरुत्सर्गस्थितिः' इति न्यायेनोत्सर्गप्राप्तद्वितीयायामेव सत्यां शुश्रूषुस्तमिति वाच्यम्, तस्येति तु कथमिति चेन्न, न लोकेत्यत्र कृद्योगषष्ठ्या निषिद्धत्वेन तदसम्भवेऽपि कर्मण्यपि कर्तृत्वविवक्षया, शेषविवक्षया 'मातुरध्येति' 'पितुः स्मरति' इत्यादाविव षष्ठ्युपपत्तेः। तथा चोक्तं पदमञ्जर्याम् अत्रोदाहरणेषु कारकषष्ठ्यास्या प्रतिषेधः। शेषषष्ठी तु भवत्येव। ब्राह्मणस्य कुर्वन्, ओदनस्य पचन् इत्यादि बहुलप्रयोगोपलम्भादिति भावः। ननु मोक्षधर्मे यत्किञ्चिज्जीवजातं देहबद्धमित्यनेन जीवानां देहबद्धत्वमुक्त्वा ईश्वरो हीत्यादिना अंशिनो नारायणस्यैव निर्गुणादिशब्दैः देहासम्बन्ध उक्तः। न त्ववताराणामंशानामित्यत अवतारप्रसङ्गे नैतदुक्तम्। अतो नावताराश्च पृथक् शंक्या इति गीताभाष्यं मनसि निधायाह ॥ **अवतारप्रसङ्ग इति** ॥ 'यत्तद्दर्शितान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्गे अस्योक्तत्वेन प्रकरणादवतारविषयमेव तद्वाक्यम्। नारायणशब्दस्त्वंश्यभेदाभिप्राय इत्यर्थः ॥ **स्वांशिकर्मेति** ॥ दृष्टान्तस्य साधनवैकल्यं परिहर्तुं स्वांशिकर्मानिर्मितेत्युक्तम्। व्यभिचारवारकस्यापि व्याप्त्युपयोगित्ववत् साधनवैकल्यादिपरिहारकस्यापि व्याप्त्युपयोगित्वेन सार्थकत्वादिति द्रष्टव्यम्। स्वांशिकर्मनिर्मितदेहसम्बन्धित्वस्य दृष्टान्ते सत्वेऽपि पक्षे तदभावात् नञ् द्वयगर्भत्वम्। तथा च पक्षे विशेष्याभावेन दृष्टान्ते विशेषणाभावेन विशिष्टाभावोऽनुगत इति भावः ॥ **अत एवेति** ॥ देहादिसम्बन्धिदोषलेपकथनादेवेत्यर्थः। दृष्टान्तः ज्योतिरादीत्युक्तो दृष्टान्तः। अक्षाद्यभिमानिनः सूर्यमण्डलाभिमानिनश्च भिन्नांशत्वकथनेन प्रकाशाभिमानिनश्चाभिन्नांशत्वकथनादेव निन्दत इत्यर्थः। ननु मुक्तानां कथं भिन्नांशत्वम्। तेषां देहसम्बन्धाभावेन दोषलेपाभावेन भिन्नांशलक्षणाभावात्। इत्यत आह ॥ **देहयोग्यत्वादिति** ॥

## वाक्यार्थविवरणम्

पूर्वग्रन्थफलितमनुमानं वदन्नुत्तरग्रन्थमवतारयति ॥ **यदुक्तमित्यादिना** ॥ भाष्ये रामो रामः दाशरथिर्भार्गवश्चेत्यर्थः । अहं शतधेत्यादिभगवद्वाक्यम् ॥ **व्याप्त्यभावादिति** ॥ दृष्टान्ताभावेन व्याप्तिग्रहासम्भवाद्व्याप्तिज्ञानासिद्धिरिति भावः । मत्स्यादौ देहसम्बन्धित्वेऽप्यंशयधीनप्रवृत्त्यादि-मत्त्वाभावेन व्यभिचाराद्व्याप्त्यभाव इति वा । अत एव देहदोषलिप्तत्वादिति परिहारग्रन्थे देहसम्बन्धविवरणं क्रियत इति द्रष्टव्यम् ॥ **सूर्यमण्डलसाम्योक्त्येति** ॥ अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम् । 'अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथयन्नीलं परः कृष्णम्' । अथ यदेवैतदक्ष्णः शुक्लभा सैवर्गथ यन्नीलं परः कृष्णम्' । इति छान्दोग्यप्रथमाध्यायस्य श्रुत्यन्तरोक्त-स्याक्षिगतस्य शुक्लादिरूपत्रयत्वेनादित्यसाम्यस्य 'त्रिवृदिवा वै चक्षुः'' इत्यैतरेये कथितत्वादित्यर्थः ॥ **तदंशत्वम्** ॥ सूर्यमण्डलांशत्वम् ॥ **अत एवेति** ॥ अक्ष्णः सूर्यमण्डलांशत्वादेवेत्यर्थः ॥ **आवरणं तम इति** ॥ अक्ष्यभिमान्यपभ्रष्टस्य दुर्विषयादिप्रदर्शने प्रतिबन्धकीभूततमोनिवृत्ति-रादित्येन भवतीत्यर्थः ॥ **पित्तधातुरिति** ॥ श्लेष्माभिमान्यपभ्रष्टस्य श्लेष्मविरोधिपित्तधातुनिवृत्ति-वरुणेन भवतीत्यर्थः । स्वरूपभूतांशेषु मत्स्यादिषु व्यभिचारवारणाय स्वांशिकर्मानिर्मितेत्युक्तम् । एतद्विशेषणदानेऽपि न व्यभिचारपरिहार इत्याशयेनाशङ्कते ॥ **यदुक्तमिति** ॥ **उक्तविधेति** ॥ स्वांशिकर्मानिर्मितेत्यर्थः ॥ **न विशेष इति** ॥ जीवानां मत्स्यादीनां चेति शेषः ॥ **मोक्षधर्मे चेति** ॥ 'यत्किञ्चिदिह लोकेऽस्मिन्' इत्याद्युक्त्या स्वांशिकर्मानिर्मितभौतिकशरीरसम्बन्धित्वादिति हेतौ विवक्षितामिति ध्येयम् ।

ननु तर्हि भौतिकशरीरसम्बन्धित्वादित्येवास्तु मत्स्यादिषु व्यभिचाराभावादिति चेत् । सत्यम् । तथापि वियद्गतप्रकाशाद्यभिमानिषु व्यभिचारपरिहाराय सार्थक्यात् । वियद्गतप्रकाशाद्यभिमानिदेहस्य स्वांशिसूर्यकर्मनिर्मितत्वेन व्यभिचाराभावादिति ध्येयम् । ननु शुश्रूषुरित्यस्य 'सनाशंश भिक्ष उरिः' इति सूत्रेणोप्रत्ययान्तत्वादुप्रत्ययान्तस्य च 'न लोकाव्ययेति' षष्ठ्या निषेधाद्धरिं दिदृक्षुरितिवत् तं शुश्रूषुरिति वक्तव्यत्वेन तस्येति शेषः कथं क्रियत इति चेत् । उच्यते । कर्तृकर्मणोः कृतीतिप्राप्ता या कर्तरि कर्मणि च षष्ठी सैव न लोक' इति निषिध्यते, न तु शेष इत्यनेन प्राप्ता । सम्बन्धमात्रे षष्ठी । प्रकृते च कर्तृकर्मणोः' इत्यनेन षष्ठी नोच्यते येन निषेधावतारः स्यात् किन्तु शेष इति

(तत्त्वसुबोधिनी)

॥ **शुश्रूषुस्तस्येति** ॥ एवं च भूतसम्बन्धाधीनप्रलयादिमत्वात् कार्यत्वाकार्यत्वनिमित्तकाभ्यां भूतप्रलय अव्यक्तशब्दाभ्यां मुक्तजीवसमूहः तस्य नारायणस्य शुश्रूषुः मोक्षार्थं जिज्ञासुरिति योजनेति भावः। समस्तश्लोकं व्याख्यातुं शरीराणि हि भौतिकानि भवन्ति, भूतानि चेश्वरबुद्धिजानि तत्कथं तानि बध्नीयुरित्यर्थः। अत्रेश्वरो हीत्यादिनेह तत्त्वान्यभिधीयन्ते। विराट् नित्याभिव्यक्तरूपः। वरदो मोक्षदः। सगुणस्वातन्त्र्यादिगुणवान्। भूतानि प्रलीयन्तेऽस्मिन्निति। अव्यक्तं तदभिमानिदेवता। तस्य शुश्रूषुः। लिङ्गव्यत्यासः छान्दसः।

ननु कर्मणि द्वितीया' इति प्राप्तद्वितीयाऽपवादभूत 'कर्तृकर्मणोः कृति' इति विहित षष्ठ्या अपि 'न लोकाव्ययनिष्ठाकलर्थतृणाम्' इति निषेधात् 'अपवादाभावे पुनरुत्सर्गस्थितिः' इति न्यायेनोत्सर्गप्राप्तद्वितीयायामेव सत्यां शुश्रूषुस्तमिति वाच्यम्, तस्येति तु कथमिति चेन्न, न लोकेत्यत्र कृद्योगषष्ठ्या निषिद्धत्वेन तदसम्भवेऽपि कर्मण्यपि कर्तृत्वविवक्षया, शेषविवक्षया 'मातुरध्येति' 'पितुः स्मरति' इत्यादाविव षष्ठ्युपपत्तेः। तथा चोक्तं पदमञ्जर्याम् अत्रोदाहरणेषु कारकषष्ठ्यास्या प्रतिषेधः। शेषषष्ठी तु भवत्येव। ब्राह्मणस्य कुर्वन्, ओदनस्य पचन् इत्यादि बहुलप्रयोगोपलम्भादिति भावः। ननु मोक्षधर्मे यत्किञ्चिज्जीवजातं देहबद्धमित्यनेन जीवानां देहबद्धत्वमुक्त्वा ईश्वरो हीत्यादिना अंशिनो नारायणस्यैव निर्गुणादिशब्दैः देहासम्बन्ध उक्तः। न त्ववताराणामंशानामित्यत अवतारप्रसङ्गे चैतदुक्तम्। अतो नावताराश्च पृथक् शंक्या इति गीताभाष्यं मनसि निधायाह ॥ **अवतारप्रसङ्ग इति** ॥ 'यत्तद्दर्शितान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्गे अस्योक्तत्वेन प्रकरणादवतारविषयमेव तद्वाक्यम्। नारायणशब्दस्त्वंशस्वभेदाभिप्राय इत्यर्थः ॥ **स्वांशिकर्मेति** ॥ दृष्टान्तस्य साधनवैकल्यं परिहर्तुं स्वांशिकर्मानिर्मितेत्युक्तम्। व्यभिचारवारकस्यापि व्याप्त्युपयोगित्ववत् साधनवैकल्यादिपरिहारकस्यापि व्याप्त्युपयोगित्वेन सार्थकत्वादिति द्रष्टव्यम्। स्वांशिकर्मनिर्मितदेहसम्बन्धित्वस्य दृष्टान्ते सत्वेऽपि पक्षे तदभावात् नञ् द्वयगर्भत्वम्। तथा च पक्षे विशेष्याभावेन दृष्टान्ते विशेषणाभावेन विशिष्टाभावोऽनुगत इति भावः ॥ **अत एवेति** ॥ देहादिसम्बन्धिदोषलेपकथनादेवेत्यर्थः। दृष्टान्तः ज्योतिरादीत्युक्तो दृष्टान्तः। अक्षाद्यभिमानिनः सूर्यमण्डलाभिमानिनश्च भिन्नांशत्वकथनेन प्रकाशाभिमानिनश्चाभिन्नांशत्वकथनादेव निन्दत इत्यर्थः। ननु मुक्तानां कथं भिन्नांशत्वम्। तेषां देहसम्बन्धाभावेन दोषलेपाभावेन भिन्नांशलक्षणाभावात्। इत्यत आह ॥ देहयोग्यत्वादिति ॥

## वाक्यार्थविवरणम्

पूर्वग्रन्थफलितमनुमानं वदन्नुत्तरग्रन्थमवतारयति ॥ **यदुक्तमित्यादिना** ॥ भाष्ये रामो रामः दाशरथिर्भार्गवश्चेत्यर्थः । अहं शतधेत्यादिभगवद्वाक्यम् ॥ **व्याप्त्यभावादिति** ॥ दृष्टान्ताभावेन व्याप्तिग्रहासम्भवाद्व्याप्तिज्ञानासिद्धिरिति भावः । मत्स्यादौ देहसम्बन्धित्वेऽप्यंशत्वाधीनप्रवृत्त्यादि मत्त्वाभावेन व्यभिचाराद्व्याप्त्यभाव इति वा । अत एव देहदोषालिप्तत्वादीति परिहारग्रन्थे देहसम्बन्धविवरणं क्रियत इति द्रष्टव्यम् ॥ **सूर्यमण्डलसाम्योक्त्येति** ॥ अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम् । 'अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथयन्नीलं परः कृष्णम्' । अथ यदेवैतदक्ष्णः शुक्लभा सैवर्गथ यन्नीलं परः कृष्णम्' । इति छान्दोग्यप्रथमाध्यायस्य श्रुत्यन्तरोक्त स्याक्षिगतस्य शुक्लादिरूपत्रयत्वेनादित्यसाम्यस्य 'त्रिवृदिवा वै चक्षुः'' इत्यनेन कथितत्वादित्यर्थः ॥ **तदंशत्वम्** ॥ सूर्यमण्डलांशत्वम् ॥ **अत एवेति** ॥ अक्ष्णः सूर्यमण्डलांशत्वादित्यर्थः ॥ **आवरणं तम इति** ॥ अल्पाभिमान्यपभ्रंशस्य दुर्विषयादिप्रदर्शने प्रतिबन्धकीभूततमोनिवृत्ति रादित्येन भवतीत्यर्थः ॥ **पित्तधातुरिति** ॥ श्लेष्माभिमान्यपभ्रंशस्य श्लेष्मविरोधिपित्तधातुनिवृत्ति वरुणेन भवतीत्यर्थः । स्वरूपभूतांशेषु मत्स्यादिषु व्यभिचारवारणाय स्वांशिकर्मानिर्मितत्वमुक्तम् । एतद्विशेषणदानेऽपि न व्यभिचारपरिहार इत्याशयेनाशङ्कते ॥ **यदुक्तमिति** ॥ **उक्तविधेति** ॥ स्वांशिकर्मानिर्मितत्यर्थः ॥ **न विशेष इति** ॥ देवानां मत्स्यादीनां चेति शेषः ॥ **मांश्चधर्मे चेति** ॥ 'यत्किञ्चिदिह लोकेऽस्मिन्' इत्युक्त्या [illegible] हेतौ विवक्षितामिति ध्येयम् ।

ननु तर्हि [illegible] तथापि विवक्षि[illegible] स्वांशिसूर्य[illegible] इति सूत्रेण[illegible] गुरुगुरिति [illegible] [illegible] यो । प्रकृते न [illegible]

(वाक्यार्थविवरणम्)

सम्बन्धमात्र एव । न ह्यस्याः प्रतिषेधोऽस्तीति । नन्वथापि शुश्रूषायां भगवतः कर्मत्वं विवक्ष्यताम् । तथा च कर्मणि द्वितीयायां प्राप्तायां तदपवादकत्वेन कर्तृकर्मणोरित्यनेन षष्ठी प्राप्ता न लोकेति तदपवादेऽपवादस्याप्यपवादे पुनरुत्सर्गस्यैव प्राप्तिरिति न्यायेन कर्मणि द्वितीयैव प्राप्ता । तथा च तमिति शेष इत्येव कुतो नोक्तमिति चेत् । सत्यम् । तर्हि साक्षाद्भगवत्कर्मकतत्पादसंसेवनादिरूपैव सेवा प्राप्नोति । न तु तत्सम्बन्धिसेवा । अनया च क्रियमाणा जगत्सर्जनादिरूपा सेवा भगवत्सेवैव । सा न भगवत्कर्मिका । भगवत्सम्बन्धिनी तु भवति । अतः सामान्यतो भगवत्सम्बन्धिसेवामात्रप्राप्त्यर्थं शेषे षष्ठी विवक्षितेति । तथा च तस्य शुश्रूषुरित्यस्य तत्सम्बन्धिसेवां कर्तुमिच्छुरिति सिद्ध्यतीति ध्येयम् । गीताभाष्यटीकानुसारेण नञा निर्दिष्टमनित्यमित्यङ्गीकृत्य षष्ठीनिषेधस्यात्राप्राप्तिरिति चात्र समाधानं द्रष्टव्यम् । स्वरूपासिद्धिसाधनवैकल्यपरिहाराय स्वांशिकर्मानिर्मितेत्युक्तम् । स्वांशिकर्मनिर्मितशरीरसम्बन्धित्वविवक्षायां स्वरूपासिद्धिप्राप्त्या नञ्द्वयगर्भत्वम् । तथा च स्वांशिकर्मानिर्मितदेहसम्बन्धित्वस्य विशिष्टस्याभावो दृष्टान्ते विशेषणस्याभावेन । पक्षे तु विशेष्याभावेन अनुगत इति न दोषः ।

ननु पक्षे देहसम्बन्धित्वरूपविशेषस्यापि सत्त्वेन न तदभावप्रयुक्तो विशिष्टाभाव इति स्वरूपासिद्धिरिति चेत् । सत्यम् । देहे भौतिकत्वरूपविशेषणस्याभिप्रेतत्वेन विशेष्याभावप्रयुक्तविशिष्टाभावसम्भवादिति ध्येयम् । सूत्रभाष्ययोरस्पष्टप्रतीतोऽप्ययं प्रयोगः कस्मादुच्यत इत्यत आह ॥ **अत एवेति** ॥ एवंरूपप्रयोगस्याभिमतत्वादेव पूर्वं भाष्ये 'यथादित्ये' इत्यादिना ज्योतिरादिवदिति दृष्टान्तो विवृत इत्यर्थः ॥ **अत एवेति** ॥ एतदनुमाने साध्यादिवैकल्यपरिहारार्थमेवेत्यर्थः । देहसम्बन्धित्वं हेतुं कृत्वा तेन जीवानामंश्यधीनप्रवृत्तिमत्त्वसाधने मुक्तजीवेषु भौतिकदेहसम्बन्धित्वाभावेन भागासिद्धिः स्यादतो व्याचष्टे ॥ **देहयोग्यत्वादित्युक्त्येति** ॥ तथा च भौतिकदेहसम्बन्धित्वं नाम तद्योग्यत्वं विवक्षितम् । योग्यत्वं च भौतिकदेहवत्त्वावच्छेदकावच्छिन्नत्वम् । तदवच्छेदकं च जीवत्वं तदवच्छिन्नत्वं मुक्तेष्वप्यस्तीति न भागासिद्धिरिति भावः ।

## वाक्यार्थमञ्जरी

जीवस्य देहसम्बन्धान्निमित्तात्तदनुज्ञापरिहारौ परमात्मानुज्ञाऽधीनप्रवृत्तिमोक्षौ च स्तः कथं ज्योतिरादिवत् यथाज्योतिरादेरक्ष्यभिमान्यादेर्देहसम्बन्धात्सूर्याद्यनुज्ञाधीनप्रवृत्त्यादिस्तथेत्यर्थः

(वाक्यार्थमञ्जरी)

॥ **कनीनिकेति** ॥ तारकेत्यर्थः रक्तेत्यर्थः ॥ **उत्तरत्रेति** ॥ ब्रह्माण्डबाह्यजलाभिमानी वरुणः अन्तः शुद्धोदकसमुद्राभिमानीतदभिन्नांशः श्लेष्माभिमानी तद्भिन्नांश इति द्रष्टव्यमित्यर्थः ॥ **स्वांशिकर्मेति** ॥ शरीरसम्बन्धित्वस्याभिन्नांशेऽपि सत्त्वाद्व्यभिचारः ततः स्वांशिकर्मानिर्मितेत्युक्तं शरीरसम्बन्धित्वं च तद्योग्यत्वं तेन न मुक्तेषु भागासिद्धिः ॥ **मोक्षधर्मे चेतीति** । तत्र हीनशरीराणि भौतिकानि भवन्ति भूतानि चेश्वरबुद्धिजातानि तत्कथं तानि तद्धर्मायुरित्युक्तेरिति भावः । अक्षरार्थश्च हेविशांपते इह चेतनवर्गे अस्मिल्लोके यत्किञ्चिद्देहसम्बद्धं तत्सर्वम् ईश्वरबुद्धिजैः पञ्चभिर्भूतैराविष्टं बद्धं ईश्वरस्तु महत् महनीयः भूतं सर्वदाविद्यमानः नारायणः मुक्ताश्रयः विराट् नित्याभिव्यक्तिरूपः सगुणः स्वातन्त्र्यादिगुणवान् भूतानि प्रलीयन्ते यस्मिन् तत् भूतप्रलयम् अव्यक्तं तदभिमानिनी रमा तस्येशस्य शुश्रूषुः सेवाकर्त्रीति प्रमेयदीपिकादावगन्तव्यः । अस्त्वेतन्मूलरूपविषयम् अवताराणान्तु देहसम्बन्धित्वं स्यादेवेत्यत आह ॥ **अवतारप्रसङ्गादिति** ॥ यत्तद्दर्शितवान् ब्रह्मरूपं हयशिरोऽभिदमिति हयग्रीवावतारप्रसङ्ग इत्यर्थः ॥ **स्वांशिकर्मेति** ॥ देहसम्बन्धित्वादित्युक्ते स्वरूपासिद्धिः दृष्टान्तस्य साधनवैकल्यता च अतः स्वांशिकर्मनिर्मितेत्युक्तम् । स्वांशिकर्मनिर्मितदेहसम्बन्धित्वस्य दृष्टान्ते सत्त्वेऽपि पक्षे तदभावात् नञ्द्वयगर्भत्वं तथा च पक्षे विशेष्याभावेन दृष्टान्ते विशेषणाभावेन विशिष्टाभावानुगम इति भावः ॥ **अत एवेति** ॥ एवं प्रयोगद्वयस्यात्राभिमतत्वादेव ज्योतिरादिवदिति दृष्टान्तो यथेत्यादिनाविवृत इत्यर्थः अतो न भाष्यकारानभिमतमेतदिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ ४९ ॥

**अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम् । तथा च चतुर्वेदशिखायाम्– 'तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य परमस्य पञ्चरूपाणि दशरूपाणि शतरूपाणि सहस्ररूपाण्यमितरूपाणि । तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । अथावराः सर्व एवापूर्णाः सर्व एव बध्यन्तेऽथ मुच्यन्ते च केचन' इति ।**

## तत्त्वप्रदीपिका

**असन्ततशक्तित्वात् ।**

'सर्वत्र सर्वकृचापि हयग्रीवादिरूपकः ।
ज्ञानादिरक्षको विष्णुर्जामदग्न्यादिरूपवान् ।
ज्ञानाद्युत्पादको नित्यं कृष्णादिर्दोषनाशक' इति ब्रह्मतर्के ॥

## तत्त्वप्रकाशिका

**युक्त्यन्तरेण मत्स्यादीनां जीवानां चैकविध्यं निराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ असन्तते- श्चेति ॥ जीवस्य सम्यक् शक्त्यभावान्मत्स्यादीनां तु तद्भावादंशत्वेऽप्युक्तस्याव्यतिकरो व्यत्यासा- भाव इति भावः । मत्स्यादीनां पूर्णशक्तित्वं न जीवस्येत्येतत्कुत इत्यत आह ॥ तथा चेति ॥ कृष्णादिः कश्चन व्यूहः । पञ्च नारायणादीनि । असंमितानि निरुपमानि ।**

## गुर्वर्थदीपिका

अपूर्णशक्तित्वाच्चेति वदता सम्यक्ततिः पूर्णता शक्त्यादिगुणैः सम्पूर्णता सन्ततिः तदभावोऽ- सन्ततिरिति व्युत्पत्तिस्सूचिता । अथावरा अधमा जीवाश्च प्रतिमात्वाद्रूपाणीत्युच्यन्त इति योग्यपदाध्याहारेण श्रुतेस्सम्बन्धः ।

## भावदीपः

भाष्यं सूत्रारूढं कुर्वन् सूत्राक्षरार्थमाह ॥ **जीवस्येति** ॥ ज्ञस्येत्यनुवर्तत इति भावः । उक्तस्य नैवं पर इत्युक्तस्य । ननु श्रुतौ पञ्च रूपाणीत्यादौ सामान्यतो निर्दिष्टानां विशेषोद्देशमकृत्वा त्रीणि रूपाणीति निर्दिष्टानां विशेषोद्देशे किं बीजमित्यत आह ॥ **कृष्णादिः कश्चनेति** ॥ प्रागुक्तत्वादाह ॥ **पञ्चेति** ॥ दशेत्यस्य प्रसिद्धत्वाद्वा मत्स्यः कूर्मो वराह इति प्रागुदाहृतश्रुतौ स्पष्टत्वाद्वानुक्तिः । अन्योन्यमसमानानीति भ्रमनिरासायाह ॥ **निरुपमानीति** ॥

## वाक्यार्थमुक्तावली

सूत्रे ज्ञस्येति शेषः । ज्ञस्यासन्ततेः शक्त्या सम्यगेवाविस्तृत्वात् । असंपूर्णशक्तित्वाच्च अव्यतिकरः नैवंपर इत्युक्त व्यत्यासाभाव इत्यर्थः । साम्यं नास्तीति यावत् । इति भावेनापूर्णशक्तित्वाच्चेति भाष्यं व्याचष्टे ॥ **जीवस्येत्यादिना** ॥

## वाक्यार्थविवरणम्

**न व्यूह इति** ॥ तथा चैतानि स्वतन्त्रावताराण्येव न नारायणादिपञ्चरूपादिवद् व्यूह इत्यर्थः ।

## वाक्यार्थमञ्जरी

जीवस्यासन्ततेरपूर्णत्वाच्च मत्स्यादिसाम्यं नास्तीत्यस्याव्यतिकरः व्यत्यासाभाव इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ आभास एव च ॐ ॥ ५० ॥**

**'रूपं रूपं प्रतिरूपो बभूव' (ऋ.सं. ६-४७-१८) इति प्रतिबिम्बत्वाच्च न साम्यम् । वाराहे च –**

**'द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।**
**प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ॥**
**प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः ।**
**प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु' ॥ इति ।**

**'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते ।**
**जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेः' ॥ इति पैङ्गिश्रुतिः ।**

**'यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततमि'(प्र.उ. ३-३) ति च श्रुतिः ।**

॥ इति अंशाधिकरणम् ॥

## तत्त्वप्रदीपिका

'रूपं रूपं प्रतिरूपो बभूव' प्रतिबिम्बो बभूवेत्यर्थः । 'तदस्य' विष्णो 'रूपं' जीवस्य दर्शनाय । यथा पुरुषे च्छायाऽऽतता तद्वदेतस्मिन्विष्णावेव विश्वमाततम् ।

'तमेवाऽयं प्रपद्येत यदंशाभासको ह्ययम् ।
जीवराशिस्समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः ।
किञ्चित्सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यत' इति नारायण श्रुतिः ।

## तत्त्वप्रकाशिका

युक्त्यन्तरेणोक्तमर्थं स्थापयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आभास एवेति** ॥ अंशत्वाविशेषेऽपि जीवानां प्रतिबिम्बांशत्वमस्ति । 'रूपं रूपम्' इति श्रुतेः । न च तन्मत्स्यादीनामतो नैकविधतेति भावः । जीवसमुदायः परमेश्वरस्य रूपं रूपं प्रतिरूपो भूत्वा वर्तते तद्बिम्बरूपमस्य मुक्त्यर्थं साक्षात्कारविषयो भवति । स च परमेश्वरः स्वसामर्थ्येनानन्तजीवबिम्बरूपो ज्ञायते । अस्यानन्तानि हरिनामकानि रूपाणि व्यूहशः सन्तीति प्रसिद्धमित्यर्थः । सूत्रार्थे स्मृतिं चाह ॥ **वाराहे चेति** ॥ परे स्वरूपांशाः । न जीवस्य परमात्मांशत्वं युक्तं तदतिरिक्तोपाध्यभावादित्यत आह ॥ **सोपाधिरिति** ॥ एवमंशत्वेन श्रुत्यादिसिद्धस्य जीवस्य मत्स्यादिवदंशत्वं नास्ति । अत एवानंशत्वश्रुतिरुपपन्नेत्युक्तं भवति । न चाप्रामाण्यमेव किं न स्यात्किं यथा कथञ्चिदविरोधापादनेनेति वाच्यम् । वाक्यप्रामाण्यकल्पनस्य वक्तृमिथ्याज्ञानादिमूलत्वात् । वेदस्यापौरुषेयत्वादिति । अतः श्रुत्यविरोधेन जीवस्येश्वरांशत्वोपपत्तेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

रूपं रूपमिति द्वितीयाबलात्प्रतीतिर्लभ्यत इति भावेनोक्तं रूपं रूपं प्रतीति । शतादशेत्यस्यार्थः स्पष्टत्वान्नोक्तः । परमात्मांशत्वमित्यत्र प्रतिबिम्बांशत्वमिति ग्राह्यम् । अंशत्वोक्त्या नीचजीवानामतिसमर्थमत्स्याद्यंशानां चाभाससमानयोगक्षेमता मा भूदिति 'अंशो नानाव्यपदेशात्' 'अन्यथा चापि दाशकितवादित्वमधीयत एके' 'प्रकाशादिवन्नैवं परः' 'स्मरन्ति च' 'अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्' 'असन्ततेश्चाव्यतिकरः' 'आभास एव च' इति सूत्रैरपि सूत्रैः बहुधा पराक्रान्तमिति ज्ञेयम् ।

## भावबोधः

'रूपं रूपं प्रतिरूपो बभूव । तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' ॥

इति ऋचं व्याचष्टे– **जीवसमुदाय इति** ॥ 'शृण्वे वीर उग्रमुग्रम्' इति त्रिविधजीवसङ्घस्य प्रस्तुतत्वादेवमुक्तम् । मायाभिरित्यस्यार्थः **सामर्थ्येनेति** ॥ पुरुरूप इत्यस्यार्थो **अनन्तजीवविम्वरूप इति । अत एवानंशत्वश्रुतिरिति** । अनेन दृष्टभेदानुसारेण तासां सामर्थ्योपपत्तेरिति न्यायविवरणमपि व्याख्यातं भवति । 'प्रकाशवत्' इत्यादीनाम् 'आभासः' एवेत्यन्तानां सर्वेषामपि सूत्राणामर्थतोऽनंशत्वश्रुतिगतिप्रदर्शकत्वात् तदवसाने तत्परन्यायविवरणतात्पर्यमुक्तं भवति । अप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वादिति न्यायविवरणं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे– **न चेत्यादिना** ॥

अत्राद्ये– जीवानामीश्वरांशत्वं प्रतिज्ञाय 'नानाव्यपदेशात्' इत्यनेनानेकविधभगवत्सम्बन्धित्व-रूपांशत्वव्यपदेशरूपप्रमाणोक्तिः । 'अन्यथा चापि दाशकितवादित्वमधीयत एके' इत्यंशेन श्रुत्युपोद्बलकभेदाभेदव्यपदेशान्यथानुपपत्तिरूपप्रमाणोक्तिः । द्वितीये– तद्युक्त्युपोद्बलिकायाः सामान्येनांशत्वप्रतिपादिकायाः श्रुतेरुक्तिः । तृतीये– श्रुतिमूलकस्मृत्युक्तिः । चतुर्थे– अंशत्वेऽपि सदृष्टान्तं जीवानां मत्स्याद्यसाम्यप्रतिज्ञा । पञ्चमे– दृष्टान्तमात्रस्यासाधकत्वात्तत्र स्मृतिरूप-प्रमाणोक्तिः । षष्ठे– सदृष्टान्तं तदुपोद्बलकयुक्त्युक्तिः । अपूर्णशक्तित्वस्य मत्स्याद्यसाम्यसाधकत्व-वत् षष्ठोक्तदेहबद्धत्वरूपदेहसम्बन्धसाधकत्वस्यापि सम्भवात्, सप्तमे तदुक्तिः । प्रतिबिम्बत्वस्य मत्स्याद्यसाम्य इव सप्तमोक्तापूर्णशक्तित्वेऽपि प्रयोजकसम्भवात् अष्टमे तदुक्तिरिति सूत्रक्रमः ।

## भावदीपः

'रूपं रूपं प्रतिरूपो बभूव' तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शता दश' इति श्रुताविन्द्रशब्दितेश्वरस्य प्रतिरूपो बभूवेति प्रतिबिम्बत्वमुच्यत इति भ्रमनिरासाय भगवतो रूपं रूपं प्रति जीवाख्यः प्रतिरूपो बभूवेति चतुर्थाध्यायबृहदारण्यक-भाष्योक्तमर्थमाह ॥ **जीवसमुदाय इत्यादिना** ॥ 'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिने-नीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्' इति पूर्वत्र त्रिविधजीवराशेः प्रकृतत्वादस्येतीदंशब्देनात्र परामर्शाचेति भावः । इन्द्र इति श्रवणात्परमेश्वरस्येत्युक्तम् । 'इदिपर-

(भावदीपः)

मैश्वर्ये' इति धातोः । बभूवेत्यस्यातीतार्थत्वमात्रभ्रान्तिनिरासायार्थमाह ॥ **भूत्वा वर्तत** इति ॥ अनादिकालमारभ्य प्रतिबिम्बतयास्त इत्यर्थः । बभूवेति सदेव सोम्येदमग्र आसीदितिवदनादित्वार्थ इति बृहद्भाष्योक्तेरिति भावः । कुत एवमर्थ इत्यत उक्तार्थदाढ्र्याय श्रुतिशेषार्थमाह ॥ **तद्बिम्बरूपमिति** ॥ अस्य प्रतिबिम्बत्वेनोक्तजीवस्येत्यर्थः । योग्यस्येति भावः । प्रतिचक्षणायेत्यस्य तात्पर्यं **साक्षात्कारेति** ॥ मायाभिरित्यादिपदत्रयस्य क्रमेणार्थः **स्वसामर्थ्येन'** इत्यादि । बहुवचनमनन्तविशेषाभिप्रायमिति भावः ।

ननु कथमेकस्य (पुरूणां रूपः पुरुरूप इति) पुरूणामनन्तजीवानां रूपो बिम्ब इत्यत उत्तराधिकरणोपयोगित्वाय चतुर्थपादं व्याचष्टे ॥ **अस्येति** ॥ इन्द्रस्येत्यर्थः । युक्ता इत्यस्य व्यूहश इति हिशब्दार्थः प्रसिद्धमिति । यावदात्मभावित्वाच्चेत्यत्रोक्तविरोधनिरासायाह ॥ **तदतिरिक्तोपाधीति** ॥ स्वरूपातिरिक्तप्रतिबिम्बोपाध्यभावादित्यर्थः । ननु अनंशत्वश्रुतेर्गतिं चाहेति सम्बन्धभाष्यस्यैतावता सूत्रपञ्चकेन कोऽर्थः सम्पन्न इत्यत आह ॥ **एवमिति** ॥ सूत्रपञ्चकभाष्योक्तप्रकारेणेत्यर्थः । अत एव मत्स्यादिवत्स्वरूपांशत्वाभावादेवेत्यर्थः । एतेन दृष्टभेदानुसारेण तासामर्थोपपत्तेरिति न्यायविवरणोक्तं विवृतम् । श्रुतेरप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वादिति तत्रत्यं वाक्यं विवृणोति ॥ **न चेत्यादिना** ॥ **अत इति** ॥ अंशत्वे श्रुतिस्मृत्यर्थापत्त्यादीनां भावात् भिन्नांशत्वेन मत्स्याद्यसाम्यात् अनंशत्वश्रुतेः स्वरूपांशत्वाभावपरत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

'रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रति चक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' इति मन्त्रं व्याचष्टे – **जीवसमुदाय इति** ॥ **मूले सोपाधिरनुपाधिश्चेति** ॥ **प्रतिबिम्बः** प्रतिबिम्बशब्दाभिधेयोऽर्थः । सोपाधिरनुपाधिरिति द्विधा द्विःप्रकार ईयते । प्रतिबिम्बशब्दस्य अक्षादिशब्दवत् नानार्थत्वात् न तदर्थस्य सर्वस्योपाध्यपेक्षेति भावः । जीवानामंशाभासत्वं श्रुत्यन्तरेण द्रढयति – **भाष्ये यथैवेति** ॥ 'रूपं रूपमित्यंशाभासत्वप्रतिपादकव्यवहितश्रुतिसमुच्चयार्थश्चशब्दः । यथैव छाया पुरुषे आतता पुरुषाधीनेति यावत् । तथा एतस्मिन्परमात्मनि एतज्जीवजातम् आततमित्यर्थः ।

सन्देहटीकासूचितपूर्वपक्षस्तु – न जीवः परमेश्वरांशः । तत्र प्रमाणाभावात् । न च 'अंशा एव हीमे जीवा अंशी हि' इति श्रुतिः, प्रमाणमिति वाच्यम् । नैवांश इति' श्रुतिबाधितत्वेन

(अभिनवचन्द्रिका)
स्वार्थनिश्चायकत्वाभावेन तच्छ्रुतेरप्रामाण्यात् । जीवेशयोर्भेदस्य साधितत्वेन भिन्नस्य च अंशत्वायोगात् । असम्भवदर्थायाः प्राचीनश्रुतेः, सम्भवदर्थाया 'नैवांश' इति श्रुतेः प्रबलत्वेन बाधकत्वात् । एवं च अंशत्वश्रुतेरप्रामाण्यात् न तत्समन्वयो हरौ युक्त इति ।

टीकोक्तपूर्वपक्षस्तु – अनिर्णायकमेव श्रुतिद्वयम् । परस्परप्रतिबन्धात् । न च व्रीहियवश्रुत्योरिव विकल्पो युक्तः । वस्तुविकल्पायोगात् । न च देशकालभेदेन व्यवस्थितो विकल्पः । विशेषप्रमाणाभावात् । अतः श्रुतिद्वयस्याऽप्रामाण्यमेवेति नोक्तसमन्वयो युक्त इति ।

सिद्धान्तस्तु – अंश एव जीवः परमात्मनः । मां रक्षत्वित्यादिनानाप्रकारेण जीवस्य ईशसंबन्धित्वव्यपदेशात् । तत्सम्बन्धित्वस्यैव तदंशत्वरूपत्वात् । 'पादोऽस्य विश्वाभूतानि' इति मन्त्रवर्णाच्च । 'ममैवांशो जीवलोके' इति स्मृतेश्च । ननु न जीवस्येश्वरांशत्वं युक्तम्, अनंशत्वश्रुतिविरोधादिति चेत्, न – अनंशत्वश्रुतेर्मत्स्यादिवत् स्वरूपांशत्वाभावपरत्वात् । अत एव न मत्स्यादिभिः सुखादिसाम्यम् । न चांशोक्तिसाम्यात् जीवानां भिन्नांशत्वं, मत्स्यादीनां स्वरूपांशत्वमिति वैषम्यं न युक्तमिति वाच्यम् । कालाग्निखद्योतादेः तेजोंशत्वोक्तिसाम्येऽपि स्वरूपांशात्वभिन्नांशत्व-रूपवैषम्यदर्शनात् ।

ननु – कालाग्निखद्योतादी नामेकप्रकारांशत्वाभावेऽपि मत्स्यादीनां जीवानां च तथात्वं किं न स्यादिति चेत्, न । भागवते एते स्वांशकलाः पुंस' इत्यादिना वराहादीनानाभिन्नांशत्वमुक्त्वा 'अतः परं यदव्यक्तम्' इति जीवानां भिन्नांशत्वाऽभिधानात् । परमात्माधीनप्रवृत्तिमोक्षाभ्यां जीवस्य भिन्नांशत्वावगतेश्च । अंशत्वेन श्रुत्युक्तत्वेऽपि मत्स्यादीनां पूर्णशक्तित्वात्, जीवानां तदभावाच्च नोक्तव्यतिकरः । 'रूपं रूपं प्रतिरूपो बभूव' इति जीवानां प्रतिबिम्बत्वाभिधानाच्च । अतः श्रुत्यविरोधित्वेन जीवस्येश्वरांशत्वोपपत्तेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

जीवः परस्याभास एव प्रतिबिम्ब एव न तु स्वरूपांशः अतश्चाव्यतिकर इति सूत्रार्थं हृदि निधायाह **अंशत्वेति** ॥ अंशशब्दवाच्यत्वाविशेषेऽपीत्यर्थः । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति ऋचं व्याचष्टे ॥ **जीवसमुदाय इति** ॥ 'श्रुण्वे वीरमुग्रमुग्रम' इति त्रिविधजीवसंघस्य प्रस्तुतत्वादेवमुक्तम् । मायाभिरित्यस्यार्थः ॥ **सामर्थ्येति** ॥ पुरुरूप इत्यस्यार्थो **अनन्तजीवप्रतिबिम्ब इति** ॥ अस्य

(वाक्यार्थमुक्तावली)

परमात्मनः शताशतसङ्ख्याकानि दशादशसंख्याकानि । शतदशशब्दावत्र **दशेति** च ॥ एवं सर्वशब्दो बहुवचने इत्युक्तरीत्यानन्तवाचिनौ अनन्तानीति यावत् । हरयो हरिनामकानि रूपाणि । युक्ताः मिलितानि व्यूहशः सन्तीति हि प्रसिद्धमित्यर्थः । सोपाधिरनुपाधिरित्यस्य भिन्नोपाधिसहित-स्तद्रहितश्चेत्यर्थः । अनुपाधिर्यथा जीवः परस्य । सोपाधिर्यथा इन्द्रचापोरवेरिति च योज्यम् । न जीवस्य परमात्मांशत्वं युक्तम् । तदतिरिक्तोपाध्यभावादित्यत आहेत्येतदेव टीकावाक्यं सोपाधिरिति पैङ्गिश्रुतेर्यथैषेति नारायणश्रुतेश्चावताररूपमिति बोध्यम् । स्वरूपातिरिक्तोपाध्यभावेऽपि विशेष-शक्त्या स्वरूपान्तःकरणमेव तदधीनत्वे सति तत्सादृश्य रूपप्रतिबिम्बत्वापादकं भवतीति श्रुतिद्वयभावः । तथा हि तत्त्वप्रदीपे । यथा पुरुषे छाया आतता तद्वत् एतस्मिन् विष्णावेव विश्व-माततम् । तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम् । जीवराशिः समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः । किञ्चित्सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते ॥ **नारायणश्रुतिरिति** ॥ अनंशत्वश्रुतेर्गतिं नाहति घट्टावतारस्य प्रकाशादिवन्नैवंपर इत्यारभ्याभास इत्यन्तसूत्रैरर्थतः परिहारो जात इत्याह ॥ **अत एवेति** ॥ तदुक्तं न्यायविवरणे । दृष्टभेदानुसारेण तेषामर्थोपपत्तेरिति । नन्वंशत्वश्रुतेश्च व्यवस्था-कथनं व्यर्थमप्रामाण्योपपत्तेरित्याशङ्क्य परिहरति ॥ **न चेति** ॥ उक्तं च न्यायविवरणे । अप्रामाण्यपरिकल्पनस्य विपरीतज्ञानमूलत्वादिति । अत्राद्यं सूत्रत्रयम् अंशत्वसाधकम् । तत्राद्ये श्रौतनानाव्यपदेशभेदाभेदान्यथानुपपत्त्युक्तिः । द्वितीये श्रुतेः । तृतीये तदर्थनिर्णायकस्मृतेरिति क्रमः । उत्तरं सूत्रपञ्चकम् अंशत्वे मत्स्यादिसाम्यप्रसङ्गादनंशत्वश्रुतिबाधपरिहारपरम् । तत्राद्ये प्रकाशादिदृष्टान्तेन मत्स्यादीनां देवानां च स्वरूपास्वरूपांशत्वोक्त्या साम्यव्यवच्छेदः । द्वितीये स्मृत्या । तृतीये अंश्यधीनप्रकृत्यादिमत्वयुक्त्या । चतुर्थे अपूर्णशक्तित्वयुक्त्या । पञ्चमे प्रतिबिम्बत्वयुक्त्येति क्रमः ।

## तत्त्वसुबोधिनी

साकाङ्क्षत्वाच्छेषं पूरयति ॥ **नैकप्रकार इति** ॥ 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शतादश' । इत्यत्र प्रतिरूपो बभूवेत्यनेनेन्द्रशब्दोक्तेश्चास्य प्रतिबिम्बत्वं नोच्यते । प्रतिरूपप्रतियोगिवाचकरूपशब्देनैवोक्तेः । किन्तु अस्येति शब्दनिर्दिष्टजीवसमुदायस्यैवेत्याह ॥ **जीवसमुदाय इति** ॥ 'श्रृण्वे वीरमुग्रमुग्रम्' इति त्रिविधजीवसङ्घस्य प्रस्तुतत्वादेवमुक्तम् । मायाभिरित्यस्यार्थः ॥ **सामर्थ्येनेति** ॥ पुरुरूप

(तत्त्वसुबोधिनी)
इत्यस्यार्थः **अनन्तजीवविम्बरूप इति** ॥ **अत एवेति** ॥ मत्स्यादिवदंशत्वाभावेनेत्यर्थः । ननु वेदस्यापि मिथ्याज्ञानादिमूलत्वात् अप्रामाण्यं स्यादित्यत आह ॥ **वेदस्येति** ॥ तथा च नाप्रामाण्यमिति भावः । अत्राद्ये सूत्रे जीवानामीश्वरांशत्वे अंशत्वव्यपदेशरूपप्रमाणोक्तिः । अन्यथा चापि दाशकितवादित्वमधीयत इत्यनेन भेदाभेदव्यपदेशान्यथानुपपत्तिरूपप्रमाणोक्तिः । द्वितीये सामान्येनांशत्वप्रतिपादकश्रुतेरुक्तिः । तृतीये श्रुतिमूलकस्मृत्युक्तिः । चतुर्थे अंशत्वेऽपि दृष्टान्तजीवानां मत्स्याद्यसाम्यप्रतिज्ञा । पञ्चमे मत्स्याद्यसाम्ये स्मृतिरूपप्रमाणोक्तिः । षष्ठे सदृष्टान्तं तदुपोद्बलकयुक्त्युक्तिः । सप्तमे मत्स्याद्यसाम्ये साधकान्तरस्य पूर्णशक्तित्वस्योक्तिः । अष्टमे प्रतिबिम्बत्वस्योक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**प्रतिरूपः** ॥ प्रतिबिम्बः । नन्वेकस्य भगवतोऽनेकजीवबिम्बत्वं कथमित्यत आह ॥ **स चेति** ॥ ननु स्वसामर्थ्येनाप्यनन्तजीवबिम्बत्वं कथम् । तथात्वे भगवतोऽप्यनन्तरूपमपेक्षितं स्यात् । न हि तदस्त्यप्रसिद्धत्वादित्यत आह ॥ **अस्येति** ॥ शता दशेत्यस्यानन्तानीति हरय इत्यस्य हरिनामकानीति, युक्ता इत्यस्य व्यूहशः सन्तीति, हीत्यस्य प्रसिद्धमिति व्याख्यानं द्रष्टव्यम् ॥ **तदतिरिक्तेति** ॥ परमात्मांशत्वरूपप्रतिबिम्बत्वघटकस्य स्वरूपातिरिक्तस्योपाधेरभावादित्यर्थः । 'स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना' इत्युक्तत्वादिति ज्ञेयम् । तत्सत्त्वे तन्नाशेन नाशापत्तिरिति भावः ॥ **अत एवेति** ॥ मत्स्यादिवदंशत्वाभावादेवेत्यर्थः ।

## वाक्यार्थमञ्जरी

जीव ईशस्याभास एव प्रतिबिम्ब मत्स्यादिस्तु न तथा अतोपि नोक्तव्यत्यास इत्यर्थः । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । 'इन्द्रोमायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः शतादश' इति ऋचं व्याचष्टे ॥ **जीवसमुदाय इति** ॥ शृण्वे वीरमित्यादि त्रिविधजीवसङ्घस्य प्रस्तुतत्वादेव मुक्तं मायाभिरित्यस्यार्थः सामर्थ्येनेति पुरुरूप इत्यस्य **अनन्तविम्बरूप इति** युक्ता इत्यस्य व्यूहश इति तदतिरिक्तेति स्वरूपातिरिक्तेत्यर्थः । भाष्ये यथा छायापुरुषाधीना तथैतज्जीव-जातमेतस्मिन्नीशे आततमधीनमित्यर्थः । अनंशत्वश्रुतेर्गतिं चाहेत्यादिना लब्धमर्थं दर्शयति ॥ **एवमिति** ॥

॥ इति अंशाधिकरणम् ॥

## १९. अथ अदृष्टाधिकरणम्

## सूत्रभाष्यम्

प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह –

**॥ ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥**

अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ।

## तत्त्वप्रदीपिका

अनादिवियाविद्याकर्मतत्संस्कारवैचित्र्याद्वैचित्र्यम् । तच्च स्वाभाविकम् । अनादीत्युक्तत्वात् ।

## तत्त्वप्रकाशिका

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवस्येश्वरप्रतिबिम्बत्वविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । हरौ सर्वश्रुतीनां समन्वयो निरूपितः । तत्र जीवप्रतिबिम्बताविषयश्रुतीनां विरोधेनप्रामाण्ये समन्वयानुपपत्तिरित्यसौ निरसनीय एव । प्रकृतो जीव एव विषयः । भगवत्प्रतिबिम्बो न वेति सन्देहः । श्रुतिविगानं सन्देहबीजम् । 'रूपं रूपम्' इति श्रुतिरेका । प्रकरणवशाद्विरुद्धश्रुत्यन्तरमनुमीयते । न जीवा भगवत्प्रतिबिम्बा इति पूर्वः पक्षः । तथा श्रुतेर्विद्यमानत्वात् । न च प्रतिबिम्बत्वश्रुतिविरोधः । अन्यश्रुतेः सयुक्तिकत्वात् । अस्ति खल्वयं जीवानामन्योन्यं भेदः सुरनरतिर्यगादिरूपः । न चैकप्रतिबिम्बानां मिथो वैचित्र्यं सम्भवति । भवति चेद्भवत्वेको भगवत्प्रतिबिम्बः । तदयं प्रयोगः । न जीवा एकप्रतिबिम्बा भेदवत्त्वात् घटपटवदिति । अतः सयुक्तिकश्रुतिविरोधात्प्रतिबिम्बत्वश्रुतिरप्रमाणमिति नोक्तसमन्वयसिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतारयति ॥ **प्रतिबिम्बानामिति** । जीवानां प्रतिबिम्बत्वमभ्युपेत्य तेषां वैचित्र्ये कारणान्तरमाह सूत्रकार इत्यर्थः । सूत्रं व्याचष्टे ॥ **अनादीति** ॥ न वैचित्र्यान्यथानुपपत्त्या सर्वेषां प्रतिबिम्बत्वाभावो वाच्यः । अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपि विद्याद्यदृष्टवैचित्र्येण देवदानवमानवादिवैचित्र्यस्योपपत्तेः । 'यथाप्रज्ञं हि सम्भवाः' इत्यादिश्रुतेः । न चादृष्टवैचित्र्यमेवासम्भावितम् । तस्यापि पूर्वादृष्टवैचित्र्यादुपपत्तेः । तस्याप्येवमनादित्वादिति भावः ।

## गुर्वर्थदीपिका

**'प्रकरणवशात्'** इत्यस्य श्रुतिद्वयविरोधपरिहारात्मकपादाख्यप्रकरणवशादित्यर्थः । अस्मिन्नधिकरणेऽपि श्रुतिविरोधाभावे नेदमधिकरणमस्मिन्पादे निबध्नीयात् । निबबन्ध च सूत्रकारः । अतोऽस्मिन्नप्यधिकरणे विरुद्धा काचित् श्रुतिरनुमीयत इति भावः । इदं च स्पष्टं भाष्यकृताऽनुक्तत्वादेवोक्तम् । वस्तुतस्तु 'नायं तस्यापि कश्चन' इति श्रुतिरेवाप्रतिबिम्बत्वघटिका स्यादित्यतो नासर्वज्ञता भाष्यकारस्येति ज्ञेयम् । अस्ति खल्वयं जीवानामन्योन्यं भेदः । सुरासुरनरतिर्यगादिरूप इत्यत्र सुरत्वं सात्त्विकत्वेनोत्तमजीवत्वम्, असुरत्वं तामसत्वेनाधमजीवत्वं, नरत्वं मिश्रत्वेन मध्यमजीवत्वं, तिर्यक्त्वमभिलापाद्यशक्तत्वेन मन्दजीवत्वम्, आदिपदेन ततोऽप्यतिमन्दस्थिरजीवत्वम्, उक्तदेवादिष्ववान्तरतारतम्यं, सुराणां सुखरूपत्वम्, असुराणां दुःखरूपत्वं, नराणामुभयरूपत्वं, चेत्यादिवैलक्षण्यं भेदपदेन गृह्यते । न चैकप्रतिबिम्बानां मिथो वैचित्र्यमित्यत्र विचित्राकारस्वस्वबिम्बमूर्तिसादृश्येनाऽऽकारवैचित्र्यमात्रसम्भवेऽपि सुखदुःखनीचोच्चत्वादिस्वभाववैचित्र्ये कारणाभावादिति भावः । भवति चेदित्यत्र कथञ्चित्प्राथमिकः पुरुषो भवति चेत्प्रतिबिम्बो भवतु । ततोऽन्येषां भगवत्प्रतिबिम्बत्वं तत्साम्ये सत्येव स्यान्न तु ततो नीचमध्यमादिरूपत्वे । उक्तविधया मिथो वैचित्र्ये कारणाभावादिति भावः । न जीवा एकप्रतिबिम्बाभेदवत्वाद्घटपटवदित्यत्र दशदर्पणप्रतिफलितैकमुखप्रतिबिम्बेषु भेदवत्त्वहेतोर्व्यभिचारो न शङ्कनीयः । स्वभाववैचित्र्यस्यैव भेदवत्त्वपदेन विवक्षितत्वात् । घटपटवदित्यस्य दर्पणे प्रदृश्यमानघटपटप्रतिबिम्बवदित्यर्थः । प्रतिबिम्बतामङ्गीकृत्य भेदेनैकप्रतिबिम्बता नेति साधयतो घटपटप्रतिबिम्बावेव दृष्टान्ततयाऽभिमतौ, न तु घटपटौ । तयोः प्रतिबिम्बत्वस्यैवाभावेनैकप्रतिबिम्बत्वस्याप्रसक्तप्रतिषेधत्वापातादिति ज्ञेयम् । विद्याकर्मादीति भाष्ये विद्यापदेन तत्त्वज्ञानं, मिथ्याज्ञानं, मिश्रज्ञानं चोच्यते । कर्म पुण्यपापरूपम् । आदिपदेन तत्तद्योग्यतादिकं गृह्यते । तत्तत्स्वरूपाख्योपाधावनादिकालमारभ्योक्तविधया ज्ञानवैचित्र्यात्कर्मवैचित्र्यात्तदुभयनिदानीभूतयोग्यतावैचित्र्याच्च, दर्पणगतमालिन्यादिदोषवैचित्र्यात्तत्र प्रतिफलितप्रतिबिम्बवैचित्र्यवदुच्चनीचमध्यमत्वादिस्वभाववैचित्र्यमित्यर्थः । टीकायां विद्याद्यदृष्टेति वदता भाष्योदितं विद्यादिकं सर्वं सूत्रे एकप्रकारतयाऽदृष्टत्वादतीन्द्रियत्वाच्चादृष्टपदेनैव सङ्गृहीतमिति सूचितम् । विद्यादिरूपमदृष्टं

(गुर्वर्थदीपिका)

विद्याद्यदृष्टमित्यर्थः । वस्तुतस्तु देवानामनादिकालमारभ्य सुकृतित्वेऽसुराणां दुष्कृतित्वे नराणामुभयविधत्वे तेष्वप्यवान्तरवैचित्र्ये सर्वाविवादाद्धिप्रतिपन्नविद्यायोग्यतयोः वैचित्र्यानुमापकत्वाच्चादृष्टमेव स्वपदेनोदितम् अन्यच्च सूचितं सूत्रकृतेति ज्ञेयम् । कस्तूरीप्रतिबिम्बे परिमळादर्शनाद्भगवत आनन्दरूपत्वे सर्वेषामप्यानन्दरूपतेति न शङ्का नापि समाधानं जलादिगतप्रतिबिम्बेष्वप्रतिफलितसूर्योष्णत्वस्य सूर्यकान्तोपलप्रतिफलितप्रतिबिम्बे उपाधिमहिम्ना सूर्योष्णत्वस्यापि प्रतिफलनवदयोग्यजीवेष्वप्रतिफलितानन्दादेरपि योग्यजीवाख्यप्रतिबिम्बेषु स्वरूपभूतोपाधिमहिम्ना प्रतिफलनमिति विवेको द्रष्टव्यः ।

## भावबोधः

अत्रानन्तरसङ्गतिः 'आभास एव' इति पूर्वसूत्रोक्तप्रतिबिम्बभूतजीवानाम् इत्यर्थकप्रतिबिम्बानामिति भाष्य एव स्पष्टं प्रतीयते ॥ **भगवदिति** ॥ अत्र जीवः किं भगवत्प्रतिबिम्बो न भवत्युत भवतीति चिन्ता । तदर्थं रूपमिति श्रुतिर्वैचित्र्यरूपयुक्त्योपोद्बलितयाऽनुमित्याऽप्रतिबिम्बत्वश्रुत्या बाध्यत उत नेति । तदर्थं प्रतिबिम्बभूतानां जीवानां वैचित्र्यरूपा युक्तिरेकभगवत्प्रतिबिम्बत्वे किं नोपपद्यत उतादृष्टादिवैचित्र्यरूपप्रकारान्तरेणोपपद्यत इति ॥ **प्रकरणवशादिति** ॥ श्रुतीनां परस्परविरोधपरिहारात्मकपादरूपप्रकरणवशात् श्रुत्यन्तरं प्रतिबिम्बत्वाभावप्रतिपादकमनुर्मीयत इत्यर्थः । यद्यपि 'नैवांशो न सम्बन्धः' इति प्रत्यक्षश्रुतिरस्ति; तथापि प्रतिरूपपदोपेतत्वेन स्पष्टं प्रतिबिम्बत्वप्रतिपादक 'रूपं रूपम्' इति श्रुतिवत् स्पष्टप्रतिबिम्बत्वाभावप्रतिपादकप्रत्यक्षश्रुत्यभावाभिप्रायेणैवमुक्तमिति ज्ञातव्यम् । वैचित्र्यमनाभासत्वकारणमिति न्यायविवरणोक्तयुक्तिं विवृणोति– **अस्ति खल्विति** ॥ जीवानां सामान्यत आभासत्वेऽपीति न्यायविवरणाभिप्रायमाह– **अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपीति** ॥ अदृष्टस्य विद्याकर्मादिरूपस्यानियमात् 'वैचित्र्यादिति' सूत्रव्याख्यानपरमनादीत्यादिभाष्यं व्याचष्टे– **विद्यादृष्टवैचित्र्येणेति** ॥ अनेन विशेषादृष्टाद्वैचित्र्योपपत्तेरिति न्यायविवरणमित्युक्ततात्पर्यकं भवति ।

## भावदीपः

भाष्ये श्रुतिविगानानुक्तेः कथमेतदित्यत आह ॥ **रूपं रूपमिति** ॥ **प्रकरणेति** ॥ न सम्बन्ध इत्यतीताधिकरणोदाहृतबिम्बप्रतिबिम्बभावरूपसम्बन्धनिषेधकं श्रुत्यन्तरमिह भाष्ये सन्देहबीज-

(भावदीपः)

त्वेनोदाहृतमित्यनुमीयते । सन्देहबीजत्वेन श्रुतिविगानोक्तेः पूर्वाधिकरणभाष्येषु प्रकृतत्वादित्यर्थः । प्रतिरूपो बभूवेति **न सम्बन्ध** इति श्रुतिविगानं सन्देहबीजमित्येव वाच्ये एवमुक्तिर्भाष्यानुक्तं श्रुतिविगानवचनं निर्बीजमिति शङ्काव्युदासाय तथैव प्रस्तावादिति युक्तिसूचनाय । एवमन्यत्राप्यूह्यमिति सूचनाय चेति ॥ **तथा श्रुतेरिति** ॥ न सम्बन्धं इति श्रुतेरित्यर्थः । वैचित्र्यमनाभासत्वे कारणमित्यन्यत्रोक्तयुक्तिं हेत्वसिद्धिनिरासपूर्वं व्यनक्ति ॥ **अस्ति खल्विति** ॥ भेदो वैचित्र्यम् । भेदवत्त्वात् वैचित्र्यवत्त्वादित्यर्थः ॥ **अत इति** ॥ यतो घटादिवन्मिथो भेदवत्त्वेनैकप्रतिबिम्बत्वायोगो न सम्बन्ध इति श्रुतिश्चास्ति अत इत्यर्थः । प्रतिबिम्बत्वस्यैवासिद्धेः कथं तद्वैचित्र्ये कारणोक्तिरित्यतो व्याचष्टे ॥ **जीवानामिति** ॥ बिम्बवैचित्र्यभ्रान्तिं निराह ॥ **कारणान्तरमिति** ॥ बिम्बवैचित्र्यादन्यदेव अदृष्टादिवैचित्र्यरूपमित्यर्थः । बिम्बसामर्थ्यरूपं तु कारणं स्थानविशेषात्प्रकाशादिवदित्यत्र भक्तिपादे वक्ष्यत इति भावः । जीवानां सामान्यत आभासत्वेऽपि विशेषादृष्टाद्वैचित्र्योपपत्तेरित्यन्यत्रोक्त्यनुरोधेन भाष्यं हेतुत्वेन व्याकुर्वन्साध्यमाह ॥ **न वैचित्र्येति** ॥ एतेन सूत्रे आभास एवेत्यनुवृत्तिः सूचिता । अत एव पूर्वसूत्रे प्रथमान्तनिर्देशः ॥ इत्यादिश्रुतेरित्यादि । एतस्ये आदिपदेन च रमणीयचरणरमणीयां योनिमापद्यन्त इत्यादेर्ग्रहः । अनादीत्युक्तिसाफल्यं व्यनक्ति ॥ **न चादृष्टेत्यादि** ॥

## अभिनवचन्द्रिका

**अत्र ब्रह्मणीति** ॥ ननु – इदं सूत्रत्रयं पूर्वाधिकरणशेषो नाधिकरणान्तरम् । 'आभास एव च' इति पूर्वसूत्रोक्तप्रतिबिम्बत्वे मिथो वैचित्र्यानुपपत्तिरूपबाधकोद्धारमात्रस्येह करणात्, साध्यनिर्देशाभावाच्च । एवमपि अस्याऽधिकरणान्तरत्वे 'प्रकाशादिवत्' इत्यस्याप्यधिकरणाऽन्तरत्वं स्यादिति चेत्, सत्यमेवं तथापि तदधीनत्वे सति तत्सदृशत्वरूपप्रतिबिम्बत्वे बाधकस्यैवाभावात् कृत्वा चिन्तया प्रवृत्तमिदं सूत्रत्रयम् । 'प्रकाशादिवन्नैवं परः' इत्यादि सूत्रवत् न पूर्वाधिकरणशेषो युक्त इति सूचनाय, अधिकरणान्तरं कृतम् । अत एव टीकायां 'जीवानां प्रतिबिम्बत्वमभ्युपेत्य तेषां वैचित्र्ये कारणमाह' इत्युक्तम् ॥ **रूपं रूपमित्येकेति** ॥ इतः परं न सम्बन्धो नापेक्ष्यो जीवः परस्येत्यपरे'ति वाक्यं लेखकदोषात् उच्छिन्नमिह द्रष्टव्यम् । यद्यपि अनंशत्वश्रुतेर्गतिरुक्ता, तथापि 'न सम्बन्ध' इत्यस्य गतेरनुक्तत्वात् युक्ता संदेहबीजता । अवश्यं चैरदेवं विज्ञेयम् ।

(अभिनवचन्द्रिका)
'रूपं रूपम्' इत्येकां श्रुतिमुदाहृत्य, श्रुत्यन्तरानुदाहरणे कारणाभावात्। अत्रैव 'प्रकरणवशात् विरुद्धं श्रुत्यन्तरमनुमीयत' इति वाक्यं प्रक्षिप्तम्। अवश्यं चैतदेवं विज्ञेयम्। श्रुतेरपि प्रत्यक्षसिद्धत्वेन अनुमितत्वोक्त्ययोगात्। न च अप्रतिबिम्बत्वप्रतिपादकश्रुतेरप्रत्यक्षत्वात् अनुमितत्वोक्तिरिति वाच्यम्। प्रत्यक्षश्रुतेः प्रबलत्वेन अनुमितश्रुत्या सन्देहपूर्वपक्षोत्त्ययोगात्। अस्मिन्पादे अस्याधिकरणस्य प्रासङ्गिकत्वेन पादे निवेशमात्रेण विरुद्धश्रुत्यनुमानायोगाच्च। अस्मदादीन्प्रति श्रुतेरप्रत्यक्षत्वेऽपि, सर्वज्ञत्वात् भाष्यकारस्य सा तत्प्रत्यक्षैवेति तेन वक्तव्यत्वाच्च। न हि जानन्नपि भाष्यकारः अवश्यमुदाहर्तव्यामपि श्रुतिं नोदाजहारेति सम्भवति। अनुदाहरणे कारणाभावात्।

चन्द्रिकाभावबोधयोस्तु गङ्गाजलानुप्रविष्टक्षुद्रनदीजलवत् तद्वाक्यं सेव्यमेवेत्याशयेन व्याख्यातम् ॥ **कारणान्तरमाहेति** ॥ अत्रान्तरशब्दः प्रक्षिप्तः। मूलकोशेषु अदर्शनात्, कारणमाहेति यथावस्थितभाष्ये अनुपपत्त्यभावेन अन्तरशब्दमेलने कारणाभावाच्च ॥ **भगवत्प्रतिबिम्बत्वेऽपीति** ॥ प्रतिबिम्बत्वाङ्गीकारेऽपि न वैचित्र्यानुपपत्तिः। दर्पणाद्युपाधिगतमालिन्यादिदोषवशात् एकप्रतिबिम्बेष्वपि प्रतिमुखेषु श्यामत्वादिवैचित्र्यवत् धर्माधर्माद्यागंतुककारणवैचित्र्येण जीवेष्वपि वैचित्र्यसम्भवादिति भावः।

## वाक्यार्थमुक्तावली

**जीवेश्वरप्रतिबिम्बत्व इति** ॥ पूर्वसूत्रोक्तेति पूरणीयम्। तेनान्तरसङ्गतिः ॥ **भगवदिति** ॥ जीवो भगवत्प्रतिबिम्बो न वेति चिन्ता। तदर्थं जीवस्य भगवत्प्रतिबिम्बत्वश्रुतिः किमेकं ब्रह्मप्रतिबिम्बवत्वे वैचित्र्ययोग इति युक्त्यनुगृहीता तया प्रतिबिम्बत्वाभावश्रुतिरबाधितोत नेति। तदर्थं बिम्बस्यैकत्वेऽप्यदृष्टादिवैचित्र्याद्वैचित्र्यं युज्यते न वेति ॥ **प्रकरणादिति** ॥ श्रुतिद्वय-विरोधपरिहारस्यात्र पादे प्रसक्तत्वादित्यर्थः। नैवांशो न सम्बन्ध इत्यस्येष्टत्वादनुमीयत इत्युक्तम्। प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाहेति सूचितं वैचित्र्यमित्युक्तपूर्वपक्षमाह– **भवति चेदिति** ॥ भेदवत्वादिति वैजात्यवत्वादित्यर्थः। तेनैकप्रतिबिम्बेष्वनेकोपाधिवशादनेकेषु न व्यभिचारः। प्रतिबिम्बस्याक्षिप्तत्वात्तत्र मिथो वैचित्र्ये कारणनिरूपणमयुक्तमित्यत आह ॥ **जीवानामिति** ॥ अभ्युपेत्य रूपं रूपमिति श्रुत्या सिद्धवत्कृत्य तर्ह्येकबिम्बप्रतिबिम्बानां वैचित्र्यं निष्कारणं प्रसज्यते बिम्बवैचित्र्यरूपकारणाभावादित्यतः कारणान्तरमाहेत्यर्थः। एतेन विशेषकारणमित्युक्त्यायो

(वाक्यार्थमुक्तावली)
विवृतः । केचित्तु तदधीनत्वे सति तत्सदृशत्वरूपप्रतिबिम्बत्वे बाधकस्यैवाभावात् प्रतिफलन-रूपप्रतिबिम्बत्वमभ्युपेत्य तत्र बाधकपरिहाराय प्रतिबिम्बवैचित्र्ये कारणमाहेत्यर्थः । कारणमाहेत्येव पाठ इति चाहुः । अन्ये तु ईशशक्तेरेव कारणत्वात्कारणान्तरमाहेत्यन्तरशब्दप्रयोग इत्याहुः । सूत्रे तुः आभास एवचेत्यन्वेति । अनुवर्तितसूत्रे चोऽप्यर्थस्तथापीत्यर्थ । अनियमादित्येतद्बुध्या विविच्यावर्तते । तस्य चाभास एव इत्यनेन षष्ठीबहुवचनान्ततया विपरिणतेनान्वयः । जीवाः परस्परप्रतिबिम्बा एव न त्वप्रतिबिम्बाः अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपि प्रवाहतोऽनादि-विद्याकर्मसंस्काररूपादृष्टस्यानियमात् वैचित्र्यादनियमात् । प्रतिबिम्बानां वैचित्र्यसम्भवादिति सूत्रार्थमभिप्रेत्य भाष्यभावमाह ॥ **न वैचित्र्येत्यादिना** ॥

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिराभास एवेति पूर्वसूत्रोक्तप्रतिबिम्बभूतजीवानामित्यर्थकप्रतिबिम्बानामिति भाष्ये एव स्पष्टं प्रतीयते ॥ **प्रकरणवशात् विरुद्धश्रुत्यन्तरमनुमीयत इति** ॥ 'न सम्बन्ध' इत्यतीताधिकरणोदाहृतं बिम्बप्रतिबिम्बभावरूपसम्बन्धनिषेधकं श्रुत्यन्तरमिह भाष्ये सन्देहबीजत्वे-नोदाहृतमिति अनुमीयते । सन्देहबीजत्वेन श्रुतिविगानोक्तेः पूर्वाधिकरणभाष्ये प्रकृतत्वादित्यर्थः । यद्वा श्रुतीनां परस्परविरोधपरिहारात्मकपादरूपप्रकरणवशात् श्रुत्यन्तरं प्रतिबिम्बत्वाभाव-प्रतिपादकमनुमीयत इत्यर्थः । यद्यपि न सम्बन्ध इति प्रत्यक्षश्रुतिरस्ति तथापि रूपं रूपमिति प्रतिबिम्बत्वप्रतिपादकस्पष्टश्रुतिवत् स्पष्टप्रतिबिम्बत्वाभावप्रतिपादक श्रुत्यभावाभिप्रायेणैवमुक्तमिति ध्येयम् ॥ **अन्यश्रुतेरिति** ॥ प्रतिबिम्बत्वाभावबोधकश्रुतेः वैचित्र्यानुपपत्तिरूपयुक्तियुक्तत्वादित्यर्थः । तामेवोपपादयति ॥ **अस्तीति** ॥ अस्तु भेदः तत् किमित्यत आह ॥ **न चेति** ॥ तथा च वैचित्र्यान्यथानुपपत्या अनेकेषां नैकप्रतिबिम्बत्वमिति भावः । अस्तु प्रतिबिम्बत्वं तथापि नानेकेषामित्याह ॥ **भवति चेदिति** ॥ अदृष्टस्येत्यादिभाष्यं व्याचष्टे ॥ **विद्यादीति** ॥ कथमनेन पूर्वादृष्टोपयोगः समर्थित इत्यत आह ॥ **दोपेति** ॥

## वाक्यार्थविवरणम्

**प्रकरणवशादिति** ॥ परस्परश्रुतिविरोधपरिहारप्रकरणवशादित्यर्थः ॥ **तद्विरुद्धश्रुत्यन्तरम्** ॥ प्रतिबिम्बत्वाप्रतिपादकमिति यावत् । रूपं रूपमिति श्रुतिबलात् प्रतिबिम्बत्वमेव वक्तव्यमित्याग्रह-

(वाक्यार्थविवरणम्)

इचेत्तत्राह ॥ **भवति चेदिति** ॥ प्रतिबिम्बो भवति चेदित्यर्थः । वैचित्र्याभावादिति भावः । सूत्रे वैचित्र्यवाची अनियमशब्दः । नियमो नामैकप्रकारत्वम् । अवैचित्र्यमिति यावत् । अनियमो नामानेकप्रकारत्वम् । वैचित्र्यमिति ध्येयम् ॥ **यथाप्रज्ञम्** ॥ योग्यतानुसारेणेत्यर्थः । कारणाभावादिति भावः ॥ **वैचित्र्यस्य** ॥ सुरनरादिरूपप्रतिबिम्बवैचित्र्यस्य ।

## वाक्यार्थमञ्जरी

श्रुतिविगानमेव दर्शयति ॥ **रूपं रूपमिति** ॥ **प्रकरणवशादिति** ॥ श्रुतीनां परस्पर-विरोधपरिहारात्मकपादरूपप्रकरणवशात् श्रुत्यन्तरं प्रतिबिम्बत्वाभावप्रतिपादकमनुमीयत इत्यर्थः । यद्यपि नैवांशो नैव सम्बन्ध इत्यादिप्रत्यक्षश्रुतिरस्ति तथापि तस्याः स्पष्टं प्रतिबिम्बत्वाभाव-प्रतिपादकत्वाभावादेवमुक्तमिति ध्येयम् । भेदः वैचित्र्यम् एवमग्रेऽपि ॥ **भवत्वेक इति** ॥ तथा च श्रुत्यन्तरविरोधादिति भावः । जीवानामीश्वरप्रतिबिम्बत्वेऽप्यन्योन्यवैचित्र्यं सम्भवति कुतः अदृष्टानां योग्यतादीनामनियमाद्वैचित्र्यादित्यर्थः ॥ **कारणान्तरमिति** ॥ पूर्ववाद्युक्तैकप्रतिबिम्बत्वा-भावरूपनिमित्तं विना निमित्तान्तरमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ ५२ ॥**

इच्छाद्वेषसुखदुःखादिवैचित्र्यं चादृष्टादेव । चशब्देन प्रतिक्षणवैचित्र्यं च ।

## तत्त्वप्रकाशिका

किं वैचित्र्यस्यादृष्टकारणकल्पनया रागद्वेषमोहादीनां दोषाणामेव तन्निमित्तत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अभिसन्धीति** ॥ न दोषवैचित्र्यादेतद्वैचित्र्यं वाच्यम् । तस्यापि सादित्वेन कारणगवेषणेऽदृष्टस्यैव ग्राह्यत्वादिति भावः । पूर्वदोषवैचित्र्यादुत्तरोपपत्तौ किमदृष्टेनेत्यत आह ॥ **च शब्देनेति** ॥ सङ्गृहीतमिति शेषः । दोषवैचित्र्यस्यादृष्टवैचित्र्यं विना जीववैचित्र्य-निमित्तत्वे तदभावेऽप्येकस्मिन्पुंसि प्रतिक्षणवैचित्र्यं न स्यात् । अस्ति चैतदतस्तदन्यथानुपपत्त्याऽ-दृष्टमेव कारणं ग्राह्यमिति भावः ।

## गुर्वर्थदीपिका

अभिसन्धिपदेन रागरूपेच्छा गृह्यते । आदिपदेन द्वेषसुखदुःखादिकं गृह्यत इति भावेनाऽऽह इच्छा द्वेष इति भाष्यम् । अभि स्वेष्टसाधनमन्नपानादिकमभिमुखीकृत्य मध्ये मध्ये सन्धीयत इति व्युत्पत्त्याऽपि रागादेः कादाचित्कत्वसूचनायेच्छेत्यल्पाक्षरपदं नोपादत्त सूत्रकारः । तदभावेऽप्येकस्मिन् पुंसि प्रतिक्षणवैचित्र्यं न स्यादित्यस्य तदभावे रागद्वेषादिदोषाभावदशायामेकस्मिन्पुंसि जितमनस्के योगीश्वरे प्रतिक्षणवैचित्र्यं देहोपचयापचयादिकमित्यर्थः ।

## भावदीपः

उक्तशङ्कानिरासाप्रतीतेर्भाष्यभावोक्त्या तां निराह ॥ **न दोपेत्यादि** ॥

## वाक्यार्थमुक्तावली

तटस्थः शङ्कते **किं वैचित्र्यस्येति** ॥ न च विद्याया अदृष्टसामग्रीत्वात्तत्कथमदृष्टत्वमिति वाच्यम् । यथाप्रतिज्ञं सम्भवा इत्युक्तेः पूर्वभावीयप्रतिज्ञायाः सुरनरादिभवनहेतुत्वेन कार्यदशाया-मदृष्टत्वात् । रागादिदोषाणान्तु योऽस्मिन् भवे रागद्वेषमोहदुःखादिप्रचुरोऽल्पसुखवान् स तिर्यक् । यस्तु रागाद्यप्रचुरः समसुखः स नरः । यस्त्वल्परागाद्याभासः संपूर्णसुखः ससुर इति । रागादि-वैचित्र्यस्य सुरादिवैचित्र्यप्रयोजकत्वोपपत्तेः । सुखस्य दोषत्वं वैषयिकत्वेन छत्रिन्यायेन वा विद्याया अदृष्टत्वोक्तिरपि छत्रिन्यायेन वा घटनीया । अभिसंध्यादिषु अभिसन्धिरिच्छा ॥ रागद्वेषमोहादि-विशेषेष्वप्येवं वैचित्र्यम् । चशब्दात्प्रतिक्षणवैचित्र्यं च । अदृष्टानियमात् । न केवलमाभास इत्यपिपदमिति सूत्रार्थं हृदि कृत्वाह ॥ **न दोपेति** ॥ **प्रतिक्षणवैचित्र्यमिति** ॥ क्षणादयः क्षणिका इत्युक्तरीत्येति भावः ।

## वाक्यार्थविवरणम्

सूत्रे । अभिसन्धिः । रामः । **अदृष्टस्यैवेति** ॥ अदृष्टवैचित्र्यस्यैव कारणतया ग्राह्यत्वादित्यर्थः ॥ **पूर्वदोपेति** ॥ पूर्वपूर्वरागादिरूपदोषवैचित्र्यादुत्तरोत्तररागादिवैचित्र्योपपत्तौ किमदृष्टवैचित्र्य-कल्पनयेत्यर्थः ॥ **आहेति** ॥ व्यतिरेकव्यभिचारान्न तस्य हेतुत्वमित्याहेत्यर्थः । तदभावेऽपि

(वाक्यार्थविवरणम्)

॥ **दोषवैचित्र्याभावेऽपि** ॥ **एकस्मिन्निति** ॥ अविचित्ररागादिमत्येकस्मिन्नित्यर्थः ॥ **प्रतिक्षणेति** ॥ उच्चनीचत्वादिरूपवैचित्र्यमित्यर्थः ।

## वाक्यार्थमञ्जरी

इच्छादिष्वपि एवं वैचित्र्यमदृष्टवैचित्र्यादेवेत्यर्थः ॥ **उत्तरेति** ॥ उत्तरदोषवैचित्र्यादेवेत्यर्थः । **तदभावे** दोषवैचित्र्याभावे ।

## सूत्रभाष्यम्

**॥ ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥ ५३ ॥**

**न स्वर्गभूम्यादिप्रदेशविशेषाद्वैचित्र्यम् । तत्प्राप्तेरप्यदृष्टापेक्षत्वात् । एकदेशस्थितानामेव वैचित्र्यदर्शनाच्च ।**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

## तत्त्वप्रकाशिका

स्वर्गस्थाः सुरा भूमिष्ठाः नरा इत्यादिस्थानवैचित्र्यादेव वैचित्र्योपपत्तेः किमदृष्टेनेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **प्रदेशादिति** ॥ न स्थानवैचित्र्यमेव वैचित्र्ये हेतुः । निष्कारण-स्थानवैचित्र्यस्यैवानुपपत्त्या तत्कारणान्वेषणेऽदृष्टस्यैवाङ्गीकार्यत्वादिति भावः । युक्त्यन्तरमाह ॥ **एकेति** ॥ एवं युक्तेरविरुद्धत्वादन्या श्रुतिनिरूपाधिप्रतिबिम्बत्वादिविषयेति द्रष्टव्यम् । तदेवं श्रुत्यविरोधेन जीवस्य प्रतिबिम्बत्वसिद्धेर्युक्तो जगत्कारणे नारायणे श्रुतिसमन्वय इति सिद्धम् ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥

## गुर्वर्थदीपिका

तत्प्राप्तेरप्यदृष्टापेक्षत्वादित्यनेन स्वर्गभूम्यादिप्रदेशवैचित्र्यप्राप्तेरप्यदृष्टनान्तरीयकतयाऽदृष्टेऽन्त-र्भावादिति सूत्रार्थस्सूचितो भवति । निरूपाधिप्रतिबिम्बत्वविषयेत्यत्र प्रतिबिम्बो नेति श्रुतिः

(गुर्वर्थदीपिका)
प्रतिमुखादिवद्बाह्योपाधिघटितप्रतिबिम्बो नेत्येवाऽऽह । स्वरूपोपाधिप्रतिबिम्बत्वं तु तस्या अपि सम्मतमेवेति भावः ।

॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां तत्त्वप्रकाशिकव्याख्यायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥

## भावबोधः

**युक्तेरविरुद्धत्वादिति** ॥ जीवानां मिथो वैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथासिद्धत्वा-दुपोद्बलकाभावेनान्याश्रुतिरनुमिता प्रतिबिम्बत्वश्रुतिर्जीवस्य निरुपाधिकप्रतिबिम्बत्वविषया सोपाधिकप्रतिबिम्बत्वाभावविषया ।

'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधा मतः'

'जीव ईशस्यानुपाधिरिन्द्रचापो यथा रवेः'

इति श्रुतेर्जीवस्यानुपाधिकप्रतिबिम्बत्वादिति भावः ।

अत्राद्ये– प्रतिबिम्बानां मिथो वैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथा सिद्ध्युक्तिः । द्वितीये– अदृष्टवत् जीवगततयान्तरङ्गरागादिदोषवैचित्र्यस्य प्रतिबिम्बवैचित्र्यकारणत्वासम्भवोक्तिः । तृतीये– बहिरङ्गस्वर्गादिस्थानवैचित्र्यस्य कारणत्वाभावोक्तिरिति सूत्रक्रमः ।

अत्र पादे– आद्यमधिकरणत्रिकमुत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधनिरासकत्वेनैका पेटिका । तत्राद्ये द्वितीये च– ब्रह्मेतरयोर्नभोनभस्वतोरुत्पत्त्या सिद्धान्तः । तृतीये– ब्रह्मणोऽनुत्पत्त्या सिद्धान्त इति भेदः । चतुर्थपञ्चमयोः उत्पत्तिमङ्गीकृत्य द्वारकारणविषयश्रुतिविरोधपरिहारात्मकत्वेन तदधिकरण-द्वयमेका पेटिका । षष्ठे– द्वारकारणत्वमङ्गीकृत्योत्पाद्यविशेषविषयश्रुतिविरोधपरिहारात्मक-मेकमधिकरणमेका पेटिका । सप्ताष्टमनवमदशमानिसंहारविषयश्रुतिविरोधपरिहारात्मकत्वेनैका पेटिका । तत्राद्ये– संहर्तृविषयश्रुतिविरोधनिरासः । द्वितीयतृतीययोः– संहारक्रमविषय-श्रुतिविरोधपरिहारः । चतुर्थे– संहर्तुरपि संहारविषयश्रुतिविरोधपरिहारः । एकादशमारभ्यापाद-समाप्तेर्नवाधिकरणानि जीवविषयश्रुतिविरोधनिरासकत्वेन एका पेटिका । तत्राधिकरणनवके

(भावबोधः)

यथाक्रमं जीवस्योत्पत्तिमत्त्व–अणुत्व–अनाकदेहस्थितत्वेश्वरभिन्नत्वानन्तत्त्वज्ञानानन्दादिरूपत्व-परतन्त्रकर्तृत्वेश्वरांशत्वतत्प्रति-बिम्बत्वरूपप्रमेयनवकविषयश्रुतिविरोधनिरास इत्यवान्तरभेदो द्रष्टव्यः ।

॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे द्वितीयाध्यायस्य तृतीयः पादः ॥

## भावदीपः

**एवमिति** ॥ अदृष्टवैचित्र्येणान्यथोपपत्त्या मिथो वैचित्र्यरूपयुक्तेरविरुद्धत्वादित्यर्थः । श्रुतिः न सम्बन्ध इति श्रुतिरित्यर्थः । स्वरूपातिरिक्तोपाधिनिमित्तकप्रतिबिम्बत्वाभावविषया । 'जीवोपाधि-र्द्विधा प्रोक्तः स्वरूपं बाह्य एव च' इत्यादेः । स्वरूपोपाधिनिमित्तकप्रतिबिम्बत्वं तु स्यादेवेत्यर्थः । अत एव पूर्वं भाष्ये सोपाधिरनुपाधिश्चेति श्रुतिरुदाहृता । एतेन प्रतिबिम्बवैचित्र्यस्योपाधिवैचित्र्य-निमित्तत्वात्कथमदृष्टानियमेन तद्वैचित्र्यमिति निरस्तम् । स्वरूपोपाधिवैचित्र्यस्यैवादृष्टा-नियमपदेनाभिप्रेतत्वात् । विवृतमेतच्छन्द्रिकायाम् । तत्तस्मात् श्रुतेर्युक्तेश्च सावकाशत्वादित्यर्थः । युक्तो जगत्कारणे नारायण इत्यादिफलोक्तिः ।

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते द्वितीयाध्यायस्य तृतीयः पादः ॥

## अभिनवचन्द्रिका

**निरुपाधिप्रतिबिम्बत्वविषयेति** ॥ उपाधिप्रतिबिम्बत्वस्य अभावो निरुपाधिप्रतिबिम्बत्वमिति अर्थाभावेऽव्ययीभावः । ततो निरुपाधिप्रतिबिम्बत्वं विषयो यस्याः सा तथोक्तेति बहुव्रीहिः । एतेन 'न सम्बन्धः' इति श्रुतेः अभावविषयत्वेन निरुपाधिप्रतिबिम्बविषयत्ववर्णनमयुक्तमिति परास्तम् ।

पूर्वपक्षस्तु – न जीवा भगवत्प्रतिबिम्बाः । 'नैवांशो न सम्बन्धः' इति श्रुतेः । न च प्रतिबिम्बत्वेऽपि 'रूपं रूपः' इति श्रुतिरस्तीति वाच्यम् । 'न सम्बन्धम्' इति श्रुतेः सयुक्ति-कत्वात् । तथा हि जीवास्तावत् सुरनरतिर्यगादिभेदेन विचित्राः । न च तदेकप्रतिबिम्बत्वे सम्भवतीत्यप्रतिबिम्बत्वमेव जीवानाम् । ततश्च सयुक्तिकाऽप्रतिबिम्बत्वश्रुतिविरोधात् प्रतिबिम्बत्वश्रुतिरप्रमाणमेवेति नोक्तसमन्वयसिद्धिरिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु – स्यादयं दोषः, यदि जीवस्य प्रतिमुखवत् प्रतिबिम्बत्वं स्यात् । न चैवं किं नाम पारिभाषिकं तदधीनत्वे सति तत्सदृशत्वरूपं, न चास्मिन् पक्षे वैचित्र्याभावो भवति । पित्रधीनत्वे सति तत्सदृशानां पुत्राणां मिथो वैचित्र्यदर्शनात् । अस्तु वा प्रतिमुखवदेव प्रतिबिम्बत्वम्, तथापि न वैचित्र्यानुपपत्तिः । अदृष्टादिवैचित्र्यरूपकारणसद्भावात् । न चादृष्टादिवैचित्र्यमेव कथमिति वाच्यम् । तस्यापि पूर्वकर्मवैचित्र्याधीनत्वात् । कर्मभेदपरम्परायाश्चाऽनादित्वात् । ननु किमदृष्टकल्पनया रागद्वेषमोहादिवैचित्र्येणैव वैचित्र्यसंभवादिति चेत्, न दोषवैचित्र्यार्थमप्यन्ततोऽदृष्टस्य कल्पनीयत्वात् । दोषवैचित्र्याभावेऽपि प्रतिक्षणवैचित्र्यदर्शनाच्च । न च – स्वर्गभूम्यादिस्थानवैचित्र्येणैव वैचित्र्यसम्भवात् किमदृष्टकल्पनेनेति वाच्यम् । तत्प्राप्तेरप्यदृष्टसाध्यत्वात् । एकप्रदेशस्थितानां वैचित्र्यदर्शनाच्च । तदेवं पारिभाषिकप्रतिबिम्बत्वस्य युक्तिविरोधप्रसक्त्यभावात्, 'नैवांशो न सम्बन्ध' इति श्रुतेश्च प्रतिमुखवत्प्रतिबिम्बत्वाभावविषयत्वेन तद्विरोधस्याप्यभावेन 'रूपं रूपः' इति श्रुत्या पारिभाषिकप्रतिबिम्बत्वसिद्धेः युक्तो नारायणे श्रुतिसमन्वय इति सिद्धम् ।

**॥ इति श्रीमत्सत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां तत्वप्रकाशिकाऽभिनवचन्द्रिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥**

## वाक्यार्थमुक्तावली

**एवमित्यस्ति ॥** स्वर्गादिप्रदेशविशेषादेवं वैचित्र्यमाभासस्यास्त्विति चेन्न अन्तर्भावात्तद्वैचित्र्यस्यापि अदृष्टवैचित्र्यमेवं कारण एवान्तर्भूतत्वादिति सूत्रार्थं हृदि कृत्वाह ॥ **न स्थानवैचित्र्य इति ॥ निरुपाधिप्रतिबिम्बत्व इति ॥** भिन्नोपाध्यधीनप्रतिबिम्बत्वस्याभावान्निरुपाधिप्रतिबिम्बत्वं तद्विषयो यस्याः सा तथोक्ता । यथोक्तं 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते' । जीवःपरस्यानुपाधिरिति वक्ष्यति च ॥ **नोपाध्यायत्तत्वादिनेति ॥** अत्र तत्त्वप्रदीपवाक्यम् । अनादिकर्मविद्या तत्संस्कारवैचित्र्याद्वैचित्र्यं तत्स्वाभाविकमनादीत्युक्तत्वादिति । अत्र यद्वक्तव्यं तत्प्रमेयमुक्तावल्यामनुसन्धेयम् । वक्ष्यामश्च भक्तिपादे स्थानविशेषादित्यत्र ॥ **लेशत इति ॥** अत्राद्ये प्रतिबिम्बानां मिथो वैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथासिद्ध्युक्तिः ॥ द्वितीयेऽदृष्टवज्जीवगततयान्तरंगरागादिस्वस्वदृष्टदोषवैचित्र्यस्य प्रतिबिम्बवैचित्र्ये कारणत्वाभावोक्तिः । तृतीये बहिरङ्गस्वस्वेतरबहुदृष्टदोषस्थानवैचित्र्यस्य कारणत्वाभावोक्तिरिति सूत्रक्रमः । अत्रपादे आद्यमधि-

(वाक्यार्थमुक्तावली)

करणत्रिकमुत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधनिरासकम् । चतुर्थपञ्चमौ द्वारकारणविषये । षष्ठन्तु द्वारकारणत्वमपामङ्गीकृत्यान्यस्य पृथिव्या इति सन्देहे सति निर्णायकम् । सप्तमाष्टमनवमदशमानि संहारविषयश्रुतिविरोधपरिहारविषयाणि । शिष्टानि बाधकनिरासकानि । जीवविषयाण्य-वान्तरक्रमनियामकं तूक्तमित्यतिरमणीयम् ।

॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयः पादः ॥

## तत्त्वसुबोधिनी

**युक्तेरविरुद्धत्वादिति** ॥ जीवानां मिथो वैचित्र्यरूपयुक्तेः अदृष्टवैचित्र्येणान्यथासिद्धत्वात् उपोद्बलकाभावेन अन्याश्रुतिरनुमिता सोपाधिकप्रतिबिम्बत्वाभावविषया प्रतिबिम्बत्वश्रुति-र्निरूपाधिकप्रतिबिम्बत्वविषया सोपाधिरनुपाधिश्चेति श्रुतेरिति भावः । अत्राद्ये सूत्रे वैचित्र्यरूपयुक्तेः अन्यथासिद्ध्युक्तिः । द्वितीये दोषवैचित्र्यस्य प्रतिबिम्बवैचित्र्याभावोक्तिः । तृतीये स्थानवैचित्र्यस्य तदभावोक्तिरिति । सूत्रक्रमः ।

॥ इति श्रीतत्वप्रकाशिका विवृतौ पाण्डुरङ्गि श्रीमदानन्दाचार्यसूनु श्रीनिवासाचार्यकृतौ तत्त्वसुबोधिन्यां द्वितीयाध्यायस्य तृतीयः पादः ॥

## वाक्यार्थविवरणम्

**अन्तर्भावादिति** ॥ सूत्रखण्डस्य स्थानवैचित्र्यस्याप्यदृष्टवैचित्र्येऽन्तर्भावादिति व्याख्यानं हृदि निधायोपपादयति ॥ **निष्कारणेति** ॥ तथा च स्थानवैचित्र्यस्यादृष्टवैचित्र्यं विना जीववैचित्र्य-निमित्तत्त्वे स्थानवैचित्र्याभावेऽपि भूमिरूपैकदेशस्थितानां तदाख्यैकस्थानस्थितानामेव पुंसां वैचित्र्यमनेकप्रकारत्वं दृश्यमानं यत्तत्र स्यात् । अस्ति चैतत् । अतस्तदन्यथानुपपत्त्या अदृष्टवैचित्र्यमेव तत्र कारणतया ग्राह्यमिति भावः ॥ **युक्त्यन्तरमिति** ॥ स्थानवैचित्र्यस्य न जीववैचित्र्यनिमित्तत्वं युक्तं व्यतिरेकव्यभिचारादित्येवंरूपं युक्त्यन्तरमित्यर्थः ॥ **एवं युक्तेरविरुद्ध-त्वादिति** ॥ युक्तेः सकाशादस्मत्पक्षस्येति शेषः । जीवानां मिथो वैचित्र्याख्ययुक्तेरेकप्रतिबिम्बत्वा-भावरूपसाध्यं विनाप्यदृष्टवैचित्र्येणाप्युपपत्त्याऽन्यथासिद्धत्वेन प्रतिबिम्बश्रुत्यविरोधकत्वादित्यर्थः ॥

(वाक्यार्थविवरणम्)

**अन्याश्रुतिः** ॥ प्रतिबिम्बभावश्रुतिः ॥ **निरुपाधिप्रतिबिम्बत्वेति** ॥ सोपाधिप्रतिबिम्बो न भवतीत्येवंपरेत्यर्थः । अत्राधिकरणे जीवानां विचित्रत्वादविचित्रब्रह्मप्रतिबिम्बत्वं नेति शङ्कायाः प्रवाहतोऽनाद्यदृष्टादिवैचित्र्योक्त्या निरासः । भक्तिपादे स्थानविशेषादित्यत्र विचित्रजीवानन्दादि-बिम्बत्वाद्ब्रह्मानन्दादेर्वैचित्र्यं स्यात् । बिम्बवैचित्र्यं विना प्रतिबिम्बानां स्वाभाविकवैचित्र्यादृष्टेरिति शङ्कायां न केवलमेतदधिकरणोक्तं प्रवाहतोऽनाद्यदृष्टवैचित्र्यं हेतुः, किन्तु स्वरूपोपाधेर्ज्ञान-भक्त्यादिरूपगुणवैचित्र्यं बिम्बस्येश्वरस्य शक्तिविशेषश्च हेतुः । न ह्यादित्यस्येवान्यस्यापि सूर्यकान्तादौ प्रतिबिम्बोऽग्निं जनयतीति बिम्बशक्तिरपेक्षिता । न वा सूर्यस्येव जलदजलादौ प्रतिबिम्बोऽग्निं जनयतीति स्थानशक्तिरप्यपेक्षितेति प्रतिपादितमित्यधिकरणप्रमेययोर्भेदादपौन-रुक्त्यम्। अत एवात्र भाष्यादावदृष्टवैचित्र्यमेवोक्तम् । तत्र 'त्वैश्वर्यात्परमाद्विष्णोर्भक्त्या-दीनामनादितः' इतीश्वरशक्तिः स्वरूपानादिभक्त्यादिवैचित्र्यं चोक्तम् । टीकायामपि न चादृष्ट-नियमेन वैचित्र्यम् । स्वाभाविकानन्दादेरादिमत्कारणानुपपत्तेरित्यादिना ग्रन्थेनात्रोक्तमदृष्टवैचित्र्यं तत्र पूर्वपक्षावसर एवाशङ्क्य परिहृतमिति ध्येयम् ॥ **तदेवमिति** ॥ तत्तस्माच्छ्रुतेर्युक्तेश्च सावकाशत्वादित्यर्थः ।

॥ इति तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासकृते द्वितीयाध्यायस्य तृतीयः पादः ॥

## वाक्यार्थमञ्जरी

प्रदेशात्स्वर्गादिस्थानवैचित्र्याज्जीववैचित्र्यमिति चेन्न स्थानवैचित्र्यस्यापि अदृष्टवैचित्र्येऽन्त-र्भावात् तदधीनत्वादित्यर्थः ॥ **युक्तेरविरुद्धत्वादिति** ॥ जीवानां मिथो वैचित्र्यरूपयुक्तेरदृष्ट-वैचित्र्येणान्यथासिद्धत्वादुपोद्बलकाभावेनानुमितिश्रुतिर्जीवस्य सोपाधिप्रतिबिम्बत्वाभावविषयेत्यर्थः ।

॥ इति अदृष्टाधिकरणम् ॥

॥ इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां द्वितीयाध्यायस्य तृतीयः पादः ॥

॥ इति तृतीयः पादः ॥

# अथ चतुर्थः पादः

## १. अथ प्राणाधिकरणम्

### सूत्रभाष्यम्

युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन। 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे। भूतेभ्योऽण्डमण्डस्यान्तस्त्विमे लोकाः। अथ प्राणा एवानादयः प्राणा नित्या' इति काषायणश्रुतौ प्राणानामनुत्पत्तिः प्रतीयते।

'नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते।
उपादानकृता सृष्टिः सर्वलोकेषु दृश्यत' इति भविष्यत्पर्वणि॥

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मुं.उ.२-१-३) इति च। अत उच्यते–

**॥ ॐ तथा प्राणाः ॐ ॥ १ ॥**

यथाऽऽकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि।

### तत्त्वप्रदीपिका

युक्तिसहिताभिः श्रुतिभिर्विरोधं श्रुतीनां निराकरोत्यनेन पादेन प्राणविचारात्मकेन प्रायः। तेषु युक्तेरुपजीव्यत्वेन तद्विरोधस्य परिहरणीयत्वात्। ननु यद्यपि श्रुतीनां केवलानां समबलानां मिथो विरोधो विचारणया परिहरणीय इति युज्यते, आसां मुख्यवृत्तिरासां गौणीति, आसामसौ विषय आसामयमिति वा। यत्र युक्तिसहिताभिः श्रुतिभिः श्रुतयो विरुध्यन्ते तत्र न विचारणावकाशः। बलवद्विरोधे गौणार्थत्वाश्रयणस्य प्राप्तत्वात्। अतस्सिद्धार्थत्वात्कृतमत्र **मीमांसयेति ॥** नायं दोषः। सयुक्तिकाभिरेव निर्णयश्रुतिभिः परिहरिष्यमाणत्वाद्विरोधस्य। विषयविवेकस्य वा प्रदर्शयिष्यमाणत्वात्तत्र तत्र। अस्मिन्पादे प्रायः प्राणाः समस्ता व्यस्ता वा विषयः। अत्र तूत्पद्यन्ते वा नवेति संशयः। श्रुतिविप्रतिपत्तिः संशयबीजम्। नोत्पद्यन्त इति पूर्वः पक्षः। अनुत्पत्तिश्रुतेः सयुक्तिकत्वादुत्पत्तिश्रुतेर्गौणार्थत्वयोगात्। 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे' इति भूतकारणत्वश्रुतेः, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिषु देहपाते देहिनां

(तत्त्वप्रदीपिका)
सहोत्क्रान्तिगत्यादिश्रुतेः प्रलये च सुषुप्त इव व्यापारस्यैवोपरमादिति । अत्र सूत्रमवतारयति । तथा प्राणाः । यथाऽऽकाशादयो जीवपर्यन्ताः परमात्मन उत्पद्यन्त उक्तन्यायेन तथा प्राणा अप्युत्पद्यन्ते परमात्मन एव । तत्रोक्तन्यायानुकर्षणार्थं तथेत्युक्तम् ।

## तत्त्वप्रकाशिका

एतत्पादार्थं दर्शयति ॥ **युक्तीति** ॥ अत्रापि पूर्ववत् श्रुतीनां परस्परविरोधपरिहार एव पदार्थः । युक्तिसाहित्यस्य पूर्वत्रापि साम्यात् । अत्रत्ययुक्तीनां श्रुत्यादिसिद्धत्वेन प्राबल्यात्पादभेदः । अध्यात्मविषयतया च । तत्रादावीश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थमिन्द्रियोत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणे ब्रह्मणि सर्वश्रुतिसमन्वयो निरूपितः । तत्र प्राणोत्पत्तिविषयश्रुतीनां विरोधेनाप्रामाण्ये तदसिद्धेः स परिहर्तव्यो भवति । सर्वजगदन्तःपातिनः प्राणा एव विषयः । किमुत्पत्तिमन्तो न वेति सन्देहः । संशयबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति ॥ **प्राणा इति** ॥ अथ तस्मात् इति च प्राणानामुत्पत्तिः श्रूयत इति शेषः । प्राणा नोत्पत्तिमन्तः 'प्राणा एवानादयः' इति श्रुतेः । न चोत्पत्तावपि श्रुतिरस्तीति वाच्यम् । अस्याः स्पष्टार्थाया निरवकाशत्वेन प्राबल्यात् । प्राणा नोत्पत्तिमन्तो निरुपादानत्वाद् व्यतिरेकेण घटवदिति युक्तियुक्तत्वेनापि प्राबल्यात् । न चात्रासिद्ध्यादिशङ्का कर्तव्या नोपादानमिति स्मृतिगृहीतत्वात् । अतः प्रबलश्रुतिविरोधादुत्पत्ति श्रुतिरप्रमाणमेवेति नेश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ उत्पत्तिमन्त एव प्राणाः । आकाशादीनामुत्पत्तिमत्त्वे कथितयुक्तिसमुदायादेवेत्यर्थः । अत्र पुनर्विप्रतिपत्त्यभावेन कारणस्याविचारात्सिद्धवत्कृत्य परमात्मन इत्युक्तम् ।

## गुर्वर्थदीपिका

तथा प्राण इत्यत्र दर्शनस्पर्शनादिप्रकृष्टाप्रकृष्टचेष्टाहेतुत्वात्स्वस्वविषयं प्रतिद्रवणाख्यचेष्टाधिकरणत्वाद्वेन्द्रियाणि प्राण इत्युच्यते । पूर्वत्रापि साम्यादित्यत्र साम्येऽपीत्यर्थः । अत्र पुनर्विप्रतिपत्त्यभावेनेत्यस्य सर्वथा विप्रतिपत्त्यभावे अधिकरणान्तरारम्भासम्भवेन परमात्मरूपकारणे विप्रतिपत्त्यसम्भवादित्यर्थः । नन्वल्पाक्षरसूत्रेषु बह्वर्थसूचनापेक्षी सूत्रकारः । 'गौण्यसम्भवात्' इति सूत्रं वियदधिकरणे प्राणाधिकरणे च कुतो नासूत्रयदिति चेदित्थम् । वियदधिकरणे आकाशपद-

(गुर्वर्थदीपिका)

वाच्ययोरव्याकृताकाशतदभिमानिनोर्भूतभूताभिमानिनोश्चोत्पत्तिश्रुतेरनुस्यूतत्वमेव मुख्यत्वम् । अनादिश्रुतेर्गौणत्वं तूक्तेषु चतुर्ष्वप्यननुस्यूतत्वमेव । अनादित्वश्रुतिस्तु न सर्वविषयेति भवति गौणी । 'भूतेषु कथमप्यवृत्तेः' इति वचनात्र तत्र प्राणाधिकरणवदेकैकस्य सूक्ष्मरूपेण विद्यमानत्वं स्थूलरूपेणाविद्यमानत्वं च । इह त्वनादित्वस्य गौणत्वमेकैकेन्द्रियस्य सूक्ष्मरूपेण वर्तमानत्वं स्थूलरूपेणावर्तमानत्वं च । कस्मिंश्चिद्विद्यमानत्वं च ।

ननु तत्राप्येवं कुतो गौणत्वमिति चेन्न । भूताभिमानिविनायकचैतन्येऽव्याकृताकाशे तदभिमानिलक्ष्मीचैतन्ये च स्थूलसूक्ष्मभेदाभावात् । अस्तु तर्हि तदित्यत्राप्येकस्मिन्निन्द्रियेऽनादित्वस्य सर्वथाऽभावो गौणत्वमिति चेन्न । सर्वेन्द्रियाणामपि स्थूलसूक्ष्मरूपसहिततया सादित्वानादित्वसाम्येनैकस्मिन्सत्वस्यापरस्मिन्सर्वथाऽसत्त्वस्य चासम्भवादेव । वियदधिकरणे तु सजातीयेषु स्थूलरूपेणैवानादित्वस्य सत्त्वाद्भूताकाशे तु तत्साम्येनानादित्वस्य शतशः प्रयत्नेऽप्यसम्भवात् । सम्भवत्सूक्ष्मरूपानादित्वस्य च प्रकरणविरुद्धस्याऽऽश्रयितुमशक्यत्वात्कथमप्यवृत्तेरित्युक्तम् । तथा प्राणा इत्यत्रातिदेशे हि तत्रोक्तन्यायेनैवात्रापि गौणत्वबुद्धिस्स्यादतः प्रमेयविशेषसूचनायात्र पुनः सूत्ररचना । एवं च व्यर्थं सत्किमप्यर्थान्तरं ज्ञापयतीति न्यायेन प्रेक्षावतस्सूत्रकारस्यैकाकारद्विःप्रयोगे स्यादेवार्थान्तरबुद्धिर्विवेकिनाम् । 'प्रतिज्ञानुपरोधात्' इति सूत्रं तु प्रतिज्ञाहानिरिति पूर्वसूत्रोक्तानिष्टापादनविपर्यये पर्यवसानरूपत्वान्न पुनरुक्तम् । तच्च पूर्वसूत्रे गौणीद्वैविध्यवत्प्रतिज्ञाद्वैविध्याभावसूचनार्थम् । प्रतिज्ञाहानिरित्येव सूत्ररचनायां ह्येकाकारपूर्वसूत्रवदत्राप्यर्थद्वैविध्यशङ्का स्यादेव । उक्तविधया प्राचीनसूत्रार्थविशेषतया सूत्ररचनायां तु सुगमोऽत्रार्थद्वैविध्याभावः । एवं च द्वेधाऽपि सार्थक्यमस्य सूत्रस्य । अतोऽतीवचतुरः सूत्रकारः ।

## भावबोधः

'श्रुतिप्रायोपपत्तिभिः । अविरोधश्चतुर्थे तु पादे सम्यक् समर्थ्यते' इत्यनुव्याख्यानं मनसि निधायाह– **अत्र युक्तीनामिति** ॥ अनेन युक्तिसहितेति भाष्ये श्रुतिसिद्धत्वेन प्रबलेत्यादावुपस्कर्तव्यमित्युक्तं भवति ।

'अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः'

(भावबोधः)

इत्यनुव्याख्यानं मनसि निधायाह– **अध्यात्मविषयतया चेति ॥ तत्रादाविति ॥** पूर्वाधिकरणेऽदृष्टानियमादि अनाद्यविद्याकर्मादीत्युक्त्या कर्मादिपदोक्तज्ञानकरणत्वे नोपक्षिप्ता-नामिन्द्रियाणामुत्पत्तेरत्र विचारादनन्तरसङ्गतिरिति ज्ञातव्यम् । अत्र सर्वेष्वधिकरणेषु ईश्वरस्य श्रुतिसमन्वयेनोक्तमशेषजगत्कारणत्वमयुक्तमुत युक्तमिति प्रधानचिन्तानुवृत्तिर्द्रष्टव्या । अत एवात्र प्रत्यधिकरणं श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थमित्याद्युक्तम् । तदयुक्तत्वयुक्तत्वे च 'तथा प्राणाः' इत्यादौ साक्षात् सर्वजगत्कारणत्वाक्षेपपरिहाराभ्यां 'सप्तगतेर्विशेषितत्वात्' इत्यादौ श्रुतिप्रामाण्याक्षेपपरिहाराभ्यामिति ज्ञातव्यम् । अत्र प्राणाः किमनुत्पत्तिमन्त उतोत्पत्तिमन्त इति चिन्ता । तदर्थं तदुत्पत्तिस्तदनुत्पत्तिश्रुतिविरुद्धा न वेति । तदर्थं 'प्राणा एवेदमग्र आसुः' इति तदनुत्पत्तिश्रुतिः किं युक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं 'नोपादानं हीन्द्रियाणाम्' इति स्मृत्युक्तयुक्तेर्गत्यन्तरं नास्त्युतास्तीति । तदर्थमिन्द्रियाणामुपचयादिरूपोत्पत्तौ श्रुतियुक्त्यादि-विशेषप्रमाणं नास्त्युतास्तीति । उत्पत्तावपि श्रुतिरिति ।

'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च'

इति श्रुतिरित्यर्थः । प्राणानामुत्पत्त्यङ्गीकारे 'प्राणा एवानादय' इत्यादिस्पष्टार्थवद्विशेषश्रुतिविरोध इति न्यायविवरणं मनसि निधायाह– **अस्याः स्पष्टार्थाया इति ॥**

ननूत्पत्तिश्रुतेरपि' इन्द्रियाणि जायन्त' इत्युक्तत्वेन स्पष्टार्थतया निरवकाशत्वात् कथं ततोऽस्याः प्राबल्यमित्यतः 'नोपादानं हीन्द्रियाणाम्' इति भाष्योक्तयुक्तिमाह– **प्राणा इत्यादिना ॥ व्यतिरेकेणेति ॥** यद्यप्यन्वयदृष्टान्तो ब्रह्मास्ति तथापि व्यतिरेकव्याप्तिं विना व्यभिचारशङ्काया अनिरासात् उपादानकृता सृष्टिरिति भाष्योदाहृतस्मृत्यनुसारेण व्यतिरेक एवोक्त इति ज्ञातव्यम् । यथा यस्माद्युक्तिसमुदायात् आकाशादयः परमात्मन उत्पद्यन्ते तथा तस्मादेव युक्तिसमुदायात् प्राणा अपि परमात्मन उत्पद्यन्त इति भाष्यार्थमभिप्रेत्याह– **उत्पत्तिमन्त एवेति ॥** अत्र पुनः **विप्रतिपत्त्याभावेनेति ।** तेज आदेर्ब्रह्मान्यकार्यत्वे घर्मात् स्वेददृष्टेरितिवदत्र प्राणानां ब्रह्मान्यकार्यत्वे प्रापकाभावेन विप्रतिपत्त्यभावेनेत्यर्थः ।

## भावदीपः

अस्य पूर्वपादसाङ्कर्यमुद्भाव्य द्वेधा भेदमाह ॥ **अत्रापीति** ॥ तथैव प्रतिनयं दर्शितत्वात् अन्यथा तत्र पूर्वपक्षानुदयादिति भावः ॥ **अत्रत्येति** ॥ 'श्रुतिप्रायोपपत्तिभिः । अविरोधश्चतुर्थे तु पादे सम्यक्समर्थ्यते' इत्यसदितिनयानुव्याख्याने 'अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः' । इत्युपासनापादीयानुभाष्ये चोक्तेरिति भावः ॥ **तत्रादाविति** ॥ अध्यात्मं विचार्यमाणेषु आदावित्यर्थः । मुख्यप्राणश्चेन्द्रियाणीति सङ्क्षेपभाष्यदिशाऽभ्यर्हितत्वेन श्रेष्ठस्यादौ विचार्यत्वेऽपि सर्वप्रेरकस्य तस्येन्द्रियविषयचिन्तानन्तरमेव चिन्तावसर इति तथालब्धात्मन एव सङ्ख्या-परिमाणादिरूपधर्मचिन्तावसर इति तथा इन्द्रियसामान्यजन्मचिन्तानन्तरमेतद्विशेषे मनःप्रभृतौ चिन्तावसर इति तच्चिन्तात आदाविन्द्रियजन्मचिन्ता अवसरप्राप्तेतिभावेनादावित्युक्तम् । अत्र सिद्ध्यर्थमित्यनेन शास्त्रे विरोधपरिहारादित्यनेनाध्याये श्रुतीत्यनेन पादे चान्तर्भावसङ्गतिरुपपादिता। एवमग्रेऽपि । प्रबलयुक्तिसहित श्रुतीत्यपि योज्यम् । सिद्ध्यर्थमित्येतद् व्यनक्ति ॥ **जगत्कारण इति** ॥ यद्वा पूर्वसङ्गतिमाह ॥ **जगत्कारण इति** ॥ एवमग्रेऽपि द्वेधा योज्यम् । जन्मादिसूत्र-सङ्गत्यर्थमाह ॥ **सर्वजगदन्तःपातिन इति** ॥ श्रुतौ प्राणा एवानादय इत्यस्य पौनरुक्त्यमाशङ्क्य निगमपरतयार्थमाह ॥ **अथ तस्मादिति** ॥ अण्डादिहेतुभूतकारणत्वात् लयवर्तित्वाद्वेत्यर्थः । एतेन भाष्ये पूर्वांशोदाहरणमनादय इत्यस्योपपादकत्वेनेति दर्शितम् । इति चेति भाष्यानुवादः ॥ **श्रुतिरस्तीति** ॥ इदं सर्वमसृजत' इति सामान्यश्रुतिः 'एतस्माज्जायते' इत्यादिविशेषश्रुतिश्चा-स्तीत्यर्थः । तत्राद्यायाः सामान्यश्रुतेर्बाधाय पूर्वपक्षन्यायविवरणे स्पष्टार्थवद्विशेषश्रुतिविरोध इत्युक्तम् । तत्र सामान्यव्यवधानाभावरूपविशेष श्रुतित्वे हेतुरिति भावेनाह ॥ **अस्याः स्पष्टार्थाया** इति ॥ अनुत्पत्तिश्रुतेरित्यर्थः । द्वितीयायाः सिद्धान्तीयविशेषश्रुतेर्बाधाय नोपादानमिति भाष्योक्तयुक्तिमाह ॥ **प्राण इति** ॥ एवं च युक्तिद्वयोक्तिरपि सफलेति बोध्यम् ॥ **व्यतिरेकेणेति** ॥ अन्वयदृष्टान्तस्य ब्रह्मणः सम्भवेऽप्युपादानकृता सृष्टिरित्युत्तरार्धानुरोधादेवमुक्तम् । स्मृतावपि तथोक्तेर्बीजं चन्द्रिकायामुक्तम् ॥ **अत इति** ॥ निरवकाशत्वनिरुपादानत्वयुक्त्युपेतत्वात्प्रबलेत्यर्थः ।

अत्र यथा यैर्न्यायैस्तथा तैरेव न्यायैरिति भाष्यार्थं मत्त्वा सूत्रे तथाशब्दस्तथान्यत्प्रतिषेधा-दित्यत्रेव प्रागुक्तयुक्तिपरामर्शी साध्यपरामर्शी चेति भावेन सूत्रभाष्ययोरर्थमाह ॥ उत्पत्तिमन्त

(भावदीपः)

**एवेति** ॥ पराधीनविशेषावाप्तिरूपोत्पत्तिमन्त एवेत्यर्थः । तत्रोक्तन्यायानुकर्षार्थं तथेत्युक्तमिति तत्वप्रदीपोक्तेः ॥ **कथितेति** ॥ अश्रुतेः । उत्पत्तिश्रुतिबाहुल्यादल्पशक्तित्वादेकस्याप्यनुत्पत्तिशब्दस्य ब्रह्मशब्दवन्मुख्यामुख्यत्वसम्भवादित्युक्तयुक्तिसमुदायादित्यर्थः ॥ **विप्रतिपत्तीति** ॥ अन्यजातत्व-विवादाभावेनेत्यर्थः ॥ **अविचारादिति** ॥ तेजोऽत इत्यादिवद्ब्रह्मजातत्वोक्त्यर्थं सूत्रान्तरा-करणादित्यर्थः ।

## अभिनवचन्द्रिका

**एतत्पादार्थमिति** ॥ 'अध्यायस्य एकार्थत्वात् पादभेदः किं निबन्धन इत्यतो विरोधेऽप्य-वान्तरभेदेनेति भावेन' इति वर्तते । तस्य एतत्पादप्रतिपाद्यं दर्शयतीत्यनेन सम्बन्धः । ननु भाष्यकारीयं पादप्रतिपाद्यकथनमयुक्तम् । अस्यार्थस्य पूर्वपादार्थाऽभिन्नत्वेन पादभेदाभाव-प्रसङ्गादित्याशङ्कामनूद्य समाधत्ते – **अत्रापीत्यादिना** ॥ अत्रापीति निपातसमुदायो यद्यपीत्यर्थे । 'अत्रत्ययुक्तीनाम्' इति वाक्यस्योपक्रमे 'तथापि' इति ग्राह्यम् ॥ **पूर्वपक्षं च सूचयतीति** ॥ 'नोपादानं हीन्द्रियाणाम्' इति स्मृत्युदाहरणेन सूचयतीत्यर्थः ॥ **अत्र पुनर्विप्रतिपत्त्यभावेनेति** ॥ अत्र विप्रतिपत्तिशब्देन ब्रह्मकारणकत्वविरुद्धार्थप्रतिपादकं वाक्यमुच्यते । अन्यकारण-कत्वप्रापकाभावात् कारणमविचारयित्वैव सिद्धवत्कृत्य 'परमात्मन' इत्युक्तमित्यर्थः ।

## वाक्यार्थमुक्तावली

**एतत्पादार्थमिति** ॥ अध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धनः इत्यत **अविरोधेऽप्य-वान्तरभेदेनेति वर्तते** ॥ तस्यैतत्पादप्रतिपाद्यं दर्शयतीत्यनेन सम्बन्धः । श्रुति प्रायोपपत्तिभिः । 'अविरोधश्चतुर्थे तु पादे सम्यक् समर्थ्यते' इत्यनुव्याख्यानानुसारेण युक्तिसहितेति भाष्यस्य श्रुति-सिद्धत्वेनैव प्रबलयुक्तिसहितेत्यर्थं हृदि कृत्वा तद्व्यावृत्याशङ्कामनूद्य व्याचष्टे ॥ **अत्रापीत्या-दीनाम्** ॥ अत्रापीति निपातसमुदायो यद्यपीत्यर्थे । अत्र युक्तीनामित्यतः पूर्वं तथापीत्युपस्कर्तव्यम् । अन्यथाऽनन्वयात् । अत्रापीत्यस्यास्मिन् पादेऽपीत्यर्थोक्तौ अर्थ इत्येव पूर्णत्वात् पादार्थ इति पादपदवैयर्थ्यं च । 'अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः' इत्यनुव्याख्यानं मनसि निधायाह ॥ **अध्यात्मविषयतया चेति** ॥ अध्यात्मपदेनात्मानं शरीरमधिकृत्य वर्तमानानीन्द्रियाण्युच्यन्ते ।

(वाक्यार्थमुक्तावली)

पादस्य प्रायिकत्वादन्तिमोपान्त्याधिकरणयोः शरीरविचारेऽपि नासङ्गतिः । यद्वक्ष्यति 'इन्द्रियादीनामाश्रयं शरीरं तत्प्रसंगनिधापितं विषयः' इति । तत्त्वप्रदीपे च ''युक्तिसहिताभिः श्रुतिभिर्विरोधं श्रुतीनामपाकरोत्यनेन पादेन प्राणविचारात्मकेन प्रायेण'' इति । विस्तरस्तु प्रमेयमुक्तावल्याम् ।

**तत्रादाविति** ॥ तत्र विचार्यतया बुद्धिसन्निहितेषु प्राणोत्पत्तिसङ्ख्यापरिमाणादिषु आदावित्युत्पत्तेः प्राथमिकत्वात् । एकैकदेशमनआदिविचारापेक्षया समुदायविचारस्य प्रथमप्राप्तत्वादादौ प्रथमेऽस्मिन्नधिकरणे इन्द्रियोत्पत्तिविषयश्रुतिविरोधपरिहारादित्यर्थः । जीवस्वरूपविचारानन्तरं तदिन्द्रियविचारादिति वा जीवस्याप्रतिबिम्बत्वश्रुतिर्बाह्योपाध्यधीनप्रतिबिम्बत्वाभिप्रायेणेति पूर्वत्र निर्णीते बाह्योपाधिरूपमनआदीन्द्रियविचारादिति वानन्तरसङ्गतिः ॥ **किमिति** ॥ अत्र सर्वेष्वप्यधिकरणेष्वीश्वस्य श्रुतिसमन्वयेनोक्तमशेषजगत्कारणत्वमयुक्तमुत युक्तमिति प्रधानचिन्ताऽनुवृत्तिर्दृष्टव्येति दर्शयितुं प्रत्यधिकरणं श्रुतिसमन्वयेन जगत्कारणसिध्यर्थमित्युक्तम् । अत्र किं प्राणा अनादय उतोत्पद्यन्त इति चिन्ता । तदर्थं प्राणादित्वश्रुतिर्निरवकाशत्वेन स्मृतिगृहीतनिरूपादानत्वयुक्तिसाहित्येन च प्रबलौ तत्सावकाशात् स्मृतेश्च विषयान्तरमस्तीति । पूर्वपक्षं सूचयतीति । प्राणा एवानादयः नोपादानमिति श्रुतिस्मृत्युदाहरणादिति भावः । न वियदश्रुतेरित्युक्तन्यायमुद्धरति **प्राणा इति** ॥ अस्तित्वित्युक्तन्यायसाम्यमपाकरोति । **न चोत्पत्तावपीति** ॥ कुतो न वाच्यमित्यतस्तत्र स्पष्टार्थवत् श्रुतिरित्युक्तन्यायं प्राणा एवेदमग्र आसुरिति भाष्ये श्रुत्युदाहरणसूचितमाह ॥ **अस्या इति** ॥ एतेन वियदधिकरणे गौण्यसम्भवादित्यनादित्वश्रुतेर्गौणानादित्वपरत्वेनोक्तत्वात्तन्यायेन गतार्थेतेति निरस्तम् । प्राणा एवेदमग्र आसुस्तेभ्यो भूतानीति प्रलये प्राणानामवस्थानमुक्त्वा तेभ्यो भूतानीति भूतोत्पत्तिमभिधायाथ प्रलयावस्थितत्वात्प्राणा एवानादयः प्राणा नित्या इति सयुक्तिकसावधारणमुक्तानादित्वसेश्वरवन्मुख्यत्वे गौणत्वेन सावकाशत्वाद्बलवद्विरोध एव गौणार्थस्याश्रयणीयत्वादुत्पत्तिश्रुतेः प्राबल्यायोगादिति भावः ।

प्रकारान्तरेण प्राबल्यमाह **प्राणा इति** ॥ असिध्यादीत्यादिपदेन बाधव्यभिचारौ गृह्येते । इष्यत इति साध्यस्य प्रामाणिकस्य उपादानकृता सृष्टिरिति व्यतिरेकव्याप्तेश्चोक्तेः । एतेन ब्रह्मणोऽन्वयदृष्टान्तत्वसम्भवाद्व्यतिरेकाश्रयणमयुक्तमिति निरस्तम् । ननु भाष्ये आकाशदृष्टान्तेन प्राणोत्पत्ति-

(वाक्यार्थमुक्तावली)

कथनमयुक्तम् । ईशदृष्टान्तेन तदभावोक्तिसम्भवादित्यतो भाष्यार्थमाह ॥ **उत्पत्तिमन्त एवेति** ॥ एतेन यथा येन प्रकारेण यया युक्त्याऽकाशादय उत्पद्यन्ते तथा तेन प्रकारेण तयैव युक्त्या प्राणा उत्पद्यन्त इति सूत्रार्थ उक्तो भवति । अत्र **पुनर्विप्रतिपत्त्यभावेनेति** ॥ तेजआदेर्ब्रह्मान्यकार्यत्वे धर्मात्स्वेदादिदृष्टेरितिवदत्र प्राणानां ब्रह्मान्यकार्यत्वे प्रापकाभावेन विप्रतिपत्त्यभावेनेत्यर्थः ।

## वाक्यार्थविवरणम्

ननु तर्हि पादभेदानुपपत्तिः । न चात्र युक्तिसहितश्रुतिविरोधपरिहारः क्रियते । तत्र नेति पादभेद इति वाच्यम् । कुतः इति चेत्तत्राह ॥ **युक्तिसाहित्यस्येति** ॥ तर्हि कथं पादभेद इत्यतस्तं दर्शयति ॥ **अत्रत्येति** ॥ **तत्रादाविति** ॥ अध्यात्मं विचार्यमाणेष्वित्यर्थः । **श्रुतीति** ॥ प्रबलयुक्तिसहितश्रुतीति सर्वत्र योज्यम् । अन्यथा पादासङ्गतिः स्यादिति ध्येयम् । जन्मादिसूत्र-सङ्गत्यर्थमाह ॥ **सर्वजगदन्तःपातिन इति** ॥ **तस्मादिति** ॥ प्रलये सत्त्वादेवेत्यर्थः ॥ **अस्याः स्पष्टार्थाया इति** ॥ अनुत्पत्तिश्रुतेरित्यर्थः ॥ **कथितेति** ॥ अश्रुतेरुत्पत्तिश्रुतिबाहुल्याच्चेत्याद्युक्त-युक्तियुक्तत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

यथा वियदादयो जातास्तथा प्राणा इन्द्रियाण्यपि जायन्त इत्यर्थः ॥ **विप्रतिपत्त्यभावेनेति** ॥ तेजआदेर्ब्रह्मान्यकार्यत्वे धर्मात्स्वेदादिदृष्टिवदत्र प्राणानां ब्रह्मान्यकार्यत्वे प्रापकाभावेन विप्रतिपत्त्य-भावेनेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ गौण्यसम्भवात् ॐ ॥ २ ॥**

**अनादित्वश्रुतिर्गौणानादित्वापेक्षया । मुख्यासम्भवात् ।**

**'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः ।**
**तेषां भूतैरुपचयः सृष्टिकाले विधीयते ॥**
**परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता'** ॥ **इति हि भविष्यत्पर्वणि ।**

## तत्त्वप्रदीपिका

'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयत'

इति वचनात्प्रलये सूक्ष्मरूपमात्रस्यैव स्थित्यवगमान्नित्यांशस्य तनीयस्त्वेनानादित्वश्रुते-र्गौणार्थत्वादितरस्य महीयस्त्वेनेतरश्रुतेर्मुख्यार्थत्वात् । तात्विकदेवोत्तमानां प्राकृतदेहाधिष्ठि-तेन्द्रियव्यापारपूर्वकत्वाद्भूतसृष्टेर्भूतकारणत्वव्यपदेशोपपत्तेः । गत्यादेश्च भाक्तत्वेन वक्ष्यमाणत्वात् ।

## तत्त्वप्रकाशिका

नन्वाकाशोत्पत्तिसिद्ध्यर्थमनुत्पत्तौ श्रुत्यभावो हेतुरुक्तः । कथमसाविह सम्भवति श्रुतेर्विद्य-मानत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। **गौणीति** ।। सत्यमस्त्यनुत्पत्तिश्रुतिरिति तथापि नासौ प्राणानामनुत्पत्तिं वक्ति किं तु गौणानुत्पत्तिवादिन्येव । मुख्यानुत्पत्तेरसम्भवात् । मुख्यासम्भवे गौणार्थाङ्गीकारस्य न्यायप्राप्तत्वादिति भावः । 'एतस्माज्जायते' इत्यादि श्रुत्यसम्भवोऽपि द्रष्टव्यः । किं तद्गौणानादित्वं प्राणानां कथं च मुख्यासम्भवः प्रत्युतोत्पत्तिरेव न सम्भवत्युपादानाभावादित्यत आह ।। **नित्यानीति** ।। उपचयात्पूर्वमसमर्थानि न संसारकारणानि स्युरित्यत उक्तम् ।। **सृष्टिकाल इति** ।। प्रलये वियुक्तांशानां प्रतिसृष्टिकालमिति भावः । अत्राहङ्कारकारणत्वस्याप्यनिषेधादविरोधः । अहङ्कारोत्पन्नभूतानामपि सूक्ष्मप्राणैरस्त्युपचय इति तत्राप्यविरोधः । मुख्यनित्यतायां स्वातन्त्र्यं भवति । अनेन यावद्विकारमित्यादियुक्तयो गृहीता भवन्ति ।

## गुर्वर्थदीपिका

उपचयात्पूर्वमसमर्थानीत्यस्यास्मिन्सर्गे उपचयेऽपि पूर्वसर्गे उपचयाभावान्न संसारकारणतेति मन्दाशङ्कायां प्रळये वियुक्तानां प्रतिसृष्टिकाले उपचयोऽस्तीति 'सृष्टिकाले विधीयत' इति श्रुतिः परिहारमाहेत्यर्थः । 'तेभ्यो भूतानि जज्ञिरे' इत्यस्याविरोधायाऽऽह **अहङ्कारोत्पन्नेति** ।। तत्रापि भूतानामिन्द्रियोत्पन्नत्वेऽपि ।

## भावबोधः

अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवादिति वियदधिकरणीयभाष्यानुसारेणासम्भवादित्येतत्प्रकारान्तरेण व्याचष्टे– **एतस्माज्जायत इति ॥ श्रुत्यसम्भवोऽपि द्रष्टव्य इति ॥** अनेन 'आत्मैवेदमग्र आसीत्, स प्राणमसृजत, स प्राणान्' इत्यादिवचनादनादित्व एव स्पष्टार्थविशेषश्रुतिविरोधादिति न्यायविवरणमपि व्याख्यातं भवति । **प्रतिसृष्टिकालमिति ॥** यस्मिन् प्रलयकालेऽनुपचयस्तदा न समर्थान्येव । यस्मिंस्तु सृष्टिकाले समर्थानि तदास्त्येवोपचय इत्यर्थः ।

ननु इन्द्रियाणां भूतैरुपचये तैजसाहंकारकार्यत्ववाचि'तैजसानीन्द्रियाण्याहुः' इत्यादि प्रमाणविरोध इत्यत आह– **अत्राहङ्कारेति ।**

ननु तथापि तामसाहंकारे कार्याणां भूतानां 'प्राणा एवेदमग्र आसुः, तेभ्यो भूतानि जज्ञिरे' इति भाष्योदाहृतश्रुतौ कथं प्राणकारणकत्वोक्तिरित्यत आह– **अहङ्कारोत्पन्नेति ।** ननु प्रागभावाप्रतियोगित्वादिरूपसाम्यसम्प्राप्तिरिष्टैवेत्यत आह **मुख्यनित्यतायामिति ॥ अनेनेति ॥** परेण साम्यसम्प्राप्तेरित्यनेनेत्यर्थः ।

## भावदीपः

अनुत्पत्तिं पराधीनविशेषावाप्त्यभावरूपानुत्पत्तिं न वक्तीत्यर्थः ॥ **मुख्येति ॥** अत्राभिमतपराधीनविशेषावाप्तिरूपोत्पत्त्यभावरूपाया इत्यर्थः । नन्वत्र कथमसम्भवयुक्तिमात्रेण सयुक्तिकायाः श्रुतेर्गौणत्वं 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्युक्तेरित्यतः 'आत्मैवेदमग्र आसीत्' 'स प्राणमसृजत' स प्राणानित्यादिवचनादनादित्व एव स्पष्टार्थवद्विशेषश्रुतिविरोधादिति न्यायविवरणोक्त्या जन्मश्रुतिबलाच्चेति भावेनाह ॥ **एतस्मादिति ॥** एतेन न्यायविवरणस्थादिपदेन भाष्योक्तैतस्मादित्यादिश्रुतिग्रह इति सूचितम् । अत्रादिपदेन स प्राणानित्यादि श्रुतिग्रहः । स्मृतौ पूर्वार्धव्यावर्त्यं चोद्यमाह ॥ **किं तदिति ॥** प्रलये सूक्ष्मरूपमात्रस्यैव स्थित्यवगमेन तस्य नित्यांशस्य तनीयस्त्वेनानादित्वश्रुतेर्गौणत्वमुक्तं भवति । तृतीयार्धव्यावर्त्यमाह ॥ **कथं चेति ॥** द्वितीयार्धव्यावर्त्यमाह ॥ **प्रत्युतेति ॥** एतेन निरुपादानत्वरूपविशेषशङ्कानिरासार्थं गौणीति पुनर्योगारम्भ इति सूचितम् । तथा निरूपादानत्वोक्तिः सूक्ष्मेन्द्रियाभिप्राया । जन्मश्रुतिरुपचितस्थूलेन्द्रियपरेति

(भावदीपः)

भावः । सृष्टिकाल इत्युक्तेः प्रकृतानुपयोगं ह्याशङ्क्य कृत्यमाह ॥ **उपचयादिति** ॥ तथा च यदा नोपचितानि प्रलये तदा न समर्थानि यदा तु शक्तानि सृष्टिकाले तदोपचितानीति भावः । तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्निति द्वितीयस्कन्धादौ तथा विशिष्टकार्यशक्तित्वादेवा वैकारिकाः स्मृताः । 'अतिजाज्वल्यमानत्वात्तैजसानीन्द्रियाण्यपि । तामसानि तु भूतानि यतस्तावदभूत्त्रयम्' इति द्वितीयस्कन्धपञ्चमाध्यायतात्पर्योक्तपाद्मस्मृत्यादौ च तैजसाहङ्कारकार्यत्वोक्तिविरोधं निराह ॥ **अत्रेति** ॥

ननु तथापि तामसानि तु भूतानि त्वित्याद्युक्त्या तामसाहंकारकार्याणां भूतानां कथं तेभ्यो भूतानि जज्ञिर इति भाष्योक्तश्रुतौ प्राणकारणकत्वोक्तिरित्यत आह ॥ **अहंकारेति** ॥ स्मृतौ तृतीयार्धं व्यनक्ति ॥ **मुख्यनित्यतायामिति** ॥ पराधीनविशेषावाप्त्यभावरूपायामित्यर्थः । स्वातन्त्र्यं च द्वयोर्विरुद्धमिति भावः ॥ **अनेनेति** ॥ सौत्रासम्भवशब्दार्थविवरणपरेण परेणेत्यर्धेनेत्यर्थः । जन्मश्रुतिबाहुल्यादिरादिपदार्थः । तत्त्वप्रदीपे तु चकाराद्विभक्तशक्तित्वाच्चेत्युत्तरसूत्रे चकारेण सङ्ग्रह उक्तः । एतेन पूर्वसूत्रे तथाशब्देनानुकृष्टानामेव हेतूनामुत्तरसूत्राभ्यां विवरणमिति सूचितम् ।

## अभिनवचन्द्रिका

**हेतुरुक्त इति** ॥ 'न वियदश्रुतेः' इति सूत्रोक्तो हेतुः 'अनादिर्वाऽयमाकाशः' इति श्रुतिर्गौणत्वोक्त्या उक्तः समर्थित इत्यर्थः ॥ **कथमसाविति** ॥ 'प्राणा एवाऽनादयः' इति श्रुतेर्विद्यमानत्वात् **असौ** अश्रुतेरिति हेतुः, **इह** प्राणविषये, कथं सम्भवतीत्याशङ्कां पूर्वश्रुतिवत्, अस्यापि श्रुतेर्गौणार्थत्वप्रतिपादनेन परिहरत्सूत्रमुपन्यस्य व्याचष्ट इत्यर्थः । यद्यपि 'तथा प्राणा' इत्येकेनैव सूत्रेणालम् । 'अस्ति त्विति' सूत्रोक्तार्थस्यातिदेशवत् 'गौण्यसम्भवात्' इत्यादि सूत्रार्थस्याप्यतिदेष्टुं शक्यत्वात् तथापि अत्र 'अस्ति तु' इति सूत्रार्थस्यैवाऽतिदेशः न तु 'श्रुतेः' इति हेतोरिति विज्ञायेत, तन्मा विज्ञायीति, 'गौण्यसम्भवाः' इति सूत्रं कृतम् । एवमपि 'अश्रुते'रित्यस्यैवाऽतिदेशः न सर्वस्येति विज्ञायेत तन्मा विज्ञायि । किन्तु सर्वातिदेश इति ज्ञापनाय 'प्रतिज्ञानुपरोधाच्च' इति सूत्रं कृतमिति सूत्रद्वयमर्थवदिति । 'असम्भवात्' इति सौत्रपदं प्रकारान्तरेण व्याचष्टे – **एतस्माज्जायत इतीति** ॥ श्रुत्यसम्भवोऽपि सौत्रासम्भवशब्दार्थो द्रष्टव्य इत्यर्थः ॥ **प्रलये वियुक्तानामिति** ॥ उपचायकभूतैरित्यर्थः ।

(अभिनवचन्द्रिका)

ननु 'तेषां भूतैः' इति इन्द्रियाणां भूतेषु उपचयकथनमयुक्तम् । 'तैजसानीन्द्रियाण्याहुः' इति स्मृतौ **अहङ्कारकारणत्वस्य स्मरणादित्यत आह– अत्राहङ्कारेति ।।** अत्र 'भूतैरुपचय' इति स्मृतौ अहङ्कारकारणत्वस्याप्यनिषेधलिङ्गेन स्वीकारविज्ञानादविरोध इत्यर्थः । अहङ्कारकारण-कत्वस्वीकारेण भूतकारणकत्वस्याविरोधोपपादनमयुक्तम् । अन्योपादानकत्वस्याऽन्योपादानकत्व-विरोधित्वादित्यत आह – **अहङ्कारोत्पन्नेति ।। अङ्कारोत्पन्नानामपि ।।** भूतानां सूक्ष्मप्राणैरुपचयः प्रमाणदृष्टोऽस्तीति तत्राप्युभयोपादानकत्वस्वीकारेऽप्यविरोध इत्यर्थः । 'सूक्ष्मप्राणैः' इति विशिंषता तेभ्यो भूतानि जज्ञिरे' इति भूतानां प्राणजन्यत्वस्य प्रागुक्तत्वात् इदानीं पुनरिन्द्रियाणां भूतजन्यत्वाभिधानादन्योन्याश्रय इति शङ्का निराकृता । केषाश्चित् सूक्ष्मप्राणानां भूतोपादानत्वं, तदन्येषान्तु भूतोपचितत्वमित्यङ्गीकारात् । ननु अस्तु मुख्यनित्यत्वं, परेण साम्यसम्प्राप्तिः कुत इत्यत आह– **मुख्यनित्यतायामिति ।।** स्वप्राप्यविशेषाणां पराधीनत्वाभावस्य स्वातन्त्र्येणा-विनाभावादिति भावः ।। **अनेनेति ।।** 'परेण साम्यसम्प्राप्तेः' इत्यनेनेत्यर्थः । **'यावद्विकारम्' इत्यादियुक्तय इति ।।** अल्पशक्तित्वादियुक्तय इत्यर्थः । ततश्चायं प्रयोगः प्राणा उत्पत्तिमन्तः, अल्पशक्तित्वादिति ।

पूर्वक्षस्तु – न प्राणा उत्पत्तिमन्तः, 'प्राणा एवानादयः' इति श्रुतेः । न चोत्पत्तावपि श्रुतिरस्तीति वाच्यम् । अनुत्पत्तिश्रुतेः स्पष्टार्थतया निरवकाशत्वेन प्राबल्यात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतेः प्रादुर्भावपरतयापि योजयितुं शक्यत्वादविस्पष्टार्थत्वेन दौर्बल्यात्, प्राणा नोत्पत्तिमन्तः निरुपादानत्वादिति युक्तियुक्तत्वाच्च । न चाऽसिद्धिः 'नोपादानं हीन्द्रियाणाम्' इति स्मृतिसिद्धत्वात् । अतः प्रबलश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेवेति नेश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति ।

सिद्धान्तस्तु – उत्पत्तिमन्त एव प्राणाः । आकाशस्योत्पत्तिसाधकानां हेतूनामिहापि सद्भावात् । नन्वाकाशोत्पत्तिसिद्ध्यर्थं श्रुत्यभावो हेतुरुक्तः । न चासाविह सम्भवति । श्रुतेर्विद्यमान-त्वादिति चेत्, सत्यम्, अस्ति श्रुतिः, तथापि नासौ मुख्यार्था किन्तु गौणार्था । परमात्मना साम्यप्रसङ्गेन मुख्यार्थाऽसम्भवात्, प्राणा उत्पत्तिमन्तः अल्पशक्तित्वादिति युक्तिविरुद्धत्वाच्च । 'स इदं सर्वमसृजत' इति प्रतिज्ञाविरोधाच्च । अतः श्रुत्यविरोधेन प्राणानां परमात्मोत्पन्नत्वसिद्धेः युक्तं श्रुतिसमन्वयेन ब्रह्मणो जगत्कारणत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

यद्यपि तथा प्राणा इत्यतिदेशेनैव गौणीत्यादिकं सर्वमुक्तप्रायमन्यथा अस्त्वित्यादि सूत्रेणापि भाव्यम् । तथापि गौण्यसम्भवादित्यत्रोत्पत्तिबाहुल्यसम्भवादित्युक्त्याऽस्त्वित्यादिसूत्रार्थसूचनात् । निरुपादानत्वादिशङ्कानिरासायानादित्वश्रुतिगतिप्रतिपादने आदरमाधायेदं सूत्रं कृतमिति ध्येयम् ।

अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवादिति वियदधिकरणीयभाष्यानुसारेणासम्भवा-दित्येतत्प्रकारा-न्तरेण व्याचष्टे **तस्मादिति** ॥ इत्यादीत्यादिपदेनात्मैवेदमग्र आसीत्' 'स प्राणमसृजत सप्राणान्' इत्यादिकं गृह्यत तेन स्पष्टार्थवच्छ्रुतिरिति सिद्धान्तन्यायोऽप्युक्तो भवति ॥ **किं तद्गौणा-नादित्वमिति** ॥ सूक्ष्मरूपेण नित्यानां पराधीनोपचयभागलाभात्पराधीनविशेषलाभाभावरूपमुख्या-नादित्वाभावाद्गौणमनादित्वमिति परिहाराभिप्रायः । यद्वा सूक्ष्मरूपस्यैकस्यैवानुत्पत्तिरित्यनादित्व-श्रुतेरल्पविषयत्वाद्गौणत्वम् उपचितावयवानामनेकेषां भावात् उत्पत्तिश्रुतेर्बहुविषयत्वेन मुख्यत्वमिति भावः । तदुक्तं तत्वप्रदीपे । नित्यांशस्य कनीयस्त्वेनानादित्वश्रुतेर्गौणत्वादितरांशस्य महीय-स्त्वेनेतरश्रुतेर्मुख्यार्थत्वादिति ।

उपचयात्पूर्वमपि सम्मतिहेतुत्वे उपचयवैयर्थ्यं तदभावे तदानीं तदभावः स्यादिति वाच्यम् । प्रलये सामर्थ्यानभ्युपगमात् । सृष्टिकाले तदभ्युपगमादिति तदेतदाह ॥ **उपचयादिति** ॥ प्रतिसृष्टि-कालमुपचये कालक्रमेण संसाराधिक्यं स्यादित्यत आह ॥ **प्रलये वियुक्तेति** ॥ इन्द्रियाणां भूतैरुपचये तैजसानीन्द्रियाण्याहुरिति वाक्यविरोध इत्यत आह ॥ **अत्रेति** ॥ तामसाहङ्कारकार्याणां भूतानां कथं तेभ्यो भूतानि जज्ञिर इति प्राणकार्यत्वोक्तिरित्यत आह ॥ **अहङ्कारेति** ॥ ननु मुख्यनित्यत्वं प्रागभावप्रध्वंसाप्रतियोगितालक्षणमुभयत्र सममेवेति साम्यसंप्राप्तिरिष्टैवेत्यत आह ॥ **मुख्यनित्यतायामिति** ॥ पराधीनविशेषलाभाभावरूपमुख्यं नित्यतायां स्वतन्त्रं भवति । यथा च परेण साम्यमेवं रूपमनिष्टमित्यर्थः ॥ **अनेनेति** ॥ गौणीति सूत्रेणेत्यर्थः । असम्भवादित्यंशेन परेण साम्यसंप्राप्त्या मुख्यासम्भवोक्त्या विभक्तशक्तित्वसूचनाय यावद्विकारमित्युक्त्या युक्तिः । स्याच्चैक-स्येत्यत्रोक्तगौणमुख्यत्वापेक्षया एकस्यैवोत्पत्तिमत्वानुत्पत्तिमत्वव्यवस्थाघटकयुक्तिः । उत्पत्तिश्रुत्य-सम्भवोक्त्या अस्त्विति सूत्रोक्तयुक्तिश्चेत्यर्थः ।

## वाक्यार्थविवरणम्

**श्रुतेरिति** ॥ प्राणा एवानादय इति श्रुतेरित्यर्थः ॥ **अनुत्पत्तिम्** ॥ मुख्यामिति शेषः । भूतैरुपचयोपपादनार्थं **सृष्टिकाल** इत्युक्तमित्याशयेनोपपादयति ॥ **उपचयादिति** ॥ प्रलये इत्यर्थः ॥ **इत्युक्तम्** ॥ इत्याशयनोक्तम् । उपचयस्यैव सृष्टित्वेन तस्मिन् सत्युपोद्वलितत्वेन समर्थानि सन्ति संसारकारणानि भवन्तीति भावः । इन्द्रियाणां भूतैरुपचयोक्त्या सृष्टिकाले सूक्ष्मभागावस्थानमेव नास्तीति प्राप्नोति । तथा चानादित्वश्रुतिर्निर्विषयैव स्यादित्यतस्तेषामित्यस्यार्थमाह ॥ **वियुक्तांशानामिति** ॥ **सृष्टिकाले** पुरुषदेहारम्भकेन्द्रियांशाः प्रलयेऽनेन वियुक्ता सन्तः ये मूलरूपं प्राप्तास्तेषामिन्द्रियाणामित्यर्थः । **सृष्टिकाल** इत्येकवचनेनैतत्सृष्टिकाल एवोपचयो नोत्तरकल्पीयसृष्टिकाल इति प्राप्नोतीत्यत आह ॥ **प्रतिसृष्टिकालमितीति** ॥ नन्विन्द्रियाणां भूतैरुपचये 'तैजसानीन्द्रियाण्याहुः' इति तैजसाहङ्कारकार्यत्ववाचिप्रमाणविरोध इत्यत आह ॥ **अत्रेति** ॥ अथवा ।

ननु यदि प्रलये वियुक्तांशानामिन्द्रियांशानां भूतैरुपचयरूपा सृष्टिरुच्यते तर्हि सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः' इति सूक्ष्मेन्द्रियाणां तैजसाहङ्कारादुपचयोक्तेस्तद्विरोध इत्यत आह ॥ **अत्राहङ्कारेति** ॥ तथा च तेषां प्रलये वियुक्तांशानां सृष्टिकाल आदौ तैजसाहङ्कारादुपचितानां पश्चाद्भूतैरुपचयो विधीयत इति भाष्ये प्रमाणार्थो द्रष्टव्यः ॥ **यद्वा** ॥ 'तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्' इति द्वितीयस्कन्धे तैजसाहङ्कारकार्यत्वोक्तिविरोध इत्यत आह ॥ **अत्राहङ्कारेति** ॥ प्रमाण इत्यर्थः । इत्थं हि पौराणिकी प्रक्रिया । सर्वेषामपि तत्त्वानां सूक्ष्मरूपेण नित्यत्वावगमादादौ सूक्ष्मरूपेणावस्थितस्य महत्तत्त्वस्य गुणत्रयैरुपचय एव तस्योत्पत्तिस्तथाऽहङ्कारतत्त्वसूक्ष्मभागस्यापि महत्तत्त्वेनोपचय एव तस्योत्पत्तिः । तच्चाहङ्कारतत्त्वं वैकारिकतैजसतामसभेदेन त्रिविधम् । तत्र मनसः सूक्ष्मरूपस्य वैकारिकाहङ्कारादुपचय एव तस्योत्पत्तिर्देवतादेहादेश्च स्वरूपेणैवोत्पत्तिः । तथा भूतसूक्ष्माणामपि तामसाहङ्कारादुपचय एव भूतानामुत्पत्तिः । तथा च तैजसाहङ्कारात्किञ्चिदुपचितानामिन्द्रियाणां तामसाहङ्कारात् पश्चादुत्पन्नैरत एव किञ्चित् स्थूलैरपि भूतैः पुनरुपचयो भवति । ततश्चातिदृढानि भवन्तीति तैजसाहङ्कारकार्यत्वस्यात्रानिषेधादविरोध इत्यर्थः । यथोक्तं भागवततात्पर्ये । 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः । तेषां भूतैरुपचयः सृष्टिकाले विधीयत' इति । अहङ्कृतेस्तैजसाहङ्कारादित्यर्थः ।

(वाक्यार्थविवरणम्)

नन्वथापि तामसाहङ्कारकार्याणां भूतानां 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि' इति प्राणशब्द-वाच्येन्द्रियेभ्यः कथमुत्पत्तिरुच्यतेऽतो विरोध इत्यत आह ॥ **अहङ्कारेति** ॥ तामसाहङ्कारेत्यर्थः ॥ **सूक्ष्मप्राणैः** ॥ सूक्ष्मेन्द्रियैः । ननु तैजसाहङ्कारकार्याणामिन्द्रियाणां भूतैरुपचयमुक्त्वा तेषां पुनः प्राणैरुपचयकथनेऽन्योन्याश्रयस्स्यादिति चेत् । उच्यते येषां तैजसाहङ्कारोत्पन्नेन्द्रियाणां भूतैरुपचयः तैरेव पुनर्भूतानामुपचये हि स स्यात् । न चैवम् । किंनामाहङ्कारोत्पन्नभूतानां सूक्ष्मेन्द्रियैरेव । एवं च सूक्ष्मप्राणैरुपचितैर्भूतैस्तैजसाहङ्कारोत्पन्नेन्द्रियाणामुपचयकथनेन व्यक्तिभेदान्नान्योन्याश्रय इति ।

ननु परेणेति भाष्ये यदि प्राणानां सर्वथोत्पत्त्यभावरूपमुख्यनित्यता स्यात् तर्हि परेण साम्यं स्यादित्यापादने प्रागभावप्रतियोगित्वरूपसाम्यमिष्टमेवेत्यतः परेण साम्यं व्याख्याति ॥ **स्वातन्त्र्य-मिति** ॥ तथा च स्वातन्त्र्यरूपसाम्यसम्प्राप्तेरित्यर्थो द्रष्टव्यः ॥ **युक्तय इति** ॥ 'प्राणाद्या उत्पत्तिमन्तः । विकारित्वात्' इत्यादिप्रागुक्तयुक्तय इत्यर्थः ॥ **अनेनेति** ॥ उक्ततर्के विपर्यय-पर्यवसानेऽस्वातन्त्र्यलाभात् तेन चाल्पशक्तित्वलाभादिति भावः । नित्यानीत्यनेन सूक्ष्मरूपेण नित्यत्वरूपं गौणानादित्वं, परेणेत्यनेन मुख्यासम्भवस्तेषामित्यनेनोपादानं चोक्तं भवतीति ध्येयम् ।

## वाक्यार्थमञ्जरी

प्राणानादित्वश्रुतिः सूक्ष्मरूपेणानादित्वरूपगौणानादित्वपरा कुतः मुख्यानादित्वासम्भवात्तथा तदुत्पत्तिश्रुतिबाहुल्यासम्भवादित्यर्थः । अन्यथोत्पत्तिश्रुतिबाहुल्या सम्भवादिति वियदधिकरणीय-भाष्यानुरोधेनाह ॥ **एतस्माज्जायत इति** ॥ नन्विन्द्रियाणामुपचयं विना संसारकारणत्वमस्ति न वा नाद्यः उपचयवैयर्थ्यात् द्वितीये आह ॥ **उपचयादिति** ॥ **प्रलये वियुक्तानामिति** ॥ प्रलयकाले स्वोपचयकारणभूतैर्वियुक्तानामिन्द्रियाणां प्रतिसृष्टिकालं प्राग्वियुक्तभूतैः पुनरुपचय इत्यर्थः । तथा च यस्मिन्प्रलयकालेऽनुपचयस्तदा संसारकारणत्वं नास्त्येव यदा सृष्टिकाले संसारकारणत्वं तदोपचयोस्त्येऽवेति नोक्तदोष इति भावः । नन्विन्द्रियाणां भूतैरुपचयाङ्गीकारोऽनुपपन्नः तथात्वे तैजसानीन्द्रियाण्याहुरिति तेषां तैजसाहंकारकार्यत्वप्रतिपादकप्रमाणविरोधादित्यत आह ॥ **अत्रा-हङ्कारेति** ॥ तैजसाहंकारोत्पन्नानामेवेन्द्रियाणां भूतैरुपचयमात्रमुच्यते न त्वहङ्कारकार्यत्वं निषिध्यत इत्यर्थः । नन्वथापि 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे' इति भूतानामिन्द्रियजन्यत्व-

(वाक्यार्थमञ्जरी)

कथनमयुक्तम् । **तथात्वे** तामसानि तु भूतानीति तेषां तामसाहंकारकार्यत्वप्रतिपादकप्रमाण-विरोधादित्यत आह ॥ **अहंकारोत्पन्नेति** ॥ अन्योन्याश्रयवारणाय सूक्ष्मेत्युक्तं केषाञ्चिदेव सूक्ष्मप्राणानां भूतोपचयकारणत्वं तदन्येषां भूतोपचितत्वमिति व्यक्तिभेदेनान्योन्याश्रयत्वाभावादिति भावः । ननु प्रागभावाप्रतियोगित्वादिना साम्यसम्प्राप्तिरिष्टैवेत्यत आह ॥ **मुख्यनित्यतायामिति** ॥ पराधीनविशेषतादिराहित्यादेरेव मुख्यनित्यताशब्दार्थत्वादिति भावः ॥ **अनेनेति** ॥ परेण साम्य-सम्प्राप्तेरिति स्वातन्त्र्यमापादयता तेषामस्वातंत्र्यसूचनेनाल्पशक्तित्वादियुक्तयोऽपि सङ्गृहीता इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ ३ ॥**

**'स इदं सर्वमसृजत'** (तै.उ. २-६) इति ।

॥ इति प्राणाधिकरणम् ॥

## तत्त्वप्रदीपिका

'इदं सर्वमसृजत' इति प्रतिज्ञानुपरोधस्य च पालनीयत्वात् । चकाराद्विभक्तशक्तित्वाच्चोत्पद्यन्त इति सिद्धान्तः । एवमुपरि च यथासम्भवं योजनीयाः संशयादयः । केवलश्रुतिरत्रत्यैव । उत्तराधि-करणयोर्विशेषश्रुतिकारणकः पृथगारम्भः ।

## तत्त्वप्रकाशिका

प्रतिज्ञाहानिरित्युक्तयुक्त्याप्येतमर्थं समर्थयत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति ॥ **प्रतिज्ञेति** ॥ सूत्रेणान्वयः । प्राणानामुत्पत्त्यङ्गीकारे 'सर्वमसृजत' इति श्रुत्युक्तप्रतिज्ञानुपरोधादुत्पत्तिमन्तः प्राणा इति । अतः श्रुत्यविरोधेन प्राणानां परमात्मोत्पन्नत्वसिद्धेर्युक्तमीश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ।

## भावबोधः

**उक्तयुक्त्यापीति** ॥ अनेन 'इदं सर्वमसृजत' इति सामान्यवचनस्याधिक्यं सिद्धान्ते विशेष-मात्रश्रुतेः सकाशादुभयश्रुतेः प्राबल्यादिति न्यायविवरणमप्युक्ततात्पर्यकम् । अत्राद्ये– वियदादेः

(भावबोधः)
परमात्मोत्पन्नत्व उक्तयुक्त्यतिदेशेनेन्द्रियाणां परमात्मोत्पन्नत्वोक्तिः । द्वितीये– तद्बाधकत्वेन शङ्किताया अनादित्वश्रुतेः सहेतुकममुख्यार्थत्वोक्तिः । तृतीये– उत्पत्तिप्रमाणोपोद्बलक'स इदं सर्वम्' इति श्रुत्युक्तिरिति सूत्रक्रमः ।

## भावदीपः

**अत इति ॥** अनुत्पत्तिश्रुतेर्गौणत्वात्सयुक्तिकोत्पत्तिश्रुतिबाहुल्यादीशजत्वे विवादाभावाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

तथा प्राणा इत्यनुवृत्या सूत्रार्थमाह ॥ **प्राणानामिति ॥** न केवलं स्पष्टार्थवच्छ्रुतिविरोधः । परपक्षे इदं सर्वमिति सामान्यवचनं चाधिकमिति स्मरणाय पुनर्योगः । आद्ये श्रुतेरित्यादि हेत्वतिदेशः । द्वितीयेऽनादित्वश्रुतिगतिप्रदर्शनेन स्वपक्षे बाधकोद्धारः साधकोक्तिश्च । तृतीये बाधकोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**प्रतिज्ञानुपरोधादिति ॥** प्राणानामपि सर्वस्मादव्यतिरेकादिति भावः । अन्यथा तदुपरोधादिति शेषः ।

## वाक्यार्थमञ्जरी

'स इदं सर्वमसृजत' इति प्रतिज्ञानुसाराच्च प्राणा उत्पत्तिमन्त एवेत्यर्थः । सर्वशब्देन प्राणानामपि गृहीतेरिति भावः ।

॥ इति प्राणाधिकरणम् ॥

## २. अथ मनोधिकरणम्

### सूत्रभाष्यम्

'द्विधा हैवेन्द्रियाणि नित्यानि चानित्यानि च । तत्र नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानि' इति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते । अत आह–

**॥ ॐ तत्प्राक्श्रुतेश्च ॐ ॥ ४ ॥**

'मनः सर्वेन्द्रियाणि च'(मुं.उ. २-१-३) इति पूर्वोक्तत्वान्नानुत्पत्तिर्मनसो युज्यते ।

'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः ।
तदनुत्पत्तिवचनमल्पोपचयकारणात्' ॥ इति ।

वायुप्रोक्तवचनं चशब्देन गृहीतम् ।

॥ इति मनोऽधिकरणम् ॥

### तत्त्वप्रदीपिका

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इतीतरेन्द्रियेभ्यः पूर्वमुत्पत्त्युक्तेन मनसोऽनुत्पत्तिर्युज्यते । विशेषश्रुतिगतिरल्पोपचयोऽत्र ।

### तत्त्वप्रकाशिका

अत्र ब्रह्मणि श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थं मनोजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणे ब्रह्मणि श्रुतिसमन्वय उक्तः । तत्र मनोजन्मविषयश्रुतीनां विरोधेनाप्रामाण्ये नासावुपपद्यत इति स निराकार्य एव । अत्र प्रकृतेन्द्रियान्तर्गतं मनो विषयः । किमुत्पत्तिमन्न वेति संशयः । 'मनः सर्वेन्द्रियाणि च' 'नित्यं मनोऽनादित्वात्' इति श्रुतिविरोधः सन्देहबीजम् । पूर्वपक्षयति **॥ द्विधेति ॥** मनो नोत्पत्तिमत् । 'नित्यं मनोऽनादित्वात्' इति श्रुतेः । न चोत्पत्तिश्रुत्यनुसारेणेन्द्रियानुत्पत्तिश्रुतिवदनादित्वश्रुतेर्गौणार्थत्वमिति साम्प्रतम् । इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानात् । किं च मनसः सादित्वे तद्विना

(तत्त्वप्रकाशिका)

कदाचिदनादिपुरुषेणावस्थातव्यम् । न चैवं भवति । तथा सति तदा संसाराभावप्रसङ्गात् । मनो हि संसारहेतुः । यदाहुः । 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति । संसारसादित्वं त्वप्रामाणिकं सर्वप्रमाणविरुद्धं च । अतो नित्यमेव मनः । एवं च युक्तियुक्तविशेषश्रुतेः प्राबल्यात्तद्विरोधेनोत्पत्तिश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ नानुत्पत्तिर्मनसः । उत्पन्नत्वे श्रुतिसद्भावात् । न चास्या गत्यन्तरं वाच्यम् । पृथङ्मनसो जन्माभिधायकत्वेन विशेषश्रुतित्वात् । न चान्येन्द्रियवन्मनसोऽप्युत्पत्तिमत्त्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति मन्तव्यम् । अन्येन्द्रियेभ्योऽपि प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेरिति भावः ॥ **पूर्वोक्तत्वादिति** ॥ पूर्वमुत्पन्नतयोक्तत्वात् ।

ननु कुतो मनसः पूर्वोत्पत्तिः कथं चोत्पत्त्यङ्गीकारे श्रुत्यादिविरोधपरिहार इत्यत आह ॥ **पूर्वमिति** ॥ नोत्पत्तिमत्वे मनसः श्रुतिविरोधः । प्रलयेऽपीन्द्रियवत्सूक्ष्मस्वरूपसत्ताभ्युपगमात् । अत एव न युक्तिविरोधः । न च विशिष्योक्तिविरोधः । अन्येन्द्रियेभ्योऽल्पोपचयाभिप्रायेण तदुपपत्तेरिति भावः । अतः श्रुत्यविरोधेन मनसो भगवदुत्पन्नत्वसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

पृथङ्मनसो जन्माभिधायकत्वेनेत्यत्र सर्वेन्द्रियाणि चेति उत्पद्यमानतयोक्तेन्द्रियमध्ये पठितस्यापि ''मनसो मन'' इति पृथक्कथनेन निरवकाशत्वादिति भावः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **अत्र प्रकृतेन्द्रियान्तर्गतं मन इति** ॥ **किमिति** ॥ अत्र मनोऽनुत्पत्तिमदुतोत्पत्तिमदिति चिन्ता । तदर्थं तदुत्पत्तिरनुत्पत्तिश्रुतिविरुद्धा न वेति । तदर्थं नित्यं मनोऽनादित्वादित्यादियुक्त्या श्रुतिर्मुख्यार्थोतामुख्यार्थेति । तदर्थमनुत्पत्तिश्रुतिर्युक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थमन्येन्द्रियेभ्यो विशिष्य मनसो नित्यत्वाभिधानात् इत्युक्तेर्गत्यन्तरं नास्त्युतास्तीति । तदर्थं मनसः सृष्टिकाले किमिन्द्रियाणामिव बह्ववयवोपचय उत अल्पावयवोपचय इति । तदर्थं मनसोऽवयवोपचयादिरूपोत्पत्तौ विशेषप्रमाणं नास्त्युतास्तीति ।

(भावबोधः)

पूर्वाधिकरणेन गतार्थताशङ्कां निरस्यति– **न चोत्पत्तीति** ॥ कुतो नेत्यतो द्विधा ह वा इत्यादिभाष्यं विशेषश्रुतिविरोध इति न्यायविवरणानुसारेण व्याचष्टे– **इन्द्रियाणामिति** ॥ मनोव्यतिरिक्तानामित्यर्थः । एतदेव च श्रुतेर्न्यायविवरणोक्तं विशेषरूपत्वम्, न तु धर्मनिर्देशमात्रम् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।' इति सादित्वेऽपि तस्य सत्त्वादिति ।

ननु विशिष्यनित्यत्ववचनवन्मनः सर्वेन्द्रियाणि च' इति मनसः पृथग्जन्मवचनेन श्रुत्योः साम्यात् कथं निर्णय इत्यतो 'न ह्यमना' इति श्रुतिविशेषोक्तयुक्तिमाह– **किं चेत्यादिना** ॥ **नित्यमेवेति** ॥ अनुत्पत्तिमदेवेत्यर्थः ॥ **पृथङ्मनस इति** ॥ अनेन ।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति विशेषश्रुतिरिति न्यायविवरणमप्युक्ततात्पर्यं भवति । अन्येन्द्रियाण्यनित्यानीत्याक्षिप्य मनसो विशिष्य नित्यत्वाभिधानरूपयुक्तिनिरासाय सूत्रे 'प्राक्' पदमित्यभिप्रेत्य प्रवृत्तं पूर्वोक्तत्वादिति भाष्यं तन्निरसनीयशङ्कानिरासपूर्वकं व्याचष्टे– **न चेत्यादिना** ॥ श्रुतेः पृथग्जन्माभिधानमात्राभिप्रायेण' इन्द्रियाणि मनः' इति निर्देशः स्यात्; न तु 'मनः सर्वेन्द्रियाणि च' इति । एवं च श्रुतौ न केवलं पृथग्जन्माभिधानमात्रम्; किं तु विशिष्य-नित्यत्वोक्तिरूप युक्तिनिरासोऽप्यभिप्रेत इति सूत्रभाष्याशय इति भावः ॥ **श्रुतिविरोध इति** ॥ 'नित्यं मनोऽनादित्वात्' इति श्रुतिविरोध इत्यर्थः ॥ **सूक्ष्मस्वरूपसत्ताभ्युपगमादिति** ॥ प्रलये मनसः सत्त्वाभावेऽल्पोपचयकारणादित्युक्तोऽल्पोपचयो न स्यादित्यर्थः ॥ **अत एव न युक्तिविरोध इति** ॥ उक्तरीत्या मनसोऽनादित्वेन पुंसो मनोवियोगाभावात् न ह्यमना इत्युक्तयुक्तिविरोधो नेत्यर्थः ॥ **न च विशिष्येति** ॥ अन्येन्द्रियाण्यनित्यकोटौ निक्षिप्य मनसो विशिष्यनित्यत्वोक्तिविरोध इत्यर्थः ।

## भावदीपः

भाष्ये नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठतीत्येव पूर्तौ अवशिष्टोक्तिरपि पूर्वस्माद्विशेषशङ्काप्रदर्शनपरेति भावेन तद्व्यावर्त्यशङ्कापूर्वं तदंशोपयोगमाह ॥ **न चोत्पत्तीति** ॥ 'एतस्माज्जायत' इत्यादिश्रुतीत्यर्थः । गौणार्थत्वं सूक्ष्ममनःपरत्वमित्यर्थः ॥ **विशिष्येति** ॥ इन्द्रियाण्यनित्यकोटौ निक्षिप्य विशिष्य मनसो नित्यत्वोक्तिरूपविशेषश्च न जन्मश्रुतावस्ति किन्तु

(भावदीपः)

'मनः सर्वेन्द्रियाणि च' इति विशिष्यधर्मिनिर्देशमात्रमेव नापि प्राणा एवानादय इत्यत्राप्यस्ति । तेन न पूर्वसाङ्कर्यमपीति भावः । तावतैव पूर्तौ न ह्यमना इत्यंशस्योपयोगमाह ॥ **किञ्चेति** ॥ एतेन नित्यं मनोऽनादित्वादिति विशेषश्रुतिविरोध इति न्यायविवरणे नित्यं मन इति मध्ये प्रतीकग्रहणेन भाष्योक्तपूर्वोत्तरांशयोरप्युपादानं श्रुतेर्विशेषत्वं च विशिष्य नित्यत्वाभिधायकत्वम् अनादिपुरुषा-विनाभूतत्वाभिधायकत्वं चेति द्वेधेति दर्शितं भवति । पुरुषेण जीवेनेत्यर्थः । तदनादित्वं च यावदात्मभावित्वाच्चेत्यत्र सिद्धम् । सौत्रचशब्दार्थसूचितं व्यनक्ति ॥ **तदा संसारेति** ॥ **यदाहुरिति** ॥ गीताभाष्ये षष्ठे ॥ **सर्वेति** ॥ सोऽनादिना पुण्येन पापेन चानुबद्धः परेण विनिर्मुक्त इति एषोऽश्वत्थः सनातनः नान्तो न चादिर्न च सम्प्रतिष्ठा अश्वत्थमेनं सुविरूढम्' इत्यादिश्रुति-स्मृत्यादिविरुद्धमित्यर्थः ॥ **अत इति** ॥ विशिष्य नित्यत्वश्रवणात् । अनादिबन्धहेतुतया अनादिपुरुषामविनाभूतत्वश्रवणाच्चेत्यर्थः । उक्तयुक्तिद्वयं सयुक्तिकेति भाष्येऽभिमतमेतदेव च विशेषश्रुतिविरोध इत्यन्यत्रोक्तविशेषपदेन चाभिमतमिति दर्शयन् भाष्ये काङ्क्षितपूर्त्यै न्यायविवरणोक्तं संयोजयन् फलोक्त्योपसंहरति ॥ **एवं चेति** ॥ न वियदित्यतो नोत्पत्त्यसम्भव इत्यस्यात्र प्राप्तिं मत्वा भाष्यं व्याचष्टे ॥ **नानुत्पत्तिरिति** ॥ एतेन सूत्रे तत्प्रागित्यनेन तेभ्यः पूर्वप्रकृतप्राणेभ्यः प्रागित्युक्त्या तथा श्रूयमाणो मनोरूपो विषयो लब्ध इति दर्शितम् । उत्पत्तिमदिति वाच्ये नानुत्पत्तिरित्युक्तिः पूर्वोक्तोत्पत्त्याक्षेपनिरासकत्वमस्य योगस्य सूचयितुम् । एवमग्रेऽपि भाष्ये उक्तत्वादित्येतच्छ्रुतेरित्यस्य व्याख्येति भावेनाह ॥ **उत्पन्नत्व इति** ॥ भाष्ये तत्प्रागित्यंशव्याख्यापूर्वेति । तस्य कृत्यं वक्तुं पूर्वोक्तमनुवदति ॥ **न चेति** ॥ गत्यन्तरं विशेषश्रुतिविरोधेनाप्रामाण्यमित्युक्तगत्यन्तरमित्यर्थः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति विशेषश्रुतेरित्यन्यत्रोक्तं श्रुतेर्विशेषत्वं वक्तुं पूर्वोक्तत्वरूपं भाष्योक्तमेवेति दर्शयन् पूर्वोक्त-त्वादित्येतद्भावमाह ॥ **पृथगिति** ॥ तर्हि सूत्रे पृथक् श्रुतेरिति भाष्ये च पृथगुक्तत्वादित्येव वाच्यम् । न तु तत्प्रागित्यादिरूपेणेत्यतस्तत्कृत्यं व्यनक्ति ॥ **न चेत्यादिना** ॥ सौत्रतच्छब्दार्थविवरण-मन्येन्द्रियेभ्य इति भाष्ये च शेषोक्तिः । अक्षरार्थमाह ॥ **पूर्वेति** ॥ सूत्रे चोत्पन्नतयेति शेष इति भावः । **कुत इति** ॥ प्रमाणादिति योज्यम् । अन्यथा पूर्वार्धस्य नातीवोपयोगः स्यादिति भावः । उत्तरार्धभावमाह ॥ **नेति** ॥ **सूक्ष्मेति** ॥ नित्यान्येतानि सौक्ष्म्येणेति प्रागुक्तस्मृतेरिति भावः । अत एव भाष्ये अत्र तदनुद्धार इति भावः । **अत एवेति** ॥ सौक्ष्म्येणानादिनित्यत्ववादेन न ह्यमना

(भावदीपः)

इत्युक्तयुक्तिविरोधो नेत्यर्थः ॥ **विशिष्येति** ॥ विशिष्यनित्यत्वोक्तिविरोध इत्यर्थः ॥ **अत इति** ॥ अनुत्पत्तिश्रुतेः सूक्ष्ममनःपरत्वाज्जन्मश्रुतेरल्पोपचयविषयत्वादीशजत्वे विवादाभावाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**इति श्रुतेरिति** ॥ नित्यत्वे हेतुतयाऽनादित्वप्रतिपादकश्रुतेरित्यर्थः ॥ **विशिष्यमनस इति** ॥ गौणानादित्वस्य विशिष्यप्रतिज्ञातनित्यत्वसाधकत्वायोगात् न गौणत्ववर्णनं युक्तमिति भावः । अनादित्वश्रुतेः श्रौतयुक्तिसाहित्यं वक्तुमाह – **किञ्चेति ॥ अतो नित्यमेवेति** ॥ अनुत्पत्तिमदेवेत्यर्थः ॥ **गत्यन्तरमिति** ॥ छत्रिन्यायेन उत्पत्तेः प्रतिपादकत्वं न वाच्यमित्यर्थः ॥ **विशेषश्रुतित्वादिति** ॥ इन्द्रियैः सह मनस एकोक्त्यभावेन छत्रिन्यायानर्हश्रुतित्वादित्यर्थः । ननु 'मनः सर्वेन्द्रियाणि च' इति श्रुतिगतस्य मनःशब्दस्य मनस्तत्त्वपरत्वात्, न मनोरूपेन्द्रियस्य उत्पत्तिसाधकत्वम् । अन्यथा – पुनर्ग्रहणं व्यर्थं स्यादित्याशंक्य निषेधति **न चेति** ॥ **पूर्वमुत्पन्नतयेति** ॥ उत्पन्नतया पूर्वमुक्तत्वादिति सम्बन्धः । एतेन 'मनः सर्वेन्द्रियाणि च' इति श्रुतौ मनसः उत्पन्नतया पूर्वमुक्तत्वेऽपि पूर्वोत्पन्नतया उक्त्यभावात् पूर्वमुत्पन्नतयेत्यर्थकथनमयुक्तमिति परास्तम् । ननु अन्येन्द्रियेभ्योऽपि प्रागुत्पन्नत्वाभिप्रायेणेति भाववर्णनमयुक्तम् । पूर्वोत्पत्तौ प्रमाणाभावात् । न च 'मनः सर्वोन्द्रियाणि च' इति उत्पन्नतया पूर्वमुक्तिरेव मानं पश्चादुत्पन्नस्यापि पूर्वोक्तिसम्भवात् इत्याशयेन शङ्कते – **नन्विति** ॥ **अत एवेति** ॥ सूक्ष्मरूपेण मनसः सद्भावादेव 'न ह्यमानाः पुमांस्तिष्ठति' इति श्रौतयुक्तिविरोधो नेत्यर्थः ।

पूर्वपक्षस्तु – नोत्पत्तिर्मनसः 'नित्यं मनोऽनादित्वात्' इति श्रुतेः । न चोत्पत्तिश्रुत्यनुसारेण इन्द्रियोत्पत्तिश्रुतिवत् अनादित्वश्रुतेर्गौणार्थवर्णनं युक्तमिति वाच्यम् । इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानात् । किञ्च मनसः । सादित्वे तद्विना कदाचिदनादिना पुरुषेण अवस्थातव्यम् । न च तत्सम्भवति । तथा सति तदा संसाराभावप्रसङ्गात्, मनसः संसारकारणत्वात्, 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति स्मरणात् । अतो नित्यमेव मनः । एवञ्च युक्तियुक्तविशेषश्रुतेः प्राबल्यात् तद्विरोधेनोत्पत्तिश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वसिद्धिरिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु – नानुत्पत्तिर्मनसो युज्यते । उत्पन्नत्वे श्रुतिसद्भावात् । न चास्या गत्यन्तरं वाच्यम् । पृथक् मनसो जन्माभिधायकत्वेन विशेषश्रुतित्वात् । न चान्येन्द्रियवत् मनसोऽप्युत्पत्तिमत्त्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति वाच्यम् । अन्येन्द्रियेभ्योऽपि प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेः । न चोत्पत्तिमत्त्वेऽनुत्पत्तिश्रुतिविरोध इति वाच्यम् । तस्याः सूक्ष्मरूपमनोविषयत्वात् । न च विशिष्य नित्यत्वोक्तिविरोधः । अन्येन्द्रियेभ्योऽल्पोपचयाभिप्रायत्वात्तस्याः । तदुक्तं 'तदनुत्पत्तिवचनमल्पोपचयकारणात्' इति । अतः श्रुत्यविरोधेन मनसो भगवदुत्पन्नत्वसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अभ्यधिकाशङ्कयाऽधिकरणप्रवृत्तिरिति सूचयन्ननन्तरसङ्गतिं सूचयति ॥ **अत्र प्रकृतेति** ॥ संशय इति तदर्थं नित्यं मनोऽनादित्वादिति श्रुतिर्मुख्यार्थेतिन्द्रियानादित्वश्रुतिवद्गौणीति चिन्ता । तदर्थमन्येन्द्रियेभ्यो विशिष्य मनसो नित्यत्वाभिधानादित्युक्तेर्गत्यन्तरं नास्त्युतास्तीति । अभ्यधिकां शङ्कां वक्तुं गतार्थतामाशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यर्थः । विशेषश्रुति-रित्युक्तन्यायप्रदर्शनपरतया व्याचष्टे ॥ **इन्द्रियाणामिति** ॥ **विशिष्येति** ॥ तत्र नित्यं मन इति निर्धार्य मनोमात्रस्य नित्यत्वाभिधानादित्यर्थः ।

ननु 'मनः सर्वेन्द्रियाणि च' इति मनसः पृथग्जन्मवचनेन श्रुत्योः साम्यमेवेत्यतो न ह्यमना इत्युक्त्यन्तरमाह ॥ **किं चेति** ॥ **अनादिना पुरुषेणेति** ॥ अनादितः शरीरयुक्तेनेत्यर्थः । तदुक्तं 'सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः' इति ॥ **नित्यत्वमेवेति** ॥ अनुत्पत्तिमदेव चेत्यर्थः । सूत्रे तदिति व्यस्तं तत्प्रागिति समस्तं च पदं तत्र प्रकृतप्राणपदसम्बन्धायितं मनः परामृश्यते ॥ **नानुत्पत्तिमदिति** ॥ अनुवर्तत इत्यभिप्रेत्य नानुत्पत्तिरितित्यंशं तावद्योजयति ॥ नेति ॥ **न चास्या इति** ॥ **द्विधा ह वैति** ॥ विशेषश्रुतिविरोधेनाप्रामाण्यमेव गतिरिति न वाच्य-मित्यर्थः । कुतो न वाच्यमित्यतो विशेषश्रुतिरित्युक्तसिद्धान्तन्यायं प्रदर्शयितुं तत्प्राक् तेभ्यः प्राणेभ्यः प्राक् पूर्वं तैः सहानुक्त्वा पृथगिति यावत् । श्रुतेरुत्पत्तिश्रुतेरिति सूत्रार्थमभिप्रेत्य पूर्वोत्पन्नत्वादिति भाष्यार्थमाह **पृथगिति** । पृथङ्नित्यत्ववत्पृथगुत्पत्त्यभिधानाद्विशेषश्रुतित्वमित्यर्थः । एवं सति सूत्रे तत्पृथगिति निर्देष्टव्यम् । प्रागिति निर्देशस्तु कुत इत्यतस्तद्व्यावृत्त्यं वक्तुमाह ॥ **नन्विति** ॥

(वाक्यार्थमुक्तावली)

**प्रागुत्पन्नत्वाभिप्रायेणेति** ॥ पृथग्जन्माभिधानमात्राभिप्राये इन्द्रियाणि मन इति निर्देशः स्यान्न तु मनः सर्वेन्द्रियाणि चेति निर्देश इति भावः । कुत इति प्रमाणादिति शेषः । मनसः पूर्वनिर्देशस्तु न पूर्वोत्पत्तिं गमयति । सहोत्पन्नस्यापि पूर्वनिर्देशसम्भवादुक्तेः क्रमिकत्वादिति भावः । श्रुत्या-दीत्यादिपदेन युक्तिविशिष्टोक्त्योर्गृहणम् । इत्यत आह इत्यतः प्रागित्युक्त्या सूचिते विरोधत्रय-परिहारे च शब्दसमुचितप्रमाणमुपन्यसतीत्यर्थः । सूत्रे तत्प्रागित्युक्त्या पूर्वोत्पन्नत्वेनाल्पोपचयः पश्चादुत्पन्नानां बहूपचयश्च सूचितः । तेनैव विरोधत्रयं परिहृतमित्याह ॥ **नोत्पत्तीति** ॥ नित्यं मनोऽनादित्वादिति श्रुतिविरोध इत्यर्थः । कुतो नेत्यतः सूक्ष्मरूपेण सतामल्पोपचया-विवक्षयाऽनादित्वश्रुत्युत्पत्तेरित्याह ॥ **प्रलयेऽपीति** ॥ प्रलये मनसः सूक्ष्मस्य सत्वभावे कस्योपचयः स्यादिति भावः ॥ **तत एव न युक्तीति** ॥ उक्तरीत्या मनसोऽनादित्वेनोपचितां शवियोगेऽपि मनोवियोगाभावान्न ह्यमना इत्युक्तिविरोधो नेत्यर्थः ॥ **न च विशिष्येति** ॥ अन्येन्द्रियाण्य-नित्यकोटौ निक्षिप्य मनसो विशिष्यमित्यत्रोक्तिविरोध इत्यर्थः ।

## वाक्यार्थविवरणम्

**साम्प्रतमिति** ॥ 'साम्प्रतं युक्तमद्यापि' इत्यमरः ॥ **तदेति** ॥ मनो विहायावस्थानसमय इत्यर्थः । तदुपपादयति ॥ **मनो हीति** ॥ संसाराभावप्रसङ्गादित्यत्रेष्टापत्तिं परिहरति ॥ **संसार-सादित्वं त्विति** ॥ **गत्यन्तरमिति** ॥ सम्भावितः कश्चिदर्थ इत्यर्थः ॥ **पृथगिति** ॥ सर्वेन्द्रिय-मध्येऽस्थापयित्वा मन इति पृथगभिधानमित्यर्थः ॥ कुतः । प्रमाणात् । अत एव । सूक्ष्मस्वरूप-सत्ताभ्युपगमादेव ॥ **विशिष्येति** ॥ सूक्ष्मस्वरूपसत्तयेतरेन्द्रियसाम्येन विशिष्य 'नित्यं मनः' इत्युक्तिरयुक्तेत्यर्थः ॥ **अल्पेति** ॥ यथेतरेन्द्रियाणां तैजसाहङ्कारोपचितानां भूतादिभिः पुनरुप-चयोऽस्ति न तथा मनसः, किन्तु वैकारिकाहङ्कारादेवेत्यल्पोपचय इत्याशयः ।

## वाक्यार्थमञ्जरी

**इन्द्रियाणामिति** ॥ मनोव्यतिरिक्तेन्द्रियाणामित्यर्थः । यदाहुर्वायुपुराणे ॥ **सर्वप्रमाणेति** ॥ 'सोऽनादिना पुण्येन पापेन चानुबद्धः' इत्यादिप्रमाणेत्यर्थः । नित्यमनुत्पत्तिमत् । मन उत्पत्तिमदेव कुतः तेभ्यः प्राणेभ्यः प्राक् पूर्वं श्रुतेरेतस्मादिति मन उत्पत्तिश्रुतेरित्यर्थः ॥ **अत एवेति** ॥ उक्तरीत्या मनसोऽनादित्वेन पुंसो वियोगाभावात् न ह्यमनाः पुमांस्तिष्ठतीत्युक्तयुक्तिविरोधो नेत्यर्थः ॥ **न च विशेष्येति** ॥ अन्येन्द्रियाण्यनित्यकोटौ निक्षिप्य विशेष्यमनसो नित्यत्वोक्तिविरोध इत्यर्थः ।

॥ इति मनोऽधिकरणम् ॥

## ३. अथ वागधिकरणम्

## सूत्रभाष्यम्

'नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतम्' इति । 'वाग्वाव नित्या न ह्येपोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठत' इति सयुक्तिकं पौष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते अतो ब्रवीति–

**॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ ५ ॥**

''तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्'' (ऐ.आ. ३-१-१) इति मनः पूर्वकत्वाद्वाचो नानुत्पत्तिः ।

'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता ।
उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चने' ॥ इति वायुप्रोक्ते ।

॥ इति वागधिकरणम् ॥

## तत्त्वप्रदीपिका

'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' इति श्रुतेः मनःपूर्वकत्वाद्वाच उत्पत्तिरेव, 'मनसो वाव वागुत्पद्यत' इति च ।

## तत्त्वप्रकाशिका

अत्र जगत्कारणे हरौ श्रुतीनां समन्वयसिद्ध्यर्थं वागुत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । श्रुतिसमन्वयेन जगत्कारणत्वं विष्णोरुक्तम् । तद्वागुत्पत्तिविषय श्रुतिविरोधेनाप्रामाण्येऽनुपपन्नं स्यादिति तस्य निराकरणमावश्यकम् । प्रकृतेन्द्रियान्तःपाति वागिन्द्रियमत्र विषयः । उत्पत्तिमन्न वेति सन्देहः । 'सर्वेन्द्रियाणि च' 'न ह्येपोत्पद्यत' इति श्रुतिविगानं सन्देहबीजम् । पूर्वपक्षयति ॥ **नित्ययेति** ॥ न वागुत्पत्तिमती । अनादित्वे श्रुतिसद्भावात् । न चेयं श्रुतिर्वेदविषया । समाख्याश्रुतौ नित्ययानित्ययेत्यवतार्य श्रुतिर्वाव नित्येति व्याख्यातत्वात्सामान्यवाक्शब्दस्य विशेषार्थकल्पनोपपत्तेरुत्पत्तिश्रुत्यानुकूल्याच्चेति वाच्यम् । अस्यां हि श्रुतिरवतिष्ठत इति

(तत्त्वप्रकाशिका)

वाक्यशेषादस्याविशेषश्रुतित्वात् । न हि श्रुतौ श्रुतिरवतिष्ठते । किं चोत्पत्तिमत्त्वे वाचः श्रुतं श्रुत्याश्रयत्वं तस्या नोपपद्यते । न हि नित्याश्रयोऽनित्यः क्वचित् दृष्टः । अथापि स्यात् । सूक्ष्मरूपानादित्वपरा श्रुतिः किं न स्यात् । उत्पत्तिश्रुत्यानुकूल्यादुपचयोऽप्यस्तीति । मैवम् । श्रुतश्रुत्याश्रयत्वादेव । श्रुत्याश्रयत्वं नाम वाचो नित्यं श्रुत्युच्चारणसामर्थ्यम् । नित्यसर्वगतानां वर्णानामन्यथा विशिष्य वागाश्रयत्वोक्तिवैयर्थ्यात् । तदा वेदोच्चारणसमर्थाया वाचो व्यर्थमुपचयकल्पनम् । अतः सयुक्तिकविशेषश्रुतिविरोधादप्रामाण्यं वागुत्पत्तिश्रुतेरतो न श्रुतिसमन्वयेन हरेर्जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ वागुत्पत्तिमत्येव । 'मनः पूर्वरूपं वागुत्तररूपम्' इति मनोलक्षणकारणवत्त्वश्रुतेः । कारणवतश्च कार्यतानियमात् । न च वाक्शब्दस्य साधारणत्वाद् व्याहरणार्थता । वाचा व्याहरतीति पूर्ववाक्यबलेनेन्द्रियार्थत्वे विशेषश्रुतित्वादिति भावः । अत्र श्रुतौ पूर्वोत्तरशब्दौ कारणकार्यपरौ । वागिन्द्रियस्योत्पत्तिपक्षे श्रुत्यादिविरोध इत्यत आह ॥ **वागिन्द्रियस्येति** ॥ नित्यश्रुतिसन्निधानान्नित्यत्वोपचारो न तु नित्यत्वम् । न च नित्याश्रयत्वादेव नित्यत्वम् । यतो नित्याश्रयत्वं न नित्यदाऽपि तु तद्योग्यतैव । अत एव नोपचयवैयर्थ्यं चेति भावः । मनसः सकाशात् । एवमभ्युपगम एव नित्यत्वश्रुतिः श्रुत्याश्रयत्वश्रुतिरप्युपपन्ना न नित्यत्वे । तस्या अप्येतदर्थत्वात् । 'वाग्वाव नित्या' इत्युक्ते तत्कथमित्याशङ्कायामुपचारोऽयमित्युपचारबीजं ह्युच्यते **अस्यां हीति** ॥ एवं च सति वेदाश्रयत्वेन नित्यया पुराणाद्याश्रयत्वेन चानित्ययेति वाक्यार्थो घटते । एवं च समाख्यानुरोधः । अन्यथा न वाक्यार्थोपपत्तिः । अतः श्रुत्यविरोधेनोत्पत्तिसिद्धेर्वाचो युक्तः श्रुतिसमन्वयो जगत्कारणे हराविति सिद्धम् ।

## गुर्वर्थदीपिका

नित्यसर्वगतानां वर्णानामन्यथेत्यत्र अन्यथा नित्यसर्वगतानां वर्णानामित्यन्वयः । 'तत्प्राक् श्रुतेः' इति सूत्रे तस्य मनस इन्द्रियेभ्योऽपि प्रागुत्पत्तिश्रुतेरिति वदता सूत्रकृता उत्पन्नाग्रेसरस्य कथमनुत्पत्तिरिति युक्तिस्सूचिता । इन्द्रियार्थे विशेषश्रुतित्वादिति वदतः पूर्ववाक्ये वाक्पदेन प्रकृतस्यैवोत्तरत्रापि ग्राह्यत्वात् । अन्यथा प्रायपाठविरोधादिति भावः । न नित्यत्व इत्यत्र साक्षान्नित्यत्व इत्यर्थः । वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यतेति स्मृतौ 'वाग्वाव नित्या' इति श्रुत्युक्तवाङ्नित्यत्वश्रुतेः नित्यश्रुतिसन्निधियोग्यत्वमेव नित्यत्वं न तु सर्वथा नित्यत्वमिति गतिमुक्त्वा स्पष्टमुत्पत्तेः कथनेन तस्याप्येतदर्थत्वादिति भावः ।

(गुर्वर्थदीपिका)

श्रुतिसन्निधियोग्यतेति वदता सदा वाचि श्रुत्युच्चारणस्य क्वाप्यभावेन श्रुत्या धारतयाऽपि न नित्यत्वं सिद्ध्यतीति सूचितम्। 'नित्ययाऽनित्यया' इति श्रुतावनित्यकोटेः पृथगकथनादनित्याऽपि वागेव। तदुत्पत्तिश्च स्वरूपोत्पत्त्या सिद्धैवेति नोपपादिता। अनित्यायां पुनर्नित्यत्वं कथमित्यतो नित्यश्रुत्युच्चारणयोग्यत्वेनेति लक्षणाबीजमेव प्रदर्शितमिति ज्ञेयम्। अनित्यत्वस्य च स्वरूपोत्पत्त्या सम्भवेऽपि समाख्याश्रुत्युपयोगित्वप्रदर्शनायानित्यपुराणाद्याश्रयत्वेन चानित्ययेत्युक्तम्। एवं च समाख्यानुरोध इत्यत्र समाख्याश्रुतौ 'श्रुतिर्वाव नित्य' इति श्रुतेर्नित्यत्वं कथितम्। अनित्या वाव स्मृतय इति स्मृतेरनित्यत्वमुक्तम्। अत्र च 'नित्ययाऽनित्यया' इति न श्रुतिस्मृत्योरेव साक्षाद्ग्रहणम्। 'वाग्वात्र नित्या' इत्युत्तरवाक्यविरोधात्। अतः 'अस्यां हि श्रुतिरवतिष्ठत' इति श्रुतिसूचितन्यायेन नित्यवेदाश्रयत्वेन नित्यया अनित्यपुराणाद्याश्रयत्वेनानित्ययेति व्याख्यान एव समाख्याश्रुत्यनुरोधः। नान्यथेति भावः। अन्यथा न वाक्यार्थोपपत्तिरित्यत्र एवमव्याख्याने नित्यत्वानित्यत्वयोरेकत्रायोगादिति भावः।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृतेन्द्रियान्तःपातिवागिन्द्रियमिति** ॥ पूर्वं 'मन एव पूर्वरूपं वागुत्तररूपम्' इति श्रुतेः पूर्वरूपपदोक्तवागिन्द्रियकारणीभूतसाधारणं ज्ञानेन्द्रियं मनो विचार्य अनन्तरमुत्तरपदोक्तमनः कार्यासाधारणकर्मेन्द्रियभूतवागिन्द्रियविचारादनन्तरसङ्गतिरिति भावः ॥ **उत्पत्तिमदिति** ॥ अत्र वागिन्द्रियमनुत्पत्तिमदुतोत्पत्तिमदिति चिन्ता। तदर्थं तदुत्पत्तिरनुत्पत्तिश्रुतिविरुद्धा न वेति। तदर्थं तदनुत्पत्तिश्रुतिर्मुख्यार्थोतामुख्यार्थेति। तदर्थं वाग्वाव नित्येति श्रुतिर्युक्तियुक्तत्वेन निरवकाशोत सावकाशेति। तदर्थमस्यां हि श्रुतिरवतिष्ठत इत्युक्तयुक्तेर्गत्यन्तरं नास्त्युतास्तीति। तदर्थं श्रुत्याश्रयत्वं किं नित्यं श्रुत्युच्चारणसामर्थ्यमुत तत्सन्निधियोग्यत्वमिति। तदर्थं श्रुत्याश्रयत्वस्य तत्सन्निधियोग्यत्वरूपत्वे प्रमाणं नास्त्युतास्तीति ॥ **श्रुतिसद्भावादिति** ॥ 'वाग्वाव नित्या' इति श्रुतिसद्भावादित्यर्थः। भाष्ये न्यायविवरणवद्वाग्वाव नित्येत्येतदादित्वेन श्रुत्युदाहरणे कर्तव्ये 'नित्ययाऽनित्यया स्तौमि' इति यत्पूर्वोदाहरणं तदनुरोधेनाह– **समाख्याश्रुताविति** ॥

(भावबोधः)

'नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदम् ।
श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्च वाचः ।'

इति **समाख्याश्रुतावित्यर्थः ॥ उत्पत्तिश्रुत्यानुकूल्याच्चेति** ॥ समाख्यावलात् 'वाग्वाव' इति श्रुतेर्वेदविषयत्वे वागिन्द्रियोत्पत्तेर्बाधकाभावेन तदुत्पत्तिश्रुत्यानुकूल्याच्चेति भावः । समाख्या-बाधकत्वेन तावत्' अस्यां हि' इति वाक्यशेषाभिप्रायमाह– **अस्यां हीति** ॥ अनेन 'वाग्वाव नित्येति विशेषश्रुतिविरोध इति न्यायविवरणमुक्ततात्पर्यं भवति । अत एवैतन्न्यायविवरण-निवर्तनीयतया प्रागुत्पत्तिश्रुत्यानुकूल्याच्चेत्युक्तम् । अनेनात्र न्यायविवरणे श्रुतेर्विशेषत्वं नाद्याधिकरण इव विशिष्य धर्मिनिर्देशमात्रं तत्साङ्कर्यम् । नापि द्वितीय इवान्येषामनित्यत्वोक्तिः । तत्साङ्कर्यादेव । भाष्योदाहृतनित्ययेति वाक्ये तदभावाच्च । किं तु निरवकाशवाक्यशेषसाहित्यमपीत्युक्तं भवति । सयुक्तिकमिति, भाष्योक्तयुक्तिप्रदर्शनपरत्वेनापि अस्यां हीति वाक्यशेषादिति वाक्यशेषं योजयति– **किं चेत्यादिना** ॥ पूर्वाधिकरणेन गतार्थतामाशङ्कते– **अथापीति** ॥ तन्निवर्तकभाष्योक्तयुक्त्यन्तर-प्रदर्शनपरत्वेना'प्यस्यां हि' इति वाक्यशेषं योजयति– **श्रुतश्रुत्याश्रयत्वादेवेति** ॥ श्रुत्याश्रयत्वेऽपि वाचोऽनादित्वश्रुतेः सूक्ष्मरूपानादित्वपरमुत्पत्तिश्रुतेरुपचयोत्पत्त्यर्थत्वं च किं न स्यादित्यत आह– **श्रुत्याश्रयत्वं नामेति** ॥ अनेन वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यतेत्युदाहरिष्यमाणश्रुतिगत-योग्यतापदव्यावृत्त्या शङ्का दर्शिता । **मनोलक्षणकारणवत्त्वेति** ॥ अनेन तत्पूर्वं प्रकृतं मनः पूर्वं कारणं यस्य तत्पूर्वकं तस्य भावस्तत्त्वं तस्मादिति सूत्रार्थ उक्तो भवति । विशेषश्रुतेरिति न्यायविवरणे पूर्वाधिकरणयोरिव न विशिष्यकीर्तनमात्रं विवक्षितम् । किं तु निरवकाशवाक्यशेष-साहित्यमपीत्याह– **पूर्ववाक्यबलेनेति** ॥ 'तस्मान्मन एव पूर्वरूपम्' इति भाष्योदाहृतश्रुत्यपेक्षयाथ वाचा व्यवहरतीत्यस्य पूर्ववाक्यत्वादिदमुक्तम् । उपलक्षणं चैतत् । 'मनसो वाव वागुदपद्यत वाचो व्याहरणम्' इति न्यायविवरणोदाहृतश्रुतिस्थोत्तरवाक्यबलेनेत्यपि ग्राह्यम् ॥ **श्रुत्यादिविरोध इति** ॥ आदिपदेन 'अस्यां हि' इति वाक्यशेषप्रदर्शितसयुक्तिकमिति भाष्योक्तयुक्तिग्रहणम् । नित्यत्वोप-चार इति । एवं च वाग्वेति, श्रुतेरुपचरितार्थत्वान्न तद्विरोध इति भावः । किं चेत्युक्तयुक्तिं निराह **न चेत्यादिना** ॥ 'श्रुत्याश्रयत्वं नाम' इत्यादिनोक्तयुक्तिं निरस्यति– **अत एवेति** ॥ अनेन नित्यत्वं कुतश्च नेत्येतत् कुतश्चन विशेषश्रुत्या नित्याश्रयत्वयुक्त्या नित्यं श्रुत्युच्चारणसामर्थ्यलक्षण-

(भाववोध:)

युक्त्या च नित्यत्वं नेति व्याख्यातं भवति । मनस इति षष्ठीभ्रमं वारयति– **मनसः सकाशादिति** ।। न केवलं वागिन्द्रियस्येत्युदाहृतस्मृतिबला 'द्वाग्वाव नित्या' इति श्रुतेरुपचरितार्थत्वम् । 'अस्यां हि' इति वाक्यशेषान्यथानुपपत्तिलक्षणान्तरानुपपत्त्यापीत्याह– **एवमभ्युपगम एवेति** ।। वागिन्द्रियस्योत्पत्तिमभ्युपगम्य श्रुतेरूपचरितार्थत्वाभ्युपगम एवेत्यर्थः । नित्यत्व इति सर्वथोत्पत्तिराहित्यलक्षण इत्यर्थः ।। **तस्या अपीति** ।। नित्यत्वप्रतिपादकत्वेन प्रतीयमानाया अपि एतदर्थत्वात् । उपचयरूपोत्पत्तिमतोऽपि श्रुतिसन्निधियोग्यत्वरूपनित्यत्वार्थादित्यर्थः । तदेवोपपादयति ।। **वाग्वावेति** ।। उक्तार्थत्वाङ्गीकारे पूर्ववाक्यार्थोपपत्तिरपि नियामिकेत्यभिप्रेत्य नित्ययाऽनित्ययेति पूर्ववाक्यं योजयति– **एवं च सतीति** ।। 'अस्यां हि' इति वाक्यशेषस्योपचारबीजप्रतिपादकत्वे सतीत्यर्थः । पुराणाद्याश्रयत्वेन चेति । अनेन 'अस्यां हि' इति श्रुतिरित्येतदुपलक्षणम् । 'अस्यां हि पुराणादिकमवतिष्ठन्त' इत्यपि ग्राह्यमित्युक्तं भवति ।

ननु श्रुतिपुराणाद्याश्रयत्वमात्रेण कथं वागिन्द्रियस्य नित्यत्वानित्यत्वे इत्यत आह– एवं च **समाख्यानुरोध इति** ।। तथा च समाख्याश्रुतौ 'श्रुतिर्वाव नित्याऽनित्या वाव स्मृतयो याश्चान्या वाचः' इति श्रुतिपुराणाद्याश्रययोर्नित्यत्वानित्यत्वस्योक्तत्वात्तत्र निर्णीतनित्यत्वानित्यत्वश्रुतिपुराणाद्याश्रयत्वेन वागिन्द्रियस्य नित्यत्वानित्यत्वे घटेते इति भावः । अन्यथा स्वरूपेण नित्यत्वानित्यत्वविवक्षायां विरोधात् स्वरूपेण नित्यत्वमुपचितांशैरनित्यत्वमिति विवक्षायां वाक्यशेषादौ नित्यवेदाश्रयत्वाद्युक्त्ययोगात् वाक्पदेन विवक्षायां चास्यां हि श्रुतिरवतिष्ठत इति वाक्यशेषविरोधात्; अन्यथा वाक्यार्थो न युक्त इत्यर्थः । यद्वा, अन्यथा समाख्यानुरोधेन नित्ययाऽनित्यया स्तौमि परमात्मानमिति वाक्यस्य नित्यवेदाश्रयत्वेन नित्ययाऽनित्यपुराणाद्याश्रयत्वेनानित्ययेत्यर्थकत्वानङ्गीकारे तस्य वाक्यस्यार्थोपपत्तिर्न विद्यते । वाक्यशेषे नित्ययाऽनित्येत्युक्तनित्यत्वं 'वाग्वावनित्या' इति वाचः प्रतिज्ञाया 'अस्यां हि' इति तदुपपादनवदनित्यत्वप्रतिज्ञातदुपपादनयोरभावादिति भावः ।

## भावदीपः

अत्र वागिन्द्रियचिन्तायाः प्रसक्तिमाह ।। **प्रकृतेति** ।। **अनादित्वे श्रुतीति** ।। न ह्येषेति भाष्योक्तेत्यर्थः । भाष्ये वाग्वाव नित्येत्युत्तरांशेनैव पूर्तौ पूर्वार्धोक्तिः नित्ययाऽनित्यया स्तौमि ब्रह्म

(भावदीपः)

तत्परमं पदम्' इति 'श्रुतिर्वा व नित्या अनित्या वा व स्मृतयः' इति तत्त्वनिर्णयोक्तपैङ्गिश्रुतिरूप-समाख्यास्मारणेन वाचः श्रुतित्वशङ्कोत्थापनायेति भावेनाह ॥ **न चेत्यादिना** ॥ वाच्यमित्यन्वयः ॥ **सामान्यवाक्शब्दस्येति** ॥ एतेन वाग्वाव नित्या' इति विशेषश्रुतिविरोध इति न्यायविवरणे नित्ययेत्यादिश्रुतिविरोध इति वा नित्ययेत्यादिसयुक्तिकश्रुतिविरोध इत्यादि(वा) वाक्यमप्रयुज्य वाक्पदप्रतीकपूर्वं विशेषश्रुतीति विशेषपदप्रयोगस्य व्यावर्त्यं विभावितं भवति । व्यावर्त्यान्तरमाह ॥ **उत्पत्तीति** ॥ इन्द्रियोत्पत्तीत्यर्थः । एतच्छङ्कानिरासश्च वाक्यशेषेणैवेति भावेनाह ॥ **अस्यामिति** ॥ वागिन्द्रियपरत्वरूपविशेषेणेत्यर्थः । यथा प्राणादयो वाक्यशेषादित्यत्र प्राणस्य प्राणमित्यादिना प्राणप्राणदत्वादिबोधकवाक्यशेषान्यथानुपपत्त्या यस्मिन्पञ्चपञ्चजना इति श्रुतजनशब्दितस्य ब्रह्मरूपविशेषार्थत्वं तथेति भावः । एतेन भाष्ये वाक्यशेषोक्तिरन्यत्रोक्तविशेष श्रुतित्वविवरणायेति दर्शितम् । तथा चेन्द्रियाणि चेति सामान्यश्रुतेरनया बाध इति भावः । नन्वेवं वाचो वागिन्द्रिय-परत्वार्थं भाष्ये वाक्यशेषोक्तिश्चेत्कथं तर्हि सयुक्तिकमनुत्पत्तिरुच्यत इति वागनुत्पत्तेः सयुक्ति-कत्वोक्तिर्भाष्ये इत्यतो अन्यथाप्यर्थमाह ॥ **किं चेति** ॥ पूर्वस्माद्विशेषशङ्कोत्थापकयुक्तिपरत्वेनापि शेषं शङ्कापूर्वं व्याकरोति ॥ **अथापि स्यादित्यादिना** ॥ अथापि विशेषश्रुतित्वेऽपीत्यर्थः ॥ **श्रुत्युच्चारणेति** ॥ अत एव वक्ष्यत्यस्य समाधिम् । वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यतेतीति भावः ॥ **अत इति** ॥ निरवकाशवाक्यशेषसाहित्यात्सयुक्तिकेत्यर्थः । यद्वा तस्यैव विवरणं सयुक्तिकेत्यादि ॥ **वागुत्पत्तीति** ॥ इन्द्रियाणि चेति सामान्यश्रुतिरित्यर्थः । भाष्ये नानुत्पत्ति-रित्युक्त्यार्थलब्धवाक्पदानुवादेन फलितार्थमाह ॥ **वागिति** ॥ तत्पूर्वकत्वपदं श्रुत्युपलक्षणम् । पूर्वशब्दः कारणपरः । बहुव्रीहौ कप्रत्ययः । तदिति च मन इति भावेनार्थमाह ॥ **मन इत्यादिना** ॥ इदमुपलक्षणं मनसो वा व वागुत्पद्यते । वाचो व्याहरणमिति न्यायविवरणोक्तश्रुतिरपि ग्राह्या । सूत्रे पूर्वपदेन मनःपूर्वरूपमित्यस्य सूचनात् भाष्ये अस्यैवोक्तिः । भाष्ये सङ्कल्परूपमनोव्यापारानन्तरमेव व्याहरणरूपवाक्करणकव्यापारादित्यर्थकस्य तस्मादित्यंशस्याप्युक्तेरुपयोगं व्यावर्त्य पूर्वं व्यनक्ति ॥ **न च वागिति** ॥ 'मनसा वा अग्रे सङ्कल्पयति । अथ वाचा व्याहरति । तस्मान्मन एव पूर्वरूपम्' इत्यैतरेये पाठात्पूर्ववाक्येत्युक्तम् । एतदुपलक्षणं 'मनसो वाव वागुत्पद्यते वाचो व्याहरणम्' इति विशेषश्रुतेरिति न्यायविवरणोक्तश्रुत्यन्तरे वाचो व्याहरणमिति उत्तरत्र श्रुतवाक्यशेषबलाच्चेत्यपि ध्येयम् । तत्त्वप्रदीप एवास्योक्तत्वादत्र साक्षादनुक्तिः । एतेन निरवकाशवाक्यशेषसाहित्यमेव

(भावदीपः)

न्यायविवरणोक्तविशेषश्रुतित्वमिति दर्शितम् । श्रौतपदयोरर्थमाह ॥ **अत्र श्रुताविति** ॥ **श्रुत्यादीति** ॥ युक्तिरादिपदार्थः । वागिति पूर्वार्धभावमाह ॥ **नित्येति** ॥ तत्र योग्यतापदं प्रागुक्तयुक्तिविरोधशामकतया व्याचष्टे ॥ **न चेति** ॥ कुत एवं श्रुतेरुपचारकल्पना सयुक्तिकत्वा-न्मुख्यनित्यत्वमेव कुतो न श्रुत्यर्थ इत्यतः कुतश्चन नित्यत्वं नेत्यवधारणोपेतोत्तरार्धतात्पर्यमाह ॥ **एवमिति** ॥ **उपचारबीजमिति** ॥ अन्यथा न वाक्यार्थोपपत्तिरिति वक्ष्यमाणमत्रापि योज्यम् । तदर्थमग्रे वक्ष्यामः । नन्वस्तु वाचो नित्यत्वं नित्यवेदाश्रयत्वेनोपचरितं वाक्यशेषबलात् अनित्यत्वं तु स्वरूपेणैवास्तु तत्र वाक्यशेषाभावादित्यत आह ॥ **एवं च सतीति** ॥ नित्यत्वे उपचरिते सतीत्यर्थः । किमत्र कल्पकमित्यतो द्वयमाह ॥ **एवं चेति** ॥ **अन्यथेति** ॥ (च) समाख्या-श्रुतावनित्या वाव स्मृतय इति । वागिन्द्रियाश्रयस्मृतीनामनित्यत्वोक्तेरत्रापि तदाश्रयत्वेनैवानित्यत्वं विवक्षितं न तु स्वरूपेणेत्यर्थः । अन्यथा स्वरूपेणैव नित्यत्वानित्यत्वविवक्षायां विरोधादिति भावः । शिष्टं चन्द्रिकायां बोध्यम् ॥ **अत इति** ॥ नित्यत्वश्रुतेरुपचरितार्थत्वादनित्यत्वे श्रुतिसत्त्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**समाख्याश्रुताविति** ॥ 'नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदम् । श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चाऽन्या वाचः' इति समाख्याश्रुतावित्यर्थः ॥ **विशेषश्रुतित्वादिति** ॥ वाक्यशेषबलेन वाक्शब्दस्य वागिन्द्रियरूपविशेषार्थवाचित्वादित्यर्थः ॥ **श्रुतं श्रुत्याश्रयत्वमिति** ॥ श्रुतिसिद्धं निरन्तरवेदोच्चारणसामर्थ्यमित्यर्थः । अनित्यस्यापि घटादेः नित्यघटत्वाद्याश्रयत्ववत्, नित्यसामर्थ्याश्रयत्वं वाचः किं न स्यादित्यत आह– **न हीति** ॥ नित्यसामर्थ्याश्रयः अनित्यः क्वापि न दृष्ट इत्यर्थः । अनित्याश्रितानां धर्माणां नित्यत्वसम्भवेऽपि न सामर्थ्यस्य तत्सम्भवति धर्मि सत्तासापेक्षत्वादिति भावः ॥ **अथापि स्यादिति** ॥ अथापि 'वाग्वाव नित्या' इति श्रुतेः वागिन्द्रियपरत्वेऽपि सयुक्तिकत्वेऽपि वक्तुमवकाशः स्यादित्यर्थः ॥ **सूक्ष्मरूपविषयेति** ॥ अनादित्वप्रतिपादिका 'न ह्येषोत्पद्यत' इति श्रुतिः वागिन्द्रियस्य सूक्ष्मरूपविषया । ततश्च उत्पत्तिश्रुत्यानुकूल्यात् उपचयोऽस्ति । सूक्ष्मरूपेणाऽनादित्वमस्तीति किं न स्यात् बाधका-भावादित्यर्थः । श्रुतौ श्रूयमाणं श्रुत्याश्रयत्वं श्रुत्यधिकरणत्वमात्रम्, न तु सदातनोच्चारणसामर्थ्यं, मुख्यार्थे बाधकाभावात् । ततश्च श्रुत्याश्रयत्वं नोत्पत्तिमत्त्वं विरुणद्धीत्यत आह– **श्रुत्याश्रयत्वं**

(अभिनवचन्द्रिका)

**नामेति ॥ नित्यसर्वगतानामिति ॥** अत्र मध्ये श्रूयमाणं 'अन्यथा' इति पदं वाक्योपक्रमे द्रष्टव्यम् । सूक्ष्मरूपेण स्थिताया अपि वाचः वेदोच्चारणसामर्थ्यमस्त्येवेति नैतद्बाधकमित्यत आह– **सदा वेदोच्चारणेति ॥ मनःपूर्वरूपमिति ॥** अत्र 'तस्मादेव' इति पदद्वयमुच्छिन्नम् । ततश्चैवं टीकापाठः – तस्मान्मनस एव पूर्वरूपं वागुत्तररूपमिति मनोलक्षणकारणवत्त्वश्रुतेरिति । अवश्यं चैतदेवं विज्ञेयं 'तस्मान्मन एव' इति भाष्यकृतोदाहृतत्वात् तत्परित्यागेन वाक्यान्तरग्रहणे कारणाभावात् । भाष्यकृतोपसंहारस्थं वाक्यमुदाहृतम् । टीकाकृता तत्समर्थनार्थत्वादुपक्रमस्थं वाक्यमुदाहृतमित्यपि वक्तुं न युक्तम् । 'वाचा व्याहरति' इति पूर्ववाक्यबलेनेत्युत्तरटीकाविरोधात् । तद्वाक्यस्य टीकोदाहृतवाक्यापेक्षया पूर्वत्वाभावात् ।

ननु 'मनः पूर्वरूपम्' इति श्रुतिः न मनोरूपेन्द्रियस्य कारणतामाचष्टे, अपि तु मन्तृत्वान्मनोनामकस्य विष्णुरूपस्य संहितापूर्ववर्णप्रतिपाद्यतामाचष्टे । तथा 'वागुत्तररूपम्' इति श्रुतिरपि वक्तृत्वाद्वाङ्नामकस्य विष्णुरूपस्य संहितोत्तरवर्णप्रतिपाद्यतामाचष्टे । 'अथातः संहिताया 'उपनिषत्' इत्युपक्रमात् । 'वाक्पूर्वरूपं मन उत्तररूपं, मनः पूर्वरूपं वागुत्तररूपम्' इति मतयोः ऋषिमतत्वेन प्रमाणत्वाच्च । न हि कार्यकारणपरत्वे मतयोः प्रामाण्यं भवति । अन्योन्याश्रयप्रसङ्गात् 'प्राणः संहिता' इत्यादेरुपयोगाभावात् । उक्तश्चान्यत्र भाष्यकृतैव 'मन आदिशब्दानां भगवत्परत्वं, 'मनोवाक्प्राणनामाऽसौ मनआदिषु संस्थितः' इति । ततश्च वाचो मनःकारणकत्वे नैतच्छ्रुत्युदाहरणमुचितम् । अपि तु 'मनसो वागुदपद्यत, वाचो व्याहरणम्' इति श्रुतिरेवोदाहर्तव्येति चेत्, स्यादयं दोषः यदि ऐतरेयवाक्यं भाष्यकृता वाचो मनोजन्यत्वे प्रमाणत्वेनोदाहृतमिति ब्रूमः, न चैवं किंनाम वाचो जन्यत्वे 'मनसो वागुदपद्यत, वाचो व्याहरणम्' इति न्यायविवरणोदाहृतप्रत्यक्षश्रुतिसद्भावेऽपि सूत्राणामनन्तशाखानिर्णायकत्वज्ञापनाय अनन्तशाखाविदा भाष्यकृता शाखान्तरस्थमेव वाक्यमुदाहृतमिति ब्रूमः ॥ **कारणवत्त्वश्रुतेरिति ॥**

ननु श्रौतेन कारणत्वेन कार्यतासाधनमनुपपन्नम् । साक्षात् 'वागुत्तररूपम्' इति कार्यत्वस्यैव श्रुतत्वादिति चेत्, सत्यम् । श्रुतमपि कार्यत्वं कारणशून्यत्वात् त्याज्यमिति शङ्का स्यात् । सा माभूदित्येतदर्थं कारणवत्त्वश्रुतेरित्युक्तमिति बोध्यम् ॥ **पूर्ववाक्यबलेनेति ॥** अत्र टीकाकृतोऽपि भाष्यकारानुग्रहेण सर्वज्ञकल्पत्वात् तेनापि भाष्यकारदृष्टशाखान्तरगतमेव 'अथ वाचा व्याहरति' इति पूर्ववाक्यमुदाहृतं नैतरेयस्थमिति बोध्यम् । एतेन शाखान्तरगत 'वागुत्तररूप' मिति वाक्यस्य

(अभिनवचन्द्रिका)

वागिन्द्रियपरत्वव्युत्पादनाय 'अथ वाचा व्याहरति' इति ऐतरेयस्थवाक्यस्य पूर्ववाक्यतयोदाहरणमयुक्तमिति परास्तम् ।। **अत्र पूर्वोत्तरशब्दाविति** ।। 'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' इति भाष्योदाहृतशाखान्तरवाक्यस्थपूर्वोत्तरशब्दौ कारणकार्यपरौ, न त्वैतरेयवाक्यगतपूर्वोत्तरशब्दाविव पूर्वोत्तरवर्णदेवतापरावित्यर्थः । वाक्यार्थोपपत्तिहेतुनापि वाग्वाव नित्येतिश्रुतेरुपचरितनित्यत्वार्थकत्वमाह **एवमभ्युपगम एवेति** ।। नित्यत्वप्रतिपादकतया प्रतीयमानापि श्रुतिः औपचारिकनित्यत्वार्थकत्व एवोपपन्नार्था न भवतीत्यर्थः । वाक्यार्थानुपपत्तिलक्षणबाधकेन स्वाभाविकनित्यत्वपरत्वं दूषयति – **न नित्यत्व इति** ।। नित्यत्वे नित्यत्वार्थकत्वे श्रुतिरुपपन्नार्था न भवतीत्यर्थः ।

ननु नोपचरितनित्यत्वार्थकत्वे श्रुतिरुपपन्ना 'न ह्येषोत्पद्यत' इति श्रुतिविरोधादित्यत आह– **तस्या अपीति** ।। तस्या अपि 'न ह्येषोत्पद्यत' इति श्रुतेरपि एतदर्थत्वात् अनुत्पत्तिमद्वेदसन्निधियोग्यतार्थकत्वादित्यर्थः । नन्वेवमपि श्रुतिर्नोपपन्नार्था 'अस्यां हि' इति वाक्यशेषवैयर्थ्यप्रसङ्गात् । न हि उपचरितनित्यत्वार्थकत्वे वाक्यशेषस्योपयोगोऽस्तीत्यत आह– **वाग्वावेति** ।। उपपन्नार्थत्वं दर्शयति– **एवञ्च सतीति** ।। ननु वाचो नित्यत्वाभावात्, 'अस्यां हि श्रुतिरवतिष्ठत' इति वाक्यशेषबलाच्च, वेदाश्रयत्वेन नित्ययेत्यर्थोऽस्तु पुराणाद्याश्रयत्वेनाऽनित्यय' इति कुतोऽर्थोऽङ्गीक्रियते । स्वरूपेणाऽनित्यत्वसद्भावात् 'अनित्यय' इत्येवार्थः किं न स्यादित्यत आह– **एवं च समाख्येति** ।। सत्यं तथा व्याख्यातुं शक्यम्, तथापि 'नित्ययाऽनित्यया स्तौमि' इति भाष्योदाहृतश्रुतेः समाख्यारूप 'नित्यया स्तौमि ब्रह्म तत्परमं पदम्' इति श्रुत्यनुरोधात्तथा व्याख्यातमित्यर्थः । वेदाश्रयत्वेन नित्यया पुराणाश्रयत्वेनाऽनित्यया वाचा स्तौमीत्यस्यापि वेदोच्चारणेन पुराणोच्चारणेन स्तौमीत्यत्रैव तात्पर्यात्तच्छ्रुतेः समाख्यातत्वमिति द्रष्टव्यम् ।

पूर्वपक्षस्तु – न वागुत्पत्तिमती । 'वाग्वाव नित्या, न ह्येषोत्पद्यत' इति श्रुतेः । न चेयं श्रुतिर्वेदविषयेति वाच्यम् । 'अस्यां हि श्रुतिरवतिष्ठत' इति श्रुतश्रुत्याश्रयत्वायोगात् । किं च 'वागनुत्पत्तिमती नित्यदा श्रुत्याश्रयत्वात्' इत्यनुमानविरोधो वाचः सादित्वे दुष्परिहरः । सादेर्नित्याश्रयत्वादर्शनात् । न चाऽनादित्वश्रुतिः सूक्ष्मरूपविषयेति वाच्यम् । नित्यं श्रुतश्रुत्युच्चारणसामर्थ्यरूपश्रुत्याश्रयत्वायोगादिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु – वागुत्पत्तिमती । 'वागुत्तररूपम्' इति कार्यत्वश्रवणात् । न च – कारणाभावात् कार्यत्वमनुपपन्नमिति वाच्यम् । 'मनःपूर्वरूपं वागुत्तररूपम्' इति शाखान्तरश्रुत्या अर्थात् मनःकारणत्वस्य सिद्ध्या कार्यत्वोपपत्तेः । न च वागिन्द्रियस्य उत्पन्नत्वाङ्गीकारे श्रुतिविरोध इति वाच्यम् । श्रुतौ उपचारेण नित्यत्वाभिधानात् । तदुक्तम् – 'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता' इति । न च नित्याश्रयत्वयुक्त्या नित्यत्वमिति वाच्यम् । वाचो नित्यं श्रुतिसन्निधियोग्यताया एवाङ्गीकृतत्वेन नित्यफलोपहितश्रुत्याश्रयत्वाङ्गीकारात् । श्रुत्यर्थपर्यालोचनया औपचारिकनित्यत्वस्यैव लाभाच्च । तथा हि एवं सत्येव हि वेदाश्रयत्वेन नित्यया, पुराणाश्रयत्वेन अनित्यया, स्तौमीति वाक्यार्थो घटते नाऽन्यथा । अतः श्रुत्यविरोधेनोत्पत्तिसिद्धेर्वाचो युक्तः श्रुतिसमन्वयो जगत्कारणे हराविति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र मनः पूर्वरूपं मनोविचारानन्तरं वागुत्तररूपमित्युक्तवागिन्द्रियं विचार्यत इत्यनन्तरसङ्गतिः ॥ **संशय इति** ॥ तदर्थं तदनुत्पत्तिश्रुतिः किमिन्द्रिययोरेवोत वेदविषयतया **सावकाशेति** ॥ तदर्थमिन्द्रियपरत्वेऽपि सर्वथोपचयाभावलक्षणमुख्यानादित्वपक्षे तस्य सूक्ष्मरूपानादित्वेन सावकाशेति । तदर्थमिन्द्रियपरत्वे तस्य मुख्यानादित्वपरत्वे च साधकं वेदपरत्वे सूक्ष्म-रूपानादित्वमात्रपरत्वे च बाधकमस्ति न वेति । पौष्यायणश्रुतौ वाचोऽनुत्पत्तिः श्रूयत इत्यंशं तावद्व्याचष्टे ॥ **अनादित्वे श्रुतिसद्भावादिति** ॥ भाष्ये न्यायविवरणवत् वाग्वाव नित्येत्ये-तावन्मात्रोदाहरणे कर्तव्ये नित्यानित्ययेति पूर्वांशस्य अस्यां हीत्युत्तरांशस्य चोदाहरणं तदनुरोधेनाह ॥ **न चेत्यादिना** ॥ **समाख्याश्रुताविति** ॥ 'नित्ययाऽनित्यया स्तौमि ब्रह्मतत्परमं पदम्' इति । श्रुतिर्वाव नित्या अनित्या वावस्मृतयः' इति समाख्याश्रुतावित्यर्थः । कुतो न वाच्यमित्यतो विशेषश्रुतिरित्युक्तपूर्वपक्षन्यायविवरणपरमस्यां हीत्यादिभाष्यार्थं व्याचष्टे ॥ **अस्यां हीति** ॥ एतेन समाख्याबाधवाक्यशेषोक्तयुक्तिसाहित्येन पौष्यायणश्रुतौ वागिन्द्रियस्यैवानुत्पत्तिरुच्यते न तु समाख्यानुरोधेन भाष्यार्थ उक्तो भवति । उत्पत्तिमत्येव बाधकयुक्तिपूर्वं च वाचोऽनुत्पत्तिः श्रूयत इति भाष्यार्थं मत्वाऽऽह **किञ्चेति** ॥ अथवा सूक्ष्मारूपानादित्वपरत्वे नानादित्वश्रुतेः सावकाशत्वे बाधकयुक्तिपूर्वमिति भाष्यार्थमभिप्रेत्य गतार्थतामाशङ्क्य निराह ॥ **अथापिस्यादित्यादिना** ॥

(वाक्यार्थमुक्तावली)

श्रुत्याश्रयत्वेऽपि वाचोऽनादित्वश्रुतेस्सूक्ष्मरूपानादित्वपरत्वमुत्पत्तिश्रुतेरुपचयार्थत्वं च किं न स्यादित्यत आह ॥ **श्रुत्याश्रयत्वं नामेति** ॥ अनेन श्रुतिसन्निधियोग्यतेत्युदाहरिष्यमाणयोग्यता-पदव्यावृत्यशङ्का प्रदर्शिता । सूत्रे नानुत्पत्तिरिति शेषः । तथा च वाचो वागिन्द्रियस्य तत्प्रकृतं मनः पूर्वं पूर्ववृत्तिकारणं यस्य तत्तत्पूर्वकं तस्य भावस्तत्वं तस्मात्तत्पूर्वकत्वश्रवणान्नानुत्पत्तिः किंतूत्पत्ति-रेवेति सूत्रार्थं भाष्यारूढतया दर्शयति ॥ **वागिति** ॥ तस्मान्मन एवेति भाष्ये श्रुत्युदाहरणा-ट्टीकायामर्थानुवादः श्रुतौ मनःपूर्वरूपमिति हेतुमुक्त्वा वागुत्तररूपमिति साध्यमुच्यते । तत्राव्याप्ति-मुपपादयति ॥ **कारणेति** ॥ भाष्ये तस्मादिति पूर्वोक्तहेतुपरामर्शकाधिकांशोदाहरणस्य किं प्रयोजनमित्यतो **वागुत्तररूपमिति** ॥ व्याहरणपरतया सावकाशत्वम् । किं चेन्द्रियपरत्वमेव विशेषश्रुतित्वात् । विशेषश्रुतित्वं वाचा व्याहरतीति । पूर्ववाक्यबलेन न ज्ञायत इति पूर्वानुबन्धं सूचयितुं हेतुपरामर्शकस्य तस्मादित्यंशस्योदाहरणमिति भावेनाह ॥ **न चेति** ॥

नन्वैतरेयभाष्ये मनः पूर्वरूपमिति वाक्यं मनोवाङ्नामकभगवद्रूपयोर्विष्णुसहितपूर्वोत्तर वर्ण-देवतात्वपरत्वेन व्याख्यातत्वात्कथमत्रोदाहरणमित्यत आह ॥ **पूर्वोत्तरशब्दाविति** ॥ विवक्षिता-विति शेषः । मनोवागिन्द्रियस्य भगवत्परत्वस्य तत्रापि विवक्षितत्वादधिष्ठानविवक्षया कार्यकारण-भावोऽत्राभिप्रेत इति भावः । श्रुत्यादिविरोध इत्यादिपदेन युक्तिर्गृह्यते । नित्यत्वोपचार इति । वाग्वाव नित्या' इति श्रुतौ नित्यत्वोपचार इत्यर्थः । श्रुत्यादीत्यादिशब्दार्थं विशदयन् किं चेत्युक्तयुक्तिं निराह ॥ **न चेत्यादिना** ॥ श्रुत्याश्रयत्वं नामेत्युक्तयुक्तिं च निरस्यति ॥ **अत एवेति** ॥ श्रुत्युदाहरणयोग्याया वाच उच्चारणफलोपधानायोपचयस्यापेक्षितत्वादेवेत्यर्थः । अनेन नित्यत्वं कुतश्चनेत्येतत् कुतश्चन विशेषश्रुत्या नित्याश्रयत्वयुक्त्या नित्यं श्रुत्युच्चारणसामर्थ्ययुक्त्या च नित्यत्वं व्याख्यातं भवति । षष्ठीभ्रमं वारयति **मनसः सकाशादिति** ॥ न केवलं वागिन्द्रिय-स्येत्युदाहृतस्मृतिबलाद्वाग्वाव नित्येति श्रुतेरुपचरितार्थत्वं किं तु वाक्यार्थानुपपत्त्यापीत्यत आह ॥ **एवमभ्युपगम एवेति** ॥ नित्यत्वप्रतिपादकतया प्रतीयमानापि श्रुतिरौपचारिकनित्यत्वार्थकत्वे श्रुतिरुपपन्ना न ह्येषोत्पद्यत इत्यनादित्वश्रुतिविरोधादित्यतो नित्यत्वश्रुतिरप्यापन्नेत्यपिपदेनानुत्पत्ति-श्रुतिः समुच्चिता । तदुपपादयति ॥ **तस्यापीति** ॥ न ह्येषोत्पद्यत इति श्रुतेरनुत्पत्तिमद्वेद-सन्निधापितायोग्यतार्थकत्वादित्यर्थः ।

(वाक्यार्थमुक्तावली)

ननु वाक्यशेषे नित्यश्रुत्याश्रयत्वेनैव नित्यत्वसाधनात्कथमुभयोर्योग्यतार्थकत्वेनोपचरितानादि-नित्यत्वपरमित्यतस्तदुपपादयति ॥ **वाग्वावेति** ॥ उपचारबीजमेवोच्यते न तु नित्यत्वे युक्तिरित्यर्थः । उपपन्नार्थत्वं दर्शयति एवं च **सतीति** ॥ अस्यां हीति श्रुतिरुपचारबीजप्रदर्शनपरत्व एव **सतीत्यर्थः** । **पुराणाद्यश्रयत्वेनेत्युक्त्या** अस्यां हि श्रुतिरित्यत्र श्रुतिग्रहणं पुराणादेरुपलक्षण-मित्युक्तं भवति ।

ननु वाचोनित्यत्वाभावादस्यां हि श्रुतिरवतिष्ठत इति वाक्यशेषबलाच्च वेदाश्रयत्वेन नित्ये-त्यर्थोऽस्तु पुराणाश्रयत्वेनानित्ययेति कुतः स्वरूपेणानित्यत्वसम्भवादित्यत आह ॥ **एवं च समाख्येति** ॥ सत्यं तथा व्याख्यातुं शक्यं तथापि नित्ययाऽनित्यया स्तौमीति भाष्योदाहृत श्रुतेर्नित्ययाऽनित्यया स्तौमि ब्रह्मतत्परमं पदमिति समाख्याश्रुत्यनुरोधात्तद्व्याख्यातमित्यर्थः । वेदाश्रयत्वेन नित्यया वाचा स्तौमीत्यस्यापि नाहमुत्प्रेक्षया श्लोकान्परिकल्प्य वागिन्द्रियेण स्तौमि पुराणाभ्यामेवेत्यत्रैव तात्पर्यात्तच्छ्रुतेः समाख्यानमिति द्रष्टव्यम् । अन्यथा न वाक्यार्थोपपत्तिरिति । नित्ययाऽनित्ययेति वाचोनित्यत्वमनित्यत्वं चोच्यते । तत्र यदि वाग्वाव नित्येति मुख्यनित्यत्व-मुच्यते तदा नित्यत्वमयुक्तं स्यात् । एकस्यैवेन्द्रियस्य तदुभयायोगात् । न चानित्यं वाचोऽन्यत् अन्यस्य स्तुतिकरणत्वाभावात् अतो न वाक्यार्थो युज्यत इत्यर्थः ।

न चानित्यत्वमुपचरितमिति वाच्यम् । कथमुपचरितत्वम् । किं पुराणाश्रयत्वेनोतोपचितांश-मादाय । नाद्यः । न्यायसाम्येन नित्यत्वेऽपि तथोपपत्तेर्वाक्यशेषानुगुण्यात्समख्याऽनुगुण्याच्च द्वितीयेऽङ्गीकृतैवोत्पत्तिः ॥ **समाख्यानुगुण्यं चेति** ॥

## वाक्यार्थविवरणम्

**अवतार्य** ॥ उपक्रम्य ॥ **विशेपार्थेति** ॥ वेदरूपेत्यर्थः । तथा च वागिन्द्रियपरत्वाभावान्न तस्या अनादित्वमिति भावः । युक्त्यन्तरं चाह ॥ **उत्पत्तिश्रुतीति** ॥ **विशेषेति** ॥ श्रुतिरूप-विशेषेत्यर्थः । ननु कुत एतत् । श्रुत्याधारत्वमेव श्रुत्याश्रयत्वं किं न स्यादित्यत आह ॥ **नित्येति** ॥ अन्यथेत्यादौ योज्यम् । अन्यथा नित्यं श्रुत्युच्चारणसामर्थ्यरूपश्रुत्याश्रयत्वाभावे । तथा च सर्वदा सर्वत्र वर्णानां सत्त्वेन वाच्यपि सत्त्वस्य सिद्धतया 'अस्यां हि' इति विशिष्य

(वाक्यार्थविवरणम्)

वागाश्रयत्वकथनमसङ्गतं स्यात् । अतः श्रुत्याश्रयत्वं नाम मदुक्तमेवेति भावः । अत्र सामर्थ्यं फलोपधानमेवेति द्रष्टव्यम् ॥ **व्यर्थमुपचयकल्पनमिति** ॥ 'वाग्वाव नित्या' इति नित्यत्वश्रुतेः सूक्ष्मरूपनित्यत्वपरत्वाङ्गीकारे 'अस्यां हि' इति श्रुतं सदा वेदोच्चारणरूपसामर्थ्यरूपं श्रुत्याश्रयत्वमङ्गीकृतं स्यात् । तथा चोपचयकल्पना व्यर्थैव । सूक्ष्मरूपे श्रुत्युच्चारणसामर्थ्यं न सम्भवतीत्याशयेनैव ह्युपचयः कल्प्यते । तच्च यदा सूक्ष्मरूपेऽप्यङ्गीकृतं तदोपचयकल्पनस्य व्यर्थत्वादुक्तव्यवस्थोक्तिर्न युक्तेति मुख्यानुत्पत्तिरेवास्त्विति भावः ॥ **साधारणत्वादिति** ॥ वागिन्द्रियतत्कार्यव्याहरणोभयसाधारणत्वादित्यर्थः ॥ **इन्द्रियार्थत्वे** ॥ वाक्शब्दस्येति वर्तते । विशेषश्रुतित्वात् । वागुत्तररूपमिति श्रुतेरिति शेषः ॥ **नित्यत्वम्** ॥ सर्वथोत्पत्तिराहित्यरूपम् । सन्निधिपदाभिप्रायमुक्त्वा योग्यतापदाभिप्रायं वक्तुमाह ॥ **न चेति** ॥ सम्भावकमेवेदं न तु साधकम् । परीत्या घटत्वाश्रये घटे व्यभिचारात् ॥ **नित्याश्रयत्वम्** ॥ नित्यश्रुतिसन्निधानाश्रयत्वं तदुच्चारणसामर्थ्यमिति यावत् ॥ **न नित्यदेति** ॥ फलोपधानं न विवक्षितमित्यर्थः ॥ **तद्योग्यतेति** ॥ श्रुतिसन्निधियोग्यत्वं तदुच्चारणयोग्यत्वमिति यावत् ॥ **अत एवेति** ॥ श्रुत्युच्चारणयोग्यत्वसत्त्वेऽपि फलोपधानार्थमुपचयः कल्प्यत इत्यर्थः । तथा च श्रुतेः सूक्ष्मरूपानादित्वपरत्वेऽपि 'अस्यां हि' इत्युक्तश्रुत्युच्चारणयोग्यत्वस्य सूक्ष्मरूपेऽपि सम्भवात् । फलोपधानस्यावश्यकत्वेन तदर्थ-मुपचयस्याप्यपेक्षितत्वेनोक्तव्यवस्था युक्तैवेति भावः ।

## वाक्यार्थमञ्जरी

न चेत्यस्य वाच्यमिति वक्ष्यमाणेनान्वयः ॥ **समाख्याश्रुताविति** ॥ 'नित्ययानित्यया स्तौमि' 'ब्रह्म तत्परमं पदम्' इति 'श्रुतिर्वाव नित्या अनित्यावाव स्मृतयश्चान्यावाचः' इति समाख्या श्रुतावित्यर्थः । **अवतार्य** उदाहृत्य ॥ **उत्पत्तीति** ॥ इन्द्रियोत्पत्तिश्रुत्याऽनुकूल्याच्चेत्यर्थः । श्रुत्याश्रयत्वेऽपि वाचोऽनादित्वश्रुतेः सूक्ष्मरूपानादित्वपरत्वउत्पत्तिश्रुतेस्तु उपचयार्थत्वं किं न स्यादित्यत आह ॥ **श्रुत्याश्रयत्वं नामेति** ॥ अन्यथा श्रुत्याधारत्वमात्रत्वे श्रुतेरपि वर्णात्म-कत्वादिति भावः । ततः किमित्यत आह ॥ **सदेति** ॥ वाचः वागिन्द्रियस्य तत्पूर्वकत्वान्मनः कारणकत्वादुत्पत्तिमत्येव वागित्यर्थः । साधारणत्वात् इन्द्रियव्यवहारयोरिति शेषः ॥ **पूर्ववाक्य-बलेनेति** ॥ व्यवहारस्य व्यवहारकारणत्वायोगेन तत्र वाक्शब्दस्येन्द्रियपरत्वे सिद्धे तत्समभि-

(वाक्यार्थमञ्जरी)

व्याहृतोत्तरवाक्यस्थस्यापि तस्येन्द्रियपरत्वस्यैव वक्तव्यत्वादिति भावः ॥ **नित्यत्वोपचार इति** ॥ एवं च वाग्वेति श्रुतेरुपचरितार्थत्वान्न तद्विरोध इति भावः । किं चेत्युक्तदोषं निराह ॥ **न चेति** ॥ श्रुत्याश्रयत्वं नामेत्यादिनोक्तयुक्तिं निरस्यति ॥ **अत एवेति** ॥ उपचयात्पूर्वं योग्यतामात्र-सत्वेऽप्युच्चारणासमर्थत्वेन तदर्थमुपचयस्यावश्यकत्वमिति भावः । षष्ठीभ्रमं निरस्यति ॥ **मनः सकाशादिति** ॥ न केवलं वागिन्द्रियस्योत्पत्तिप्रतिपादकतस्मान्मन इति श्रुतिबलाद्वाग्वाव नित्येति श्रुतेरुपचरितार्थत्वं किं तु अस्यां हि श्रुतिरवतिष्ठत इति वाक्य शेषान्यथानुपपत्तिलक्षणान्तरानु-पपत्त्यापीत्याह ॥ **एवमभ्युपगम एवेति** ॥ वागिन्द्रियस्योत्पत्तिमभ्युपगम्य श्रुतेरुपचरितार्थ-त्वाभ्युपगम एवेति भावः ॥ **नित्यत्व इति** ॥ सर्वथोत्पत्तिराहित्यलक्षणनित्यत्व इत्यर्थः ॥ **तस्यापीति** ॥ नित्यत्वप्रतिपादकत्वेन प्रतीयमानाया अप्येतदर्थत्वात् उपचयरूपोत्पत्तिमतोऽपि श्रुतिसन्निधियोग्यत्वरूपनित्यत्वार्थकत्वादित्यर्थः । तदेवोपपादयति ॥ **वाग्वेति** ॥ उक्तार्थत्वाङ्गीकारे पूर्ववाक्यार्थोपपत्तिरपि नियामकेत्यभिप्रेत्य नित्ययाऽनित्ययेति पूर्ववाक्यं योजयति ॥ **एवं च सतीति** ॥ अस्यां हीतिवाक्यशेषस्योपचारबीजप्रतिपादकत्वे सतीत्यर्थः ॥ **पुराणाद्याश्रयत्वेन चेति** ॥ अनेनास्यां हि श्रुतिरित्युपलक्षणम् । अस्यां हि पुराणादिकमवतिष्ठत इत्यपि ग्राह्यमित्युक्तं भवति । ननु पुराणाद्याश्रयत्वमात्रेण कथं वागिन्द्रियनित्यत्वानित्यत्वे इत्यत आह ॥ **एवं च समाख्यानुरोध इति** ॥ तथा च समाख्याश्रुतौ श्रुतिर्वाव नित्याऽनित्या वाव स्मृतयो याश्चान्या वाच इति श्रुतिपुराणाद्याश्रयत्वयोर्नित्यत्वानित्यत्वयोरुक्तत्वात्तत्र निर्णीतनित्यत्वानित्यत्ववत् श्रुतिपुराणाद्याश्रयत्वेन वागिन्द्रियस्य नित्यत्वानित्यत्वे घटेते इति भावः ॥ **अन्यथेति** ॥ स्वरूपेण नित्यत्वानित्यत्वविवक्षायां निरोधात्स्वरूपेण नित्यत्वमुपचरितांशेनानित्यत्वमिति विवक्षायां च वाक्यशेषादौ नित्यवेदाश्रयत्वाद्युक्त्ययोगात् वाक्पदेन वेदविवक्षायां चास्यां हि श्रुतिरवतिष्ठत इति वाक्यशेषविरोधात् अस्मदुक्तवाक्यार्थादन्यथा वाक्यार्थो न युक्त इत्यर्थः । यद्वा अन्यथा समाख्यानुरोधेन नित्यया, अनित्यया स्तौमि परमात्मानमिति वाक्यस्य नित्यवेदाश्रयत्वेन नित्ययाऽनित्यपुराणाद्याश्रयत्वेनानित्ययेत्यर्थकत्वाङ्गीकारे तस्य वाक्यस्यार्थोपपत्तिर्न विद्यत इत्यर्थः । वाक्यशेषे नित्ययेत्युक्तनित्यत्वं वाग्वाव नित्येति वाचः प्रतिज्ञाया अस्यां हि श्रुतिरवतिष्ठत इति तदुपपादनं वेदनित्यत्वप्रतिज्ञातदुपपादनयोरभावादिति भावः ।

॥ इति वागधिकरणम् ॥

## ४. अथ सप्तगत्यधिकरणम्

### सूत्रभाष्यम्

'सप्त प्राणाः प्रभवन्ति तस्मात्' (मुं.उ.२-१-८) इति श्रुतिः । 'सप्तैव मारुता बाह्ये प्राणाः सप्त तथाऽऽत्मनि । अधिदैवे तथाऽध्यात्मे सङ्ख्यासाम्यं विदो विदुः' इति च स्कान्दे। 'द्वादश वा एते प्राणा द्वादश मासा द्वादशाऽदित्या द्वादशराशयो द्वादश ग्रहा' इति कौण्डिन्यश्रुतौ द्वादशप्राणा दृश्यन्ते । अतो वक्ति–

**॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ ६ ॥**

ज्ञानेन्द्रियापेक्षया सप्तत्वम् । 'गुहाशयां निहिताः सप्तसप्त'(मुं.उ.२-१-८)ति विशेषणात् ।

'सप्तप्राणास्त्ववगतेः पञ्चप्राणाश्च कर्मणः ।
एवं प्राणद्वादशकं शरीरे नित्यसंस्थितमि' ॥ इति ।

भविष्यत्पर्ववचनं च शब्दात् ।

### तत्त्वप्रदीपिका

द्वादश ऋतुयाजग्रहाः मध्वादिद्वादशमासोद्देश्याः । 'षडृतुनेति यजन्ति । प्राणमेव तद्यजमाने दधति । चत्वार ऋतुभिरिति यजन्त्यपानमेव तद्यजमाने दधति । द्विऋतुनेत्युपरिष्टात्' इति श्रुतेः । सप्त गतेर्विशेषितत्वाच्च । 'गुहाशयां निहिताः सप्त सप्त' इति । गुहाशयायां बुद्धौ निहिताः सप्त सप्त प्राणाः । 'समाने लोपः' इति सूत्रादेकयकारलोपः । तादर्थ्ये सप्तमी । गुहाशयां प्रति निहिता इति वा । उभयथा च बुद्ध्यर्थं निहिता इत्यर्थः । सप्त सप्तेति प्रतिपुरुषं भेदात् । अथवा गुहायामाशयं प्रति आशयार्थं निहिताः । 'निहितं गुहाविः' 'गुहासन्तम्' इत्यादिवत् । सप्तम्यर्थे प्रथमा । 'दैर्घ्यं प्लुतं च हुङ्कारो विन्दुरप्यवधारण' इति शब्दनिर्णये ।

### तत्त्वप्रकाशिका

अत्र श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वसिद्धये प्राणसङ्ख्याविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । उक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वयः प्राणसङ्ख्याश्रुतीनां विरोधेनाप्रामाण्येऽनु-

(तत्त्वप्रकाशिका)

पपन्नः **प्राप्नोतीत्यवश्यमयं पराकार्यः** । प्रकृतप्राणा एवात्र विषयः । किं सप्तोत द्वादशेति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥ **सप्तेति** ॥ श्रुतिः प्राणानां सप्तत्वं वक्तीति शेषः । '**ग्रहाः सोमस्य सप्तैव प्राणाः** सप्त प्राणाः' इति श्रुतेः । न च द्वादशप्राणेषु सप्तापि सम्भवन्तीति द्वादशत्वाविरोधिनीयं श्रुतिरिति वाच्यम् । द्वादशत्वे कारणविशेषमन्तरेण सप्तत्वोक्तेरयोगात् । किं चाभिमानिनां सप्तत्वाच्च प्राणानां सप्तत्वमभिमान्यभिमन्यमानयोः समसङ्ख्यात्वनियमादिति । अथवा द्वादश प्राणाः । 'द्वादश वा एते प्राणाः' इति श्रुतेः । न च सयुक्तिकत्वेन बलवत्या सप्तत्वश्रुत्या बाधः । द्वादश मासा इत्यादि श्रुतेरेकदैवत्याभिप्रायेण प्रवृत्तत्वेन प्राणाभिमानिनां द्वादशत्वस्याभिप्रेतत्वात्सप्तत्वे कथितयुक्तेरत्रापि साम्यात् । अन्यथा श्रुतेरुन्मत्त-वाक्यत्वापातात् । अत एव श्रुतिद्वयस्यापि समबलत्वेनान्यतरमात्रबाधायोगात् परस्परविरोधेना-प्रामाण्यान्न श्रुतिसमन्वयेन नारायणस्य जगत्कारणत्वमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ न प्राणसंख्यानिर्णयाभावेन श्रुतिद्वयस्याप्रामाण्यं कल्प्यम् । द्वादश प्राणा इति निर्णयोपपत्तेः । न च सप्तत्वश्रुतियुक्तिविरोधः । द्वादशप्राणेषु सप्तप्राणानामपि विद्यमानत्वात् । न च विवक्षाविशेषमन्तरेण सप्तत्वोक्तिर्व्यर्थेति वाच्यम् । श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वात्तद्विवक्षया सप्तत्वश्रुतेः प्रवृत्तत्वात् । सप्तानां श्रुत्युक्तानां ज्ञानेन्द्रियत्वं कुत इति चेन्न । तद्वाक्यशेषे सप्तानां ज्ञानार्थत्वेन विशेषितत्वादिति भावः । गुहा हृदयमाशयः स्थानं यस्या बुद्धेस्तदर्थं ये प्रतिशरीरं सप्त सप्त प्राणा निहितास्ते यत्र चरन्तीत्यर्थः । विशेषणबलेन तेषां ज्ञानार्थत्वमस्तु तथापि ते तावन्त एव किं न स्युरित्यत आह ॥ **सप्तेति** ॥ च शब्दात्सङ्गृहीतमिति शेषः । एतच्छ्रुतावेवं सावकाशायामितराऽपि श्रुतिरत्रोदाहर्तव्या ।

## गुर्वर्थदीपिका

ग्रहाः सोमस्येत्यत्र सोमस्य सोमरसस्य ग्रहा 'द्विषड्गृहीतेन च सप्तवत्या' इति वचना-त्पूर्णाहुतिदानाय स्रुवेण स्रुचि क्रियमाणाः द्वादशवारं सङ्ग्रहाः । 'ग्रहान् सोमस्य मिमते द्वादश' इति श्रुतेः । अन्यथा ग्रहाणां नवसङ्ख्याकत्वेन वाक्यार्थायोगादिति भावः । द्वादश मासा इत्यादिश्रुतेरित्यत्र एकदैवत्येनैकप्रकाराभिमानिदेवतासम्बन्धित्वेन द्वादशद्वादशाभिमानिदेवता-वत्त्वेनेति यावत् । एकस्यापि सूर्यमण्डलस्य मासिमास्येकैकाभिमानिनि विष्टत्वोपाधिना द्वादशत्व-मिति ज्ञेयम् । अन्यथा श्रुतेरित्यत्र अन्यथा उक्तविधयाऽपूर्वार्थत्वाभावे, केवलसिद्धानुवाद-

(गुर्वर्थदीपिका)

मात्रत्वेनोन्मत्तप्रलपितत्वमित्यर्थः । गुहाहृदयमित्यस्य गूह्यते आच्छाद्यते कामक्रोधादिना पुरुष इति गुहा हृदयं मन इत्यर्थः । सैव आशयः उत्पत्तिस्थानं यस्याः सा गुहाशया बुद्धिः बोधनं ज्ञानं तामुद्दिश्येत्यर्थः । इतराऽपि श्रुतिरत्रोदाहर्तव्येत्यत्र 'इतरा द्वादश वा एते प्राणा' इति श्रुतिः । अत्राप्युक्तार्थे उदाहर्तव्या । तथाऽपि ज्ञानेन्द्रियसप्तकस्य कर्मेन्द्रियपञ्चकस्य गृहीतत्वादस्मच्छ्रुत्यनुकूलैवेति भावः ।

## भावबोधः

**प्राणसङ्ख्येति** ॥ धर्माणां मध्ये उत्पत्तिरूपधर्मस्य प्राथमिकत्वात् प्राणानामुत्पत्तिं विचार्य अत्र तत्संख्या विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किं सप्तेति** ॥ अत्र, प्रकृतप्राणाः किं सप्त द्वादशेत्यनिर्णय उत द्वादशैवेति निर्णय इति चिन्ता । तदर्थं 'सप्त प्राणाः' 'द्वादश वा एते प्राणा' इति श्रुती परस्परविरुद्धे उताविरुद्धे इति । तदर्थं प्राणानां द्वादशत्वे तत् श्रुतिद्वयं न घटत उत घटत इति । तदर्थं सप्तत्वद्वादशत्वसङ्ख्यावच्छेदकं नास्त्युतास्तीति । सहापाठे निमित्ताभावे तेषामेवाभावापत्त्या द्वादशत्वस्यैवाभावेन तदवच्छेदकानुपपत्तिरन्यथा तदुपपत्तिरिति । अत्र श्रुतेरेव परस्परविरोध इति न्यायविवरणे उभयाप्रामाण्येन पूर्वपक्षितत्वाट्टीकायामपि सप्तैव प्राणा इत्यादिना च सप्तत्वद्वादशत्वश्रुत्योः समानबलत्वोक्त्या परस्परव्याघात इत्येक एव पूर्वपक्षो दर्शितः । तदनुसारेण सन्देहटीकापि सप्तोत द्वादशेति निर्णय इत्यध्याहारेण योज्या ॥ **ग्रहाः सोमस्येति** ॥ छन्दांसि च दधतोऽध्वरेषु ग्रहाः सोमस्य मिमते द्वादश' इति श्रुतेरिति भावः । सोमरसग्रहणार्था पात्रविशेषा इत्यर्थः । सप्तैवेति स्मृत्युक्तयुक्तिमाह– **किं चेत्यादिना** ॥ **एकदैवत्याभिप्रायेणेति** ॥ समसङ्ख्यादैवतकत्वाभिप्रायेणेत्यर्थः । द्वादशमासानां हि द्वादशादित्यादयो हि देवताः । एतद्युक्तिसूचनार्थमेव भाष्ये द्वादशमासा इति श्रुत्युदाहरणम् । अन्यथा द्वादश वा एते प्राणा इत्येवोदाहरिष्यदिति भावः ॥ **अन्यथा श्रुतेरिति** ॥ द्वादशेत्यादिना प्राणादिसङ्ख्याकथनस्य वैयर्थ्यादिति भावः ॥ **परस्परविरोधेनेति** ॥ अनेन दशेमे पुरुषे प्राणा आत्मैकादश सप्त प्राणाः प्रभवन्ति तस्मादिति सङ्ख्याविशेषश्रुत्योरेव परस्परविरोध इति न्यायविवरणमपि व्याख्यातं भवति ॥ **वाक्यशेषे सप्तानां ज्ञानार्थत्वेनेति** ॥ अनेन 'गुहाशयां निहिताः सप्त सप्त' इति सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वादिति न्यायविवरणमपि व्याख्यातं भवति । गुहाशयायां बुद्धौ

(भावबोधः)

'लोपः समानः' इति सूत्रादेकयकारलोपः । प्रतिपुरुषं सप्त सप्तेत्याथर्वणभाष्यं मनसि निधायाऽऽह– **सप्त इमे लोका येषु चरन्ति प्राणा इति** ॥ गुहाशयां निहिताः सप्त सप्तेति श्रुत्यर्थमाह– **गुहाहृदयमिति** ॥ सप्तमीविभक्त्यर्थमाह– **तदर्थमिति** ॥ अनेन गुहाशयामुद्दिश्य शेष इत्युक्तं भवति। लोका येषु प्राणेष्विति भ्रान्तिं वारयितुं यत्तच्छब्दाध्याहारेण वाक्यं योजयति– **ये प्रतिशरीरमिति** ॥ यत्र येषु लोकेष्वित्यर्थः । त इमे लोकाः सप्तेति सम्बन्धः ।

ननु सूत्रे सप्त प्राणा इति श्रुतेः सावकाशत्वमुक्तम् । न द्वादशत्वे प्रमाणम् । अतः कथं द्वादशत्वनिर्णय इत्यतश्चशब्देन तदप्युक्तमित्याशयेन प्रवृत्तं सप्त प्राणास्त्ववगतेरित्यादिभाष्यं तन्निर्वतनीयशङ्काप्रदर्शनपूर्वकमवतार्य व्याचष्टे– **विशेषणबलेनेत्यादिना** ॥ **एतच्छुताविति** ॥ 'सप्त प्राणा, इति श्रुतौ स्मृतेः श्रुतिसावकाशत्वप्रदर्शनेऽपि व्यापारोऽस्तीति दर्शयितुमुक्तम् ॥ **एवं सावकाशायामिति** ॥ **इतरापीति** ॥ 'द्वादश वा एते प्राणा' इति श्रुतिरत्र प्राणानां द्वादशत्वे उदाहर्तव्या ।

## भावदीपः

**श्रुतीनामिति** ॥ दशेमे पुरुषे प्राणा इति न्यायविवरणोक्त श्रुत्युपसङ्ग्रहाय बहुवचनम् ॥ **किं सप्तेति** ॥ अत्र किं सप्तोत द्वादशेत्यनन्तरम् इति निर्णयः शक्योऽथाशक्य इति योज्यम् । तेन वक्ष्यमाणपूर्वपक्षानुगुण्यं संशयस्य बोध्यम् । तथैवानुक्त्वा एवमुक्तिर्भाष्योक्तश्रुतिविगानरूपसंशय-बीजप्रदर्शनाय ॥ **सोमस्येति** ॥ ज्योतिष्टोमयागे सोमरसस्य ग्रहणार्थाः सूक्ष्मोलूखलाकाराः पात्रविशेषा ग्रहा इत्यर्थः । तेषां द्वादशत्वसमाधिश्चन्द्रिकायाम् । सप्तेति सूत्रव्यावर्त्यपूर्वपक्षमाह ॥ **सप्तैवेति** ॥ इष्टापत्तिनिरासायैवकारः । स्फुटत्वाद्भाष्यादावनुक्तमपि सौत्रगतिपदव्यावर्त्यं हेतुमाह ॥ **द्वादशत्व इति** ॥ भाष्यस्थस्मृत्युक्तयुक्तिं व्यनक्ति ॥ **किं चेति** ॥ **नियमादिति** ॥ यद्यप्येकैकस्यापि अव्यक्तादेरनेके ब्रह्माणीभारतीप्रभृतयोऽभिमानिनः सन्ति । तथा न केषामपि एको ब्रह्मादिरभि-मान्यस्ति तथापि प्रातिस्विकासाधारणाभिमान्याशयेनेयमुक्तिरित्यदोषः । इति शब्दः सप्तत्वपक्ष-समाप्तौ । भाष्यस्थश्रुत्यन्तरानुरोधात् पक्षान्तरमाह ॥ **अथवेति** ॥ श्रुतिशेषोक्तेः शङ्कापूर्वमुपयोगं व्यनक्ति ॥ **न चेत्यादिना** ॥ **एकदैवत्येति** ॥ समसङ्ख्याकदेवताभिप्रायेणेत्यर्थः । द्वादशमासानां

(भावदीपः)

हि द्वादशादित्यादयो देवताः ॥ **कथितेति** ॥ अभिमान्यभिमन्यमानयोः समसङ्ख्यात्व नियमादित्युक्तेरित्यर्थः । अन्यथाऽनुपयुक्तकथनेनेत्यर्थः । अस्त्वेवं पक्षद्वयं सयुक्तिकश्रुतिसिद्धम् । तथा च किमित्यतः सङ्ख्याविशेषश्रुत्योरेव परस्परं विरोध इति न्यायविवरणं हेतूक्त्या विवृण्वन्फलोक्त्योपसंहरति ॥ **अत इति** ॥ सयुक्तिकत्वादित्यर्थः । सौत्रसप्तत्वोक्तौ हेतूक्तिपरत्वेन सूत्रभाष्ये व्याकर्तुं परिष्करोति ॥ **न प्राणेति** ॥ शङ्कापूर्वं सूत्रभाष्ये व्याचष्टे ॥ **न चेत्यादिना** ॥ सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वादित्यन्यत्रोक्तिमनुरुध्य शेषं व्याचष्टे ॥ **सप्तानामिति** ॥ गुहाशयां बुद्धौ । 'लोपः समानः' इति सूत्रादेकयकारलोप इत्याथर्वणभाष्यं विग्रहोक्त्या विवृण्वान एवोक्तमर्थं श्रुतावस्फुटत्वाद् व्यनक्ति ॥ **गुहेति** ॥ गुहाशयामिति तादर्थ्ये सप्तमीति भावेनार्थमाह ॥ **तदर्थमिति** ॥ तत्त्वप्रदीपे तु गुहाशयां बुद्धिं प्रति बुद्ध्यर्थं निहिता इति वेत्यादिरूपेणार्थान्तरं चोक्तम् । तदनुरोधेन द्वितीयान्तपक्षमप्युपेत्य वार्थमाह ॥ **तदर्थमिति** ॥ सप्तसप्तेति वीप्सालब्धार्थमाह ॥ **प्रतिशरीरमिति** ॥ प्रतिपुरुषं सप्तसप्तेत्याथर्वणभाष्योक्तेरिति भावः । एषु चरन्तीत्यस्यार्थः यत्रेत्यादि । लोकशब्दितगोलकेष्वित्यर्थः । त इमे सप्तलोका इत्यन्वयः । ननु सयुक्तिकसप्तत्वश्रुतिविरोधेन द्वादश वा इति श्रुतेरेवाप्रामाण्ये कथं स्मृतिमात्रेण द्वादशत्वसिद्धिरित्यत आह ॥ **एतच्छ्रुताविति** ॥ सप्त प्राणा इति श्रुतावित्यर्थः । अत्र इन्द्रियद्वादशत्वे । सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वात्संख्याश्रुत्योर्विषयवैलक्षण्यादित्यन्यत्रोक्तेरिति भावः ।

## अभिनवचन्द्रिका

**किं सप्त, उत, द्वादशेति** ॥ यद्यपि नायं पूर्वपक्षसिद्धान्तकोटिकः सन्देहः, पूर्वपक्षिणा संख्याद्वयानङ्गीकारात्, तथापि सूत्रस्य पूर्वपक्षनिरासवत् सन्देहनिरासोऽपि प्रयोजनमिति सूचनाय पूर्वपक्षसिद्धान्तकोट्यनवलम्बी सूत्रनिरस्यः सन्देहोऽयं दर्शितः । संख्याद्वयाङ्गीकारेण सिद्धान्ताभिधानेनोक्तसंशयनिरासात् ॥ **ग्रहा इति** ॥ सोमरसग्रहणार्थाः पात्रविशेषाः । ज्योतिष्टोमे हि, 'उपांश्वन्तर्यामैन्द्रवायवमैत्रावरूणाश्विनाः पञ्च, शुक्रमन्थिनौ द्वौ, ऋतुपात्रे द्वे, अतिग्राह्यास्त्रय' इति द्वादश । **यद्यप्यश्वद्वाल्भ्यावपि** तत्र ग्रहौ स्तः तथापि तयोरनित्यत्वात् साधनोपस्थापनाद्यभावाच्च नित्यसाधनादियुक्तग्रहविवक्षया द्वादशत्वमिति द्रष्टव्यम् । पूर्वपक्षयति **सप्तैव प्राणा इति** ॥ यदि 'द्वादश वा एते प्राणा' इति श्रुतिबलात् द्वादशप्राणा इत्यभ्युपगम्यते

(अभिनवचन्द्रिका)
तर्हि परोऽपि 'सप्तप्राणा', इति श्रुतिबलात् सप्तैव प्राणा इति ब्रूयादित्यर्थः । एतेन 'सप्तप्राणा' इति श्रुतिप्रामाण्येन प्राणानां सप्तत्वाङ्गीकारो न युक्तः । परस्परविरोधेन श्रुतिद्वयस्याप्यप्रामाण्यादिति वक्ष्यमाणग्रन्थविरोधादिति परास्तम् । न परेण सप्तैवेति प्रतिवक्तुं शक्यते । 'सप्तप्राणा' इति श्रुतौ अवधारणाभावेन तदसाधकत्वात् श्रुत्यनुसारेण सप्तत्वाभिधाने च न द्वादशत्वविरोध इत्याशंक्य निषेधति **न चेति ॥ कारणविशेषमन्तरेणेति ॥** नेयं श्रुतिः द्वादशत्वसंख्याविरोधिनीं सप्तत्वसंख्यां ब्रूते । अवच्छेदकाभावेन विशिष्यसप्तत्वाभिधानायोगात्, किन्तु तां संख्यामसहमाना स्वयं सप्तत्वसंख्यामभिधत्ते इति भावः । तर्हि अहमपि सप्तैव प्राणा इति वक्ष्यामीत्यत आह– **अथवेति ॥** अथवेत्ययं निपातसमुदायो यद्यर्थे वर्तते । 'सप्तैव प्राणा' इति अनुवर्तते । तर्हीति शेषः । ततश्चैवं योजना – यदि त्वया सप्तैव प्राणा इत्यभ्युपगम्यते, तर्हि परो द्वादशप्राणा इति ब्रूयादिति ॥ **एकदेवत्याभिप्रायेणेति ॥** मासादीनामेकदेवत्याभिप्रायेणेत्यर्थः ॥ **कथितयुक्तेरिति ॥** अभिमान्यभिमन्यमानयोः समसंख्याकत्वयुक्तेरित्यर्थः । ततश्च न सप्तत्वश्रुतेरधिकबलवत्त्वमित्यर्थः ॥ **अन्यथेति ॥** मासाद्याभिमानिनामेव प्राणाभिमानित्वमित्यभिप्रायाभावे 'द्वादशमासा' इत्यसंगतं स्यादिति भावः । 'येषु चरन्ति प्राणा गुहाशयां निहिताः सप्तसप्ते' ति वाक्यं व्याचष्टे – **गुहाहृदयमिति ॥** गुहाशयामुद्दिश्येति योजनां मनसि कृत्वाऽऽह– **तदर्थमिति ॥** तत्त्वप्रदीपे तु– 'गुहाशयां निहिताः सप्तसप्त' इति गुहाशयायां बुद्धौ, निहिताः सप्तसप्तप्राणाः 'समाने लोपः' इति सूत्रादेकयकारलोपः । तादर्थ्ये सप्तमी । गुहाशयां प्रतिनिहिता इति वेति व्याख्यातम् ॥ **एतच्छुतावेवमिति ॥** बाधकश्रुतेरन्यार्थत्वात् प्राणानां द्वादशत्वे 'द्वादश वा एते प्राणा' इति श्रुतिरप्युदाहर्तव्येत्यर्थः ।

## वाक्यार्थमुक्तावली

प्राणसङ्ख्येति धर्माणां मध्ये उत्पत्तिरूपधर्मस्य प्राथमिकत्वात्प्राणानामुत्पत्तिं विचार्यात्र तत्सङ्ख्या विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **सन्देह इति ॥** अत्र सप्तैव प्राणा इत्येकः पूर्वपक्षस्तदनुसारेणेयं चिन्ता ॥ **किं प्राणास्सप्तोत द्वादशेति ॥** तदर्थं सप्तत्वश्रुतिस्सहस्रशतन्यायेन सावकाशेति विशिष्योक्त्या सप्तैव मारुता बाह्या इत्यभिमानिसङ्ख्यासाम्येन च **निरवकाशेति ।** द्वादशैवेत्यपरः पूर्वपक्षस्तदनुसारेणेयं चिन्ता । किं प्राणा द्वादशोत सप्तेति । तदर्थं द्वादश वा एते प्राणा इति श्रुतिर्द्वादशमासा इत्यादिश्रुतेरेकदैवत्याभिप्रायेण प्रवृत्तेरभिमानिनां द्वादशत्वाभिप्रायेण

(वाक्यार्थमुक्तावली)

प्रवृत्तये न सप्तत्वकथितयुक्तेरत्रापि साम्यान्निरवकाशेत सावकाशेति । सोमस्य ग्रहाः सोमरस-ग्रहणार्थाः पात्रविशेषाः । ज्योतिष्टोमे हि उपांशुमत्पूर्णमैन्द्रवायवयमैत्रावरुणाश्विनाः पञ्च शुक्रामंथिनौ द्वौक्रतुपात्रे अतिग्राह्याः श्रुत इति सोमग्रहा द्वादश । यद्यप्यंशद्वाल्भ्यावपि ग्रहौ स्तस्तथापि तयोरनित्यत्वात्साधनोपस्थापनाद्यभावाच्च नित्यसाधनयुक्तग्रहविवक्षया द्वादशत्वमिति ज्ञातव्यम् । तथा च श्रुतिः । 'अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश' इति । 'सप्तैव' इति स्मृत्युक्तयुक्तिमाह ॥ **किं चेति** ॥ एवं सप्त प्राणा इति श्रुतेर्निरवकाशत्वेन सप्तत्वपूर्वपक्षमभिधाय पूर्वपक्षान्तरमाह– **अथवेति** ॥ **एकदेवत्वाभिप्रायेणेति** ॥ समाख्यादेवताकत्वाभिप्रायेणेत्यर्थः । द्वादशमासादीनामभिमान्यैक्याभिप्रायेणेत्यप्याहुः । एतद्युक्तिसूचनार्थमेव भाष्ये द्वादशमासा इत्युदाहरणम् । अन्यथा द्वादश वा एते प्राणा इत्येवोदाहरिष्यदिति भावः ।

**सप्तत्वे कथितयुक्तेरिति** । प्राणाः सप्तसंख्याकाः सप्तसंख्याकाभिमानिकत्वाद्य-द्यत्सङ्ख्याकाभिमानिकं तत्तत्सङ्ख्याकमिति कथितयुक्तेरित्यर्थः । अन्यथाश्रुतेरिति । युक्तिसाम्येऽपि साध्यव्यभिचारे सयुक्तिकायाः सप्तप्राणा इति श्रुतेरुन्मत्तवाक्यत्वापातादित्यर्थः । न हि व्यभिचारमनालोच्य सयुक्तिका श्रुतिः प्रवर्तत इति भावः ।

यद्वा, द्वादशमासा इति श्रुतेरेकदेवत्वाभिप्रायकत्वाभावे कुंडमजाजिनमिति तदसङ्गतार्थ-प्रतिपादकत्वेनोन्मत्तवाक्यतुल्यत्वापातादित्यर्थः । एवं पूर्वपक्षत्वेन श्रुतिद्वयस्य निरवकाशत्वे प्राप्ते तत्फलं दर्शयति । परस्परविरोध इत्युक्तन्यायमपि विशदयति ॥ **अत एवमपीति** ॥ सूत्रे प्राणा इत्यस्ति । द्वादशेति शेष इत्यभिप्रेत्याह ॥ **द्वादशेति** । गतेरिति ल्यब्लोपनिमित्ता पञ्चमी । गतिः ज्ञानगतिः तत्साधनमिन्द्रियं च तमपेक्ष्य ज्ञानेन्द्रियापेक्षया सप्तसप्तेति श्रुतेरित्यर्थमभिप्रेत्य व्याचष्टे ॥ **श्रोत्रेति** ॥ सप्तसप्तानामिन्द्रियाणां गतेर्ज्ञानस्यार्थे श्रुतौ विशेषितत्वादित्यर्थान्तरमभिप्रेत्य तद्व्यावृत्य-कथनपूर्वं व्याचष्टे ॥ **सप्तानामिति** ॥ गतेर्ज्ञानस्यार्थे सप्तप्राणाः तथा वाक्यशेषे विशेषितत्वादिति सूत्रार्थोक्तौ ज्ञानेन्द्रियापेक्षया सप्तत्वमिति भाष्यं तात्पर्यकथनपरं द्रष्टव्यम् । 'सप्त इमे लोका येषु चरन्ति गुहाशयां निहिताः सप्त सप्त' इति वाक्यं व्याचष्टे ॥ **गुहाहृदयमिति** ॥ गुहाशया-मित्युद्देश्यद्वितीयेति भावेनाह ॥ **तदर्थमिति** ॥ **प्रतिशरीरमिति** ॥ सप्तसप्तेति वीप्सार्थः ॥ **यत्र चरन्तीति** ॥ येषु चरन्ति त इमे लोकाः गोलकाः सप्तेत्यन्वय इति भावः ।

(वाक्यार्थमुक्तावली)

ननु सूत्रे सप्तत्वश्रुतेस्सावकाशत्वमेवोक्तं न तु प्रतिज्ञातद्वादशत्वे प्रमाणमतः कथं द्वादशत्वनिर्णय इत्यतश्चशब्देन तदप्युक्तमित्याशयेन प्रवृत्तं सप्तप्राणास्त्वगतेरित्यादिभाष्यमवतार्य व्याचष्टे ॥ **विशेषणबलेनेत्यादिना** ॥ ननु चशब्देन द्वादश वा एत इति श्रुतेरेव संग्रहौचित्योक्ति स्मृतिसंग्रहेणेत्यत आह ॥ **एतच्छुताविति** ॥ सप्तप्राणा इति श्रुतेरेवमुदाहृतस्मृतिबलेन सावकाशार्थमेवेतरा द्वादश वेति श्रुतिरुदाहर्तुं योग्या न प्रथमत एव विशेषश्रुतिविरोधात्तत्स्मृतिस्तु सप्तत्वश्रुतेः सावकाशत्वं प्रतिपादयन्ती द्वादशत्वमप्यभिधत्त इत्युभयत्र व्यापृतेति सैव चशब्दगृहीतेति भावः ।

## वाक्यार्थविवरणम्

**ग्रहाः** ॥ पात्राणि विशिष्येति शेषः । तथा च द्वादशत्वे विशिष्य सप्तत्वोक्तेरयोगादित्यन्वयः । तत्र हेतुः **कारणविशेषमन्तरेणेति** ॥ **सप्तत्वे कथितेति** ॥ किं चाभिमानिनामित्यनेनेति शेषः ॥ **अत्रापि** ॥ द्वादशत्वपक्षेऽपि ॥ **अन्यथेति** ॥ एकदैवत्याभिप्रायाभावे 'द्वादश मासा द्वादशादित्या द्वादश राशय' इत्यादिकथनस्योन्मत्तप्रलपितत्वापत्तिरिति भावः । सप्त सप्तेति वीप्साभिप्रायः ॥ **प्रतिशरीरमिति** ॥ येष्वित्यस्यार्थो यत्रेति । तथा च 'सप्त प्राणाः प्रभवन्ति । तस्मात् सप्तार्चिषः समिधः सप्त जिह्वाः । 'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयां निहिताः सप्त सप्त' इति श्रुतेरयमर्थः । न केवलं तस्माद्धरेः सप्त प्राणाः सप्तार्चिष इत्यादय एव प्रभवन्ति, किन्नामेन्द्रियाश्रय-भूता गोलका अपीत्युच्यते ॥ **सप्त इमे लोका इति** ॥ **गुहाशयाम्** ॥ गुहाशयायाम् । 'समाने लोपः' इति सूत्रादेकयकारलोपः ॥ **बुद्धौ** ॥ बुद्ध्यर्थम् ये प्रतिशरीरं सप्त सप्त प्राणाः श्रोत्राद्या निहितास्ते सप्त येषु लोकेषु गोलकेषु चरन्ति त इमे लोका गोलका अपि तस्मात्प्रभवन्तीत्यर्थः ॥ **तावन्त एवेति** ॥ सप्तैवेत्यर्थः । न द्वादशेत्येवार्थः ॥ **एतच्छुतौ** ॥ सप्तत्वश्रुतौ सावकाशाया-मित्यनन्तरं तद्विरोधाभावादिति शेषः ॥ **इतरा** ॥ द्वादशत्वश्रुतिः ॥ **एतदिति** ॥ सप्तत्वेत्यर्थः ।

## वाक्यार्थमञ्जरी

**ग्रहाः सोमस्येति** ॥ सोमरसग्रहणार्थाः सूक्ष्मोलूखलाकाराः पात्रविशेषा इत्यर्थः । अध्वरेषु ग्रहांत्सोमस्य मिमते द्वादशेति श्रुतेरिति भावः ॥ **एकदैवत्याभिप्रायेणेति** ॥ समसङ्ख्यादेवता-

(वाक्यार्थमञ्जरी)

कत्वाभि प्रायेणेत्यर्थः । द्वादशमासादीनां द्वादशादित्यादिदेवताकत्वादिति भावः ॥ कथितयुक्ते-रिति ॥ अभिमान्यभिमन्यमानयोः समसङ्ख्याकत्वयुक्तेरिति भावः । अन्यथा एकदैवत्याभिप्रायाभावे ॥ **उन्मत्तेति** ॥ द्वादशेत्यादिना प्राणादिसङ्ख्याकथनस्य वैयर्थ्यादिति भावः । गतेर्ज्ञानस्य जनकाः प्राणाः सप्तैव कुतः विशेषितत्वात् सप्तप्राणा इत्युक्तसप्तप्राणानामुत्तरत्र गुहाशयां निहिताः सप्तसप्तेति ज्ञानकारणत्वविशेषणोपेतत्वकथनादित्यर्थः । येषु चरंति प्राणा गुहाशयामिति वाक्यं व्याचष्टे ॥ **गुहाहृदयमिति** ॥ द्वितीयाविभक्त्यर्थमाह ॥ **तदर्थमिति** ॥ नन्वत्र सूत्रे सप्तप्राणा इति श्रुतेः सावकाशत्वमेवोक्तं न तु द्वादशत्वे किञ्चित्प्रमाणम् अतः कथं द्वादशत्व निर्णय इत्यत आह ॥ **एतच्छ्रुताविति** ॥ सप्तप्राणा इति श्रुतौ स्मृत्युक्तरीत्या सावकाशायां सत्यामितरा द्वादश वा एते प्राणा इति श्रुतिरत्र प्राणानां द्वादशत्वे नोदाहर्तव्येत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ॥ ७ ॥**

**हस्तादीनां कर्मविषयत्वान्न सहपाठः ।**

**'संसारस्थितिहेतुत्वात्स्थितं कर्म विदो विदुः ।**
**तस्माद्गतिहेतुत्वाज्ज्ञानं गतिरिहोच्यत' ॥ इति वायुप्रोक्ते ।**

॥ इति सप्तगत्यधिकरणम् ॥

## तत्त्वप्रदीपिका

**कर्म मानुष्यमिहाभिप्रेतम् । ज्ञानं तत्त्वविषयम् ।**

## तत्त्वप्रकाशिका

**न सप्तप्राणेभ्योऽन्ये प्राणाः सन्ति । तद्भावेऽत्र सहपाठप्रसङ्गात् । अत्र च सहपाठाभावोऽना-दित्वेन वा भवेत् परमात्मनो वा तदकारणत्वेन । तदुभयं चोक्तविरुद्धम् । न च कारणान्तरं पश्यामः । अतः प्राणान्तराणामेभिः परमात्मनः सकाशादुत्पन्नत्वेनोच्यमानैः सहपाठाभावादभाव**

(तत्त्वप्रकाशिका)

**इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ हस्तादय इति ॥ न सहपाठाभावेन प्राणान्तराभावः । अनादित्वाद्यभावेऽपि पाणिपादपायुगुह्यवाचः कर्मार्थानीन्द्रियाणि । अत एतावतैव वैलक्षण्येनासह-पाठोपपत्तेरिति भावः । ननु गतिस्थितशब्दौ कुतो ज्ञानकर्मार्थावित्यत आह ॥ संसारेति ॥ सजातीयत्वेनान्यत्रापिशब्दः प्रपदशब्दवदिति ज्ञातव्यम् । अतः श्रुत्यविरोधेन प्राणानां द्वादशत्व-सिद्धेर्युक्तं श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वमिति सिद्धम् ।**

## गुर्वर्थदीपिका

सजातीयत्वेनान्यत्रापिशब्दः प्रापदशब्दवदित्यत्र 'संसारस्थितिहेतुत्वात्स्थितं कर्म विदो विदुः । तस्मादुद्गतिहेतुत्वाज्ज्ञानं गतिरिहोच्यत' इति स्मृत्या संसारे स्थितिहेतूनां काम्यकर्मणां दुष्कर्मणां च संसारोद्गतिहेतुभूतब्रह्मज्ञानस्य च स्थीयते अस्मात्संसार इति व्युत्पत्त्या उद्गच्छति संसारादनेनेति व्युत्पत्त्या च स्थितगतिशब्दवाच्यत्वलाभेऽपि सूत्रद्वयाभिमतस्य ज्ञानेन्द्रियफलभूतगन्धादिज्ञानस्य कर्मेन्द्रियफलभूतशब्दोच्चारणघटग्रहणादिकर्मणश्च कथं गतिस्थितशब्दवाच्यतेति शङ्कायां 'यथा तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदं तस्मात्प्रपद इत्याचक्षत' इति श्रुतौ पुरुषपदवाच्यचतुर्मुखस्य देहस्य यत्पादाग्रं तद्द्वारा ब्रह्म प्रापद्यत पुरुषपदवाच्य ब्रह्मशरीरान्तः क्रमेण प्राप्तमभूत् । तस्मात्कारणात् 'प्रपदे प्रपदे इत्याचक्षत' इति सर्वपुरुषपादाग्र-स्यापि प्रपदशब्दवाच्यत्वमुच्यते । तत्र ब्रह्मप्राप्तिहेतुत्वरूपस्यार्थस्य चतुर्मुखपादाग्र एव सत्त्वेऽप्य-न्येषां पादाग्रेऽपि केवलं तत्सजातीयत्वेन प्रपदशब्दः प्रयुज्यते । न तु विजातीयानां पशुपादा-ग्राणाम् । 'शफाः खुरा इत्यन्येषाम्' इति श्रुत्यैव कथनात् । एवं ज्ञानत्वेन कर्मत्वेन च सजातीयत्वादन्यत्रापि गन्धादिज्ञाने घटग्रहणादिकर्मणि गतिस्थितिशब्दवाच्यतेत्यर्थः । न चैकस्मिन्जलपूर्णे घटे जलेन पूर्ण इति व्युत्पत्त्या जलपूर्णशब्दवाच्ये सति जलरहितघटान्तरस्यापि घटत्वेन सजातीयत्वाज्जलपूर्णशब्दवाच्यतत्यतिप्रसङ्ग इति वाच्यम् । सत्यनुशासनन्यायोऽयं न तूष्णीमिति परिहारसम्भवादिति गूढाभिसन्धेष्टीकाकारस्याभिमतोऽर्थः । 'पादाग्रं प्रपदं पाद' इति पादाग्रे प्रपदशब्दस्यानुशासनात् । 'गत्यर्था धातवो ज्ञानार्था' इति गतिशब्दस्य ज्ञानमात्रेऽनु-शासनात् । गुरुकुले स्थितिरित्यादौ कर्ममात्रे स्थितिशब्दस्यानुशासनाच्च ।

## भावबोधः

**उक्तविरुद्धमिति ॥** 'तथा प्राणा' इति प्राणानां परमात्मोत्पन्नत्वोक्तेरित्यर्थः । सूत्रे 'स्थित' इति विषयसप्तमीत्यभिप्रेत्य कर्मविषयत्वादित्युक्तं भाष्ये तात्पर्यमाह– **कर्मार्थानीति ॥** कर्मकरणानीत्यर्थः ॥ **एतावतैव वैलक्षण्येनेति ॥** अनेन सङ्ख्याश्रुत्योर्विषयवैलक्षण्यादिति न्यायविवरणमपि व्याख्यातं भवति ।

ननु निवर्तककर्मणः स्थित्यहेतुत्वात् ब्रह्मज्ञानस्य च तस्मादुद्गत्यहेतुत्वात्तयोः कथं स्थिति-शब्दावित्यत आह– **सजातीयत्वेनेति ॥** 'यथा यत्प्रपदाभ्यां प्रापद्य तद्ब्रह्मेदं पुरुषं तस्मात् प्रपदे इत्याचक्षते' इति श्रुत्युक्तस्य प्रपदशब्दनिमित्तस्य चतुर्मुखपादतलोपरिगतत्वेऽपि तज्जातीये पुरुषान्तरसम्बन्धिन्यपि तस्मिन् प्रपदशब्दः । यथोक्तमैतरेयभाष्ये–

> 'तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ।
> चतुर्मुखाकारवतां नृणां पादतलोपरि ॥
> प्रपदाख्या वर्तते' । इति ।

तथेहापि प्रवृत्तिकर्मणः संसारस्थितिहेतुत्वात् ब्रह्मज्ञानस्य तस्मादुद्गतिहेतुत्वात् सजायतीययोः कर्मान्तरज्ञानान्तरयोरपि स्थितिगतिशब्दावित्यर्थः । अत्राद्ये– 'सप्तप्राणा' इति श्रुतेः सावकाशत्व-प्रदर्शनपूर्वकं प्राणानां द्वादशत्वे प्रमाणोक्तिः । द्वितीये– 'सप्त प्राणा' इति श्रुतौ प्राणानाम-सहपाठेनासम्भवशङ्काव्यावृत्त्यर्थं सहापाठे निमित्तोक्तिरिति सूत्रक्रमः ।

## भावदीपः

शङ्कते ॥ **नेति ॥ अत्रेति ॥** 'सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्तहोमाः' । सप्त इमे लोका एषु चरन्ति प्राणा गुहाशयां निहिताः सप्त सप्त' इति श्रुतावित्यर्थः ॥ **उक्तेति ॥** तथा प्राणा इत्यादावीशजातत्वेनोक्तत्वादिति भावः ॥ **न चेति ॥** सहपाठाभावे इत्यनुषङ्गः । पूर्वपक्षं निराह ॥ **सहपाठाभावेनेत्यादि ॥** हस्तादयस्तु स्थित इत्यंशस्यार्थमाह ॥ **अनादित्वा-दीति ॥** सूत्रे स्थित इति तादर्थ्ये सप्तमीति भावेनाह ॥ **कर्मार्थानीति ॥** प्राणा इत्यनुवृत्तिं

(भावदीपः)

मत्त्वोक्तमिन्द्रियाणीति । इदानीं तत्र हेतुत्वेन भाष्यं व्याचष्टे ॥ **अत एतावतेति** ॥ सङ्ख्याश्रुत्यो-र्विषयवैलक्षण्यादिति न्यायविवरणे सहपाठाभावोपपत्त्यर्थं वैलक्षण्यमिति वचनमिति भावेनोक्तम् वैलक्षण्येनेति ॥ एतेन सौत्रस्तुशब्दो वैलक्षण्यार्थ इति दर्शितम् ॥ **गतीति** ॥ सूत्रद्वयस्थाविति योज्यम् । ननु निवृत्तकर्मणः संसारस्थित्यहेतुत्वात् अब्रह्मज्ञानस्य च तस्मादुद्गत्यहेतुत्वात्तयोः कथं स्थितिगतिशब्दावत आह ॥ **सजातीयत्वेनेति** ॥ यथा यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे इति श्रुत्युक्तस्य प्रपदशब्दस्य चतुर्मुखपादतलोपरिभागगतत्वेऽपि तज्जातीये पुरुषान्तर-सम्बन्धिन्यपि तस्मिन्प्रपदशब्दस्तथेह प्रवृत्तकर्मणः संसारस्थितिहेतुत्वाद् ब्रह्मज्ञानस्य च तस्मा-दुद्गतिहेतुत्वात्सजातीययोः कर्मज्ञानान्तरयोरपि स्थितिगतिशब्दावित्यर्थः ॥ **अत इति** ॥ ज्ञानार्थत्वेन सप्तत्वोक्तेः कर्मार्थत्ववैलक्षण्येनासहपाठस्य चोपपन्नत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**तदुभयं चोक्तविरुद्धमिति** ॥ 'तथा प्राणा' इति सूत्रे सर्वप्राणानां परमात्मजन्यत्वोक्तेः तद्विरोध इत्यर्थः ।

ननु तथात्वे बाधकज्ञानस्य गतिशब्दवाच्यत्वं न स्यात्, निवृत्तकर्मणश्च स्थितशब्दवाच्यत्वं न स्यादित्यत आह– **अन्यत्रापीति** ॥ यथा चतुर्मुखपादतलोर्ध्वभागस्य भगवतः प्रपतनान्निमित्तात्प्रपदनशब्दवाच्यत्वं, तत्सादृश्यात्तु मनुष्याणां पादतलोर्ध्वभागस्य प्रपदशब्दाभि-धेयत्वम् । तथा ब्रह्मज्ञानस्य उद्गतिसाधनब्रह्मज्ञानसादृश्यात् गतिशब्दवाच्यत्वम् । तथा निवृत्त-कर्मणोऽपि प्रवृत्तकर्मसादृश्यात् स्थितशब्दवाच्यत्वमित्यर्थः । तदुक्तम् – 'तस्मात्प्रपतनादेव, प्रपदं नाम कीर्तितम् । चतुर्मुखाकारवतां नृणां पादतलोपरि । प्रपदाख्या वर्ततेऽत इति' इति । अनेन मूले संसारस्थितिहेतुत्वात्' इत्यतः परम् 'तत्सदृशत्वाद्वा' इति शेषः । उद्गतिहेतुत्वात्' इत्यतःपरमपि 'तत्सदृशत्वात्' इति शेषः सूचितः ।

पूर्वपक्षस्तु – 'सप्तप्राणाः प्रभवन्ति तस्मात्, द्वादश वा एते प्राणा' इति श्रुती परस्पर-विरुद्धत्वादनिर्णायिके । न च अन्यतदश्रुत्याऽन्यतरबाधो युक्तः समबलत्वात् । न च अभिमानिनां सप्तत्वात्प्राणानामपि सप्तत्वमेव अभिमान्यभिमन्यमानयोः समसंख्याकत्वनियमात् । ततश्च सप्तत्वश्रुतिः सयुक्तिकत्वेन प्रबलेति वाच्यम् । 'द्वादश वा एते प्राणा' इति श्रुतौ प्राणमासादीनामेकदेवत्याऽभिप्रायेण 'द्वादशमासा' इत्यभिहितत्वेन प्राणाभिमानिनां द्वादशत्वेन

(अभिनवचन्द्रिका)

प्राणानामपि द्वादशत्वं वाच्यम् । अभिमान्यभिमन्यमानयोः समसंख्याकत्वस्य वक्तव्यत्वादिति युक्तेरत्रापि साम्यात् । न च द्वादशप्राणेषु सप्तापि सम्भवन्तीति न श्रुत्योर्विरोध इति वाच्यम् । द्वादशत्वे कारणविशेषाभावे सप्तत्वोक्तेरयोगात् । ततश्च श्रुत्योरप्रामाण्यात् न श्रुतिसमन्वयेन ईश्वरस्य जगत्कारणत्वं युक्तमिति ।

सिद्धान्तस्तु – द्वादशैव प्राणाः, 'द्वादश वा एते प्राणा' इति श्रुतेः । न च सप्तत्वश्रुति-विरोधः । द्वादशप्राणेषु सप्तत्वस्यापि सम्भवात् । न च प्राणानां द्वादशत्वे कारणाभावेन सप्तत्वोक्तेरयोगः । श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वेन तद्विवक्षया सप्तत्वोक्तिसंभवात् । न च तेषां ज्ञानार्थत्वमसिद्धम् । 'गुहाशयां निहिताः सप्तसप्त' इति वाक्यशेषसिद्धत्वात् । ननु न सप्तप्राणेभ्योऽन्ये प्राणाः सन्ति तद्भावेऽत्र सहपाठप्रसंगादिति चेत्, न हस्तादीनां पञ्चानां स्थितिहेतुत्वलक्षणवैलक्षण्यमाश्रित्याऽसहपाठोपपत्तेः । ततश्च श्रुत्योर्विरोधाभावेन प्रामाण्यात् श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वनिश्चयो युक्त इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सहपाठप्रसङ्गादिति** ॥ न च सहपाठोऽस्त्यतस्तदन्यथानुपपत्या न सप्तेभ्योऽन्ये प्राणा इति भावः । अर्थापत्तेर्द्वेधान्यथोपपत्तिमाशङ्क्य निषेधति **सहपाठाभाव इति** ॥ **परमात्मन** इति ॥ सादित्वेऽपीति ग्राह्यम् ॥ **उक्तविरुद्धमिति** ॥ तथा प्राणा इति प्रतिज्ञाहानिख्यतिरेकादिति च सर्वेषां परमात्मनोत्पत्तेरुक्तत्वादिति । सादित्वमङ्गीकृत्य परमात्माजातत्वे दूषणान्तरमाह ॥ **न चेति** ॥ सूत्रे तुशब्दो वैलक्षण्येऽवधारणे च । अतःशब्दो हेत्वर्थे । वैलक्षण्यप्रकारपरामर्शकश्च । ततश्च हस्तादयः स्थिते कर्मविषयकर्मार्थानीन्द्रियाणीति यावत् । अतः कारणात् अत एव तावत्तेव तु वैलक्षण्येन एवं न पद्यन्ते तौ सह न पद्यन्त इति सूत्रार्थमाह ॥ **अनादित्वाद्यभावेऽपीत्यादिना** ॥ अनेन वैलक्षण्यमित्युक्तन्यायोऽपि सूत्रारूढतया दर्शितो भवति ।

ननु निवृत्तकर्मणः संसृतिहेतुत्वाभावाद्ब्रह्मस्वरूपभूतज्ञानस्य तस्मादुद्गतिहेतुत्वाभावा-न्नित्य-संसारिज्ञानस्य च तदभावाच्च कथं तत्र तच्छब्दप्रयोग इत्यत आह ॥ **सजातीयत्वेनेति** ॥ 'यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदेत्याचक्षत' इत्युक्तप्रवृत्तिनिमित्तस्य चतुर्मुखपाद-तत्वोपरि विद्यमानत्वेन तस्यैव प्रपदशब्दवाच्यत्वेऽपि चतुर्मुखप्रपदसादृश्यादन्येषामपि पादोपरि-

(वाक्यार्थमुक्तावली)
भागानां प्रपदशब्दप्रतिपाद्यत्ववदीश्वरज्ञानादावपि गतिशब्दः निवृत्तकर्मणि स्थितश्च प्रयुज्यत इत्यर्थः। तदुक्तम् । 'तस्मात्प्रपदनादेव प्रपदं नाम कीर्तितम् । चतुर्मुखाकारवतां नृणां पादतलोपरि। प्रपदावर्तत इत्यैतरेयभाष्ये। ननु पूर्वसूत्रे चशब्दोपात्तस्मृत्यैव विषयवैलक्षण्यस्योक्तत्वाद्व्यर्थमिदं' सूत्रमिति चेन्न। पूर्वं चशब्दस्य सप्तत्वश्रुतेः सावकाशत्वे प्राणानां द्वादशत्वे च स्मृतिसूचने तात्पर्यमत्र तु सहपाठाभावे वैलक्षण्ये तात्पर्यमिति भेदादवैय्यर्थापत्तेः । आद्ये साधकोक्तिर्द्वितीये बाधकोद्धार इति सूत्रक्रमः।

## वाक्यार्थविवरणम्

तावन्त एव किं न स्युरिति शङ्कोत्तरत्वेन ॥ **अन्ये** ॥ पश्च ॥ **अत्र सहपाठेति** ॥ 'सप्त प्राणाः प्रभवन्ति' इति श्रुतौ श्रोत्रादिभिः सहपाठप्रसङ्गादित्यर्थः ॥ **उक्तविरुद्धमिति** ॥ तथा प्राणा इति सर्वप्राणानां परमात्मोत्पन्नत्वस्य निर्णीतत्वादित्यर्थः ॥ **एभिः** ॥ श्रोत्रादिभिः । उच्यमानैरित्यनन्तरमेभिरिति योज्यम् । प्राणान्तराणामभाव इत्यन्वयः ॥ **अनादित्वादिति** ॥ आदिपदेन परमात्मनस्तदकारणत्वपरिग्रहः ।

## वाक्यार्थमञ्जरी

असहपाठे निमित्तमाशङ्क्य दूषयति ॥ **अत्रेति** ॥ **उक्तविरुद्धमिति** ॥ तथा प्राणा इति प्राणानां परमात्मजन्यत्वोक्तिविरुद्धेत्यर्थः। कारणान्तरं असहपाठे **एभिः** श्रोत्रादिभिः। हस्तादयस्तु प्राणाः स्थिते कर्मविषये अतः कर्मकारणत्वेन वैलक्षण्यात् एवं श्रोत्रादिभिः सहपाठो नेत्यर्थः । गतिस्थितिशब्दौ सूत्रद्वयस्थौ । ननु काम्यकर्मणः संसारहेतुत्वेऽपि निष्काम्यस्य तदभावात् तथा ब्रह्मज्ञानस्य संसारादुद्गतिहेतुत्वेऽपि इतरज्ञानस्य तदभावात्कथं तयोः स्थितिगतिप्रवृत्तिरित्यत आह ॥ **सजातीयत्वेनेति** ॥ यथा 'यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपद इत्याचक्षत' इति श्रुत्युक्तप्रपदशब्दप्रवृत्तिनिमित्तस्य चतुर्मुखपादतलोपरिभागगतत्वेपि तज्जातीये पुरुषान्तरसम्बन्धिन्यऽपि पादतलोपरिभागे प्रपदशब्दप्रयोगः तथेहापि काम्यकर्मब्रह्मज्ञानसजातीययोर्निष्कामकर्मान्यज्ञानयोरपि स्थितिगतिशब्दप्रयोग इत्यर्थः। 'तस्मात्प्रपदनादेव प्रपदं नामकीर्तितं चतुर्मुखाकारवतां नृणां पादतलोपरि प्रपदाख्यावर्तत' इत्यैतरेयभाष्योक्तिरिति भावः ।

॥ इति सप्तगत्यधिकरणम् ॥

## ५. अथ अण्वधिकरणम्

### सूत्रभाष्यम्

'दिवीव चक्षुराततम्' (ऋ.सं.१-२२-२०) इति व्याप्तिः प्रतीयते। दूरश्रवणदर्शनादियुक्तिश्च। अणुभिः पश्यत्यणुभिः कृणोति प्राणा वा अणवः प्राणैर्ह्येतद्भवति' इति च कौण्डिन्यश्रुतिः। अतो वक्ति–

**॥ ॐ अणवश्च ॐ ॥ ८ ॥**

'तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येष पुरुषो भवति'ति शाण्डिल्यश्रुतिः।

### तत्त्वप्रदीपिका

अणवश्च। अणवश्च विततश्च प्राणाः। अणुत्वश्रुतेः स्वरूपतोऽणवः, विततत्वश्रुतेः प्रकाशतो विततः। तदिदमाह तद्यथेत्यादिकामुभयश्रुत्योरविरोधप्रकाशिकां श्रुतिमुदाहरन्नभीष्टदृष्टान्तावष्टम्भाम्।

### तत्त्वप्रकाशिका

अत्र पुरुषोत्तमे जगज्जन्मादिकारणे श्रुतिसमन्वयसिद्ध्यर्थं प्राणपरिमाणविषय श्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः। जगत्कारणे ब्रह्मण्युक्तः श्रुतिसमन्वयः प्राणपरिमाणविषय श्रुतीनां विरोधेऽनुपपन्नः प्रसज्यतेऽतोऽसौ निराकर्तव्यः। प्रकृतप्राणा एवात्र विषयः। किं व्याप्ता उताणव इति सन्देहः। सन्देहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति ॥ **दिवीति** ॥ व्याप्तिः प्राणानामिति शेषः। श्रुतिः प्राणानामणुत्वं वक्तीति शेषः। पश्यति जानाति। कुतोऽत्रोक्ता अणवः प्राणाः। ज्ञानकर्मकरणत्वलिङ्गादित्यर्थः। व्याप्ताः प्राणाः। तथा श्रुतेः। न चाणुत्वश्रुतिविरोधः। विष्णोर्व्याप्तत्वे दृष्टान्तत्वेन चक्षुर्व्याप्तेरुक्तत्वादेतच्छ्रुतेः प्राबल्यात्। अतिसुदृढं हि दृष्टान्तत्वेनोपादीयते। किं चास्ति तावद्दूरस्थवस्तुदर्शनश्रवणस्मरणादि तेन पश्यामोऽस्ति प्राणानां व्याप्तिरिति। इन्द्रियाणां प्राप्यकारित्वात्। अन्यथा करणत्वविरोधात्। न च स्वस्थानं विहाय विषयेणेन्द्रियं सन्निकृष्यत इति विशेषप्रमाणमस्ति। अतः प्रबलश्रुतिविरोधादणुत्वश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति भावः। सिद्धान्तयत्सूत्रमवतारयति ॥ **अत इति** ॥ अणव एव

(तत्त्वप्रकाशिका)

प्राणाः। न चैतावता श्रुतियुक्तिविरोधः। यावता तेजसा व्याप्ताश्चेति। सूत्रार्थः स्फुटतया नोक्तः। अतिसुदृढार्थश्रुतिसिद्धे व्याप्तत्वे कुतोऽणुत्वं प्राणानां तेजसा व्याप्तिश्चेत्यत आह ॥ **तद्यथेति ॥** चक्षसः चक्षुपः। न च व्याप्तिश्रुतेः सुदृढार्थतया बलवत्त्वम्। अत्राप्यात्मनोऽणुत्वादौ चक्षुषो दृष्टान्ततयोक्तत्वाद्विशेषश्रुतित्वाच्च बलवत्त्वमिति। यदीन्द्रियाणि स्वरूपतो वितत्यावस्थितानि तदा सर्वग्रहणं च प्रसज्येत सुप्त्याद्यभावश्च। स्यादेतत्। शब्दो हि वक्तृवक्त्रादुत्पन्नः शब्दान्तरमुत्पादयति सोऽप्येवम्। यत्र तु प्रतिघातकारणेन द्रव्येण हन्यते न तत्रोत्पादयति। तत्र यः कर्णशष्कुल्यवच्छिन्ने वियत्युत्पद्यते स श्रूयते इति कथं दूरस्थश्रवणमनुज्ञायत इति। मैवम्। श्रोत्रोत्पन्नशब्दग्रहणे मानाभावात्। अन्यथाऽप्राप्यग्रहणप्रसङ्ग इति चेन्न। चक्षुर्वच्छ्रोत्रस्यैव गमनोपपत्तेः। श्रोत्रस्याकाशतयाऽमूर्तत्वान्नेति चेन्न। किमाकाशपदेनोच्यते। अवकाश इति चेत्तत्कुतोऽवकाशत्वं श्रोत्रस्य। परिशेषादिति चेन्न। भूताकाशस्य द्रव्यान्तरस्य विद्यमानत्वेन परिशेषानुपपत्तेः। तदनभ्युपगमे श्रुत्यादिविरोधः। पृथिव्यादीनामप्युपपद्यते श्रोत्रत्वम्। अन्यत्रोपक्षीणानि तानीति चेत्। तच्छरीरानारम्भकत्वप्रसङ्गः। बधिराभावप्रसङ्ग इति चेत्सममवकाशेऽपि। अदृष्टकारणत्वं च समानम्। उपहतिश्च पृथिव्यादीनामेव सम्भवति नावकाशमात्रस्येति युक्त एवाभ्युपगमः। यद्वा चक्षुर्विषय एव तदभ्युपगमः। अत एव पूर्वोत्तरपक्षयोस्तद्विषयश्रुत्युदाहरणम्। अतः श्रुत्यविरोधेन प्राणानामणुत्वसिद्धेर्युक्तो जगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम्।

## गुर्वर्थदीपिका

विशेषश्रुतित्वाच्चेत्यत्र 'दिवीव चक्षुराततम्' इति श्रुतिश्चक्षुषो व्याप्तिमात्रमाह। तच्च स्वरूप-व्याप्त्याऽपि घटते प्रकाशव्याप्त्या वा। अतः सा सामान्यश्रुतिः। 'अणुनश्चक्षुष' इति श्रुतिस्तु चक्षुषः अणुत्वं स्पष्टमुक्त्वा तत्प्रकाशस्य विशिष्य व्याप्ततामाह। एवं च विशेषश्रुतित्वेन प्रबलत्वादेतदनुसारेण सैव श्रुतिर्योजनीयेति भावः। सुप्तौ हि सर्वेन्द्रियोपरमः सकलविषयेभ्य इन्द्रियाणां व्यावृत्तिरूपो वाच्यः। न च ज्ञानाख्यकार्याभाव एवोपरम इति वाच्यम्। सत्यर्थ-सन्निकर्षे कार्योपरमस्यैवासम्भवाद्व्यावृत्तिरेवोपरमः। एवं चेन्द्रियाणां व्याप्तत्वे उपरमस्यैवा-भावात्सुप्तिश्च न स्यादित्याह **सुप्त्यादीति ॥** 'अप्रतिषिद्धमनुमतं भवति''ति वचनादप्रतिषेधेऽनुमतिः स्यादिति भावेनोक्तं **अनुज्ञायत इति**। अन्यत्रोपक्षीणानि तानीत्यत्र तानि पृथिव्यप्तेजो-

(गुर्वर्थदीपिका)

वाय्वाकाशाख्यभूतानि अन्यत्र घ्राणारम्भणे रसनारम्भणे चक्षुरारम्भणे चोपक्षीणत्वान्न श्रोत्रा-रम्भकता चेत्तर्हि शरीरारम्भकताऽपि तेषां न स्यादित्यर्थः ।

## भावबोधः

**प्राणपरिमाणविषयेति** ॥ पूर्वत्र सर्वप्राणविषयकपूर्वपक्षसिद्धान्तविशेषश्रुतिविषयसङ्ख्या विचार्यात्र विशिष्य चक्षुरिन्द्रियविषयकपूर्वपक्षसिद्धान्तविशेषश्रुतिविषयपरिमाणं विचार्यत इत्यनन्तर-सङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र प्राणाः किं व्याप्ता उताणव इति चिन्ता । तदर्थं प्राणाणुत्वं तद्व्याप्तिविरुद्धं न वेति । तदर्थं व्याप्तिश्रुतिः युक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं प्राणानां व्याप्तिः किं स्वरूपेणोत प्रकाशगुणेनेति । तदर्थं प्राणानां स्वरूपाणुत्वे प्रकाशगुणेन व्याप्तत्वे विशेषप्रमाणं नास्त्युतास्तीति । कुतोऽत्रोक्ताणवः प्राणा इति । श्रुतौ अणव इत्यनूद्य तेषां प्राणत्वं विधीयत इत्युक्तं भवति । 'प्राणैर्ह्येतद्भवति' इति वाक्ये 'हि' शब्दो हेत्वर्थक इति एतच्छब्देन पश्यतीत्याद्युक्तधात्वर्थपरामर्श इत्यभिप्रेत्य तद्वाक्यं व्याचष्टे– **ज्ञानकर्मकरणत्व-लिङ्गादिति** ॥ ज्ञानकर्मकरणत्वस्य प्राणासाधारणधर्मत्वादिति भावः । अनेनाणुभिः पश्यत्यणुभिः शृणोतीत्येतत्सर्वेन्द्रियोपलक्षकमित्युक्तं भवति । तथा श्रुतेरिति भाष्यन्यायविवरणोदाहृताया 'दिवीव चक्षुः'श्रुतेरित्यर्थः । व्याप्त्याख्यविशेषवाचकश्रुतिविरोध इति न्यायविवरणं मनसि निधायाह– **विष्णोर्व्याप्तत्व इत्यादि** ॥ एतदृगर्थस्तु चक्षुर्दिवीव व्याप्तं यददृश्यं फलदर्शितमिति ऋग्भाष्यटीकायां यथा हि चक्षुराकाशे व्याप्तमपि न दृश्यते । केवलं विषयोपलब्धिलक्षणेन फलेन अनुमीयते । तथा परमेश्वरस्वरूपं सर्वगतमपि न दृश्यम्; किं त्वस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायत इत्युक्तम् । दूरश्रवणादिदर्शनादियुक्तिश्चेति भाष्योक्तयुक्तिमाह किं चास्तीत्यादिना । अन्यथा करणत्वविरोधादिति । व्यापारवत एव करणत्वाद्विषयप्राप्ति-रूपसन्निकर्षस्यैव व्यापारत्वात् । तदभावे करणत्वविरोधादित्यर्थः । हेतोरन्यथासिद्धिं निवारयति– **न च स्थानमिति** ॥ **तेजसा व्याप्तेति** ॥ अनेन पूर्वपक्षश्रुतियुक्त्योः सावकाशत्वप्रदर्शनार्थः सौत्र'श्च'शब्द इत्युक्तं भवति । एवं तर्हि साम्येनानिर्णयः स्यादित्यतः 'अणूनि ह वा इन्द्रियाणि तेषां प्रकाशो व्याततं' इति ततोऽप्यणुत्ववाचकविशेषश्रुतिविरोधादिति न्यायविवरणं मनसि निधायाह– **विशेषश्रुतित्वाचेति** ॥ चक्षुःप्रकाशो व्याततः तेषां प्रकाशो व्यातत इत्यनेन 'दिवीव

(भाववोधः)

चक्षुराततम्' इति व्याप्तिश्रुतेः सावकाशत्वप्रदर्शनात्ततोऽपि व्याप्तिवाचक श्रुतेरप्यणुत्ववाचकश्रुतेर्विशेषश्रुतित्वाच्चेत्यर्थः । पूर्वपक्षयुक्तेः प्रतिकूलतर्कपराहतिमाह– **यदीन्द्रियाणीत्यादिना** । न केवलं सर्वविषयैः सह समनस्केन्द्रियसन्निकर्षस्य सत्त्वात् सर्वग्रहणप्रसङ्गः । किं तु तादृशसन्निकर्षस्य सदा सत्त्वप्राप्त्या सर्वदा च ग्रहणं स्यादित्याह– **सुप्त्याद्यभाव इति** ॥ आदिपदेन मरणमूर्छादिग्रहणम् । शब्दो हीत्यादावत्र शब्दपदेन वर्णात्मकशब्द उच्यत इति ज्ञेयम् ॥ **मानाभावादिति** ॥ स एवायं गकार इति प्रत्यक्ष 'यावत् ब्रह्मविष्ठितं तावती वाक्' इति श्रुतिरूपप्रमाणबाधाच्चेत्यपि ग्राह्यम् ॥ **श्रोत्रस्यैव गमनोपपत्तेरिति** ॥

ननु श्रोत्रस्य चक्षुष इव गत्वाग्राहित्वे दिगादिशब्दे दिक्संशयो न स्यादिति चेत्; न । अगत्वाग्राहित्वे दिङ्निश्चयाभावप्रसङ्गात् । संशयादपि निश्चयो महीयान् । क्वचिच्छब्दे दिक्संशयस्तु रूपादाविव दोषबलाद्युक्तः । न च श्रोत्रस्य गत्वाग्राहित्वे सङ्कोचे कारणाभावेन देवादिभाषितमपि गृह्णीयादिति वाच्यम्; चक्षुषोऽपि देवादिग्रहणप्रसङ्गात् । कार्यबलात् सङ्कोचस्योभयत्रापि तुल्यत्वादिति भावः । अन्यत्रापीति, प्राणाद्यारम्भ इत्यर्थः ॥ **अनभ्युपगम इति** ॥ दूरस्थश्रवणानभ्युपगम इत्यर्थः । दूरश्रवणादीत्युक्तयुक्तेरणूनि वा इन्द्रियाणि तेषां प्रकाशो व्यातत इति सावकाशत्वोक्त्यनुरोधेनायमभ्युपगमो ज्ञातव्यः ।

## भावदीपः

**प्राणानामिति शेष इति** ॥ श्रुतौ चक्षुःपदे उपलक्षणमिति वा चक्षुष इवान्यस्यापि व्याप्तिश्रुतिरूह्येति वाऽभिप्रायः । चक्षुर्मात्रव्याप्तत्वाभिप्राये तु श्रुत्यनुग्राहकदूर श्रवणादियुक्तिरयुक्ता । तथा प्राणा वा अणव इति सामान्यश्रुतेरचक्षुःपरत्वसम्भवेन श्रुत्योर्विरोधोक्तिश्चायुक्तेति भावः ॥ **जानातीति** ॥ पश्यार्थैश्चानालोचन इति पाणिनीयस्मृतौ ज्ञानमात्रेऽपि पश्यतिशब्दप्रयोगात् । अत एव चापरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेदिति ब्रह्माण्डस्मृतावपरोक्षविशेषणं चेति भावः । अन्यथा अणुभिरिति बहुवचनास्वारस्यामिति ध्येयम् । प्राणा अणव इत्येवपूर्तौ श्रुतिशेषोक्तेः फलमाह ॥ **कृतोऽत्रेति** ॥ अणुत्वश्रुतावित्यर्थः ॥ **तथा श्रुतेरिति** ॥ यद्यपि दिवीवेति श्रुतौ चक्षुष एव व्याप्तत्वं न सर्वप्राणानाम् । तथापि तुल्यन्यायतया प्रमाणमात्रेऽपि तदभिमतमिति

(भावदीपः)

भावेन वा चक्षुष एव व्याप्तत्वं न सर्वप्राणानां तथापि तुल्यन्यायतया प्रमाणमात्रेऽपि तदभिमतमिति भावेन वा चक्षुष इव प्राणान्तरेष्वपि व्याप्तत्वे श्रुतिरनुमेयेति भावेन वा तथा श्रुतेरित्युक्तम् । व्याप्त्याख्यविशेषवाचकश्रुतिविरोध इत्यन्यत्रोक्त्यनुरोधेनाह ॥ **व्याप्तत्व इति** ॥ चक्षुर्दिवीवव्याप्तं यदृदृश्यं फलदर्शितमिति ऋग्भाष्ये तट्टीकायां च यथा चक्षुराकाशे व्याप्तमपि न दृश्यते केवलं विषयोपलब्धिलक्षणेन फलेनानुमीयते तथा परमेश्वरस्वरूपं सर्वगमपि न दृश्यं किं तु अस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायत इत्युपमानधर्माध्याहारेणार्थान्तरमुक्तम् । दूरश्रवणेत्यादिभाष्यं व्यनक्ति ॥ **किं चेति** ॥ **करणत्वेति** ॥ व्यापारवतः करणत्वात्सन्निकर्षरूपव्यापारवत्त्वेनैवेह करणत्वनिर्वाहादिति भावः । अणुत्वेऽपि शरवद्विषयसम्बन्धोऽस्त्वित्याशङ्क्य निराह ॥ **न चेति** ॥ **अत इति** ॥ सयुक्तिकत्वात्प्रबलेत्यर्थः । भाष्योक्तश्रुत्यनुरोधात्सूत्रार्थं प्राणपदमनुवर्त्याह ॥ **अणव एव प्राणा इति** ॥ स्वरूपेणेति भावः । अनेन चोऽवधारण इति समुच्चयार्थं च मत्वाह ॥ **तेजसा व्याप्ताश्चेति** ॥ भाष्योक्तश्रुतौ चक्षुःपदमणूनि वा इन्द्रियाणि तेषां प्रकाशो व्यातत इत्यन्यत्रोक्तश्रुत्यनुरोधात्प्राणान्तरोपलक्षणं मत्त्वाऽवतारयति । कुतोऽणुत्वं **प्राणानामिति** ॥ दृष्टान्तत्वोक्तेरुपयोगमाह ॥ **न चेत्यादिना** ॥ विशेषश्रुतिविरोधादित्यन्यत्रोक्त्यनुरोधेन प्रकाशो व्यातत इति विशिष्योक्तेरुपयोगमाह ॥ **विशेषश्रुतित्वाच्चेति** ॥ इतिशब्दः सूत्रभाष्यव्याख्या-समाप्तौ । स्वरूपव्याप्त्यैवोक्तदूरश्रवणाद्युपेयताम् । किं च प्राणानां कदम्बमुकुलन्यायादिना स्वदेश-मागतशब्दादिविषयग्रहणोपपत्तौ तेजसा व्याप्त्युपगमो निर्बीज इति हैतुक मन्यस्योक्तवचनमकिञ्चि-त्करमित्यतो युक्त्याऽप्युक्तमर्थं साधयितुमाह ॥ **यदीत्यादिना** ॥ युक्त एवाभ्युपगम इत्यन्तेन ॥ **सर्वग्रहणं चेति** ॥ न केवलम् उक्तश्रुतिविरोध इति चार्थः ॥ **सुप्तीति** ॥ समनस्केन्द्रियसन्निकर्षस्य विषयाणां सार्वकालिकत्वेन ज्ञानोपरमानवसरात् । सुषुप्तिमरणमूर्छा न स्युरित्यर्थः । अतिप्रसङ्गं निराह ॥ **यत्र त्विति** ॥ अनुज्ञायते अङ्गीक्रियते इत्यर्थः ॥ **श्रोत्रेति** ॥ श्रोत्रदेशे परम्परया कदम्बमुकुलन्यायेनोत्पन्नशब्दग्रहणे इत्यर्थः ॥ **मानाभावादिति** ॥ शङ्खभेर्यादिशब्द एव मया श्रुत इति प्रत्यभिज्ञाविरोधाच्चेत्युपलक्ष्यते । अन्यथा शङ्खादिशब्दजातीय एव श्रुत इति धीः स्यादिति भावः । प्रागुक्तदिशेन्द्रियाणां तैजसत्वमपि मत्वाऽऽह ॥ **चक्षुर्वच्छ्रोत्रस्यैवेति** ॥ कचिच्छब्दे सन्देहस्तु रूपादाविव दोषवशाद्युक्तः ब्रह्मभाषितादीनामग्रहणं ब्रह्मरूपादेरिव युक्तमिति भावः । अवकाशोऽव्याकृताकाश इत्यर्थः ॥ **परिशेषादिति** ॥ पृथिव्यादिभूतपञ्चकमध्ये पृथिव्यप्तेजोवायूनां

(भावदीपः)

घ्राणरसनचक्षुःस्पर्शनेषूपक्षीणत्वेन श्रोत्रस्यावकाशात्मकत्वमेव परिशिष्यत इति परिशेषप्रमाणात्सिद्धमित्यर्थः ॥ **श्रुत्यादीति** ॥ आकाशः सम्भूतः आकाशो नीलिमोदेति शब्दमात्रमभून्नभ इत्यादिविरोध इत्यर्थः । तेषां भूतैरुपचय इत्युक्तमनुरुध्याह ॥ **पृथिव्यादीनामिति** ॥ अन्यत्र घ्राणादौ ॥ **बधिरेति** ॥ पृथिव्यादीनामेव श्रोत्रत्व इत्यनुषङ्गः ॥ **अभ्युपगम इति** ॥ स्वरूपतो अणवः अतस्तेजसा व्याप्ता इत्यभ्युपगम इत्यर्थः ॥ **यद्वेति** ॥ अस्मिन्पक्षे सूत्रे बहुवचनं प्रतिशरीरापेक्षया तदभावो नाडीष्वित्यत्रेवेति भावः ॥ **अत इति** ॥ प्राणानां स्वकार्यबलेन स्वरूपाणुत्वप्रकाशव्याप्तत्वोपगमाद्विशेषवचनाभावाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**प्राणानामिति शेष इति** ॥ यद्यपि श्रुतौ 'दिवीवचक्षुः' इति श्रवणात् चक्षुष इति वक्तव्यम् । तथापि श्रुतिबलाच्चक्षुषो व्याप्तत्वे सिद्धे श्रोत्रादीनामपि दूरस्थार्थग्रहणसंभवात् चक्षुर्वदेव व्याप्तत्वं सिद्ध्यतीत्यभिप्रेत्य **'प्राणानाम्'** इति शेष इत्युक्तम् । 'प्राणैर्ह्येतद्भवति' इति श्रुत्यंशमवतारयति **कुतोऽत्रोक्ता इति** ॥ 'प्राणाः' इत्यतः परम् 'इत्यत आह, प्राणैर्ह्येतद्भवतीति ग्राह्यम् । ततश्चाऽयं श्रुत्यर्थः अणुभिः पश्यति जानाति, अणुभिः कृणोति करोति । के तेऽणव इत्यत उक्तं – **प्राणा वा अणव इति** ॥ कुत एतेऽणव इति प्राणाः प्रतिपत्तव्या इत्यत उक्तं **प्राणैर्ह्येतद्भवतीति** ॥ हि यस्मात्, **एतत्** ज्ञानादिकार्यं, प्राणैर्भवति प्राणकार्यमिति यावत् । ततश्च प्राणकार्यकारित्वात् अणूनां प्राणत्वमिति गम्यत इति । पक्षैकदेशे साध्यसिद्धये हेतुमाह– **तथा श्रुतेरिति** ॥ पक्षमात्रे साध्यसिद्धये हेतुमाह– **किं चेति** ॥ चक्षुर्विषये प्रमाणान्तरत्वात् समुच्चायकश्चशब्दः प्रयुक्तः ॥ **स्मरणादिति** ॥ अत्र स्मरणशब्देनाऽनुसन्धानमुच्यते । आदिशब्देन घ्राणम् । एतेन अतीतपदार्थस्य संस्कारप्रत्यासत्त्या स्मरणवत् दूरस्थस्यापि स्मरणसंभवात् न तेन मनसो व्याप्तत्वसिद्धिरिति परास्तम् । हस्तपादादिप्रान्तभागावस्थितयुगपत्सुखदुःखानुसंधानेन मध्यमपरिमाणानाश्रयतया उभयवादिसंमतस्य मनसोऽणुत्वाभावसाधनस्य इहाभिमतत्वात् ॥ **प्राप्यकारित्वादिति** ॥

ननु – इन्द्रियाणां प्राप्यकारित्वात् व्याप्तत्वसाधनमयुक्तम् । प्राप्यकारित्वस्याऽव्याप्तिकारित्वात् । प्राप्येतिल्यपा 'स्नात्वा भुङ्क्ते' इत्युक्तेः स्नानस्य भोजनपूर्वकालिकोत्पत्तिप्रतीतिवत्

(अभिनवचन्द्रिका)

प्राप्तेर्ज्ञानोत्पत्तिपूर्वकालिकोत्पत्तिप्रतीतेरिति चेत्, न इन्द्रियाणां व्याप्तत्वेऽपि विषयजन्यकादाचित्क-प्राप्तेरङ्गीकारात् ॥ **अन्यथेति** ॥ प्राप्त्यनङ्गीकारे सन्निकर्षरूपव्यापारशून्यत्वात् ज्ञानकरणत्वं न स्यादित्यर्थः । सूत्रार्थं वदन् भाष्ये तदनुक्तौ कारणमाह– **अणव एवेत्यादिना** ॥ 'सर्वं वाक्यं सावधारण'मिति न्यायमनुसृत्य एवेत्युक्तम् । चशब्दसमुच्चेयं वक्तुमाह– **नैतावतेति** ॥ **यावता तेजसा व्याप्ताश्चेति** ॥ यावतेति विभक्तिप्रतिरूपकमव्ययं यस्मादित्यर्थे । यस्मात् प्राणा अणवोऽपि तेजसा व्याप्ताः, अतो न व्याप्त्यभिधायकबलवच्छ्रुतियुक्तिविरोध इति सूत्रार्थः स्पष्टत्वात् भाष्यकृता नोक्त इत्यर्थः ॥ **विशेषश्रुतित्वादिति** ॥ 'प्रकाशो व्यातत' इति प्रकाशद्वारा व्याप्तिरिति विस्पष्टवादित्वादित्यर्थः । पूर्वपक्षिणा दूरस्थश्रवणदर्शनादियुक्तिश्चेत्युक्ते सिद्धान्तिना दूरस्थ-श्रवणस्याखण्डनात् तदनुमतमेवेति ज्ञायते । तच्चाऽयुक्तमिति शङ्कते **स्यादेतदिति** ॥ **श्रोत्रोत्पन्नेति** ॥ शब्दज्ञाने प्रतीतदूरस्थशब्दविषयकत्वपरित्यागेन श्रोत्रोत्पन्नशब्दमात्रविषयकत्वस्वीकारे मूलभूतबाधकमानाभावादित्यर्थः । यद्यपि 'वक्तृप्रयत्नप्रेरितो वायुः उरःप्रभृतिभिःस्थानैः संयुक्तः स्थानसंयुक्ताकाशे ध्वनिलक्षणं शब्दमुत्पादयति । स च देशान्तरे प्रतिशब्दम् । यस्तु कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे समुत्पन्नः तद्गुणो ध्वनिः तस्मिन् व्यज्यमानो वर्णः श्रोत्रेण गृह्यते । ध्वनेश्च आशुतरविनाशित्वेन व्यञ्जकाभावात् न सर्वदोपलब्धिः' इति तत्त्व-निर्णयटीकायामुक्तम् । तथापि नायं सिद्धान्तः । पररीतिमवलम्ब्यैव तदभिधानात् । शब्दपरंपरोत्पादे प्रमाणाभावाच्चेति न तद्विरोध इति बोध्यम् । दूरस्थशब्दविषयकत्वपरित्यागमूलं बाधं शङ्कते– **अन्यथेति** ॥ **गमनोपपत्तेरिति** ॥ इदं समाधानं न सार्वत्रिकम्, किंतु वराहश्रोत्रविषयम्, तच्छ्रोत्रस्यैव रश्मिद्वारा गतिमत्त्वात् । तदन्यश्रोत्रस्य तु प्रभावच्छब्दागमनेनैव सन्निकर्षः । 'यं वै स्वधिष्ण्योपगतं ह्यजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे' इति शब्दागमनस्योक्तत्वादिति बोध्यम् ॥ **किमाकाशपदेनेति** ॥ अव्याकृताकाशं वा, भूताकाशं वेति प्रश्नः ॥ **पृथिव्यादीना-मिति** ॥ इन्द्रियाणां तैजसत्वेऽपि पञ्चीकरणात् त्रिवृत्करणाद्वा पृथिव्यादित्वमुपपद्यत इति भावः । **युक्त एवाभ्युपगम इति** ॥ पूर्वपक्ष्युक्तस्य दूरस्थशब्दग्रहणस्याभ्युपगमो युक्त इत्यर्थः ।

पूर्वपक्षस्तु – व्याप्ताः प्राणाः 'दिवीव चक्षुराततम्' इति व्याप्तिश्रुतेः । दूरस्थवस्तुदर्शन-श्रवणानुसंधानादियुक्तेश्च । न च अणुत्वश्रुतिविरोध इति वाच्यम् । विष्णोर्व्याप्तत्वे दृष्टान्तत्वेन चक्षुर्व्याप्तिरुक्तत्वेन एतच्छ्रुतेः प्राबल्यात् । अतः प्रबलव्याप्तिश्रुतिविरोधादणुत्वश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु – अणव एव प्राणाः । तथाश्रुतेः । न च – 'दिवीव चक्षुराततम्' इति प्रबलश्रुतिविरोधादणुत्वाभावः । अणुत्वस्यापि 'तद्यथा ह्यणुनश्चक्षसः' इति प्रबलश्रुतिसिद्धत्वात् । न च एवं सत्यनिर्णयः 'तद्यथा ह्यणुनश्चक्षसः' इति श्रुतेर्विस्पष्टवादित्वेन व्याप्तिश्रुतितोऽपि बलवत्त्वात् । न च तदप्रामाण्यम् । 'तद्यथाह्यणुन' इति श्रुत्यनुसारेण व्याप्तिश्रुतेस्तेजसा व्याप्त्यर्थकत्वनिर्णयात् । अत एव युक्तिविरोधोऽपि परास्तः । अतः श्रुत्यनुरोधेन प्राणानामणुत्वसिद्धेर्युक्तो जगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

प्राणा इयं त इति सङ्ख्यानिर्णये तदवच्छिन्नानां परिमाणविचारावसर इत्यनन्तरसङ्गतिः ॥ **किं व्याप्ता इति** ॥ अत्र प्राणाः किं व्याप्त उताणव इति चिन्ता तदर्थं व्याप्तिश्रुतिर्युक्तियुक्तत्वेन निरवकाशोत सावकाशेति ॥ **प्राणानामिति शेष इति** ॥ दिवीवचक्षुराततम्' इत्यत्र चक्षुर्व्याप्तौ सिद्धायामिन्द्रियत्वेन तद्दृष्टान्तेनेतरेषामपि सिद्ध्यतीत्याशयः । अत एव भाष्ये प्रतीयत इत्युक्तं न तु श्रूयत इति । प्राणैर्ह्येतद्भवतीत्यंशमवतारयति ॥ **कुतोऽत्रोक्ता इति** ॥ प्राणा इत्यतः परमाहेति शेषः । श्रुतौ हिशब्दो यस्मादित्यर्थे । एतदिति पश्यति कृणोतीत्युक्तधात्वर्थपरामर्श इत्यभिप्रेत्य व्याचष्टे ॥ **ज्ञानकर्मेति** ॥ हि यस्मादेतज्ज्ञानं कर्म च प्राणैर्भवति । तस्मादत्रोक्त अणवः प्राणा इत्यर्थः ॥ **तथा श्रुतेरिति** ॥ यथा दिव्याततं चक्षुः प्रत्यक्षेणादृश्यमपि विषयोपलब्धिलिङ्गकानुमानेन पश्यति तथा सूरयस्तद्विष्णोः परमं पदं स्वरूपं व्याप्तमप्यतीन्द्रियत्वादस्वतन्त्राणां सत्ताप्रतीति-प्रवृत्तिलिङ्गकानुमानेन पश्यन्तीति श्रुतेरित्यर्थः । तदुक्तं ऋग्भाष्ये । चक्षुर्दिवीव व्याप्तं यदृश्यं फलदर्शितमिति । यद्यपीदं चक्षुर्मात्रव्याप्तौ प्रमाणं तथापि न्यायसाम्येनेतरत्र प्रमाणत्वं बोध्यम् । इन्द्रियाणां व्याप्तत्वे सामान्यप्रमाणमनुदाहृत्य वाक्यविशेषग्रहणं विशेषश्रुतिरित्युक्तपूर्वपक्षन्यायं सूचयितुमितिभावेनाह ॥ **न चाणुत्वेति** ॥ चक्षुरतिरिक्तेन्द्रियविषयस्य विशेषश्रुतित्वाभावा-दनुदाहृतसर्वेन्द्रियविषयसामान्यश्रुतेर्विशेषश्रुतित्वाय दूरश्रवणेति भाष्योक्तयुक्तिमाह ॥ **किं चेति** ॥ स्मरणादीत्यादिपदेन घ्राणादिरुच्यते । अन्यथेति प्राप्त्यनङ्गीकारे सन्निकर्षरूपव्यापारशून्यत्वाज्ज्ञान-करणत्वं स्यादित्यर्थः ।

(वाक्यार्थमुक्तावली)

हेतोरन्यथासिद्धिं वारयति ॥ **न च स्वस्थानमिति** ॥ सूत्रे प्राणा इत्यस्ति । चोऽवधारणे । तेजसा व्याप्तिसमुच्चये चेति भावेन सूत्रार्थमाह ॥ **अणव एवेति** ॥ अनेन पूर्वपक्षीयश्रुतियुक्त्योः सावकाशत्वप्रदर्शनाय सूत्रे चशब्द इत्युक्तं भवति ॥ **अतिसुदृढेति** ॥ दिवीवचक्षुराततम्' इति विस्पष्टं चक्षुष एव व्याप्त्युक्तेः । सुदृढत्वं भगवद्व्याप्तौ दृष्टान्तत्वादिति सुदृढोऽहि दृष्टान्ते रश्मिद्वारा दार्ष्टान्तिकेतूभयथेति वाच्यम् । विशेषप्रमाणाभावादिति भावः ।

**आत्माणुत्वादाविति** ॥ जीवस्याणुत्वे प्रकाशव्याप्तौ चेत्यर्थः ॥ **विशेषश्रुतित्वाच्चेति** ॥ प्रकाशो व्यातत इति विस्पष्टं प्रकाशस्यैव व्याप्त्युक्तेरित्यर्थः । अनेन विशेषश्रुतिरित्युक्तसिद्धान्त-न्यायोऽपि भाष्यारूढो दर्शितः । उक्तं च न्यायविवरणे । अणूनि वा इन्द्रियाणि तेषां प्रकाशो व्यातत इति पूर्वपक्ष इत्युक्तेः प्रतिकूलतर्कपराहतिमप्याह ॥ **यदिन्द्रियाणीत्यादिना** ॥ न केवलं सर्वविषयैः सहमनस्केन्द्रियसन्निकर्षस्य सत्त्वात्सर्वग्रहणप्रसङ्गः किन्तु तादृशसन्निकर्षस्य सदा सत्त्वप्राप्त्या सर्वदा च ग्रहणं स्यादित्याह ॥ **सुप्त्याद्यभावश्चेति** ॥ न च सर्वदा सम्बन्धत्वेऽप्या-गन्तुकसहकारिलाभेन ज्ञानजननौन्मुख्यदशायामेव ग्रहणमिति वाच्यम् । तथात्वे व्याप्तेरकिञ्चित्कर-त्वेनाप्यणुत्वेऽप्युपपत्तेरिति न च प्रकाशव्याप्तिपक्षेऽपि दोषसाम्यम् ।

प्रकाशानां सङ्कोचविकाससद्भावादिति भावः । पूर्वपक्षिणा दूरश्रवणदर्शनादित्युक्तिश्चेत्युक्त सिद्धान्तिना दूरस्थश्रवणस्याखण्डनेन तदनुमितमेवेति ज्ञायते तदयुक्तमिति शङ्कते ॥ **स्यादेतदिति** ॥ अत्र शब्दपदेन ध्वन्यात्मकशब्द उच्यते ॥ **मानाभावादिति** ॥ श्रोत्रोत्पन्नशब्दस्यैव ग्रहणमिति नियमे मानाभावादित्यर्थः । अन्यथा विष्णुतत्वनिर्णयटीकायां वक्तृप्रयत्नप्रेरितः कोष्ठ्योवायुरुरः प्रभृतीन्यष्टौ स्थानान् गत्वा श्रोत्रस्थानसंयुक्ताकाशे ध्वनिलक्षणं शब्दमुत्पादयति । स च देशान्तरं प्रति शब्दमित्यादिना । बृहद्भाष्ये शब्दो हि स्थानान्तरं गत्वा प्रतिश्रुतत्वमुपैतीति । भागवते च । 'यं वै स्वधामोपगतं ह्यजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनि इति शब्दस्य गमनोक्त्या विरोधप्रसङ्गः ॥ **चक्षुर्वदिति** ॥ इन्द्रियाणां तैजसत्वादिति भावः ।

ननु श्रोत्रस्य चक्षुष इव गत्वा ग्राहित्वे शब्दे दिक्संशयो न स्यादिति चेन्न । अगत्वा ग्राहित्वे दिङ्निर्णयाभावप्रसङ्गात् । संशयादपि निश्चयो महीयान् । क्वचिच्छब्दे दिक्संशयस्तु रूपादाविव विशेषबलाद्युक्तः । न च श्रोत्रस्य गत्वा ग्राहित्वे संकोचे कारणाभावेन देवादिभाषितमपि

(वाक्यार्थमुक्तावली)

गृह्णीयादिति वाच्यम् । चक्षुषापि देवादिरूपग्रहणप्रसङ्गात्कार्यबलात् संकोचस्यायोग्यता तस्यो-भयत्रापि तुल्यत्वादिति भावः ॥ **भूताकाशस्येति** ॥ अवकाशशब्दिताव्याकृताकाशापेक्षया द्रव्यान्तरस्य भूताकाशस्येत्यर्थः ॥ **पृथिव्यादीनामिति** ॥ तैजसाहङ्कारोपचितानामपीन्द्रियाणां तेषां भूतैरुपचय इत्युक्तरीत्या भूतैरुपचय सम्भवात् । विशिष्य भूताकाशोपचितस्यापि श्रोत्रस्य पृथिव्यादिभिरभ्युपचयोऽस्तीति भावेनैवमुक्तमिति मन्तव्यम् ।

**अन्यत्रेति** ॥ घ्राणादिजननोपक्षीणत्वेन श्रोत्रानारंभकत्वे देहानारंभकत्वप्रसङ्ग इत्यर्थः । **अदृष्टकारणकत्वं चेति** ॥ बधिरस्येत्यर्थः ॥ **उपहतिरिति** ॥ स्तंभकवायूपहतिरित्यर्थः ॥ **युक्त एवेति** ॥ दूरश्रवणाभ्युपगमो युक्त एवेत्यर्थः । ननु दूरश्रवणदर्शनादियुक्तिश्चेति भाष्ये आदिपदेन देशकालव्यवहितपदार्थस्मरणं ग्राह्यम् । मनश्च स्मृतिजननेन स्वरश्मिभिर्गत्वा विषयसन्निकृष्टं भवति । किन्तु संस्कारमवान्तरव्यापारीकृत्य । तत्कथं स्मरणयुक्त्या मनसो गत्वा ग्रहणमुच्यत इति चेन्न । संस्कारमवान्तरव्यापारीकृत्य मनोविषयेण सन्निकृष्यते संस्कारस्य द्रव्यत्वेनावान्तर-व्यापारानुपपत्तेः । न च द्रव्यत्वमसिद्धं गजतुरगादिस्वाप्नद्रव्योपादानत्वात् । किं त्वनुभवविषय एव स्मरणविषय इति अनुभवदशायां मनसा विषयेण सन्निकर्षे जनयितव्ये यन्मनसो रश्मिद्वारा विषयदेशगमनं तदेवावान्तरव्यापाररूपम् । न चानुभवकालेऽपि न मनो गङ्गादिविषयदेशं गच्छति बाह्यार्थेऽप्रवृत्तेरिति वाच्यम् । बहिरस्वातन्त्र्येऽपि बाह्येन्द्रियानुबद्धतया गमनसद्भावात् । न चानुभवकालीना मानसीक्रिया चिरातीतत्वात्कथं स्मरणकारणमिति वाच्यम् । अनुभवकालीना मानसीक्रियानुभवं जनयत्यनुभवस्त्वर्थविषयसंस्कारं जनयति । संस्कारस्य च स्थायित्वात् । स्वयं सहकारिरूपमुद्बुद्धं पूर्वतनचेष्टां तज्जमर्थसन्निकर्षं चापेक्ष्य स्मरणं जनयतीति किमनुपपन्नम् । तदुक्तं भगवद्गीताभाष्ये । ध्यानादेरपि मानसी चेष्टाऽपि कारणं पूर्वतनचेष्टापि संस्कारकारणत्वेन भवतीति । प्रमेयदीपिकायां च आदिपदेन स्मरणं गृह्यते । ज्ञात एवार्थे ध्यानं भवति । ज्ञानं चात्मेन्द्रियसन्निकृष्टेनैव मनसा जायते सन्निकर्षश्च मनसश्चेष्टा नान्या अतो ध्यानादेरपि मनः सम्बन्धिनी चेष्टाकारणं भवतीत्यादिना स्पष्टमेतत् ।

## वाक्यार्थविवरणम्

**स्मरणं** मनःकार्यम् । पश्यतेश्चाक्षुषज्ञानार्थत्वादणुभिः सर्वेन्द्रियैः पश्यतीति न युक्तम् । अतो व्याचष्टे ॥ **पश्यति** ॥ **जानातीति** ॥ भाष्ये कृणोति करोतीत्यर्थः ॥ **पश्यामः** ॥ जानीमः ॥ **प्राप्तेति** ॥ तथा चेन्द्रियाणां दूरस्थवस्तुप्राप्ताववश्यं वाच्यायां व्याप्तत्वं प्राप्तमिति भावः । ननु प्राप्यकारित्वयुक्त्या व्याप्तिर्वाच्या । स्वस्थानं विहायाणूनामेवेन्द्रियाणां विषयं प्रति गत्वा सन्निकर्षाङ्गीकाराद्विषयसन्निकर्षरूपव्यापारत्वप्राप्त्या करणत्वसम्भवाच्चेत्यत आह ॥ **न चेति** ॥ स्वस्थानं गोलकम् । विहाय तस्माद्बहिर्निर्गत्य । यावतेति सौत्रचशब्दार्थः ॥ **आत्माणुत्वेति** ॥ जीवाणुत्वेत्यर्थः । एवमणुत्वे साधकमुक्त्वा व्याप्तत्वे बाधकमाह ॥ **यदीति** ॥ वितत्य ॥ व्याप्य । यदीन्द्रियाणि तेजसा विना स्वरूपत एव व्याप्त एव स्थितानीत्युच्यन्ते तदाकाशस्थपदार्थज्ञानमपि स्यात् । तत्सन्निकर्षस्य सत्त्वादिति भावः ॥ **सुप्त्यादीति** ॥ इन्द्रियाणां व्याप्तत्वेन सर्वदा ........ ...... स्वरूपतोऽणुत्वेऽपि तेजसा व्याप्तिमङ्गीकृत्य पूर्वपक्ष्युक्तादूरश्रवणदर्शनादियुक्तिः सिद्धान्तेऽनुज्ञाता । तत्र चक्षुषो दूरदर्शनमस्तु गत्वा ग्राहित्वात् तस्य । दूरश्रवणं तु कथम् । श्रोत्रस्य तदयोगादिति शङ्कते ॥ **स्यादेतदिति** ॥ **वक्त्रोत्पन्नः** ॥ तदवच्छिन्नाकाशे उत्पन्नः । उत्पादयति । वीचितरङ्गन्यायेनेति शेषः ॥ **द्रव्येण** ॥ कुड्यादिना ॥ **न तत्रेति** ॥ तेन प्रतिबद्धत्वादिति भावः ॥ **कथमिति** ॥ तेजसा व्याप्तिमङ्गीकृत्येति शेषः ॥ **श्रोत्रेति** ॥ शब्दो हीत्युक्तप्रणाड्येति शेषः । शङ्कते ॥ **अन्यथेति** ॥ शब्दो हीत्याद्युक्तप्रणाड्या कर्णशष्कुल्य-वच्छिन्नवियत्युत्पन्नः श्रोत्रसम्बन्धः शब्दो यदि श्रोत्रेण न गृह्यते किन्तु वक्तृवक्त्रोत्पन्नशब्द एव गृह्यते तर्हि श्रोत्रशब्दयोः सम्बन्धाभावात् श्रोत्रेणैव शब्दग्रहणस्यावश्यकत्वाच्छ्रोत्रं शब्दमप्राप्या-सम्बध्यैव गृह्णातीति प्राप्तम् । तथा चातिप्रसङ्ग इति भावः । यथा चक्षुषो गत्वाग्राहित्वं तव सम्मतं तद्वच्छ्रोत्रस्यापि गत्वाग्राहित्वमेवास्तु । तथा च नोक्तदोष इत्यत आह ॥ **चक्षुर्वदिति** ॥ आकाश-तया आकाशात्मकतया ॥ **अमूर्तत्वात्** ॥ व्याप्तत्वात् ॥ **नेति** ॥ निष्क्रियत्वेन गमनमयुक्तमित्यर्थः ॥ **अवकाशः** ॥ अव्याकृताकाशः ॥ **कुतः** ॥ प्रमाणात् ॥ **अवकाशत्वम्** ॥ अव्याकृताकाशात्म-कत्वम् ॥ **परिशेषादिति** ॥ श्रोत्रं 'पृथिवी न', 'जलं न', इत्यादिरूपेण प्रसक्तप्रतिषेधे परिशेषादव्याकृताकाशात्मकत्वं सिद्ध्यतीति भावः ॥ **द्रव्यान्तरस्येति** ॥ भूताकाशस्या-

व्याकृताकाशभिन्नद्रव्यान्तरस्य सत्त्वेन भूताकाशं नेति परिशेषानुपपत्तेरित्यर्थः । तथा च भूताकाशात्मकमेवास्तु श्रोत्रमिति तस्य मूर्तत्वेन युक्तं गमनमिति भावः ।

ननु भूताकाशानङ्गीकारेण युक्तः परिशेष इति चेत्तत्राह ॥ **तदनभ्युपगम इति** ॥ **श्रुत्यादीति** ॥ 'आत्मन आकाशः सम्भूतः' । 'आकाशो नीलिमोदेति' इति भूताकाशप्रतिपादक-श्रुत्यादीत्यर्थः । एवं भूताकाशमेव श्रोत्रमिति युक्तं तस्य गमनमिति स्वमतं समर्थ्य पृथिव्यादि-कार्यमेव श्रोत्रमस्तु । ...... ....... ...... घ्राणादिजननोपक्षीणत्वेनान्यथासिद्धतया श्रोत्रारम्भकत्वं न सम्भवतीत्युच्यते तर्हि पार्थिवशरीरारम्भकत्वमपि न स्यात् । घ्राणादिजननो-पक्षीणत्वेनान्यथासिद्धत्वादेवेति भावः । ननु पृथिवीरूपायाः कर्णशष्कुल्या एव श्रोत्रत्वाङ्गीकारे बधिराणामप्येतादृशश्रोत्रस्य सत्त्वेन तेषामपि शब्दग्रहणापत्त्या लोके बधिराभाव एव स्यादित्याशङ्कते ॥ **बधिरेति** ॥ अव्याकृताकाशमेव श्रोत्रमिति वदतस्तव मतेऽपि बधिराणामपि कर्णशष्कुल्यन्तरावकाशस्य सत्त्वेन श्रोत्रस्य सत्वात्तेषामपि शब्दग्रहणापत्त्या बधिराभावः स्यादिति दूषणस्य त्वन्मतेऽपि साम्यादित्याह ॥ **सममिति** ॥ अथैवमुच्यते 'नावकाशमात्रं श्रोत्रं येनोक्त-दोषः, किन्त्वदृष्टविशेषसहकृतावकाशमेव बधिराणां चादृष्टविशेषसहकृतावकाशाभावेन न शब्दग्रह' इति यदि तर्हि वयमपि वदामोऽदृष्टविशेषसहकृतपृथिव्यादिकमेव श्रोत्रमिति । बधिराणां चैतादृश-श्रोत्राभावान्न शब्दग्रह इत्याह ॥ **अदृष्टेति** ॥ **कारणम्** ॥ सहकारि । नन्वप्रतिबद्धावकाशमेव श्रोत्रं बधिराणां चावकाशमात्रस्य सत्त्वेऽपि तस्य बलवता केनचिद्द्रव्येणापहतत्वान्न शब्दग्रह इति चेत्तत्राह ॥ **उपहतिश्चेति** ॥ बलवता प्रतिबन्ध इत्यर्थः । उपहतिरित्येतद्वचः पृथिव्यादीनामेव श्रोत्रत्वे न सम्भवति । संस्पर्शद्रव्यत्वात् । तादृशा एव घटादावुपहतिदृष्टेः । नावकाशमात्रस्य श्रोत्रत्वे उपहतिकल्पना युक्ता । अव्याकृताकाशस्य निःस्पर्शत्वेनोपहतिकल्पनायोगादिति भावः ॥ **युक्त एवेति** ॥ पृथिव्यादीनामेव श्रोत्रत्वाभ्युपगमो गमनाभ्युपगमो वा दूरश्रवणाभ्युपगमो वा प्रौढिवादेन युक्त इत्यर्थः ।

## वाक्यार्थमञ्जरी

श्रोत्राद्यनुगमायाह ॥ **जानातीति** ॥ कृणोतीत्यस्य करोतीत्यर्थः स्फुट एवेति भावः । प्राणैर्ह्येतद्भवतीत्येतदवतारयति ॥ **कुतोऽत्रोक्त इति** ॥ अत्राणुभिरिति श्रुतौ ज्ञानादिकारणत्वेनोक्ता

(वाक्यार्थमञ्जरी)

इत्यर्थः । एतच्छब्देन पश्यतीत्याद्युक्तपरामर्शः हिशब्दो हेत्वर्थ इत्यभिप्रेत्य तद्वाक्यं व्याचष्टे ॥ **ज्ञानकर्मेति** ॥ ज्ञानकर्मकारणत्वस्य प्राणासाधारणधर्मत्वादिति भावः । **विष्णोर्व्याप्तत्व** इति ॥ यथा हि चक्षुराकाशे व्याप्तमपि न दृश्यते केवलं विषयोपलब्धिलक्षणेन फलेनानुमीयते तथा परमेश्वरस्वरूपं सर्वगतमपि न दृश्यते किं तु अस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायत इति तदर्थः । चक्षुर्दिवीव व्याप्तं यददृश्यं फलदर्शनमिति ऋग्भाष्योक्तेरिति भावः ॥ **प्राप्य-कारित्वादिति** ॥ वस्तु सम्बध्य ज्ञानकरणत्वादित्यर्थः ॥ **अन्यथेति** ॥ व्यापारवत एव करणत्वा-द्विषयप्राप्तिरूपसन्निकर्षस्यैव व्यापारत्वात्तदभावे करणत्वविरोधादित्यर्थः । प्राणाः स्वरूपेणाणव एव तेजसा व्याप्ताश्चेत्यर्थः ॥ **अतिसुदृढेति** ॥ दृष्टान्तत्वान्यथानुपपत्त्या सुदृढेत्यर्थः । आत्मनः जीवस्य तर्हि । साम्येनानिर्णयः स्यादित्यत आह ॥ **विशेषश्रुतित्वाच्चेति** ॥ चक्षसः प्रकाशो व्यातत इत्यनेन दिवीवेति व्याप्तिश्रुतेः सावकाशत्वप्रदर्शनेनास्याः श्रुतेः तदपेक्षया विशेषश्रुतित्वान्निर्णय इत्यर्थः । स्वरूपेण व्याप्तत्वे बाधकं चाह ॥ **यदिन्द्रियाणीति** ॥ **सुप्त्याद्यभावश्चेति** ॥ सर्वविषयैः सह समनस्केन्द्रिय सन्निकर्षस्य सदा सत्त्वप्राप्त्या सर्वदा तद्ग्रहणे सर्वेन्द्रियव्यापारोपरमरूपसुप्त्यभावः स्यादित्यर्थः । द्रव्येण कुड्यादिना अनुज्ञायते अभ्युपगम्यते पूर्वपक्ष्युक्तस्य दूरश्रवणस्या-निराकृतत्वेनाङ्गीकारो ज्ञायत इति भावः ॥ **अवकाश इति** ॥ अव्याकृताकाश इत्यर्थः ॥ **परिशेषादिति** ॥ प्राणादिजनकानां पृथिव्यादीनामन्यथासिद्धत्वेन श्रोत्रोत्पादकत्वानुपपत्तौ तस्य परिशिष्टाकाशकार्यत्वस्यैवाङ्गीकार्यत्वादिति भावः ॥ **श्रुत्यादिविरोध इति** ॥ 'आत्मन आकाशः सम्भूतः' 'आकाशो नीलिमोदेति' शब्दमात्रमभून्नभ इत्यादिविरोध इत्यर्थः ॥ **पृथिव्यादीना-मिति** ॥ तेषां भूतैरुपचय इति सामान्योक्तेरिति भावः । अन्यत्र प्राणाद्यारम्भे ॥ **तच्छरीरेति** ॥ अन्यत्रोपक्षीणत्वादेव पार्थिवादिशरीरानारम्भकत्वप्रसङ्ग इत्यर्थः । **बधिराभाव इति** ॥ पृथिव्यादीनां तान्प्रत्यप्यविशिष्टत्वादिति भावः । सत्यपीन्द्रिये पापवशादश्रवणमित्यत आह ॥ **अदृष्टेति** ॥ तदिन्द्रियस्य बलवन्निबिडवायूपहतत्वेनाश्रवणोत्पत्तिरित्यत आह ॥ **उपहतिश्चेति** ॥ आकाशस्य निस्पर्शत्वेनाप्रतियातद्रव्यत्वादिति भावः ॥ **अभ्युपगम इति** ॥ पूर्वपक्ष्युक्तदूरस्थश्रवणाभ्युपगम इत्यर्थः । अत्र सर्वत्र शब्दपदेन वर्णात्मक शब्दो ग्राह्यः न ध्वन्यात्मकः तेनात्राकाशगुणे शब्दे व्यज्यमाना वर्णादय इति तत्त्वनिर्णयतट्टीकाविरोधः तत्र ध्वन्यात्मकशब्दस्य स्यादेतदित्यादिनोक्त-प्रकाराभ्युपगमादिति निरस्तम् । न च श्रोत्रस्य गत्वा ग्राहित्वे ध्वन्यात्मकस्यापि शब्द-

(वाक्यार्थमञ्जरी)

स्तत्प्रकाराभ्युपगमो व्यर्थ इति वाच्यं शब्दस्य शब्दान्तरजनकत्वस्वाभाव्यादेव तथाङ्गीकारात् तत्कुतः सिद्धमिति चेत् बहुजनाकीर्णसभादौ जनेषु मन्दं मन्दं भाष्यमाणेषु तदीयशब्दैर्महाशब्दोत्पादस्यापवरकादौ प्रतिध्वन्युत्पादस्य बहुलमुपलम्भात् तर्हि श्रोत्रस्य गत्वाग्राहित्वं कुत इति चेन्न प्राणा वा इन्द्रियाणि प्राणाहीदं द्रवन्तीतीन्द्रियाणामिदं विषयजातमुद्दिश्य द्रवणस्य श्रुतिसिद्धत्वात् श्रोत्रस्यागत्वाग्राहित्वे शब्देन दिङ्निश्चयाभावप्रसङ्गाच्च अस्ति तावच्छब्दश्राविणां पूर्वभागे दूरे शब्दो भवतीति निश्चयः न च श्रोत्रस्य गमनाभावे सम्भवति श्रोत्रेणागत्वैव स्वसमीपस्थशब्दग्रहणे तस्या दूरभावित्वेन दूरे शब्दो भवतीति निश्चयः न च श्रोत्रस्य गमनाभावे सम्भवति श्रोत्रेणागत्वैव स्वसमीपस्थशब्दग्रहणे तस्यादूरभावित्वेन दूरे शब्द इति ज्ञानानुपपत्तेश्च क्वचिच्छब्दे दिक्संशयस्तु रूपादाविव दोषबलाद्युक्त इति ध्येयम् ।

॥ इति अण्वधिकरणम् ॥

## ६. अथ मुख्यप्राणाधिकरणम्

## सूत्रभाष्यम्

'नैष प्राण उदेति नास्तमेत्येकल एव मध्ये स्थाता । अथैनमाहुर्मध्यम' इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते ।

'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा ।
तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यत' इति युक्तिर्वायुप्रोक्ते ।

'आत्मत एष प्राणो जायत' (प्र.उ. ३-३) इति च । अत आह–

॥ ॐ श्रेष्ठश्च ॐ ॥ ९ ॥

'सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिः' इति गौपवनश्रुतेः ।

## तत्त्वप्रदीपिका

मुख्यप्राणो विषयः । स नोत्पद्यत इत्येकपक्षः । 'नैष प्राण उदेति' इत्यादिश्रुतेर्युक्तेश्च । एकलः प्रधानः । उदयास्तमययोर्मध्ये यौवने स्थाता देहमध्ये वेति श्रुत्यर्थः । यस्य देहप्राप्तिर्देहपरित्यागश्च जीवानामुत्पत्तिर्मरणं च तदुभयं कथं तस्येति युक्तिः । उत्पत्तिश्रुतेः पूर्वोक्तयुक्तिभ्यश्चोत्पद्यत इत्यपरः पक्षः । उक्तयुक्तिस्तु चिरकालावस्थायित्वेन निर्वोढव्या । देहात्पूर्वापरकालवर्तित्वेऽपि मूलसृष्ट्युत्पत्तिसम्भवात् । अत्र कतरः पक्षः श्रेयान् ? अन्यतमो वा श्रेष्ठ इति विचार्यते । ननु नैतत्साम्प्रतम् । प्राणस्योत्पत्तिशङ्काप्राप्त्यभावात् । या त्वनुत्पत्तिश्रुतिरुपन्यस्ता सा परमात्मविषया भवितुमर्हति । प्राणशब्दस्य परमात्मनि प्रसाधितत्वात् । अनेकत्रासाधारणत्वेन निर्णीतश्रुतिलिङ्गेभ्यो मुख्यप्राणलिङ्गानामपि तन्निमित्तत्वावधारणादिति । मैवम् । उक्तोत्तरत्वात् । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते । यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति । इदं च भाष्यमविरोधादिविचारोत्थापकम् । अन्यथा सर्वशब्दानाम् 'एतेन सर्वे व्याख्याता' इत्यतो ब्रह्मण्येव पर्यवसायित्वादनुत्थानमेवाध्या यत्रयस्य । अनुदयानस्तमयश्रुतेरन्यवाचकत्वे विरोध इति चेत्सत्यम् । 'अथैनमाहुर्मध्यम' इति मध्यमत्वमुत्तमादन्यत्र च मुख्यप्राणे न विरुध्यते, प्रसिद्धं च ।

(तत्त्वप्रदीपिका)

**अनुदयानस्तमयौ च कयाचिदपेक्षया योजयितुं सुशकौ । 'अथैनमाहुःसादिरनादिः' इति हि निर्णयश्रुतिं दर्शयति । अत उचितो विचारः । अतस्सिद्धान्तमारभते । श्रेष्ठश्च । 'प्राणो वा ज्येष्ठश्च श्रेष्ठश्च तान्वरिष्ठः प्राण उवाच' इत्यादिश्रुतिभ्यो मुख्यप्राणः प्राणेषु श्रेष्ठ उच्यते । तत्प्रस्तावात् । चकारादुत्पद्यते च नोत्पद्यते च । अयं च निर्णयप्रकारो यथा सम्भवं योजनीयोऽस्मिन्पादे । यथा दासा वृत्तयश्च सन्तीति ।**

## तत्त्वप्रकाशिका

अत्र श्रुतिसन्वयेन परमात्मनो जगत्कारणत्वसिद्ध्यर्थं मुख्यप्राणजन्मविषयश्रुतिविरोध-परिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणे हरावुक्तः श्रुतिसमन्वयो मुख्यप्राणजन्मविषयश्रुतीनां विरोधेऽनुपपन्नः स्यादतोऽसौ निरसनीय एव । सर्वप्राणप्रेरकः प्राणश्रुत्या सन्निधापितो मुख्यप्राणोऽत्र विषयः । उत्पत्तिमान्न वेति सन्देहः । सन्देहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति ॥ **नेति** ॥ मध्ये जननमरणयोर्मध्यावस्थायाम् । इति चोत्पत्तिः श्रूयत इति शेषः । मुख्यप्राणो नोत्पत्तिमान् । 'नैष प्राण उदेति' इति श्रुतेः । न च मुख्यवाय्वनुत्पत्तिश्रुतिवदियमन्यथा योजनीयोत्पत्ति-श्रुत्यानुकूल्यादिति युक्तम् । तस्याखिलोत्पत्तिमरणकारणत्वेनोत्पत्त्याद्ययोगयुक्तियुक्तानादित्वश्रुतेः प्राबल्यात् । न हि सर्वजननहेतोर्जन्मोपपद्यते । दुःखहेतवे स्वजननाय प्रवृत्त्ययोगात् । अतः प्रबला-नादित्व श्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेव । अतो न जगत्कारणे परमेश्वरे श्रुतिसमन्वयोपपत्तिरिति भावः । सिद्धान्तयत्सूत्रमवतारयति ॥ **अत इति** ॥ यथेतरे प्राणा उत्पद्यन्ते तथा श्रेष्ठश्च प्राणो जायत इति सूत्रार्थोऽतिरोहित इति नाभिहितः । ननु कुतो मुख्यप्राणस्योत्पत्तिस्तदङ्गी-कारेऽनादित्वश्रुतिविरोधादित्यत आह ॥ **सौक्ष्म्येणेति** ॥ स्थूलादिभावस्य स्वरूपत्वात्कथं तस्योत्पत्त्यादीत्यत उक्तम् ॥ **प्रकृतित इति** ॥ स्वभावः । अन्यतः शरीरादितः ।

## गुर्वर्थदीपिका

अनादित्वश्रुतेः प्राबल्यादित्यत्र मुख्यप्राणस्य मुख्यवायोश्चैकत्वादत्रोक्ताभ्यधिकाशङ्कया मुख्य-प्राणस्यानादितायां तस्याप्यनादितैव स्यात् । तस्य सादित्वमस्यानादित्वमिति तु कथमिति चेत्सत्यम् । अस्यानादित्वे तस्याप्यनादित्वमेव वक्तव्यम् । तथा च तदधिकरणोक्तसिद्धान्तोऽपि नोपपन्न इति शङ्कितुरभिप्रेतत्वात् ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **सर्वप्राणप्रेरकः प्राणश्रुत्या सन्निधापित** इति ॥ **उत्पत्तिमानिति** ॥ अत्र मुख्यप्राणोऽनुत्पत्तिमानुतोत्पत्तिमानिति चिन्ता । तदर्थं तदुत्पत्ति-स्तदनुत्पत्तिश्रुतिविरुद्धा न वेति । तदर्थं 'नैष प्राण उदेति' इति तदनुत्पत्तिश्रुतिः किं सर्वात्मनाऽ-नुत्पत्तिरुत देहादिस्थौल्येनोत्पत्तावपि स्वरूपसौक्ष्म्येणानुत्पत्तिपरेति । तदर्थमनुत्पत्तिश्रुतिः किं युक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं प्राणस्य यत्प्राप्तिरित्युक्तं सर्वजननमरणहेतुत्वरूपं माहात्म्यं किं विष्णुजातत्वेन तस्य नोपपद्यते उतोपपद्यत इति । तदर्थं विष्णोस्ततोऽप्यतिमाहात्म्यं नास्त्युतास्तीति । तदर्थं विष्णोस्ततोऽप्यतिमाहात्म्ये प्राणस्य विष्णुजातत्वे प्रमाणं नास्त्युता-स्तीति । तदर्थम् 'आत्मत एषः प्राणो जायत' इति श्रुतिगतः प्राणशब्दः किं बाह्यवायुपरः किं वा मुख्यप्राणपर इति । तदर्थं परमात्मनः सकाशात् प्राणोत्पत्तितश्चेष्टा बाह्यवाय्वोरुत मुख्याप्राणस्येति । पृथङ्नोपदिश्यत इति । 'एतेन मातरिश्वा व्याख्यात' इत्यनेन गतार्थतां प्रतिषेधति– **न च मुख्यवाय्विति** ॥ 'एतेन मातरिश्वा' इत्यत्र बाह्येन मुख्यवायुरूपेणोत्पत्तिरुक्ता । अत्र त्वखिल-जननमरणोत्पत्तिकारणेनाध्यात्मिकप्राणरूपेणाप्युत्पत्तिरुच्यत इति भेदः । तद्धेतुत्वेन भाष्यन्याय-विवरणोक्तयुक्तिमाह– **तस्याखिलोत्पत्तीति** ॥ सौत्र'च' शब्दसमुच्चयं दर्शयति– **यथेतर** इति ॥

## भावदीपः

अत्र चन्द्रिकायां सङ्गतिं सूचयति । सर्वप्राणप्रेरकः प्राणश्रुतिसन्निधापितश्चेत्येवं प्रतीकग्रहणं कृतम् । तदा अणवश्चेत्यन्तं प्राणपदानुवृत्तेः प्राणश्रुतिसन्निधापितेत्यर्थः । क्वचिट्टीकायां प्राणप्रकृत्या सन्निधापित इति पाठः । तदा प्राणप्रकरणेनेत्यर्थः । श्रुतावथैनमित्यथपदस्य तस्मादित्यर्थत्वा-त्तदनुरोधेन मध्ये स्थातेत्यत्र मध्यशब्दार्थमाह ॥ **जननेति** ॥ तत्त्वप्रदीपे तु एकलः प्रधानः उदयास्तमययोर्मध्ये यौवने स्थातां देहमध्ये वा इति श्रुत्यर्थ इत्युक्तम् । यत्प्राप्तिरित्यादिभाष्यं यत्प्राप्तिरित्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरित्यन्यत्रोक्त्यनुरोधेन । 'एतेन मातरिश्वा व्याख्यात' इत्यनेन गतार्थताशङ्कानिवर्तकतया व्याचष्टे ॥ **न चेत्यादिना** ॥ **तस्येति** ॥ देह स्थितप्राणरूपस्येत्यर्थः । बाह्यमुख्यवायुरूपस्य तु नैतन्माहात्म्यमिति भवति ततोऽत्र विशेषाशङ्केति

(भावदीपः)
भावः । स्मृतौ सर्वजीवानामिति शेषं मत्वोक्तम् अखिलेति । मूलसृष्टावुत्पन्नस्य सर्वजन्महेतुत्व-मस्त्वित्यत आह ॥ **दुःखेति** ॥ **अत इति** ॥ सयुक्तिकत्वात्प्रबलेत्यर्थः । चकारं समुच्चयार्थं मत्वा व्यनक्ति ॥ **यथेति** ॥ प्रस्तावप्राप्तार्थमाह ॥ **जायत इति** ॥ प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । तान्वरिष्ठः प्राण उवाच' इति मुख्यप्राणस्य प्राणेषु श्रेष्ठत्वात् प्राण इत्युक्तम् । तेनाध्यात्मप्राणरूपेणेह मुख्यवायोरुत्पत्तिरुच्यते । एतेन मातरिश्वेत्यत्र तु अधिदैवबाह्यरूपेणोत्पत्तिरिति भेदः सूचितः । तत्त्वप्रदीपे तु तत्र भूतप्रकरणत्वाद्भूतमुख्यवाय्वोस्संमुग्धयोर्विचार इह केवलो मुख्यविषय इति भेद इत्युक्तम् ।

## अभिनवचन्द्रिका

**प्राणप्रकृत्या सन्निधापित इति** ॥ प्राणशब्देन मुख्यप्राणस्याप्युपस्थित्या बुद्धौ सन्निधापित इत्यर्थः । 'मध्ये स्थाता' इति श्रुतिगतमध्ये इतिपदं व्याचष्टे **मध्य इति** ॥ प्राणिनां जननमरणान्तर्वर्तिमध्यावस्थाप्रेरणाय तस्यामवस्थायां स्थातेत्यर्थः । एतेन अस्य जननमरणशून्यत्वात् तदवस्थाया न मध्यावस्थात्वसम्भव इति परास्तम् ॥ **अन्यथा पुनरुक्तिप्रसङ्ग इति** ॥ उपलक्षण-मेतत् । आत्माश्रयप्रसंग इत्यपि द्रष्टव्यम् ।

पूर्वपक्षस्तु – मुख्यप्राणो नोत्पत्तिमान् 'नैष प्राण उदेत्' इति श्रुतेः । न च मुख्यवाय्वनुत्पत्ति-श्रुतिवत् इयमपि श्रुतिरन्यथा योजनीयेति वाच्यम् । तस्य उत्पत्तिमरणकारणत्वेन उत्पत्त्याद्य-योगयुक्तियुक्ताऽनादित्वश्रुतेः प्राबल्यात् । अतः प्रबलानादित्वश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेव । अतो न जगत्कारणे परमेश्वरे श्रुतिसमन्वयोपपत्तिरिति ।

सिद्धान्तस्तु – यथा इतरे प्राणा उत्पद्यन्ते तथा श्रेष्ठोऽपि 'सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति' इति श्रुतेः । ननु अनादित्वश्रुतिः सयुक्तिकत्वेन प्रबला । अतः तदनुसारेण उत्पत्तिश्रुतिरेव चेष्टा बाह्यवायुविषयतया व्याख्यातव्येति चेत्, न – 'स प्राणमसृजत' इति श्रुतौ प्राणस्योत्पत्तिमभिधाय प्राणाच्च चेष्टावाय्वोः पृथगुत्पत्त्यभिधानात्, 'श्रुतानि मात्राश्चेष्टाश्च' इति स्मृतावपि तथैवाऽभिधानाच्च । न च सर्वभूतोत्पत्तिकारणत्वेन उत्तमत्वात्कथं तस्योत्पत्तिरिति वाच्यम् । महतोऽपि तस्य ततोऽप्यतिमहता विष्णुना जन्मसम्भवात् । तदुक्तम्–

(अभिनवचन्द्रिका)

महत्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् ।
किंनाम न सृजेदेष येन शक्त्येदमावृतम् ।। इति ।

अतः श्रुत्यविरोधेन मुख्यप्राणस्य जननसिद्धेः युक्तं जगत्कारणत्वं श्रुतिसमन्वयेन वासुदेवस्येति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं सूचयन् विषयमाह ।। **सर्वप्राणप्रेरकं प्राणप्रकृत्येति** ।। अत्र मुख्य प्राणोऽनुत्पत्तिमानुतोत्पत्तिमानिति चिन्ता । तदर्थं नैष प्राण उदेति' इति तदनुत्पत्तिश्रुतिः किं सर्वात्मनानुत्पत्तिपरोतदेहादिस्थौल्येनोत्पत्तावपि स्वरूपासौक्ष्म्येणानुपत्पत्तिपरेति । तदर्थमुत्पत्तिश्रुतिः किं सयुक्तिकत्वेन निरवकाशा 'आत्मन एष प्राणोऽजायत' इत्युत्पत्तिश्रुतिस्तु बाह्यवायुचेष्टापरत्वेन सावकाशा युक्तिविरोधाभावेनानुत्पत्तिश्रुतिः सावकाशोत्पत्तिश्रुतिर्निरवकाशेति ।। **जन्ममरणयोर्मध्य इति** ।। यौवनावस्थायामित्यर्थः । यथोक्तं तत्त्वप्रदीपे । उदयास्तमयोर्मध्ये यौवनावस्थायां देहमध्ये चेति । एतेन मातरिश्वोत्पत्त्यधिकरणेन गतार्थतां परिहरति ।। **न च मुख्येति** ।। स्वरूपाभिप्रायेण तदतिरिक्त प्रत्यभिज्ञानानादित्वाभिप्रायेण चेत्यर्थः । कुतो न युक्तमित्यतो माहात्म्यमित्युक्तपूर्वपक्षन्यायप्रदर्शकस्य यत्प्राप्तिरित्यादिभाष्यस्य भावमाह ।। **तस्येति** ।। बाह्यस्य मुख्यवायुरूपस्योत्पत्तावप्यध्यात्मप्राणरूपस्य नोत्पत्तिर्युक्ता । तत्प्राप्तितत्परित्यागयोरुत्पत्तिमरणशब्दार्थत्वेन सर्वोत्पत्तिमरणयोस्तत्प्रवृत्तिपूर्वकत्वेन स्वदुःखहेतुस्वजनने प्रवृत्त्ययोगात्सर्वोत्पादकत्वेन महामाहात्म्याचेति भावः । सूत्रे तथेत्यस्यानुवृत्तिं सूचयन् व्याचष्टे ।। **यथेतर इति** ।। **स्वभावत इति** ।। नन्विदं सर्वजीवसाधारणं किं प्राणस्य विशिष्योच्यत इति चेत् शरीरादित एव स्थूलो नत्वन्येषामिव चैतन्येन तदभिमानकृतविक्रियोत्पद्यत इति विवक्षितत्वात् ।

## वाक्यार्थविवरणम्

**प्राणप्रकृत्या** ।। इन्द्रियप्रकरणेन । ननु प्राणप्रकृत्या कथं मुख्यप्राणः सन्निधापित इत्यत उक्तं 'सर्वप्राणप्रेरकः सर्वेद्रियप्रेरकः' इति ।। **जननमरणयोर्मध्यावस्थायामिति** ।। जीवानामिति शेषः । जीवानां स्थितिकाल इत्यर्थः ।। **मुख्यवाय्विति** ।। अधिदैवगतेत्यर्थः ।। **इयमिति** ।। सर्वेन्द्रिय-

प्रेरकतया अध्यात्मगतमुख्यप्राणानुत्पत्तिश्रुतिरित्यर्थः ॥ **अन्यथा** ॥ स्वरूपस्य नित्यत्वेनेत्यर्थः ॥ **उत्पत्त्यादीति** ॥ देहतोऽपीति शेषः । 'प्राणो नोत्पत्तिमान् । अखिलोत्पत्तिमरणकारणत्वात्' इत्यत्राप्रयोजकत्वं परिहरति ॥ **न हीति** ॥ कुतो नोपपद्यत इत्यत आह ॥ **दुःखहेतव इति** ॥ **स्थूलादिभावस्येति** ॥ स्थूलत्वस्य सूक्ष्मत्वस्य वा धर्मस्य तत्स्वरूपत्वात् सौक्ष्म्येणावस्थानं स्थूलत्वेनोदयश्च कथमित्यर्थः । तथात्वे स्वरूपस्यैवोदयप्राप्तेरिति भावः ॥ **अन्यत इति** ॥ तथा च स्थौल्यं शरीरोपाधिकमेव न स्वाभाविकमित्युक्तं भवति ।

## वाक्यार्थमञ्जरी

प्रकृत्या प्रकरणेनान्यथास्वरूपानुत्पत्तिपरत्वेन ॥ **न हीति** ॥ सर्वस्यापि तज्जन्यत्वेन तज्जनकस्यैवाभावादिति भावः । स्वेच्छया स्वत एव जन्म किं न स्यादित्यत आह ॥ **दुःखहेतव इति** ॥ न केवलमन्ये प्राणा उत्पद्यन्ते किन्तु प्राणः श्रेष्ठो मुख्यप्राणश्चोत्पद्यत इत्यर्थः । **अतिरोहितः** अनाच्छादितः ।

## सूत्रभाष्यम्

**॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ १० ॥**

'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते ।
प्राणशब्दस्त्रिषु ह्येषु मुखे मुख्यः प्रकीर्तितः' ।

इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात् । 'स प्राणमसृजत... खं वायुर्ज्योतिरापः ... तपो मन्त्राः कर्म'(प्र.उ. ६-४)ति पृथगुपदेशात् ।

''भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत् ।
मुख्यप्राणः परस्माच्च न परः कारणान्वित'' इति वायुप्रोक्ते ।

## तत्त्वप्रदीपिका

न वायुक्रिये पृथगुपदेशात् । भूतवायुचेष्टयोरपि प्राणशब्दवाच्यत्वात्तयोरेव स्यादुत्पत्तिश्रुतिरिति न मन्तव्यम् । 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुज्योतिरापः पृथिवीन्द्रियम् । मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकेषु नाम च' इति मुख्यप्राणस्य तयोः कारणभूतस्य प्रथमत एवोत्पत्त्युपदेशात् ।

(तत्त्वप्रदीपिका)

ननु एतेन मातरिश्वा व्याख्यात इति प्रधानवायोरुत्पत्तिर्व्याख्याता । स एव च मुख्यप्राणो नाम वायुः । 'प्राणो यः प्राणः स वायुः' इत्यादिश्रुतेः ।

'वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः ।
अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः' इति भारते ॥

यद्यपि बाह्याध्यात्मिकभेदापेक्षया पृथग्विवक्षा, तथाऽपि तथा प्राणा इति सामान्योपन्यासेन पूर्णत्वात्कथमवृथा स्यात्पृथगयं पुनरारम्भः ? अत्र ब्रूमः । तत्र भूतकारणत्वाद्भूतमुख्ययोः सम्मुग्धो विचारः । इह केवलो मुख्यविषय इति भेदः । प्राणशब्देन च श्रुतिषु मुख्ये व्यवहार-बाहुल्यात्तद्गोचरविचाराणां बहुविधानां चिकीर्षितानां प्रारम्भे तस्मिन्नेव मुख्ये प्राण-शब्देनोत्पत्त्यनुत्पत्तिवादिनीनां च बहुलानां श्रुतीनां सुनिर्णायकः सार्थक एवायं विचारः । प्रमाणभेदभिन्नत्वात्प्रमेयं प्रपञ्चयतोस्तत्र तत्र सूत्रैर्भाष्यैश्च भगवतोः स्फुरन्त्येव महान्तो गुणविशेषाश्शिष्टानाम् ।

## तत्त्वप्रकाशिका

नन्वनादित्वश्रुतिः सयुक्तिकत्वेन प्रबला कथमुत्पत्तिश्रुतिमात्रानुसारेणान्यथा व्याख्यायते । अपि तूत्पत्तिश्रुतिरेव चेष्टाबाह्यवायुविषयतया व्याख्यातव्या तयोरपि चेष्टायामिति वाक्येन प्राण-शब्दवाच्यत्वोक्तेः । उत्पत्त्यङ्गीकारे च विरोधाभावादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **नेति** ॥ प्राणशब्दस्य चेष्टायां बाह्यवायौ च वृत्त्युक्तेः प्राणोत्पत्तिश्रुतिस्तयोरुत्पत्तिवादिनी स्यादिति नोपपद्यते । 'स प्राणमसृजत' इति प्राणोत्पत्तिश्रुतेश्चेष्टादिविषयत्वानुपपत्या मुख्यप्राणविषयत्वात् । न चात्रापि चेष्टादिकं वाच्यम् । 'स प्राणमसृजत' इति प्राणोत्पत्तिमुक्त्वा 'प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति वायुकर्मणोः पृथगुत्पत्त्यभिधानात् । अन्यथा पुनरुक्तिप्रसङ्ग इति भावः । मुखे प्रधाने । 'मणिर्मुखं प्रधानश्चेत्युत्तमस्य वचो भवेत्' इत्यभिधानात् । श्रुत्यर्थनिश्चायिकां स्मृतिं चाह ॥ **भूतानीति** ॥ 'स प्राणमसृजत' मुख्यप्राणः परस्माच्च' इति श्रुतिस्मृतिभ्यां युक्तिविरोधोऽपि परिहृतः । मुख्य-प्राणस्य परमात्मजातत्वाभिधानात् । यत्प्राप्तिरित्याद्युक्तमाहात्म्यवतोऽपि मुख्यप्राणस्यातिमाहात्म्य-वद्विष्णूत्पन्नत्वोपपत्तेः । तदुक्तम् । 'महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् । किं नाम न सृजेदेष येन शक्त्येदमावृतम्' ॥ इति । अतः श्रुत्यविरोधेन मुख्यप्राणस्य जननसिद्धेर्युक्तं जगत्कारणत्वं श्रुतिसमन्वयेन वासुदेवस्येति सिद्धम् ।

## गुर्वर्थदीपिका

चेष्टाबाह्यवायुविषयतयेत्यत्र 'अन चेष्टाया' इति धातोः प्राणः प्राणनं सर्वजीवानां चेष्टा बाह्यवायुः श्वासरूप इत्यर्थः । चेष्टायामिति वाक्यादित्यनेन 'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयत' इति भाष्यस्थवाक्यं गृह्यते । तयोश्चेष्टाश्वासवाय्वोः प्राणनं प्राण इत्युक्तचेष्टायाः प्रकृष्टमननं यस्मादिति बहुव्रीहौ श्वासवाय्वोश्च प्राणशब्दवाच्यत्वमिति भावः । 'खं वायुर्ज्योतिरापः' इति भाष्यवाक्ये वायुकर्मणोस्सङ्ग्रहायैकदेशोदाहरणम् ।

## भावबोधः

नन्वखिलजननमरणकारणस्य मुख्यप्राणस्य कथं विष्णुजातत्वाभिधानमुपपन्नमित्यतस्ततोऽपि माहात्म्यात् विष्णोरिति न्यायविवरणं योजयति– **यत्प्राप्तिरित्याद्युक्तेति** ॥ न्यायविवरणोदाहृतां श्रुतिमुदाहरति– **तदुक्तमिति** ॥

अत्राद्ये– मुख्यप्राणस्य विष्णुजातत्वोक्तिः । द्वितीये– तत्र प्रमाणत्वेनाभिमत 'आत्मत एष प्राणो जायत' इति श्रुतिगतप्राणशब्दस्य मुख्यप्राणपरत्वसिद्ध्यर्थं सहेतुकं 'बाह्यवायुचेष्टापरत्वा-भावोक्तिरिति सूत्रक्रमः ।

## भावदीपः

शेषपूर्त्या चेष्टायामित्यादिभाष्यं व्याचष्टे ॥ **प्राणशब्दस्येति** ॥ अत्रापि सप्राणमिति षट्प्रश्न-वाक्येऽपि । बृहद्भाष्ये प्रथमाध्यायोक्तमाह ॥ **मणिरिति** ॥ ननूक्तमनादित्वश्रुतिः सयुक्तिकत्वेन प्रबलेति तत्राह ॥ **स प्राणमिति** ॥ ततोऽपि माहात्म्याद्विष्णोरिति न्यायविवरणानुरोधेन श्रुतिस्मृति तात्पर्यमाह ॥ **यत्प्राप्तिरिति** ॥ श्रुतिस्मृत्योर्माहात्म्यानुक्तेर्न्यायविवरणोक्तां श्रुतिमाह ॥ **तदुक्तमिति** ॥ **अत इति** ॥ अनादित्वश्रुतेः स्वरूपपरतयोत्पत्तिश्रुतेर्देहपरतया व्यवस्थितत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

चेष्टायां बाह्यवायौ चेत्यत्र मुख्यप्राणस्यैव पृथग्वायुक्रिययोरपि प्राणशब्दवाच्यत्वोपदेशा-द्वायुक्रिये एव 'आत्मत एष प्राणोऽजायत' इत्यत्रोत्पत्तिमत्वेनोच्येते इति नच वाच्यम् । कुतः

(वाक्यार्थमुक्तावली)

उपदेशात् 'सप्राणमसृजत' इति स्पष्टं प्राणोत्पत्त्युपदेशात् । न चोक्त्याऽपि चेष्टादिकं वाच्यम् । 'सप्राणमसृजत' इति प्राणोत्पत्तिमुक्त्वा प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियमनोऽ-लमन्नाद्वीर्यं तपोमन्त्राः कर्मेति वायुकर्मणोः पृथगुत्पत्त्यभिधानादिति सूत्रार्थं भाष्याक्षरारूढतया दर्शयति प्राणशब्दस्येत्यादिना । माहात्म्यमित्युक्तसिद्धान्तन्यायस्य भाष्यारोहं दर्शयति ॥ **स प्राणमसृजत मुख्यप्राणः परस्माच्चेति श्रुतिस्मृभ्यामित्यादिना** ॥ न च नैष प्राण उदेतीत्यत्र प्राणशब्दो भगवत्पर इति न पूर्वपक्षावकाश इति व्यर्थमधिकरणमिति वाच्यम् । एष प्राण इति विशेषणस्यान्यपरत्वेन व्यवस्थापितत्वाच्च । मध्यमत्वाविरोधात् स्पष्टमेतत् प्रमेयमुक्तावल्यामस्माभि-र्निरूपितम् । अत्राद्ये प्राणस्य आत्मन एष प्राणोऽजायत इति श्रुत्यवष्टम्भेन परमात्मजातत्वोक्ति-र्द्वितीये स्वपक्षश्रुतेर्निरवकाशत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**श्रुतिमात्रेति** ॥ युक्तिशून्यत्वं मात्रशब्दार्थः ॥ **उत्पत्त्यङ्गीकारे** ॥ वायुक्रिययोरिति शेषः ॥ **उत्पत्त्यभिधानात्** ॥ श्रुतिस्मृतिभ्यामिति शेषः ॥ **वचो** ॥ वाचकम् किं नाम न सृजेत् । सर्वं सृजेदेवेत्यर्थः । कुत इत्यत उक्तम् ॥ **येनेति** ॥ येन विष्णुना स्वसामर्थ्येनेदं प्राणादिजगद्व्याप्त-मस्तीति प्राणादप्यतिमाहात्म्यमनेनोक्तमिति ज्ञातव्यम् । वासुदेवस्येत्येतदधिकरणार्थसङ्ग्राहकं पदम् । वा गतिगन्धनयोः । 'दिव् क्रीडेति' च धातुः ।

ततश्च वाश्चासावसुश्चेति वा सर्वत्र वसतीति वा वासुर्मुख्यप्राणस्तस्य देवः सर्जनादि-क्रीडाकर्ता हि वासुदेव इति ।

## वाक्यार्थमञ्जरी

**उत्पत्त्यङ्गीकार इति** ॥ तयोरित्यनुवर्तते ॥ वायुक्रिये बाह्यवायुचेष्टारूपक्रिये न प्राणोत्पत्ति-श्रुतिप्रतिपाद्ये कुतस्तदुभयोत्पत्तेः पृथगभिधानादित्यर्थः । श्रद्धा मुख्यवायुभार्या ॥ **युक्तीति** ॥ जनकाभावरूपेत्यर्थः । नन्वखिलजनकत्वादिमहात्म्योपेतस्य कथं विष्णुजनकत्वमित्यत आह ॥ **यत्प्राप्तिरित्याद्युक्तेति** ॥ **महत्वादिति** ॥ महतो महत्वात् महतोऽपि प्राणस्य कर्ता एकराट् स्वतन्त्रः येन विष्णुना स्वशक्त्यैवेदं जगदावृतं स एष प्राणं न सृजेत् किं नाम सृजेदेवेत्यर्थः ॥

॥ इति मुख्यप्राणाधिकरणम् ॥

## ७. अथ चक्षुराद्यधिकरणम्

### सूत्रभाष्यम्

'प्राणादिदमाविरासीत्प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रित' इत्याग्निवेश्यश्रुतौ ।

'यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् ।
यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत्' इति च युक्तिर्भारते ।

'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः ।
न परः कश्चिदाश्रित्य वर्तते परमो यतः' इति पैङ्गिश्रुतिः । अत आह–

॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥

चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव । 'सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति' इति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात् ।

'सर्वकर्ताऽपि सन्प्राणः परमाधारतः स्थितः ।
कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयम् ।
अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।
अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ।
अनन्येश्वरता प्राणे तदन्येश्वरवर्जनम् ।
यतो विशेषवाक्येन ह्रियते समतावचः' ।

'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ५-७-२३) 'नान्यदतोऽस्ति द्रष्टा' (बृ.उ.५-८-१२) त्यादिवचनयुक्तयश्चादिशब्दोक्ताः ।

### तत्त्वप्रदीपिका

अत्र संशयोत्थापकप्रथमवाक्यं प्रकरणबलात्प्राणगोचरं प्रतिपद्यते । श्रीपतित्वादीनां चासाधारणहेतूनामनुपलम्भात् । जगत्कर्तृत्वादिकं तु कथञ्चिदस्मिन्योजयन्त्य एवञ्जातीयका

(तत्त्वप्रदीपिका)

नैकाश्श्रुतय उदाह्रियमाणा नारायणादानन्तर्यमस्यैवेति ज्ञापयन्ति । अत एव सर्वस्यान्यस्येश्वरत्वं प्राणस्य प्रकटमनुवर्ण्य परमेश्वरद्वयप्राप्त्यनुपपत्त्याऽवान्तरेश्वरत्वं निगद्यते ।

'अवरा दुःखसम्बन्धाज्जीवा एव प्रकीर्तिताः ।
नित्यनिर्दुःखरूपत्वात्परा श्रीरेकलैव तु ॥
दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते ।
अनन्याधीनरूपत्वादसमाधिकसौख्यतः ॥
तत्तन्त्रत्वाच्च सर्वस्य विष्णुः परतमो मतः ।
अभावादन्तराऽन्यस्य त्विहैकार्थौ तरसमौ' ॥ इति सत्तत्वे ।

'द्वावत्मानौ हि वेदेषु द्वौ प्राणौ द्वौ च चेतनौ ।
अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ ॥
तदन्ये चेतनास्सर्वे प्राणा आत्मान एव च ।
अज्ञानाभिभवस्पृष्टास्तस्मात्ते ह्यधमाश्श्रुताः ।
मध्यमो वायुरेवैक उत्तमः केवलो हरिः' ॥ इति ब्रह्माण्डे ।

## तत्त्वप्रकाशिका

अत्र जगत्कारणे हरौ श्रुतिसमन्वयसिध्यर्थं मुख्यप्राणविषय श्रुतिविरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । जगत्कारणे ब्रह्मण्युक्तः श्रुतिसमन्वयो मुख्यप्राणविषयश्रुतीनां विरोधेनाप्रामाण्ये अयुक्तः स्यादिति स निराकार्यः । प्रकृतो मुख्यप्राण एवात्र विषयः । स्वतन्त्रः परतन्त्रो वेति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥ प्राणादिति ॥ श्रुतौ प्राणस्य स्वातन्त्र्यं प्रतीयते इति शेषः । उपाश्रयेत् तस्मात्प्राणः स्वातन्त्र्येण सर्वाश्रय इति शेषः । श्रुतिः पारतन्त्र्यं वक्तीति शेषः । मुख्यप्राणः स्वतन्त्र एव । न प्राणः किञ्चिदाश्रित इति श्रुतेः । न च पारतन्त्र्येऽपि श्रुतिरस्तीति तद्विरोधः । अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेन तस्यानन्याश्रयत्वयुक्तियुक्ततया स्वातन्त्र्यश्रुतेः प्राबल्यात् । न चोत्पत्तिमतः स्वातन्त्र्यायोगात्पारतन्त्र्यश्रुतिरपि युक्तियुक्तेति वाच्यन् । स्वातन्त्र्यवादिनो जन्मासम्प्रतिपत्तेः । तच्छ्रुतीनामपि स्वातन्त्र्य श्रुतियुक्तिविरोधेनाप्रामाण्यात् । लीलया विग्रहग्रहणोपपत्तेश्च । अतः प्रबलश्रुतिविरोधापरिहारादप्रमाणं पारतन्त्र्यश्रुतिः । अतो न नारायणस्य श्रुतिसमन्वयेन जगत्कारणत्वासिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥

(तत्त्वप्रकाशिका)

**अत इति ॥ मुख्यप्राणः परमात्माधीन एव न तु स्वतन्त्रः । तद्वशत्वेन श्रुत्युक्तत्वात् । न चोत्पत्ताविव पारतन्त्र्येऽपि काचन व्यवस्थाऽपि तु चक्षुरादिवदेव सर्वात्मना । तैः सह परमात्मवशत्वोक्तेरिति भावः । उन्नयति ऊर्ध्वं नयति ।**

**ननु स्वातन्त्र्ये युक्तियुक्तश्रुतिसद्भावान्न श्रुतिमात्रेण निर्णय इत्यत आह ॥ सर्वेति ॥ तर्हि तस्येश्वरत्वानन्येश्वरत्वश्रुतिविरोध इत्यत आह ॥ कथमिति ॥ युक्तिविरोधात् श्रुतिर्बाध्यत इति भावः । तर्हि कोऽर्थः श्रुतेरित्यत आह ॥ अवान्तरेति ॥ न केवलं युक्तिविरोधात् श्रुतेरन्यार्थता किं तु विशेषश्रुतेरपीत्याह ॥ यत इति ॥ विशेषवाक्येन 'प्राणस्यैतद्वशे सर्वम्' इत्यादिना समतावचः साधारणवाक्यं ह्रियते बाध्यत इत्यर्थः । यतोऽत उक्त एवार्थः इति शेषः । 'नान्योऽतः' इत्यनेन भगवदितरस्य स्वातन्त्र्येण द्रष्टृत्वाद्यभाव उच्यते । वचनयुक्तयो वचनानि युक्तयश्च वचनोक्ता युक्तय इति वा ।**

## गुर्वर्थदीपिका

समतया साधारण्येन प्रवृत्तवचः समतावच इति भावेनाह **साधारणवाक्यमिति** ॥

## भावबोधः

**मुख्यप्राणविषयश्रुतीति** ॥ पूर्वाधिकरणोक्तप्राणस्योत्पत्तिरिह पूर्वपक्षे स्वातन्त्र्यादाक्षिप्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **स्वतन्त्र इति** ॥ अत्र मुख्यप्राणः किं स्वतन्त्रः परतन्त्रो वेति चिन्ता । तदर्थं तत्पारतन्त्र्यश्रुतिः किं प्रबलस्वातन्त्र्यश्रुतिविरुद्धा न वेति । तदर्थं प्राणस्याखिल-जगच्चेष्टकत्वलक्षणमाहात्म्यरूपयुक्तिरवान्तरेश्वरत्वविरोधिनी भवत्युत न भवतीति । तदर्थं प्राणस्य ततोऽप्यतिमाहात्म्यवद्विष्ण्वधीनत्वे विशेषप्रमाणं नास्त्युतास्तीति । तदर्थं तस्य परमात्माधीनत्वं सर्वात्मना चक्षुरादिसाम्यं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं प्राणस्य जीवप्रयोजकत्वकारणमस्त्युत नास्तीति । यदाश्रयादस्य चेष्टेति भाष्योक्तयुक्तिमाह– **अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेनेति** ॥ अनेनेत्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरिति न्यायविवरणे आदिपदं यदाश्रयस्य चेष्टेति प्रमाणपरम् । उत्पत्तिपदं 'पारतन्त्र्यस्याप्युपलक्षकम्' इत्यनुव्याख्यानोक्तमाहात्म्यरूपो न्याय अधिकरणद्वयसम्बन्धित्वेन युगपदेव विवृत इत्युक्तं भवति । 'स्थूलत्वेनोदेति' इत्युत्पत्तिश्रुतेः

(भावबोधः)

सावकाशत्वं चाह– **लीलयेति** ॥ सूत्रे 'तु' शब्द 'एवा'र्थकः । वदित्यनन्तरं परमात्मवश इति शेषः । इत्यभिप्रेत्य प्रवृत्तं चक्षुरादिवदित्यादिभाष्यं व्याचष्टे– **मुख्यप्राण इति** ॥ **चक्षुरादिवदेवेति** ॥ अनेन सूत्रे यथाश्रुतोऽप्येवकारार्थकतुशब्दान्वयः । भाष्ये चक्षुरादिवदेवेत्यप्येवकारसम्बन्ध इत्युक्तं भवति । सर्वकर्ताऽपीत्यादिभाष्योदाहृतं वचनम्–

'महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट्'

इति न्यायविवरणोदाहृतवचनोपलक्षकम् ॥ **युक्तिविरोधादिति** ॥ उभयोरपि पराधीनत्व-प्राप्तेश्चान्योन्यानुरोधे तु न सर्वैश्वर्यमित्युक्तरीत्या 'यतो नैवेश्वरद्वयम्' इत्युक्तयुक्तिविरोधादित्यर्थः ।

## भावदीपः

**प्राणस्य स्वातन्त्र्यं प्रतीयत इति शेष इति** ॥ यद्यपि नैव प्राण उदेतीति श्रुतौ 'अवरा दुःखसम्बन्धाज्जीवा एव प्रकीर्तिताः । नित्यनिर्दुःखरूपत्वात्पराश्रीरेकधैव तु । दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यत' इति सप्तमे गीतातात्पर्योक्तस्मृतिनिर्णीतमध्यमत्वरूपमुख्यप्राणलिङ्गमिव प्राणादिदमिति श्रुतौ मुख्यप्राणलिङ्गं नास्ति । तथापि प्राणादिदमिति श्रुतिशेषे भाष्य-कृद्वचनसामर्थ्येन मुख्यप्राणलिङ्गकल्पनात् । न परब्रह्मपरः प्राणशब्द इति चन्द्रिकोक्त्या प्राणपरत्वं बोध्यम् । तत्त्वप्रदीपे तु प्राणशब्दस्य विष्णौ समन्वितत्वेऽपि अत्र श्रीपतित्वादिलिङ्गानामभावात् जगत्कारणत्वादेः प्राणेऽपि कथञ्चिद्योजनीयत्वात् यत्राविरोधस्तत्रान्योऽप्युच्यते । यत्र विरोधः तत्र ब्रह्मैवोच्यत इति नियमान्मुख्यप्राणपरोऽयं प्राणशब्द इत्युक्तम् । सर्वस्यैकेत्यादिवाक्यशेषमनुरुध्याह ॥ **तस्मादित्यादि** ॥ इत्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरिति पूर्वाधिकरणन्यायविवरण-मत्रापि योज्यम् । तत्रादिपदेन यदाश्रयेत्यादिभाष्योक्तवचनं ग्राह्यमित्युपेत्य माहात्म्यशब्दार्थं वदन्नुक्तशङ्कानिरासे यदाश्रयादिति भाष्याभिप्रेतं हेतुमाह ॥ **अखिलेति** ॥ अस्येत्यस्यार्थोऽ-खिलजगदिति । मुख्यप्राणस्य नोत्पत्तिरिति न्यायविवरणशेषं पूर्वाधिकरणेन परिहृतत्वशङ्कानिवर्त-कतया व्याचष्टे ॥ **न चोत्पत्तिमत इत्यादिना** ॥ प्राणजन्मश्रुतेरपि गौण्यसम्भवादित्यादि-वियत्त्रयोक्तयुक्तियुक्ततया प्राबल्यमुपेत्याह ॥ **लीलयेति** ॥ एतेन प्राणस्वातन्त्र्यश्रुतिप्राबल्यकथनेन यद्भूमाधिकरणे प्राणाद्विष्णोर्भूयस्त्वमुक्तं तदप्याक्षिप्तं बोध्यम् ॥ **अत इति** ॥ सयुक्तिकत्वा-

(भावदीपः)

प्रबलेत्यर्थः । सूत्रे **श्रेष्ठ** इत्यनुवृत्तिः । दृष्टान्तोक्त्यैव साध्यहेत्वोर्लाभ इति भावेन भाष्यं व्याचष्टे ॥ **मुख्यप्राण इति** ॥ एवेत्यस्य व्याख्या न त्वित्यादि ॥ **श्रुतीति** ॥ 'प्राणः परवशे स्थितः' इति श्रुत्युक्तत्वादित्यर्थः । भाष्ये साध्योक्तिर्हेतूक्तेरप्युपलक्षणमिति भावः । तदुक्तिश्च यतो विशेष-वाक्येनेति वक्ष्यमाणोपयोगितयेति ध्येयम् । चक्षुरादिवदित्येतत्सर्वं ह्येवैतदित्यादिभाष्येणाप्यन्वेतीति भावेन सौत्रतुशब्दमेवार्थमुपेत्य तद्व्यावर्त्यं व्यञ्जयन् सर्वमित्यादिभाष्यशेषार्थमाह ॥ **न चोत्पत्ता-विवेति** ॥ एवेत्यस्य व्याख्या **सर्वात्मनेति** ॥ यद्वा तद्वशत्वेनैव शंसनादिति भाष्यांशस्यार्थ-स्तद्वशत्वेनेति । अवशिष्टपूर्वभाष्यांश भावार्थः न चेत्यादि ॥ **श्रुतिविरोध इति** ॥ प्राणादि-दमाविरासीदिति श्रुतिविरोध इत्यर्थः । स्मृतौ स मुख्यप्राणः अन्यथा स्वतन्त्रः कथमेव स्यात् कुत इत्यतो यत इत्यर्थः । अस्याः युक्तेः एतेन मातरिश्वा व्याख्यात इत्यत्र विवृतत्वादत्र पुनर्विवरण-मकृत्वा तात्पर्यमाह ॥ **युक्तीति** ॥ बाध्यते अर्थान्तरपरा नीयते इत्यर्थः । इत्यादिनेत्यादिपदेन सर्वं ह्येवैतदित्यादेर्ग्रहः । श्रुत्युक्तेः प्रकृतोपयोगं दर्शयति ॥ **नान्योऽत इति** ॥ **वचनोक्ता युक्तय इति** ॥ ईश्वरद्वयायोगान्मध्यमत्वाद्विशेषवाक्येन सामान्यवाक्यस्य नेयत्वादन्यस्य स्वातन्त्र्ये द्रष्टृत्वा[illegible]-भावादिति युक्तय इत्यर्थः ।

## अभिनवचन्द्रिका

**अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेनेति** ॥ तस्य मुख्यप्राणस्य अखिलजगच्चेष्टकत्व-माहात्म्यवत्त्वेन सिद्धा याऽनन्याश्रयत्वयुक्तिः, तद्युक्ततया स्वातन्त्र्यश्रुतेः प्राबल्यादित्यर्थः । **जन्माऽसम्प्रतिपत्तेरिति** ॥ ननु यथा स्वातन्त्र्यवादिनः जन्माऽसंप्रतिपन्नं तथा इतरस्यापि अखिलचेष्टकत्वमसंप्रतिपन्नमेवेति स्वातन्त्र्यश्रुतेरपि सयुक्तिकत्वाभावेन प्राबल्याभावात् न पारतन्त्र्यश्रुतिबाधकत्वमिति चेत्, न । सिद्धान्तिना प्राणस्य सकलजगच्चेष्टकत्वानङ्गीकारात् ॥ **अतो नारायणस्येति** ॥ ननु यथा पारतन्त्र्यश्रुत्यप्रामाण्येऽपि प्राणस्वातन्त्र्यश्रुतिप्रामाण्यात्प्राणस्य स्वातन्त्र्यं तथा विष्णोर्जगत्कारणत्वश्रुतिप्रामाण्यसंभवात् भवेदेव विष्णोर्जगत्कारणत्वनिश्चयः । अन्यथा मुख्यप्राणस्वातन्त्र्यनिश्चयोऽपि न स्यादिति चेत्, न । एतच्छ्रुत्य प्रमाण्ये एतच्छ्रुतिसमन्वयद्वारा प्राणनियामकत्वसिद्ध्यभावापत्त्या स्वाधीनप्राणकारणत्वं न स्यात् । ततश्च सर्वकारणत्वमयुक्तं स्यादित्यत्र तात्पर्यात् । एवमेवं जातीयके सर्वत्र द्रष्टव्यम् ॥ **कर्तृप्रयोज्यत्वाऽप्रयोज्यत्वेति** ॥

(अभिनवचन्द्रिका)

यद्यपि इन्द्रियाभिमानिनो देवा जीवादुत्तमाः, तथापि ईश्वराज्ञया जीवकार्ये करणत्वस्य स्वीकृतत्वेन स्वेच्छया स्वीकृतसारथ्यस्य कृष्णस्य पार्थाधीनत्ववत् ईश्वराज्ञया जीवाधीनत्वं, मुख्यप्राणस्य तु ईश्वरनियोगाभावात् न कर्तृनियोज्यत्वमिति द्रष्टव्यम् ।

पूर्वपक्षस्तु – स्वतन्त्र एव मुख्यप्राणः 'न प्राणः किञ्चिदाश्रितः' इति श्रुतेः । न च पारतन्त्र्यश्रुतिविरोधः । स्वातन्त्र्यसाधकाऽखिलजगच्चेष्टकत्वयुक्तियुक्तत्वेन स्वातन्त्र्यश्रुतेर्बलवत्त्वात् । न च उत्पत्तिमत्त्वयुक्तियुक्तत्वेन पारतन्त्र्यश्रुतिरपि बलवतीति वाच्यम् । स्वातन्त्र्यवादिनो जन्माऽसंप्रतिपत्तेः । जन्मश्रुतीनामपि एतच्छ्रुतिविरोधेनाऽप्रामाण्यात् । प्रामाण्येऽपि लीलया विग्रहग्रहणसंभवेन तस्य पारतन्त्र्यसाधकत्वाभावेन पारतन्त्र्यश्रुतेः सयुक्तिकत्वाभावः । अतः प्रबलश्रुतिविरोधाऽपरिहारादप्रमाणं पारतन्त्र्यश्रुतिः । अतो न नारायणस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति ।

सिद्धान्तस्तु – चक्षुरादिवत् मुख्यप्राणः परमात्माधीन एव । 'सर्वं ह्येवै तत्परमवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च' इति चक्षुरादिभिः सहैव तद्वशत्वाभिधानात् मुख्यप्राणो न स्वतन्त्रः, भगवत्प्रेरणामन्तरेण दर्शनादिशक्तिविधुरत्वात् इति युक्तेश्च । न चाऽसिद्धिः नान्यदतोऽस्ति' इति श्रुतिसिद्धत्वात् । यद्यपि प्राणः सर्वकर्ता, तथापि ईश्वराधीनोऽभ्युपगन्तव्यः । अन्यथा प्राण एव न स्यात् । तथा हि – अस्ति तावत् विष्णुः परमेश्वरः स्वतन्त्रः । बहुप्रमाणसिद्धत्वात् न तस्यापलापः । न च स्वतन्त्रद्वयं सम्भवति, जगदुदयाद्यसम्भावापातात् । ततश्च भगवदन्य एव स्वतन्त्रोऽपलपनीय इति प्राणस्य स्वातन्त्र्ये तदभावः प्राप्नोतीति । ननु चक्षुरादिवदेवेश्वराधीनत्वं मुख्यप्राणस्य, तर्हि तस्य अवान्तरेश्वरत्वाद्यसम्भवेन स्वातन्त्र्यश्रुतिर्व्यर्था स्यादिति चेत्, न । सर्वेषामीश्वराधीनत्वसाम्येऽपि इतरेषां कर्तृप्रयोज्यत्वात् मुख्यप्राणस्य तदभावेन विशेषात् अवान्तरेश्वरत्वोपपत्तेः । अतः श्रुत्यनुरोधेन मुख्यप्राणस्येशवशत्वसिद्धेः युक्तं श्रुतिसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वाधिकरणोक्ता प्राणस्योत्पत्तिरिह स्वातन्त्र्यादाक्षिप्य समाधीयत इत्यनन्तरसङ्गतिः ॥ **स्वतन्त्र इति** ॥ अत्र मुख्यप्राणः किं स्वतन्त्र उत परतन्त्रो वेति चिन्ता । तदर्थं स्वातन्त्र्यश्रुतिः

(वाक्यार्थमुक्तावली)

किं युक्त्युपेततया निरवकाशोत युक्त्युपेतपारतन्त्र्यश्रुतिविरोधादवान्तरेश्वरत्वाभिप्रायेण सावकाशेति । तदर्थं तस्य चक्षुरादिवदीश्वराधीनत्वेऽवान्तरेश्वरत्वं नाप्यसम्भवत्युतेश्वराधीनत्वेऽप्य-करणत्वविशेषेण तत्सम्भवतीति । यदाश्रयादस्य चेष्टेति तदित्यत्रास्येति प्राणातिरिक्तस्य सर्वस्येत्यर्थः । स्वव्याख्यानुसरणस्यायुक्तत्वादिति भावः । यथा प्राण इति प्राणदृष्टान्तघटनाय मध्येऽध्याहरति ॥ **तस्मिन्निति** ॥ एकाश्रयो मुख्याश्रयः । स्वतन्त्राश्रय इत्यर्थः । महात्म्यमित्युक्त-पूर्वपक्षन्यायप्रदर्शकस्य यदाश्रयादिति भाष्यस्य व्यावृत्यकथनपूर्वं भावमाह ॥ **न च पारतन्त्र्येऽपीति** ॥ **स्वातन्त्र्यायोगादिति** ॥ पराधीनविशेषलाभस्यैव स्वातन्त्र्यादिति भावः ॥ **जन्मासंप्रतिपत्तेरिति** ॥

ननु पारतन्त्र्यवादिनोऽपि स्वेतरसमस्तचेष्टकत्वासंमतेर्नश्रुतेर्युक्तियुक्तत्वं यदि जगच्चेष्टकत्वं श्रुतिसिद्धं तर्हि जन्मापि श्रुतिसिद्धं यदि जन्मश्रुतेरप्रामाण्यं तर्हि जगच्चेष्टकत्वश्रुतेरपि तथात्वमित्यतो जन्मश्रुतेः सावकाशत्वेन दौर्बल्यमाह ॥ **लीलयेति** ॥ ननु प्राणशब्दसमन्वयोक्तेरग्रिवंशयश्रुतौ भगवत्पर एव । न च तत्र कारणवशादमुख्यतः प्राणपरत्वमिति युक्तम् । यत्र विरोधस्तत्र ब्रह्मे-वेत्युक्तत्वेन स्वातन्त्र्यानुपपत्तौ ब्रह्मैवेत्यङ्गीकार्यत्वादिति चेन्न । मुख्यप्राणपरस्पष्टभारतानुगुण्येन मुख्यप्राणस्य स्वातन्त्र्ये विरोधाभावेन ब्रह्मपरत्वासम्मतेरिति विवक्षितत्वात् ।

ननु तथापि पूर्वोत्तराधिकरणे विष्णोः प्राणादप्यतिशयेन माहात्म्येन सिद्धान्तितत्वादिति न पूर्वपक्षावकाश इति चेन्न । अत्र सोऽन्यं कथमुपाश्रयेदित्युक्त्या माहात्म्यातिशयस्या-सिद्धिव्युत्पादनादिति भावः । सूत्रे श्रेष्ठ इत्यस्ति । तुशब्दोऽवधारणे श्रेष्ठो मुख्यप्राणश्चक्षुरादिवदेव चक्षुरादि यथा परमात्माधीनं तथा परमात्माधीन एव न तु स्वतन्त्र इति भावेन प्रवृत्तं परमात्मवश एवेत्यन्तभाष्यं व्याचष्टे ॥ **मुख्यप्राण इति** ॥ तद्धेतुत्वेन शिष्टेरित्यंशं योजयति ॥ **तद्वशत्वेति** ॥ प्राणः परवशे स्थित इति श्रुत्युक्तत्वादित्यर्थः । मुख्यप्राणोऽपि चक्षुरादिवदशेषपरमात्मवशः न तूत्पत्तौ यथा प्रकृतितः सूक्ष्मत्वं शरीरतः स्थूलत्वमेव स्वरूपतः स्वातन्त्र्यमौपाधिकमस्वातन्त्र्यमिति व्यवस्था किं तु सर्वात्मनेति भावेन चक्षुरादिवदिति सूत्रांशव्याख्यापरं तदेव भाष्यं व्याचष्टे ॥ **न चोत्पत्तावेवेति** ॥ सर्वं ह्येतदित्यादि व्याचष्टे ॥ **तैस्सहेति** ॥ **युक्तिविरोधादिति** ॥ उभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुविरोधे अननुरोधे तु न सर्वैश्वर्यमिति न्यायविवरणेनोक्तरीत्या यतो नेश्वरद्वयमित्युक्तविरोधादित्यर्थः । समतावचः साधारणवाक्यमिति । समसमानशब्दयोः पर्यायत्वा-

त्समता सामान्यमिति च पर्यायौ । तथा च सामान्यवचः साधारणवाक्यमिति पर्यवस्यतीति भावः । ईश्वरत्वानन्येश्वरत्वशब्दयोः सावकाशत्वात्साधारण्यं बोध्यम् ।

## वाक्यार्थविवरणम्

भाष्ये यथा प्राण इत्यनुवादबलादध्याहारेण विधायकवाक्यं दर्शयति ॥ **उपाश्रयेत्तस्मादिति** ॥ तथा च यथा प्राणः स्वातन्त्र्येण सर्वाश्रयः, तथा राजेति भाष्यार्थः । ननु स्वातन्त्र्यवादिनस्तव जन्मासम्प्रतिपत्तिः । स्थूलत्वेनोदेतीत्याद्युत्पत्तिश्रुतीनां सत्त्वादित्यत आह ॥ **तच्छ्रुतीनामिति** ॥ प्रामाण्यमङ्गीकृत्यापि लीलाविग्रहग्रहणपरोत्पत्तिश्रुतिरिति सावकाशेत्याह ॥ **लीलयेति** ॥ भाष्येऽन्यथा प्राणस्य परमात्माधीनत्वाभावे । स प्राणः कथमेव स्यात् कस्याश्रयेण प्रवृत्त्यादिकं कुर्यादित्यर्थः । ननु तस्येश्वरत्वादेव नान्याश्रयापेक्षेत्यतस्तत्र युक्तिमाह ॥ **यत इति** ॥ नन्वनेन प्राणस्यैतत् 'न प्राणाः किञ्चिदाश्रित' इतीश्वरत्वानन्येश्वरत्वाभिधायकश्रुतेः का गतिरित्युक्तेत्यत आह ॥ **युक्तीति** ॥ यतो नैवेत्युक्तयुक्तीत्यर्थः ॥ **बाध्यते** ॥ प्रतीतार्थात् प्रच्याव्यते । भाष्ये अतोऽवान्तरेश्वरत्वेन मध्येश्वरतामाहुरित्यर्थः ॥ **तदन्येश्वरवर्जनात्** ॥ भगवदन्येश्वरवर्जनादित्यर्थः । लक्ष्म्याऽपि भगवत्कोटौ प्रवेश इति ध्येयम् ॥ **वाक्यम्** । प्राणस्येश्वरत्वानन्येश्वरत्वप्रतिपादकं वाक्यम् ॥ **भगवदितरस्य** ॥ मुख्यप्राणादिजगतः । वचनयुक्त्योर्द्वित्वात् कथं बहुवचनमत आह ॥ **वचनानीति** ॥ मध्यमपदलोपी वा समास इत्याह ॥ **वचनोक्ता इति** ॥

## वाक्यार्थमञ्जरी

विरोधव्यञ्जनायाह ॥ **तस्मादिति** ॥ तथा च प्राणोत्पत्त्यनङ्गीकारे आत्मन एष प्राणो जायत इत्यादिश्रुतिविरोध इत्यत आह ॥ **तच्छ्रुतीनामिति** ॥ **लीलयेति** ॥ तथा चोत्पत्त्यङ्गीकारे न स्वातन्त्र्यहानिरिति भावः । चक्षुरादिवत्तु यथा चक्षुरादीशाधीनं तथा प्राणोऽपीशाधीन एव न स्वतन्त्रः कुत; तत्सहतैश्चक्षुरादिभिः सहशिष्ट्यादिभ्यः ईशवत्त्वाभिधानादिहेतोरित्यर्थः । युक्तिविरोधादिति । उभयोरप्यन्योन्यानुरोधेन न सर्वैश्वर्यमित्युक्तरीत्येश्वरद्वयासम्भवयुक्तिविरोधादित्यर्थः । बाध्यते प्रतीतार्थत्वात् ।

## सूत्रभाष्यम्

**॥ ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ॥ १२ ॥**

इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वाच्च तस्यान्येभ्य उत्तमत्वं युज्यते । माण्डव्य-श्रुतिश्च– 'तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षत' इति । ॥ इति चक्षुराद्यधिकरणम् ॥

## तत्त्वप्रकाशिका

यदि चक्षुरादिवदेवेश्वराधीनत्वं मुख्यप्राणस्य तर्हि तस्यावान्तरेश्वरत्वाद्यसम्भवेन स्वातन्त्र्य श्रुतिर्व्यर्था स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **अकरणत्वाच्चेति** ॥ चशब्दश्चक्षुरादीनां करणत्वसमुच्चयार्थः । प्राणस्य चक्षुरादीनां चेश्वरवशत्वसाम्येऽपि कर्तृप्रयोज्यत्वाप्रयोज्यत्व वैलक्षण्येनातिशयोपपत्तेर्नोक्तदोषः । एतच्च श्रुत्युक्तत्वात्सिध्यतीति भावः । अतः श्रुत्यविरोधेन मुख्यप्राणस्येश्वरवशत्वसिद्धेर्युक्तं श्रुतिसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् ।

## गुर्वर्थदीपिका

प्राणस्य चक्षुरादीनामित्यत्र कर्तृप्रयोज्यत्वं नाम देहाभिमानिजीवाख्यकर्तृप्रयोज्यत्वम् । तच्च मनश्चक्षुःपाणिपादादीनां जीवेच्छया प्रवृत्तिदर्शनेन तदनिच्छायामप्रवृत्तिदर्शनेन चक्षुरादिकरणा-नामेवास्ति । श्वासरूपवायोस्तु जीवानियम्यत्वान्न तत्करणत्वम् । अत एव तस्यावान्तरेश्वरत्व-रूपस्वातन्त्र्यं चेति भावः ।

## भावबोधः

इतरेषां प्राणानां करणत्वादिति भाष्यस्योत्सूत्रितत्वं निरस्यति **चशब्द इति** ॥ **कर्तृप्रयोज्येति** ॥ सुषुप्तौ प्रयत्नाभावे चक्षुरादीनां व्यापारादर्शनाज्जीवप्रयोज्यत्वं मुख्यप्राणस्य तु तदापि व्यापारदर्शनात् तदप्रयोज्यत्वमिति भावः ।

अत्राद्ये– मुख्यप्राणस्य चक्षुरादिवदेव परमात्माधीनत्वोक्तिः । द्वितीये– चक्षुरादिसाम्य-व्यवच्छेदाय प्राणस्य जीवाकरणत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

इतरेषामित्यादिभाष्यं हृदि कृत्वा सूत्रार्थमाह ॥ **च शब्द इति** ॥ करणत्वशब्दार्थः कर्तृप्रयोज्यत्वेति । तथा हीत्यादिशेषार्थः । एतच्चेति । करणत्वादिरूपवैलक्षण्यमित्यर्थः ॥ **अत इति** ॥ स्वातन्त्र्यश्रुतेरवान्तरेश्वरपरत्वादिना सावकाशत्वात् पारतन्त्र्ये विशेषश्रुतिभावाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

इतरेषां कारणत्वादिति भाष्यस्योत्सूत्रितत्वं निरस्यति ॥ **च शब्द इति** ॥ सूत्रे श्रेष्ठस्य चक्षुरादीनामिति च वर्तते इति भावेनाह ॥ **प्राणस्येति** ॥ ईशशब्दसाम्येऽपीति शङ्कानुवादः । करणत्वादिशब्दार्थः कर्तृप्रयोज्यत्वेत्यादि । अन्येभ्य उत्तमत्वं युज्यते इति भाष्यवाक्यानन्तरमतः स्वातन्त्र्यश्रुतिर्व्यर्थेत्युक्तदोषो नेत्यध्याहारेण व्याचष्टे ॥ **अतिशयोपपत्तेर्नोक्तदोष इति** ॥ एतच्च **श्रुत्युक्तत्वादिति** ॥ एतेन यस्मात्तथा दर्शयति श्रुतिरतो न दोष इति सूत्रखण्डार्थ उक्तो भवति । सुषुप्तौ प्रयत्नाभावे चक्षुरादीनां व्यापारादर्शनाज्जीवप्रयोज्यत्वं मुख्यप्राणस्य तु तदपि व्यापारदर्शनात्तदप्रयोज्यत्वं चेश्वराज्ञया जीवप्रयत्नानन्तरं तत्कार्यकर्तृत्वमिति ज्ञेयम् । अत्राद्यस्वपक्षे साधकोक्तिर्द्वितीये परप्रमाणस्य सावकाशत्वप्रदर्शनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**असम्भवेनेति** ॥ न हि चक्षुरादीनामवान्तरेश्वरत्वमस्तीति भावः ॥ **स्वातन्त्र्यश्रुतिः** ॥ 'न प्राणः किञ्चिदाश्रित' इति श्रुतिः सूत्रभाष्योक्ताकरणत्वस्यासिद्धिपरिहारार्थं तन्निर्वचनमाह ॥ **कर्तृप्रयोज्यत्वेति** ॥ कर्तृप्रयोज्यत्वं हि करणत्वम् । यथा कुठारादेः । चक्षुरादिकं च देवदत्तादिकर्तृप्रेर्यतयाऽनुभवसिद्धम् । एतादृशं च करणत्वं मुख्यप्राणस्य नास्तीति चक्षुरादिवैलक्षण्यसद्भावेनावान्तरेश्वरत्वोक्तिसम्भवेन स्वातन्त्र्योक्तिर्युक्तेत्याशयः ॥ **एतच्चेति** ॥ चक्षुरादेर्मुख्यप्राणस्य च कर्तृप्रयोज्यत्वरूपं करणत्वं तदप्रयोज्यत्वरूपाकरणत्वं चेत्यर्थः ।

## वाक्यार्थमञ्जरी

प्राणस्याकरणत्वात्कर्त्रप्रयोज्यत्वादिन्द्रियाणां च तत्प्रयोज्यत्वान्न दोषः । अवान्तरेश्वरत्वाभावदोषो नास्ति कुतः हि यस्मात्तथा प्राणस्याकरणत्वमिन्द्रियाणां करणत्वं च श्रुतिर्दर्शयतीत्यर्थः ॥ **कर्तृप्रयोज्येति** ॥ सुषुप्तौ प्रयत्नाभावेन चक्षुरादीनां व्यापारादर्शनाज्जीवप्रयोज्यत्वं मुख्यप्राणस्य तु तदापि व्यापारदर्शनात्तदप्रयोज्यत्वमिति भावः ।

॥ इति चक्षुराद्यधिकरणम् ॥

## ८. अथ पञ्चवृत्त्यधिकरणम्

### सूत्रभाष्यम्

'सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान इति । अथ प्राणो वाव सम्राट्' इति कौण्डिन्यश्रुतिः । 'प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वत' इति युक्तिर्वायुप्रोक्ते । 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्चवायवः । स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम्' इति च गौपवनश्रुतिः । अतो वक्ति–

**॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३ ॥**

'अथ पञ्चवृत्त्यैतत्प्रवर्तते प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समान इति । तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानो यथा ह वै मनः पञ्चधा व्यपदिश्यते मनोबुद्धिरहङ्कारश्चित्तं चेतनेति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनैवम्' इति ।

॥ इति पञ्चवृत्त्यधिकरणम् ॥

### तत्त्वप्रदीपिका

'यद्वै प्राणिति स प्राणः यदपानिति सोऽपान' इत्यादिश्रुतिः । 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति' इति च । व्यानो वीर्यवत्कर्महेतुः, उदान उत्क्रान्तिहेतुः, समानः सर्वाङ्गेषु रसनायकः ।

'प्राणापानाविडायां च पिङ्गलायां च वर्ततः ।
व्यानस्सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः ।
सर्वत्रैव समानस्तु सर्वं चरति सर्वश' इति भारते ॥

सङ्कल्पविकल्पात्मकं मनः । निश्चयात्मिका बुद्धिः । अहङ्कारोऽभिमानः ।

'चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणम् ।
बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयत' ॥ इति शब्दनिर्णये ।

## तत्त्वप्रकाशिका

अत्र जगत्कारणे हरौ श्रुतिसमन्वयसिद्ध्यर्थं प्राणादिविषयश्रुतीनां विरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । विष्णोर्जगत्कारणत्वे कथितः श्रुतिसमन्वयः प्राणादिविषयश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः स्यादित्यसौ निराकार्यः । मुख्यप्राणप्रसङ्गसन्निधापिताः प्राणादयोऽत्र विषयः । किं मुख्यप्राणस्य दासा उत तत्स्वरूपाणीति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति **॥ सर्व इति ॥** श्रुतिर्दासत्वं स्वरूपत्वं च वक्तीति शेषः । तत्र प्राणादयो मुख्यप्राणदासाः । 'सर्वे वा एते मुख्यदासाः' इति श्रुतेः । न च श्रुत्यन्तरविरोधः । प्राणादयो मुख्यप्राणदासाः । तदाज्ञया कर्मकारित्वात् यो यदाज्ञया कर्म करोति स तद्दासः यथा लोक इति युक्तियुक्तत्वात् । तथा च श्रुतिः । 'एष प्राण इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते' इत्यादि । मुख्यप्राणस्वरूपाणि चैतानि 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः' इति श्रुतेः । न च सयुक्तिकश्रुतिविरोधः । प्राणादयो मुख्यप्राणरूपाण्येव व्यक्तसद्गुणत्वादिति युक्तियुक्तत्वात्स्वरूपत्वश्रुतेरपि 'पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयति । तस्मादेताः सप्तार्चिषो भवन्ति । नाडीसहस्राण्यासु व्यानश्चरत्यथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापं पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्य' इत्यादेः । न चेतद्व्यक्तसद्गुणत्वं दासेषु सम्भवति । उभयत्रापि तद्भावे स्वामिभृत्यभावानुपपत्तेः । एवं च श्रुतिद्वयस्यापि समानबलत्वेन विरुद्धत्वाच्चाप्रामाण्यम् । न चोभयं युक्तम् । वस्तुविकल्पाभावादिति । अतो न विष्णौ जगत्कारणे श्रुतिसमन्वयो युक्त इति भावः । सिद्धान्तयत्सूत्रमवतार्य तस्य स्पष्टार्थत्वात्तदुपात्तश्रुतिमेवोदाहरति **॥ अत इति ॥** न केवलं प्राणादयो मुख्यदासा एवापि तु तद्वृत्तयोऽपि । न च वस्तुविकल्पप्रसङ्गः । पृथगुभयविधाभ्युपगमात् । अत एव न श्रुतीनां युक्तियुक्तानामविरोधादप्रामाण्यम् । कुत एतत् । यतो मनोदृष्टान्तेन पञ्चदासवान्पञ्चवृत्तिश्च मुख्यप्राणो व्यपदिश्यतेऽत एवेति भावः । सङ्कल्पविकल्परूपं मनः निश्चयरूपा बुद्धिः । अस्वरूपे स्वरूपमतिरहङ्कारः । स्मरणहेतुश्चित्तम् । चेतसो व्याप्तिश्चेतना । न च प्राणादीनां मुख्यदासत्वे व्यक्तसद्गुणत्वविरोधः । दासानामपि तदुपपत्तेः । न च स्वामिभृत्यभावानुपपत्तिः । मुख्यप्राणस्य ततोऽधिकव्यक्तसद्गुणतया तदुपपत्तेः । 'अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च । तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः' इति श्रुतेः । दासानुपक्रम्य सद्गुणत्वोक्तेर्न श्रुतेर्मुख्यप्राणविषयत्वम् । अतः श्रुत्यविरोधेन प्राणादिस्वरूपसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

प्राणानामकेन्द्रियाणां पादमारभ्य प्रसङ्गेऽपि प्राणापानादीनां प्रागप्रस्तुतत्वान्मुख्यप्राण प्रसङ्गसन्निधापिता इत्युक्तम्। दासत्वं स्वरूपत्वं चेत्यत्र मुख्यप्राणदासत्वमित्येकः पक्षः। प्राणादि-पञ्चकस्य मुख्यप्राणस्वरूपत्वं चेत्यपरः पक्ष इति विवेको द्रष्टव्यः। व्यक्तसद्गुणत्वादित्यत्रापानस्य पायुश्चोपस्थं च पायूपस्थं तस्मिन्प्रतिष्ठित इति प्रशब्दोक्तनियन्तृत्वाख्यो गुणः, प्राणस्य मुखनासिकाभ्यां सह चक्षुश्च श्रोत्रं च चक्षुश्श्रोत्रं द्वन्द्वैकवद्भावः तस्मिन्प्रतिष्ठते प्रकर्षेण तिष्ठत इत्युक्ततन्नियन्तृत्वाख्यो गुणः, समानस्य हुतान्न समनेतृत्वाख्यो गुणः, व्यानस्य नाडीसहस्र-नियमनाय तेषु सञ्चरणाख्यो गुणः, उदानस्योर्ध्वाधोलोकनेतृत्वाख्यो गुण इति पञ्चधा व्यक्ता-स्सद्गुणाः समीचीनगुणाः येषां ते व्यक्तसद्गुणाः तेषां भावस्तत्त्वं तस्मादित्यर्थः।

पञ्चवृत्त्येत्यत्र पञ्च वृत्तयो देवता यस्याः सा पञ्चवृत्तिः प्राणाख्या देवता तयेत्यर्थः। तद्वृत्तयोऽपीत्यत्र तद्वृत्तयः मुख्यप्राणस्य वृत्तयः वर्तयन्ति जीवस्य देहेन्द्रियपुण्यपापफलादिकमिति वृत्तिपदवाच्यानि पञ्चरूपाणीत्यर्थः। सङ्कल्पविकल्पौ रूपयतीति सङ्कल्पविकल्परूपं सङ्कल्प-विकल्पजनकमनोवस्थाविशेषः। निश्चयं रूपयतीति निश्चयरूपा निश्चयजनकमनोऽवस्थाविशेषः। अस्वरूपे स्वतन्त्रस्वरूपरहिते स्वस्मिन् स्वरूपमतिः स्वतन्त्रस्वरूपमतिर्यस्मात् सोऽहङ्कारः। संस्कारद्वारा स्मर्यमाणविषयसंसृष्टत्वरूपावस्थाविशेषः चेतना। 'मनसो वाव मनः' इत्यादेः मनोऽभिमानिस्थूलदेवात्तद्दासभूतमनोऽभिमानी कश्चिद्देवः। स्वातन्त्र्येण कोशाभिमानिराजाधि-राजवन्मनः प्रेरक एकः राजाधीनतया राजकोशरक्षकपुरुषवत्तदधीनतया मनोनियामकोऽपरः। एवमुत्तरत्रापीत्यर्थः। दासानुपक्रम्येत्यस्य 'यथा सम्राडेवाधिकृतान्विनियुंक्ते एतान्ग्रामानधितिष्ठ-स्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्त' सन्निधापयतीत्युक्त्योप-क्रमवाक्ये प्रत्येकं ग्रामाधिपतित्वेन नियुक्ताधिकारिनिदर्शनादितरप्राणानामपीषदाधिपत्यं निरूप्येत्यर्थः। सद्गुणत्वोक्तेः 'पायूपस्थेऽपानश्चक्षुः' इत्यादिना मुख्यप्राणस्य ततोऽप्यधिक-सद्गुणानामुक्तेस्तदुपरितनवाक्य एवोक्तेरित्यर्थः। एवं च 'अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च। तद्दासाः पञ्च चान्यानि प्राणाद्यास्तद्गुणैर्युताः'। इति न्यायविवरणोक्तश्रुतेः दासानुपक्रम्य सद्गुणत्वोक्तेश्च। श्रुतेः ''मुख्यस्यैव स्वरूपाणि' इति भाष्योक्तपूर्वपक्षश्रुतेः न मुख्यप्राणविषयत्वं न मुख्यप्राणमात्रविषयत्वमिति योजना। एवकारस्तु मुख्यप्राणज्यैष्ठ्यज्ञापनार्थमिति भावः।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **मुख्यप्राणप्रसङ्गसन्निधापिता इति ॥ किमिति ॥** अत्र प्राणादयः पञ्च किं मुख्यप्राणस्य दासा उत तत्स्वरूपाणीति निर्णयो न सम्भवत्युत सम्भवतीति चिन्ता । तदर्थं प्राणादेर्मुख्यप्राणस्वरूपत्वतद्दासत्वश्रुती किं परस्परविरुद्धे उत नेति । तदर्थं श्रुतिद्वयमेकविधप्राणविषयमुतोभयप्राणविषयमिति । तदर्थं प्राणाज्ञया कर्मकारिषु प्राणादिषु पायूपस्थेऽपानमित्याद्युक्तं व्यक्तसद्गुणत्वं किं न सम्भवत्युत सम्भवतीति । तदर्थं मुख्यप्राणस्वरूपाणां तद्दासानां च तारतम्येन व्यक्तसद्गुणत्वे विशेषप्रमाणं नास्त्युतास्तीति । प्राणापानादय इत्यादिभाष्योक्तयुक्तिमाह– **प्राणादय इति ॥ तदाज्ञया कर्मकारित्वादिति ॥** प्राणादीनां च कर्माणि ।

> 'प्राणापानाविडायां च पिङ्गलायां च वर्ततः ।
> व्यानः सन्धिषु सर्वत्र चोदानो ब्रह्मनाडिगः ॥
> सर्वत्रैव समानस्तु समं चरति सर्वशः ॥''

इति भारतवचनाज्ज्ञेयानि । प्राणाज्ञया कर्मकारित्वे श्रुतिमाह– **तथा च श्रुतिरिति ॥** प्राणादिपञ्चकव्यक्तसद्गुणत्वान्मुख्यप्राणवृत्तित्वमेवेति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह– **मुख्यप्राणस्वरूपाणि चैतानीति ॥** असिद्धिपरिहारार्थं व्यक्तसद्गुणत्वे प्रमाणमाह– **पायूपस्थे** इत्यादिना ॥ अतस्तदाज्ञया नित्यमिति पूर्वपक्षभाष्ये मुख्यदासत्वे युक्त्युक्तेः प्राणादिपञ्चकस्य व्यक्तगुणत्वान्मुख्यप्राणवृत्तित्वमिति न्यायविवरणे च मुख्यप्राणस्वरूपत्वे युक्त्युक्तेः श्रुत्योः समबलत्वादनिर्णयरूपपूर्वपक्षफलमाह– **एवं चेति ॥ तद्वृत्तयोऽपीति ॥** तत्स्वरूपभूता इत्यर्थः । **पञ्चदासवानिति ॥** अनेन सूत्रे 'मनोवत्' इति दृष्टान्तबलेन 'पञ्चवृत्तिः' इत्यनन्तरं पञ्चदासवानिति शेष इत्युक्तं भवति ॥ **चेतसो व्याप्तिश्चेतनेति ॥**

> 'बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयते'

इति हि वचनम् । मुख्यप्राणस्य ततोऽपि सद्गुणत्वादिति न्यायविवरणं योजयति– **मुख्यप्राणस्येति ।** न्यायविवरणोदाहृतां श्रुतिमाह– **अशेषेति ॥**

(भावबोधः)

ननु पायूपस्थेऽपानमिति सद्गुणत्वप्रतिपादकश्रुतेर्मुख्यप्राणस्वरूपविषयत्वाङ्गीकारेणैवोपपत्तौ सद्गुणद्वैविध्यं कुतः कल्प्यत इत्यत आह– **दासानुपक्रम्येति** ॥ इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त इति **दासानुपक्रम्य** तदनन्तरमेव पायूपस्थेऽपानमित्यादीनां सद्गुणत्वोक्तिरित्यर्थः ।

## भावदीपः

**प्राणादीति** ॥ अपानव्यानादिरादिपदार्थः । सङ्गतिं सूचयति ॥ **मुख्यप्राणप्रसङ्गेति** ॥ **किमिति** ॥ अत्र यद्यपि वक्ष्यमाणनिर्णयपूर्वपक्षानुरोधेन दासाः स्वरूपाणि वेति निर्णयः शक्य उताशक्य इति संशयो दर्शनीयः । तथापि भाष्ये संशयबीजश्रुतिद्वयोक्त्यनुरोधेनैवं संशयो दर्शितः । यद्वा संशयस्यैवं वा एवं वेत्येवं रूपत्वेऽपि नोभयथापि सम्भव इति पूर्वपक्षस्य उभयथापि सम्भव इति सिद्धान्तस्य चोपपत्तेरिति भावः । भाष्योक्तयुक्त्युपेतश्रुतिमूलां पूर्वपक्षकोटिं तावद् व्यनक्ति ॥ **तत्र प्राणादय इति** ॥ भाष्योक्तयुक्तिं शङ्कानिरासपूर्वं व्यनक्ति ॥ **न चेति** ॥ **कर्मकारित्वादिति** ॥ यद्वै प्राणिति स प्राणः । यदपानिति सोऽपान इत्यादिप्रथमाध्यायछान्दोग्यश्रुत्याद्युक्त्या व्यानो वीर्यवत्कर्महेतुः उदान उत्क्रान्तिहेतुः समानः सर्वाङ्गेषु रसनायक इति प्राणादीनां कर्माणि तथा तेषां स्थानानि च 'प्राणापानाविडायां च पिङ्गलायां च वर्ततः । व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः सर्वत्रैव समानस्तु समं चरति सर्वगः' इति द्वितीयस्कन्धस्थद्वितीयाध्यायतात्पर्योक्त-भारतवाक्यमुदाहृत्य तत्वप्रदीपे चन्द्रिकायां च दर्शितानि' । ''प्राणः प्रवृत्तिहेतुः स्यादपानस्तु निवर्तने । बलकर्मा तथा व्यान उदानो योगकर्मकृत् । देहेन्द्रियमनोनेता समानो न स्थितिप्रदः' इति बृहद्भाष्ये प्रथमे सप्तान्नविद्यायां प्राणादिकर्माण्युक्तानि । टीकायां अत्रानुक्तिस्तु उत्तरत्र व्यक्तसद्गुणत्वविशेषणेन व्यक्तीभविष्यन्तीत्यभिप्राया । वक्ष्यमाणव्यक्तसद्गुणत्वयुक्तेः श्रौतत्वेनास्याः युक्तेः स्मार्तत्वेन तुल्यबलत्वं नेति मन्दाशङ्काव्युदासाय स्मृतिमूलश्रुतिं चाह ॥ **तथा चेति** ॥ अत एवेतरानित्युक्तिः । तदाज्ञया कर्मकारित्वादित्यत्र श्रुतिश्चास्तीत्यर्थः । षट्प्रश्ने 'आत्मन एष प्राणो जायते' इति प्रकृतो मुख्यप्राणः इतरान्प्राणान्प्राणापानादिपञ्चवायून् पृथक्पृथगेव स्थानेषु संस्थापयतीत्यर्थः । कोट्यन्तरमाह ॥ **मुख्येति** ॥ एतानि प्राणादीनि । भाष्योक्तस्वरूपत्वश्रुतेः पूर्वोक्तसयुक्तिकदासत्त्वश्रुत्या समबलत्वायान्यत्रोक्तव्यक्तसद्गुणत्वयुक्तिसाहित्यमाह ॥ **प्राणादय इति** ॥ कथं दासेष्वनुपपद्यमानं व्यक्तसद्गुणत्वं प्राणादीनामित्यतः षट् प्रश्नवाक्योक्तं व्यनक्ति

(भावदीपः)

॥ **पायूपस्थ इति** ॥ सप्तम्यन्तमिदम् । चक्षुः श्रोत्र इति च द्वन्द्वश्च प्राणितूर्यसेनाङ्गा-नामित्येकवद्भावः ॥ **अपानमिति** ॥ प्रथमार्थे द्वितीयेतीहार्थोऽभिमतः । अग्रे प्राणादिषु चतुर्षु प्रथमादर्शनात् । मलादेरपनयनेन गुणे नापाननामा सन् प्रतिष्ठित इत्यर्थः । चक्षुःश्रोत्र मुखनासिकाभ्यां सह मुखे नासिकायां चेति यावत् । प्राणः स्वयं मुख एव श्वासादिप्राणनयनगुणेन प्राणा नामा सन् **प्रतिष्ठते** प्रतितिष्ठति । समानस्तु मध्ये प्राणापानयोर्नाभिदेश इति यावत् । प्रतितिष्ठति । स चैष हि यस्मादेतद्धुतं भुक्तमन्नं समं यथा शरीरावयवं नयति तेन समानो नामेति शेषः । तस्मादन्नस्य समीकरणादेताः सप्तार्चिषः सप्तज्ञानेन्द्रियवृत्तयो भवन्ति । आसु नाडीषु विविधं नयनाद् गुणाद् व्याननामा चरति । अथोदानस्तु एकया नाड्या सुषुम्नयोर्ध्वगतिश्चरति । स च तत्र चरन् जीवकृतपुण्येन निमित्तेन पुण्यं स्वर्गादिलोकं नयति । अत एवोर्ध्वनयनगुणादुदाननामा बहिः पृथिव्यां या धारिका देवता सा पुरुषस्थापानं देहे वर्तमानमपानमवष्टभ्य शरीरान्तर्वर्तत इत्यर्थः । षट्प्रश्ने टीकायामेतदधिकरणसिद्धान्तसिद्धं वर्गद्वयमुपेत्याधिष्ठानाधिष्ठातृभावेन वर्गद्वयपरतया व्याख्यानेऽपीहैतत्पूर्वपक्षी स्वरूपमात्रपरत्वं मन्यत इति तत्परतयेदं वाक्यमत्रोक्तमित्यदोषः । अत एव पूर्वं दासपरत्वेनाप्युक्तिः । तथा वैषम्यनैर्घृण्येन सापेक्षत्वादित्यत्र द्वितीये पूर्वं तु बादरायणो हेतुव्यपदेशादित्यादौ तृतीये पुण्येनेति श्रुतेः पादान्त्यप्राणनयन्यायेनेश्वरपरत्वेन भाष्यकृता-दाहृतत्वेऽप्यविरोधेऽन्यपरत्वस्यापि भावात् प्राणपरतयैतद्वाक्योक्तिरविरुद्धा ॥ **एतदिति** ॥ मलापनयनश्वासप्राणनादिरूपं व्यक्तसद्गुणत्वमित्यर्थः । सिद्धान्ते त्वीशरूपेषु मुख्यानामेवैषां गुणानां प्राणरूपेषु प्रतिबिम्बितत्वेनैकरूपत्वाभावादीशप्राणयोः स्वामिभृत्यभावो युक्त इति भावः ॥ **उभयमिति** ॥ दासत्वं स्वरूपत्वं चेत्यर्थः ॥ **अत इति** ॥ श्रुतिद्वयाप्रामाण्यादित्यर्थः । सूत्रभाष्ये व्याकर्तुं परिष्करोति ॥ **न केवलमिति** ॥ एतद्वर्गद्वयमित्यर्थः । सूत्रे पूर्वस्माच्छ्रेष्ठश्चेत्यनुवर्तते । तत्र चशब्दः पञ्चवृत्तिश्चेति भिन्नक्रमः सन् दासानां समुच्चायक इति भावेनाणुश्चेति चशब्दोऽत्राप्या-कृष्यत इति भावेन वा सूत्रार्थमाह ॥ **मनोदृष्टान्तेनेति** ॥ 'बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमानेत्वहङ्कारः चित्तं स्मरणसाधनम्' इति स्कान्द इति सप्तविंशेऽध्याये तृतीयस्कन्धतात्पर्यं हृदि कृत्वाऽर्थभेदमाह ॥ **सङ्कल्पेति** ॥ **स्मरणेति** ॥ चितिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारण-मित्यष्टाविंशाध्याये चतुर्थस्कन्धतात्पर्योक्तेरिति भावः ॥ **चेतस इति** ॥ बहुस्मरणशक्तिश्च चेतनेत्यभिधीयत इति तत्रैव एकविंशाध्याये तात्पर्योक्तिः । चित्तव्याप्तिस्तु चेतनेति गीतातात्पर्ये

(भावदीपः)

त्रयोदशेऽध्याये चोक्तेः । मुख्यप्राणस्य ततोऽपि व्यक्तसद्गुणत्वादिति न्यायविवरणं शङ्कापूर्वं व्यनक्ति ॥ **न चेति** ॥ तत्रोक्तामेव श्रुतिमाह ॥ **अशेपेति** ॥ मुख्यप्राणस्वरूपाणामेव व्यक्तसद्गुणात्वोक्ति-परोक्तश्रुतिविरोध इत्यत आह ॥ **दासानिति** ॥ 'स एष प्राण इतरान्प्राणान्' इति दासानुपक्रम्येत्यर्थः । पृथक् पृथक् सन्निधत्ते । एतद्विवरणार्थं पायूपस्थेऽपानमित्यादेः प्रवृत्तेः अपानमित्यत्र सन्निधत्त इत्यन्वयादिति भावः । दासानित्यस्य मुख्यप्राणरूपैः प्राणादिभिरधिष्ठिता-न्प्राणादिदासानित्यर्थो बोध्यः । मुख्यप्राणविषयत्वं मुख्यप्राणमात्रविषयत्वं नेत्यर्थः ॥ **अत इति** ॥ पृथगुभयविधाभ्युपगमादित्यर्थः । 'प्राणाद्यास्त्रिविधाः पञ्च प्रधानो वायुरेव च । मुख्यपञ्चकरूपस्सन् गरुडो मध्यपञ्चकः । अवमः पञ्चकस्त्वन्ये प्राणाद्यास्तस्य सूनवः । इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः । प्राणापानौ शेषवीन्द्रौ तथोदानसमानकौ । रुद्रेन्द्रौ तत्परः श्रेष्ठो वायुर्व्यान उदाहृतः' इति छान्दोग्यभाष्ये प्रथमे अन्यथापि प्राणवृत्तिभेद उक्तः । तथा च तत्रैव तृतीये पञ्चमे चाध्याये प्राणादिभिः पञ्चभिरपि शब्दैः क्रमात् सूर्यचन्द्राग्नीन्द्रमुख्यप्राणाः प्राणाभिमानिनः पञ्चोच्यन्त इत्युक्तम् । तथा तृतीयस्कन्धतात्पर्ये च नागकूर्मकृकलदेवदत्तधनञ्जयाश्च पञ्च प्राणादय इत्युक्तम् ।

## अभिनवचन्द्रिका

मुख्यप्राणस्य दासा, उत तत्स्वरूपाणीति सन्देह इति । यद्यपि नायं पूर्वपक्षसिद्धान्तकोटिकः सन्देहः । पूर्वपक्षिणा श्रुतिद्वयाऽप्रामाण्याङ्गीकारेण अन्यतरपक्षानङ्गीकारत् । सिद्धान्तिना च पक्षद्वयाऽङ्गीकारात्, तथापि सूत्रनिरस्यत्वादयं सन्देहः प्रदर्शितः । श्रुतिः दासत्वं स्वरूपत्वं च वक्तीति शेष इति । श्रुतिरिति न प्रतीकधारणम्, दासत्वं स्वरूपत्वं च वक्तीति न शेषकथनम्, किन्तु – हेतुकथनं, ततश्च – श्रुतिर्दासत्वं च वक्तीति हेतोर्यथायोग्यं शेषो द्रष्टव्य इत्यर्थः । अत्रायं विवेकः – 'कौण्डिन्यश्रुतिः' इत्यनन्तरं 'दासत्वं वक्ति' शेषः, 'गौपवनश्रुतिः' इत्यनन्तरं 'स्वरूपत्वं वक्ति' इति शेष इति । पूर्वपक्षयितुं प्रस्तावयति – **प्राणादय इति** ॥ यदि प्राणादयो मुख्यप्राणस्य स्वरूपाणीति ब्रूषे, तर्हि परोऽपि मुख्यप्राणस्य दासा इति ब्रूयादित्यर्थः । कुत एवं ब्रूयादित्यत आह– **सर्वे वा एत इति** ॥ **मुख्यप्राणस्य स्वरूपाणि वा एतानीति** ॥ अथ प्राणादयो दासा इति ब्रूषे तर्हि परोऽपि स्वरूपाण्येवैतानि न दासा इति ब्रूयादित्यर्थः ।

(अभिनवचन्द्रिका)

'यथा सम्राडेवाधिकृतान् विनियुङ्क्ते, एतान् ग्रामानधितिष्ठस्व, एतान् ग्रामानधितिष्ठस्वेति । एवमेष प्राण इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते । पायूपस्थेऽपानं चक्षुःश्रोत्रे मुख्यनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति हृदि ह्येष आत्मा अत्रैतदेकशतं नाडीनां तासां शतम्, एकैकस्यां द्वासप्ततिं द्वासप्ततिं, प्रतिशाखा नाडीसहस्राणि आसु व्यानश्चरति । अथ एकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापम् । उभाभ्यामेव मनुष्यलोकम्, आदित्यो ह वै बाह्यप्राण उदेति । एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्याऽन्तरेति । श्रुत्यर्थः सिद्धान्तरीत्योच्यते – यथा लोके सम्राट् सार्वभौमः, **अधिकृतान्** नियोगिनः, **विनियुङ्क्ते** कथं त्वमेतान् पाटलिपुत्रादीन्ग्रामान्, **अधितिष्ठस्व** तदाधिपत्ये तिष्ठेत्येकम्, अन्यं च त्वमेतान् कौशाम्बीप्रभृतीन्ग्रामान्, अधितिष्ठस्वेति । एवमेव एष मुख्यप्राणः, **इतरान्** भिन्नान्प्राणान् वायून्, पृथक् पृथगेव स्थानेषु, **सन्निधत्ते** स्थापयति । स्वयं च तत्र क्रियाप्रवर्तकतया तत्र प्राणादिपञ्चरूपोऽवतिष्ठत इत्याशयः । पृथक्पृथगित्युक्तं विव्रियते **पायूपस्थे इत्यादिना ॥** पायुश्च उपस्थश्च पायूपस्थं तत्र मलादेरपनयनात् अपानवायुमात्मनोरूपेणाऽपानेनाऽधिष्ठितं सन्निधत्ते इति सम्बन्धः । चक्षुश्च श्रोत्रं च चक्षुश्रोत्रम् । **तस्मिन् मुखनासिकाभ्यां सह** मुखे नासिकायां चेति यावत्, **प्राणः** स्वयं मुख्य एव, श्वासादिप्रणयनात् प्राणनाम्ना रूपेण प्राणवायुमधिष्ठाय, प्रतितिष्ठति । समानस्तु समाननामानं वायुमधिष्ठाय, **मध्ये** प्राणापानयोः नाभिदेश इति यावत् प्रतितिष्ठति । स चैषः, यस्मात् एतद्भुक्तमन्नं, **समं** यथाशरीरावयवं नयति, तेन समाननामेति शेषः । किं तेन, तस्मादन्नस्य समीकरणात्, एताः **सप्तर्चिषः** सप्तज्ञानेन्द्रियवृत्तयः, भवन्ति ।

ननु आत्मैव विषयसंसर्गेणताननुभविष्यति किमिन्द्रियवृत्तिरिति, मैवम् हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तते, अतः कथं तस्याणोर्विषयसङ्गातिः स्यादिति । व्यानस्य प्रवृत्तिं वक्तुमुच्यते **अत्रेत्यादि ॥ अत्र** शरीरे । **यदेतदेकशतम्** एकोत्तरं शतम् । **नाडीनाम्** सिराणां भवति । तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखा नाड्यो भवन्ति । पुनस्तासां च प्रतिशाखानाड्यो भवन्तीति वक्तव्यम् । एवं च प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात् । किं चाऽतः आसु नाडीषु विविधनयनात् व्यानवायुमधिष्ठाय चरति । अथोदानस्तु उदानवायुमधिष्ठाय, **एकया नाड्या** सुषुम्नया । ऊर्ध्वगतिश्चरति । स च तत्र

(अभिनवचन्द्रिका)

चरन्, **पुण्येन** जीवकृतपुण्यं निमित्तीकृत्य पुण्यं स्वर्गादिलोकं नयति । एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम् । अत एव ऊर्ध्वनयनादुदानः । **पापेन पापं** नरकादिकं दुःखबहुलं नयति । **उभाभ्यां** समप्रधानाभ्यां पुण्यपापभ्यां समदुःखसुखं मनुष्यलोकं नयतीति । मुख्यप्राण एव हि प्राणनामा बाह्यो बहिर्भवः, आदित्यः आदित्ये स्थितः तन्नामानं दधत् उदेति । एष आदित्यस्थः प्राण एव, **एनं** चाक्षुषं चक्षुषि भवं प्राणवायुमनुगृह्णानो वर्तते । बहिः पृथिव्यां या धारिका व्यानाख्या देवता, सैषा पुरुषस्य अपानं देहे वर्तमानमपानवायुम्, **अवष्टभ्य** धृत्वा, **अन्तरा** शरीरान्तः वर्तत इति ।

पूर्वपक्षयति– **एवं चेति** ।। श्रुत्योः प्रामाण्याय प्राणानां दासत्वं मुख्यप्राणस्वरूपत्वं च वक्ष्यामीत्यत आह– **न चेति** ।। पूर्वपक्षफलमाह– **अत इति** ।। **न केवलं प्राणादय इति** ।। न केवलंमस्माभिः प्राणादयो दासा एवेत्युच्यते, नापि स्वरूपाण्येवेति । येन श्रुत्योरप्रामाण्यं स्यात् । किंनाम दासाः स्वरूपाणि चेत्युच्यत इत्यर्थः । एतेन पूर्वपक्षिणा दासा एवेत्यनभिहितत्वात् न केवलं दासा एवेत्यभिधानमयुक्तमिति परास्तम् । **न च वस्तुविकल्पप्रसङ्ग इति** ।। दासत्वस्वामित्वे परस्परविरुद्धे चेदेकत्राभ्युपगम्येते । तर्हि अविशेषाद्रूपादिकमपि वस्तु रसोऽपि स्यादिति न वाच्यमित्यर्थः । एतेन प्राणादीनां स्वामिदासभावाङ्गीकारे प्राणादीनां विकल्पापादनमयुक्तम् । अपाद्यापादकयोरभेदादिष्टत्वाच्चेति निरस्तम् ।। **चेतसो व्याप्तिरिति** ।। बहुस्मरणकारणत्वमित्यर्थः । तदुक्तं शब्दनिर्णये – 'चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणम् । बहुस्मरणशक्तिस्तु-चेतनेत्यभिधीयत' इति । ननु 'पायूपस्थेऽपानम्' इति सद्गुणत्वप्रतिपादकश्रुतेर्मुख्यप्राणस्वरूप-मात्रविषयत्वाङ्गीकारेणोपपत्तौ दासानामपि सद्गुणत्वाङ्गीकारो न युक्त इत्यत आह– **दासानुप-क्रम्येति** ।। 'इतरान्प्राणान् पृथक् पृथगेव सन्निधत्त' इति दासानुपक्रम्य तदनन्तरमेव 'पायूपस्थेपानम्' इत्यादिना सद्गुणत्वोक्तेरित्यर्थः ।

पूर्वपक्षस्तु – 'सर्वे वा एते मुख्यदासाः । प्राणस्यैव स्वरूपाणि' इति श्रुतिद्वयमप्रमाणम् । अर्थानिर्णायकत्वात् । तथा हि यद्येको मुख्यस्यैव स्वरूपाणीति श्रुतिं व्यक्तसद्गुणत्वयुक्तिं चावलम्ब्य प्राणादयो मुख्यप्राणस्वरूपाण्येवेति ब्रूयात् । तर्हि परोऽपि 'सर्वे वा एत' इति श्रुतिं तदाज्ञया कर्मकारित्वयुक्तिं चावलम्ब्य, प्राणादयो दासा एवेति ब्रूयात् । अथ एतच्छ्रुतियुक्त्यवष्टम्भेन आद्यो दासा एवेति ब्रूयात्, तर्हि परोऽपि प्राचीनश्रुतियुक्त्यष्टम्भेन स्वरूपाण्येवेति ब्रूयात् । न

(अभिनवचन्द्रिका)

च अन्यतरश्रुतिबाधो युक्तः समबलत्वात् । एवं च अर्थानिर्णयेन श्रुतिद्वयाप्रामाण्यात्, न श्रुतिबलेन विष्णोर्जगत्कारणत्वसिद्धिरिति ।

सिद्धान्तस्तु – अर्थनिर्णयसंभवेन श्रुतिद्वयस्यापि प्रामाण्यम् । तथा हि न ब्रूमो वयं प्राणादयो दासा एव, स्वरूपाण्येवेति वा । येन श्रुत्योः परस्परविरोधेनानिर्णयः स्यात् । किं नाम अथ 'पञ्चवृत्त्यैतत्प्रवर्तत' इति श्रुत्यवष्टम्भेन मनोवत् द्विविधाः प्राणादयः स्वरूपाणि दासाश्चेति । ततश्च श्रुत्योर्भिन्नविषयत्वेन न विरोधः । न च प्राणानां दासत्वे व्यक्तसद्गुणत्वविरोधः । दासानामपि तदङ्गीकारात् । न च स्वामिभृत्यभावानुपपत्तिः । स्वामिनां ततोऽपि व्यक्तसद्गुणत्वेन स्वामिभृत्याभावोपपत्तेः । तदुक्तम् –

अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च ।
तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः ॥ इति ।

अतः श्रुत्यविरोधेन प्राणादिस्वरूपसिद्धेः युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं सूचयन्विषयमाह ॥ **मुख्यप्राणप्रसङ्गसंनिधापिता इति** ॥ यद्यप्यत्र पञ्चरूपतया मुख्यप्राणोऽपि निपीयते तथापीतरविवक्षया प्रसङ्गसंनिधापित इत्युक्तिरिति ज्ञेयम् । अत्र प्राणादयो मुख्यप्राणदासा उत तत्स्वरूपाणीति । तदर्थं दासत्वश्रुतिर्मुख्याज्ञया कर्मकारित्व युक्तियुक्तत्वेन प्रबलोतस्वरूपत्वश्रुतिरेव व्यक्तसद्गुणत्वयुक्तियुक्तत्वेन **प्रबलेति** ॥ अत्रैकं पूर्वपक्षमुद्घाटयति ॥ **अत्र प्राणादय इति** ॥ कुतो न श्रुत्यन्तरविरोध इत्यतो मुख्यप्राणस्यैव स्वाज्ञया सर्वकर्मकारयितृत्व-रूपव्यक्तसद्गुणत्वात् । तदाज्ञया कर्मकारिणां तत्स्वरूपानुपपत्तेरिति व्यक्तसद्गुणत्वन्यायप्रदर्शनप्रवृत्तं प्राणापानादय इत्यादिभाष्यं विवृणोति ॥ **प्राणादय इति** ॥ प्राणादिकर्माणि च यद्वै प्राणिति स प्राणो यद्धूयादिति सोऽपानः । ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यतीति च । व्यानो वीर्यकर्महेतुः । उदान उत्क्रान्तिहेतुः । समानः सर्वांगेषु रसनायकः प्राणानाम् । इडायां पिंगलायां च वर्तितः । व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः । 'सर्वत्रैव समानस्तु समं चरति सर्वदा' इति भारत इति

(वाक्यार्थमुक्तावली)

तत्त्वप्रदीपवचनात्प्राणादिकर्माणि ज्ञेयानि । हेतोरसिद्धिं परिहरति ॥ **तथा चेति** ॥ पूर्वपक्षान्तरमाह ॥ **मुख्येति** ॥ कुतो न विरोध इत्यतो व्यक्तसद्गुणत्वमिति न्यायसूचकस्य 'स एव प्राणिनां देहे पञ्चधा वर्तत इति' श्रुत्यंशस्य भावमाह ॥ **प्राणादय इति** ॥ पञ्चधा वर्तनमेव श्रुत्यन्तरेणोपपादयन्व्यक्तसद्गुणत्वमुपपादयति ॥ **पायूपस्थ इत्यादिना** ॥ सप्तार्चिषः सप्तज्ञानेन्द्रियवृत्तयः बहिः पृथिव्याधारिकाया व्यानाख्यादेवता सैषा पुरुषस्यापानं देहे वर्तमानमवष्टभ्य धृत्वा शरीरान्तर्वर्तत इत्यर्थः । न चैतदव्यक्तसद्गुणत्वमिति पायूपस्थादीन्द्रियाधिष्ठानेन सकलज्ञानक्रिया प्रवर्तकत्वादिव्यक्तसद्गुणत्वमित्यर्थः । एवं पूर्वपक्षद्वयेन श्रुतिद्वयस्य निरवकाशत्वे प्राप्ते उभयफलं युगपदेन वदन्नुपसंहरति ॥ **एवं सति द्वयस्यापीति** ॥ अत्र श्रेष्ठश्चेत्यनुवर्तते चोऽप्यर्थे । श्रेष्ठः पञ्चवृत्तिरपि शब्दात्पञ्चदासकोऽपीति सूत्रखण्डार्थमभिप्रेत्य व्याचष्टे **न केवलं प्राणादय इति** ॥ **तद्वृत्तयोपीति** ॥ तत्स्वरूपभूता इत्यर्थः । तत्र प्रमाणकथनपरत्वेन समग्रं व्याचष्टे ॥ **कुत एतदित्यादिना** ॥ **चेतसो व्याप्तिश्चेतनेति** ॥ 'बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयते' इति वचनादिति भावः । अन्तःकरणं मन आदिभेदेन पञ्चविधं तदभिमानी च तच्छब्दवाच्यः' पञ्चरूपी तत्र मनआदि पञ्चविधान्मन आदिकमुत्पद्यते तदभिमानिनश्च मन आदिशब्दवाच्याः कारणाभिमानिनः सकाशादुत्पद्यन्त इति विवेकः । अथ पञ्चवृत्यैतत्प्रवर्तत इत्यादौ प्राणादिमुख्यस्वरूपाणां प्राणादिनामकदासजनकत्वोक्त्या ततोऽपि व्यक्तसद्गुणत्वरूपसिद्धान्तन्यायोऽपि विवृत इत्यभिप्रेत्याशङ्क्य परिहरति ॥ **न च प्राणादीनामित्यादिना** ॥

ननु पायूपस्थेऽपानमिति व्यक्तसद्गुणत्वप्रतिपादिका श्रुतिर्मुख्यप्राणपरा न तु दासपरेति कुतो न व्याख्यायते अत आह ॥ **दासानुपक्रम्येति** ॥ इतरान्प्राणान्पृथग्पृथगेव संनिधत्त इति दासानुपक्रम्य तदनन्तरमेव पायूपस्थेऽपानमित्यादिना सद्गुणत्वोक्तेरित्यर्थः ।

## वाक्यार्थविवरणम्

**प्राणादयः** ॥ प्राणापानव्यानोदानसमानाः । श्रुतिरिति तन्त्रेणोभयप्रतीकग्रहणम् । तत्र कौण्डिण्यश्रुतिर्दासत्वं प्राणानां वक्ति । गौपवनश्रुतिः स्वरूपत्वं वक्तीति विवेकः ॥ **सयुक्तिकश्रुतीति** ॥ तदाज्ञया कर्मकारित्वरूपयुक्तिसहितदासत्वश्रुतीत्यर्थः ॥ **व्यक्तेति** ॥ व्यक्ताः सन्तो

(वाक्यार्थविवरणम्)

गुणाः पायूपस्थाधिष्ठातृत्वादयो येषां प्राणानां ते तथा । तेषां भावा तत्त्वम् । तस्मादित्यर्थः ॥ **यद्वा** ॥ मलापनयनश्वासप्राणनादिरूपं व्यक्तसद्गुणत्वमित्यर्थः ॥ **उभयत्रापीति** ॥ दासेषु स्वरूपेषु च व्यक्तसद्गुणत्वस्य भाव इत्यर्थः ॥ **उभयम्** ॥ प्राणादीनां स्वरूपत्वं दासत्वं चेत्युभयम् । ननु प्राणादीनां पञ्चानां दासत्वतत्स्वरूपत्वरूपतद्वृत्तित्वोभयाङ्गीकारे विरुद्धधर्मद्वयालिङ्गितत्व-प्राप्त्यैकस्य वस्तुनो भेदः स्यादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ **पृथगुभयविधेति** ॥ प्राणादिपञ्चकं स्वरूपभूतं दासभूतं चेति पञ्चकद्वयाङ्गीकारादित्यर्थः ॥ **अत एवेति** ॥ प्राणादीनां पृथगुभयविधानां सत्त्वाङ्गीकारेण भिन्नविषयतया विरोधाभावादेवेत्यर्थः ॥ **श्रुतीनाम्** ॥ दासत्व-स्वरूपत्वप्रतिपादकानाम् ॥ **एतत्** ॥ दासभूतं स्वरूपभूतं चेति पञ्चकद्वयाङ्गीकरणम् ॥ **व्याप्तिः** ॥ बहुविषयकत्वरूपा ॥ **ततोऽधिकेति** ॥ दासापेक्षयाधिकेत्यर्थः ।

## वाक्यार्थमञ्जरी

**प्राणादीति** ॥ प्राणापानादीत्यर्थः ॥ **मुख्यप्राणप्रसङ्गेति** ॥ तेषां वक्ष्यमाणरीत्या तत्सम्बन्धित्वादिति भावः ॥ **शेष इति** ॥ क्रमेणेति शेषः ॥ **कर्मकारित्वादिति** ॥ तेषां कर्माणि च 'प्राणापानाविडयां च पिङ्गलायां च वर्ततः । व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः । सर्वत्रैव समानस्तु समं चरति सर्वश'' इति भारतवचनाज्ज्ञेयानि । प्राणाज्ञया कर्मकारित्वे श्रुतिमाह ॥ **तथा च श्रुतिरिति** ॥ एष मुख्यप्राण इतरान् प्राणानपानादीन् पृथक् स्वस्वकार्यकरणायोक्तस्थानेषु सन्निधत्ते संस्थापयतीत्यर्थः ॥ **व्यक्तसद्गुणत्वादिति** ॥ व्यक्ताः सन्तो गुणाः वक्ष्यमाणश्रुत्युक्ताः येषां ते तथा तेषां भावस्तत्त्वं तस्मादित्यर्थः । व्यक्तसद्गुणत्वे श्रुतिमाह ॥ **पायूपस्थेति** ॥ अपानमपानः पायूपस्थे गुदगुह्येन्द्रिययोर्मलादेरपनयनेन गुणेनापाननामा सन् प्रतिष्ठते मुखनासिकाभ्यां सह चक्षुः श्रोत्रे मुखनासिका चक्षुः श्रोत्रेषु प्राणश्वासादिप्रणयनात् प्राणनामा स्वयमवतिष्ठते । समानस्तु मध्ये प्राणापानयोर्मध्ये नाभिदेशे प्रतितिष्ठति हि यस्मादेषः समानः हुतं भुक्तमन्नं समं यथा स्यात्तथा शरीरावयवं प्रतिनयति अतः समाननामा तस्मादन्नसमीकरणादेताः सप्तज्ञानेन्द्रियवृत्तयो भवन्ति । अस्मिन् शरीरे द्वासप्ततिसहस्रसङ्ख्याकाः नाड्यः सन्ति । आसु नाडीषु व्यानश्चरति अथोदान एकया नाड्या सुषुम्नयोर्ध्वगतिश्चरति सर्वत्र चरन् जीवकृतपुण्येन निमित्तेन पुण्यफलं स्वर्गादिकं नयति पापेन निमित्तेन पापफलं निरयादि नयति बहिः पृथिव्यां याधारिका व्यानाख्या देवता सैषा

(वाक्यार्थमञ्जरी)

पुरुषस्यापानन्देहे विद्यमानमपानवायुमवष्टभ्य धृत्वान्तराशरीरान्तर्वर्तत इत्यर्थः । उभयं दासत्वं स्वरूपं विकल्पो द्वैरूप्यम् । मुख्यप्राणः पञ्चवृत्तिः प्राणादिपञ्चस्वरूपवानुपलक्षणमेतत् प्राणादि पञ्चदासवांश्च कुतः मनोवत् यथामनोमनआदीन्द्रियरूपवत् तज्जन्यमनआदिवृत्तिपञ्चकवच्च तथा मुख्यप्राणोऽपि वर्गद्वयवानिति अथ पञ्चवृत्त्येति श्रुतौ व्यपदिश्यते यतोऽत इत्यर्थः एतद्वर्गद्वयवत्वम् ॥ **चेतसो व्याप्तिरिति** ॥ 'बहुस्मरणशक्तिरित्यर्थः । बहुस्मरणशक्तिश्च चेतनेत्यभिधीयत' इत्युक्तेः तत्रैव श्रुतिमाह ॥ **अशेपेति** ॥ अतिबह्वित्यर्थः । ननु पायूपस्थेऽपानमिति सद्गुणत्वप्रतिपादक-श्रुतेर्मुख्यप्राणस्वरूपविषयत्वाङ्गीकारेण वोपपत्तौ सद्गुणद्वैविध्यकल्पनं किमर्थमित्यत आह ॥ **दासानुपक्रम्येति** ॥ इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त इति दासानुपक्रम्य तदनंतरमेवापान-मित्यादिना सद्गुणोक्तेरित्यर्थः ।

॥ इति पञ्चवृत्त्यधिकरणम् ॥

## ९. अथ प्राणाणुत्वाधिकरणम्

## सूत्रभाष्यम्

'प्राण एवाधस्तात्प्राण उपरिष्ठात्प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वम्' इति प्राणस्य व्याप्तिः प्रतीयते ।

'यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु ।
अतो धृतं जगत्सर्वमन्यथा केन धार्यत' इति च युक्तिर्वायुप्रोक्ते ।

'अणुनैतत्सृज्यतेऽणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणो ह्येतद्भवति' इति च सौत्रायणश्रुतिः ॥ अत आह–

**॥ ॐ अणुश्च ॐ ॥ १४ ॥**

स वा एष प्राणोऽणुर्महान्नामाऽन्तर्वाऽणुर्बहिर्महान्प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परस्य' इति हि कौण्डिन्यश्रुतिः ।

॥ इति प्राणाणुत्वाधिकरणम् ॥

## तत्त्वप्रदीपिका

अणुश्च महांश्च । अन्तरणुर्हृदयसुषिरस्य सूक्ष्मत्वात् । अणुत्वे चास्य महावैलक्षण्यं गम्यते पृथक्सूत्रात् । यथोत्पत्तौ । तदाह– **बहिर्महानिति** ॥ सम्यगसम्यगवस्थानेऽपि विशेषं हि सूचयाम्बभूव, यं वयं च यथाबोधमाम्रेडितवन्तः ।

## तत्त्वप्रकाशिका

अत्रेश्वरे जगत्कारणे श्रुतिसमन्वयसिद्ध्यर्थं मुख्यप्राणपरिमाणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणत्वसिद्धये हरावुक्तः श्रुतिसमन्वयः मुख्यप्राणपरिमाणविषयश्रुतीनां विरोधेनाप्रामाण्येऽयुक्तः स्यादिति स निराकार्यः । प्रकृतो मुख्यप्राण एव विषयः । व्याप्तोऽणुर्वेति सन्देहः । सन्देहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति ॥ **प्राण एवेति** ॥ सर्वं सर्वसत्ताप्रदः । अन्यथा व्याप्त्यभावेऽसौ न धारयेत् । तथा च केन धार्यत इत्यर्थः । श्रुतिरणुत्वं वक्तीति शेषः ।

(तत्त्वप्रकाशिका)

**व्याप्त एव मुख्यप्राणः। 'प्राण एवाधस्तात्' इति श्रुतेः। न चाणुत्वेऽपि श्रुतिरस्तीति तद्विरोधः। सर्वजगद्धारकत्वयुक्तियुक्तत्वाद् व्याप्तिश्रुतेः। तथा च श्रुतिः। 'महान्वै मुख्यप्राणो येन व्याप्तं चराचरम्' इति। 'सप्तस्कन्धगतो लोकान्यो बिभर्ति महाबलः' इति च हरिवंशे। अतः प्रबलश्रुति-विरोधादप्रमाणमणुत्वश्रुतिरिति न श्रुतिसमन्वयेन हरेर्जगत्कारणत्वसिद्धिरिति भावः। सिद्धान्तय-त्सूत्रमवतारयति ॥ अत इति ॥ अणुरेव मुख्यप्राणः। न च श्रुत्यादिविरोधः। यतोऽसौ बहिर्देहा-द्वर्तमानेन मुख्यरूपेण व्याप्तश्चेति सूत्रार्थः। कुतोऽयं विशेष इत्यत आह ॥ स इति ॥ प्राणश्च मुख्य एवेति ज्ञापनाय वाक्यशेषोद्धारः। न चेदं श्रुतिमात्रं सयुक्तिकश्रुतिबाधनाय नालमिति वाच्यम्। विशेषश्रुतित्वात्। नाडीसञ्चारित्वयुक्तेश्च। अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिरिति श्रुतेः। अतः श्रुत्यविरोधेन मुख्यप्राणस्याणुत्वसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम्।**

## गुर्वर्थदीपिका

मुख्यवायुरूपेण व्याप्तश्चेत्यत्र जीवाणुत्वस्य 'उत्क्रान्तिगत्यागतीनाम्' इत्यादिनैव सिद्धत्वा-द्बहिरपि मुख्यवायोः कथं व्याप्तत्वमिति चेत्सत्यं प्राणिनां देहान्तर्बाह्यशरीरेणाप्यणुः प्राणिनां देहाद्बहिर्यावन्महत्तत्वं मुख्यवायोर्देहस्यापि व्याप्तत्वात् व्याप्तिरिति प्रमेयभेदान्न गतार्थतेति ज्ञेयम्।

## भावबोधः

**परिमाणविषयेति** ॥ पूर्वाधिकरणोक्तप्राणादिप्रेरकत्वाधिकसद्गुणत्वाय प्राणस्य विभुत्व-मप्यस्त्विति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **व्याप्त इति** ॥ अत्र मुख्यप्राणः किं व्याप्त उताणुरिति चिन्ता। तदर्थं तदणुत्वं व्याप्तत्वश्रुतिविरुद्धं न वेति। तदर्थं व्याप्तत्वश्रुतिः युक्तियुक्त-त्वेन निरवकाशोत सावकाशेति। तदर्थं 'यतः सर्वं जगद्व्याप्य' इति श्रुतिः किमान्तरमुख्यप्राण-रूपाभिप्राया किं बाह्यमुख्यवायुरूपाभिप्रायेति। तदर्थं तस्य बाह्यरूपेण व्याप्तत्वे आन्तररूपेणा-णुत्वे किं प्रमाणं नास्त्युतास्तीति। अन्यथेत्युक्तव्याप्त्यभावस्य केन धार्यत इत्याक्षेपे साक्षाद्धेतुत्व-सम्भवादाह– **व्याप्त्यभावेऽसौ न धारयेदिति** ॥ यतः सर्वमिति भाष्योक्तयुक्तिमाह– **सर्वेति** ॥ अत्र न्यायविवरणोदाहृतां श्रुतिमुदाहरति– **तथा चेति**। प्रमाणान्तरमप्याह– **सप्तस्कन्ध इति** ॥ **बहिर्देहादिति** ॥ अनेन सौत्र'श्च' शब्दो व्याप्तत्वश्रुतेः सावकाशत्वप्रदर्शनार्थ इत्युक्तं भवति

(भावबोधः)

॥ **वाक्यशेषोद्धार इति** ॥ 'प्राणो वाव ईशितव्येश' इत्यादिवाक्यशेषोद्धार इत्यर्थः ॥ **विशेषश्रुतित्वादिति** ॥ अन्तर्वाणुर्बहिर्महानिति अणुत्वमहत्वयोर्व्यवस्थायाः प्रतिपादकत्वेन विशेषश्रुतित्वादित्यर्थः । अणुर्वै मुख्यप्राणो यदुत्क्रामति नाडीभिरिति दृष्टा युक्तिरणुत्वे प्राणस्येति न्यायविवरणं संयोजयति– **नाडीति** ॥

## भावदीपः

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति स्मृतेः श्रौतसर्वपदस्यार्थमाह ॥ **सर्वमिति** ॥ स्मार्तान्यथापदस्यार्थमाह ॥ **अन्यथेति** ॥ शेषपूर्त्या वाक्यं सङ्गमयति ॥ **असाविति** ॥ **श्रुतेरिति** ॥ पूर्वं विष्णौ प्राणपदसमन्वयेऽप्यविरोधेऽन्यपरत्वस्यापि सत्त्वादिति भावः । भाष्योक्तस्मृत्युक्तयुक्तिमाह ॥ **सर्वेति** ॥ व्याप्तिश्रुतेः प्राबल्याय मुख्यप्राणविषयत्वाय वा स्पष्टां न्यायविवरणोक्तां श्रुतिमाह ॥ **महानिति** ॥ पञ्चमे बृहद्भाष्योक्तां स्मृतिं चाह ॥ **सप्तेति** ॥ **अत इति** ॥ सयुक्तिकत्वात्प्रबलेत्यर्थः । सूत्रे चोऽवधारणेऽनुक्तसमुच्चये च श्रेष्ठ इति वर्तत इत्युपेत्यार्थमाह ॥ **अणुरेवेति** ॥ अध्यात्मविद्यारूपापेक्षयैवकारः प्रयुक्तः । चशब्दस्योपयोगं वदन्नेवार्थान्तरमाह ॥ **न चेति** ॥ **मुख्येति** ॥ अनेन व्याप्तिश्रुतौ प्राणशब्दो मुख्यवायुपर इति सूचितम् ॥ **वाक्यशेषेति** ॥ प्राणो वा ईशितव्येश इत्यादिरित्यर्थः ॥ **विशेषेति** ॥ अणुत्वमहत्त्वरूपव्यवस्थोक्तिपरत्वेन विशेषश्रुतित्वादित्यर्थः । न्यायविवरणस्थश्रुत्युक्तयुक्तिं च वदंस्तामेव श्रुतिमाह ॥ **नाडीति** ॥ उत्क्रान्तिगत्या गतीनामित्युक्तन्यायादिति भावः ॥ **अत इति** ॥ अणुत्वानणुत्वश्रुत्योरध्यात्माधिदैवस्थभिन्नरूपविषयत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**मुख्यप्राणपरिमाणविषयेति** ॥ मुख्यप्राणदेहपरिमाणविषयश्रुतिविरोधपरिहारादित्यर्थः ॥ **व्याप्तोऽणुर्वेति** ॥ महत्परिमाणोऽणुपरिमाणो वेति सन्देह इत्यर्थः ॥ **सप्तस्कन्धगत इति** ॥ पातालादिसप्तभूमिविवरगत इत्यर्थः ॥ **व्याप्तश्चेति** ॥ प्राणवाय्वोरेकत्वात् वायुदेहस्य व्याप्तत्वेन प्राणोऽपि व्याप्ततया श्रुत्योच्यत इति न तद्विरोध इत्यर्थः । एतेन वायोर्जीवत्वेन जीवाणुत्वस्य 'उत्क्रान्तिगत्यागतीनाम्' इत्यत्र साधितत्वात् तस्य व्याप्तत्वकथनमयुक्तमिति परास्तम् । एतेनैव

(अभिनवचन्द्रिका)

देहाद्बहिर्वर्तमानेनेत्युक्त्या व्याप्त्यभावस्यार्थादुक्तत्वात् पुनर्व्याप्त्यभिधानं विरुद्धमिति परास्तम् । देहमहत्वस्यैव विवक्षितत्वात् ।

पूर्वपक्षस्तु – व्याप्त एवायं प्राणाः । 'प्राण एवाधस्ता'दिति व्याप्तिश्रुतेः । न चाणुत्व-श्रुतिविरोधः – सकलजगद्धारकत्वयुक्तियुक्तत्वेन व्याप्तिश्रुतेः प्राबल्यात् । अतः प्रबलश्रुतिविरोधादप्रमाणं अणुत्वश्रुतिरिति न श्रुतिसमन्वयेन हरेर्जगत्कारणत्वसिद्धिरिति ।

सिद्धान्तस्तु – अणुरेव मुख्यप्राणाः । 'स वा एष प्राणोऽणु'रिति श्रुतेः । न च – व्याप्तिश्रुतिविरोधः । तस्या बहिर्देहाद्वर्तमानवायुरूपविषयत्वात् । 'कुत एतदिति चेत्' 'अन्तर्वाऽणुर्बहिर्महान्' इति विशेषश्रुतेः । नाडीसञ्चारित्वयुक्तेश्च । अतः श्रुत्यविरोधेन मुख्यप्राणस्याऽणुत्वसिद्धेः युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वाधिकरणे पञ्चवृत्त्यैतत्प्रवर्तत इत्युक्ते सर्वजगत्प्रवर्तकत्वं विभुत्वं विना न युज्यत इति पूर्वपक्षोत्त्थानादनन्तरसङ्गतिः । यद्वक्ष्यति प्राण एवेदं सर्वम् अन्यथा केन धार्यत इति ॥ **व्याप्त इति** ॥ मुख्यप्राणो व्याप्तोऽणुर्वेति चिन्ता । तदर्थं सयुक्तिकत्वाद्व्याप्तिश्रुतिः प्रबलोताधिदैवरूप-विषयतया **सावकाशेति** ॥ अन्यथेत्युक्तव्याप्त्यभावस्य केन धार्यत [illegible]त्याक्षेपे साक्षाद्धेतुत्वासम्भवा-दाह ॥ **व्याप्त्यभावेन धारयेदिति** ॥ प्राणस्य व्याप्तिः प्रतीयत [illegible]प्य एव प्राण एवाधस्तादिति श्रुतिप्रतीतस्य व्याप्तत्वस्याणुत्वेऽनुपपत्तिरित्युक्त्या दृष्टायुक्तिरित्यु[illegible]ायः सूचित इति भावेनाह ॥ **प्राण एवाधस्तादिति** ॥ यतस्सर्वमित्यादिभाष्योक्तयुक्तिमाह ॥ [illegible]र्गेति ॥ प्राण एवाधस्तादिति श्रुतिर्मुख्यप्राणपरत्वे समाख्यासूचनाय बहुत्वेन प्राबल्यप्रदर्शनाय च न्यायविवरणोदाहृतां श्रुतिमुदाहरति ॥ **तथा चेति** ॥ सप्तस्कन्धगत इत्यस्य स्कन्धेन गतः प्राप्तः सन् विभवतीत्यर्थः । यः प्राणः सर्वभूतानां पञ्चधा भिद्यते नृप । सप्तस्कन्धगतो लोकांस्त्रीन्दधार चचार चेति हरिवंशेऽन्यत्र वचनम् । सूत्रे श्रेष्ठ इत्यस्ति । चशब्दो अवधारणे व्याप्तिसमुच्चये चेति भावेन सूत्रार्थमाह ॥ **अणुरेवेति** ॥ सर्वप्राणिनियामकाध्यात्मरूपेणाणुरधिदैवरूपेणाण्डादिव्याप्तं प्राण एवाधस्तादिति प्राणशब्दस्त्वैक्याभिप्रायेण मुख्यप्राणवायुरूपपरो ज्ञेयः ॥ **विशेषश्रुतित्वादिति** ॥ रूपभेदेनाणुत्व-

(वाक्यार्थमुक्तावली)

महत्वव्यवस्थापकत्वेन विशेषश्रुतित्वादित्यर्थः । एतेन दृष्टा युक्तिरिति सिद्धान्तन्यायोऽपि प्राणस्य व्याप्तत्वे विशेषश्रुतिदृष्टव्यवस्थायोग इति भाष्यकृता विवृतो भवति । न्यायविवरणानुसारेण श्रुतिदृष्टव्याप्तिकानुमाना युक्तिरिति भावेन न्यायं संयोजयति ॥ **नाडीति** ॥ उत्क्रान्तिसूत्रे जीवानां चैतन्याणुत्वविचारः । अणवश्चेत्यत्रेन्द्रियाणामणुत्वस्य रश्मिभिर्व्याप्तत्वस्य चोक्तिः । अत्र श्रेष्ठस्य रूपभेदेनाणुत्वमहत्वयोरुक्तिरिति स्पष्टो भेदः । अत्र यद्वक्तव्यं तदन्यत्रोक्तमनुसन्धेयम् ।

## वाक्यार्थविवरणम्

**सप्तस्कन्धगतः** ॥ स्कन्धः शाखा । जगद्वृक्षस्य सप्तलोकाः शाखास्थानीयाः । तथा च सप्तलोकगतो लोकान् तत्रत्यान् जनान् बिभर्तीत्यर्थ इत्याहुः । ननु 'स वा एष' इत्यारभ्य 'महान्' इत्यन्तेनैव विवक्षितार्थसिद्धेः 'प्राणो वा' इत्यादिकं व्यर्थमित्यत आह ॥ **प्राणश्चेति** ॥ स वा एव प्राण इत्यत्रोक्तः प्राण इत्यर्थः । वाक्यशेषोक्तमीशितव्येशत्वं च मुख्यप्राणलिङ्गमिति भावः ॥ **श्रुतिमात्रम्** ॥ युक्तिशून्यत्वं मात्रशब्दार्थः ॥ **विशेषेति** ॥ अणुत्वव्याप्तिश्रुत्योर्व्यवस्था-प्रतिपादकत्वेनेति शेषः । अणुत्वे युक्तिमप्याह ॥ **नाडीति** ॥ असिद्धिं निराह ॥ **अणोरिति** ॥

## वाक्यार्थमञ्जरी

अन्यथेत्युक्तव्याप्यभावस्य केन धार्यत इत्याक्षेपे साक्षाद्धेतुत्वासम्भवादाह ॥ **व्याप्त्यभाव इति** ॥ **सप्तस्कन्धेति** ॥ जगदाख्यवृक्षस्य शाखारूपसप्तलोकगत इत्यर्थः । मुख्यप्राणो देहान्तर्गतेन रूपेणाणुर्बहिर्मुख्यवायुरूपेण व्याप्तश्चेत्यर्थः ॥ **वाक्यशेष इति** ॥ प्राणो वा ईशितव्येश इत्युदाहरणमित्यर्थः । अन्यथा परमात्मपरत्वशङ्का स्यादिति भावः ॥ **विशेषश्रुतित्वादिति** ॥ अन्तर्वाणुर्बहिर्महानित्यणुत्वमहत्वयोर्व्यवस्थापकत्वेन विशेषश्रुतित्वादित्यर्थः ॥ **नाडीति** ॥ व्याप्तत्वे गत्ययोगादिति भावः । यत् यस्मात् अतो युक्तेः श्रुत्युक्तत्वेन प्राबल्यमिति भावः ।

॥ इति प्राणाणुत्वाधिकरणम् ॥

# १०. अथ ज्योतिरधिकरणम्

## सूत्रभाष्यम्

करणत्वं प्राणानामुक्तम् ।

'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः ।
यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु' इति

सौत्रायणश्रुतौ सयुक्तिकं जीवकरणत्वं प्रतीयते । 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्ध्येतैः कारयति' इति च कापायणश्रुतौ अत आह–

**॥ ॐ ज्योतराद्यधिष्ठानं तु तदामननात् ॐ ॥ १५ ॥**

यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेवैतैः करणैः प्रवर्तयति । 'यः प्राणे तिष्ठन्' (बृ.उ.५-७-१६) इत्यादि तदामननात् ।

## तत्त्वप्रदीपिका

एवं तावत्प्राणस्वरूपमुत्पत्तिसङ्ख्यापरिमाणवृत्तिभेदैः प्रपञ्चितम् । अकरणत्वं मुख्यस्योक्तम् । इतरेषां प्राणानां करणत्वमुक्तम् । कः पुनरत्र कर्ता यस्यैतानि करणानि भवन्त्यत आलोच्यते । यद्वशगानि तस्येति युक्तम् । जीववशगानि दृश्यन्ते श्रूयन्ते च । ब्रह्मवशगानि श्रूयन्ते । तत्र सूत्रम्– ज्योतिराद्यधिष्ठानं तु तदामननात् । 'योऽग्नौ तिष्ठन्यस्तेजसि तिष्ठन्' इत्यादि श्रुतेर्यज्ज्योतिराद्यधिष्ठानं तन्नियामकं ब्रह्म तदेव तस्मिन्नेव प्रकरणे चक्षुरादि नियामकं श्रूयते 'यः प्राणे तिष्ठन्' 'यश्चक्षुपि तिष्ठन्' इत्यादि । तेजःशब्दवाच्यायाः प्रकृतेः सूर्याग्न्यादेः प्राणस्य च नियन्तुः परस्य चक्षुरादिनियमनं किं कथनीयमित्यभिप्रायः । प्राणवता शब्दात् । जीवेन कर्त्रा करणैः कारयति ब्रह्म । जीवापेक्षां योजयित्वा योजयित्वेत्यर्थः । इतश्च युज्यते जीवकरणत्वश्रुतिः । अप्रयोजककर्तृत्वेऽपि जीवस्य तस्य च नित्यत्वात् । अनादिनित्यत्वात्तस्य जीवस्य करणानां तत्सम्बन्धस्य च ।

## तत्त्वप्रकाशिका

अत्र जगत्कारणे नारायणे श्रुतिसमन्वयसिद्ध्यर्थमिन्द्रियविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । श्रुतिसमन्वयेनोक्तं हरेर्जगत्कारणत्वमिन्द्रियविषयश्रुतीनां विरोधेनाप्रामाण्येऽयुक्तं स्यादिति निरसनीयोऽसौ । अधिकरणसङ्गतिं दर्शयति ॥ **करणत्वमिति** ॥ करणत्वाच्चेति चशब्देनेन्द्रियाणां करणत्वमुक्तम् । तान्येव विषयः । किं जीवकरणान्युत ब्रह्मकरणानीति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति ॥ **जीवस्येति** ॥ श्रुतौ ब्रह्मकरणत्वं प्रतीयत इति शेषः । जीवकरणानीन्द्रियाणि । 'जीवस्य करणान्याहुः प्राणान्' इति श्रुतेः । न च श्रुत्यन्तरविरोधः । जीववशत्वेन प्राणानां दृश्यमानत्वयुक्तियुक्तत्वेन जीवकरणत्वश्रुतेः प्राबल्यात् अनुभूयते खलु स्वाधीनत्वमिन्द्रियाणाम् । अतः प्रबलश्रुतिविरोधाद् ब्रह्मकरणत्वश्रुतिरप्रमाणमेवेति न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ ब्रह्मैव चक्षुरादिभिः करणैर्दर्शनादि कारयति न पुनर्जीवकरणानि । ब्रह्मण एव तेजःप्रभृतिभूतप्रेरकत्वेन तदंशभूतानामपि चक्षुरादीनां ब्रह्म प्रयोज्यत्वस्यैवोपपत्तेः । सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वश्रुतेर्यश्चक्षुषि तिष्ठन्नित्यादिश्रुतेश्चेति भावः । चक्षुरादिवदिति प्रकृतत्वाज्ज्योतिरादिग्रहणम् ।

## गुर्वर्थदीपिका

चक्षुरादिवदिति प्रकृतत्वादित्यत्र श्रोत्रादीति वक्तव्यत्वेऽपि चक्षुषः ज्योतिरंशत्वात्तस्य च चक्षुरादिवदित्यतीताधिकरणे आदित्वेन पठनाच्चात्रापि 'ज्योतिराद्यधिष्ठानम्' इत्येवोक्तमिति भावः ।

## भावबोधः

ननु प्राणानां करणत्वे सिद्धे ब्रह्मकरणत्वादिविचारावसरस्तदेव कुतः सिद्धमित्यत आह– **अधिकरणसङ्गतिमिति** ॥ ननु 'अकारणत्वाच्च' इति सूत्रेण मुख्यप्राणस्याकारणत्वमेवोक्तमिति कथं कारणत्वं प्राणानामुक्तमित्यत आह– **'च' शब्देनेति** ॥ अत एवेतरेषां प्राणानां करण-त्वादिति तत्सूत्रभाष्य उक्तम् ॥ **किमिति** ॥ चक्षुरादिवदित्यत्र करणत्वेन प्रकृतानि चक्षुरादीनि जीवकरणान्युत ब्रह्मकरणानीति चिन्ता । तदर्थं ब्रह्मकरणत्वं जीवकरणत्वश्रुतिविरुद्धं न वेति । तदर्थं 'जीवस्य करणान्याहुः' इति श्रुतिः 'यस्मात्तद्वशगाः' इत्युक्तिश्च जीवस्वामिकत्वाभिप्रायो-

(भावबोधः)

तेश्वरस्वामिकत्वेऽपि जीवं प्रति क्रियासाधनत्वमात्राभिप्रायेति । तदर्थं प्राणानामीश्वरस्वामिकत्वे जीवं प्रति क्रियासाधनत्वमात्रे च प्रमाणं नास्त्युतास्तीति । यस्मादिति श्रुतिशेषोक्तयुक्तिमाह– **जीववशत्वेनेति** ॥ अनेनेन्द्रियाणां जीवकरणत्वे दृष्टा युक्तिरिति न्यायविवरणमपि व्याख्यातं भवति । सूत्रे 'तु'शब्दो जीवकरणत्वरूपविपक्षव्यावृत्त्यर्थमेवकारार्थः करणैः प्रवर्तयतीत्युपस्कारो ज्योतिराद्यधिष्ठानमित्यस्यैवैतदर्थत्वेनावृत्तिर्वा । तदिति पदं व्यस्तं समस्तं च । व्यस्ततच्छब्दबलाद्य-च्छब्दलाभः । 'ज्योतिराद्यधिष्ठानम्' इति हेत्वर्थगर्भमित्यभिप्रेत्य प्रवृत्तं यत् ज्योतिराद्यधिष्ठानमिति भाष्यं व्याचष्टे– **ब्रह्मैवेत्यादिना** । 'यः प्राणे तिष्ठन्' इत्यादेः पौनरुक्त्यापातेन तस्य मुख्यप्राणपरत्वे कथमत्र तदुदाहरणमित्यतस्तदामननादि'ति युक्तिप्रदर्शकमपीत्यभिप्रेत्य तदुदाहरणमित्याशयेनाह– **सर्वप्राणप्रेरकेति** ॥ 'यश्चक्षुषि तिष्ठन्' इत्यादिदृष्टयुक्तेरीश्वरकरणत्वानङ्गीकार इति न्यायविवरणं 'तदामननादि'त्येतत्प्राणानां ब्रह्मकरणत्वे श्रुतिप्रदर्शकतया व्याख्यातमित्यभिप्रेत्याह– **यश्चक्षुपीति** ॥

ननु कारणक्रमेण वचने आकाशाद्यधिष्ठानमिति कार्यक्रमेण वचने पृथिव्याद्यधिष्ठानमिति वक्तव्ये ज्योतिराद्यधिष्ठानमिति किं निमित्तमित्यत आह– **चक्षुरादिवदिति** ॥ **प्रकृतत्वादिति** ॥ उपलक्षणं चैतत् । 'चक्षुषा दर्शयति' इति श्रुतौ चक्षुष आदित्वेन ग्रहणादित्यपि ग्राह्यम् ।

## भावदीपः

**अधिकरणेति** ॥ अस्याधिकरणस्याप्रस्तुतचिन्तापरत्वनिवृत्त्यर्थं पूर्वेण प्रस्तुतं स्मारयतीत्यर्थः । अन्यथा सामान्यासिद्धौ विशेषचिन्ताया अनवसरदुस्थत्वादिति भावः । एतेनास्य विचारस्य प्राणविषयत्वाच्छ्रेष्ठश्चेत्यतःपूर्वमेवोत्पत्तिसंख्यापरिमाणचिन्तापेटिकायां निवेशः स्यादिति शङ्काऽ-पास्ता । करणत्वोक्त्यनन्तरमेवास्याकाङ्क्षोदयात् । तर्हि तदनन्तरमेव निवेशः स्यादिति न शङ्क्यम् । प्रस्तुतमुख्यप्राणचिन्तासमाप्त्यनन्तरमेवास्योत्थानौचित्यात् सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वात् ब्रह्मणः तत्कारणत्वं युक्तमित्येवं रूपत्वादस्य **विचारस्येति** ॥ **श्रुताविति** ॥ श्रुतावित्यतः परमित्यर्थः । श्रुत्युक्तामेव युक्तिं शङ्कापूर्वं व्यनक्ति ॥ **न चेत्यादिना** ॥ दृश्यन्त इति श्रौतपदभावमाह ॥ **अनुभूयत इति** ॥ **अत इति** ॥ सयुक्तिकत्वात्प्रबलेत्यर्थः । तदेवेत्यादिभाष्यं व्याचष्टे ॥ **ब्रह्मैवेति** ॥ एवकारतात्पर्यमाह ॥ **न पुनरिति** ॥ सौत्रतुशब्दोऽवधारणे । व्यस्तेन तत्पदेनान्वेतीति सूचितम् । यज्ज्योतिराद्यधिष्ठानं ब्रह्मेत्यस्य तात्पर्यमाह ॥ **ब्रह्मण एवेति** ॥ योऽग्नौ तिष्ठन्यस्तेजसि

## तत्त्वप्रकाशिका

अत्र जगत्कारणे नारायणे श्रुतिसमन्वयसिद्ध्यर्थमिन्द्रियविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । श्रुतिसमन्वयेनोक्तं हरेर्जगत्कारणत्वमिन्द्रियविषयश्रुतीनां विरोधेनप्रामाण्येऽयुक्तं स्यादिति निरसनीयोऽसौ । अधिकरणसङ्गतिं दर्शयति ॥ **करणत्वमिति** ॥ करणत्वाच्चेति चशब्देनेन्द्रियाणां करणत्वमुक्तम् । तान्येव विषयः । किं जीवकरणान्युत ब्रह्मकरणानीति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति ॥ **जीवस्येति** ॥ श्रुतौ ब्रह्मकरणत्वं प्रतीयत इति शेषः । जीवकरणानीन्द्रियाणि । 'जीवस्य करणान्याहुः प्राणान्' इति श्रुतेः । न च श्रुत्यन्तरविरोधः । जीववशत्वेन प्राणानां दृश्यमानत्वयुक्तियुक्तत्वेन जीवकरणत्वश्रुतेः प्राबल्यात् अनुभूयते खलु स्वाधीनत्वमिन्द्रियाणाम् । अतः प्रबलश्रुतिविरोधाद् ब्रह्मकरणत्वश्रुतिरप्रमाणमेवेति न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ ब्रह्मैव चक्षुरादिभिः करणैर्दर्शनादि कारयति न पुनर्जीवकरणानि । ब्रह्मण एव तेजःप्रभृतिभूतप्रेरकत्वेन तदंशाभूतानामपि चक्षुरादीनां ब्रह्म प्रयोज्यत्वस्यैवोपपत्तेः । सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वश्रुतेर्यश्चक्षुषि तिष्ठन्नित्यादिश्रुतेश्चेति भावः । चक्षुरादिवदिति प्रकृतत्वाज्ज्योतिरादिग्रहणम् ।

## गुर्वर्थदीपिका

चक्षुरादिवदिति प्रकृतत्वादित्यत्र श्रोत्रादीति वक्तव्यत्वेऽपि चक्षुषः ज्योतिरंशत्वात्तस्य च चक्षुरादिवदित्यतीताधिकरणे आदित्वेन पठनाच्चात्रापि 'ज्योतिराद्यधिष्ठानम्' इत्येवोक्तमिति भावः ।

## भावबोधः

ननु प्राणानां करणत्वे सिद्धे ब्रह्मकरणत्वादिविचारावसरस्तदेव कुतः सिद्धमित्यत आह– **अधिकरणसङ्गतिमिति** ॥ ननु 'अकारणत्वाच्च' इति सूत्रेण मुख्यप्राणस्याकारणत्वमेवोक्तमिति कथं कारणत्वं प्राणानामुक्तमित्यत आह– **'च' शब्देनेति** ॥ अत एवेतरेषां प्राणानां करण-त्वादिति तत्सूत्रभाष्य उक्तम् ॥ **किमिति** ॥ चक्षुरादिवदित्यत्र करणत्वेन प्रकृतानि चक्षुरादीनि जीवकरणान्युत ब्रह्मकरणानीति चिन्ता । तदर्थं ब्रह्मकरणत्वं जीवकरणत्वश्रुतिविरुद्धं न वेति । तदर्थं 'जीवस्य करणान्याहुः' इति श्रुतिः 'यस्मात्तद्वशगाः' इत्युक्तिश्च जीवस्वामिकत्वाभिप्रायो-

(भाववोधः)

तेश्वरस्वामिकत्वेऽपि जीवं प्रति क्रियासाधनत्वमात्राभिप्रायेति । तदर्थं प्राणानामीश्वरस्वामिकत्वे जीवं प्रति क्रियासाधनत्वमात्रे च प्रमाणं नास्त्युतास्तीति । यस्मादिति श्रुतिशेषोक्तयुक्तिमाह– **जीववशत्वेनेति** ॥ अनेनेन्द्रियाणां जीवकरणत्वे दृष्टा युक्तिरिति न्यायविवरणमपि व्याख्यातं भवति । सूत्रे 'तु'शब्दो जीवकरणत्वरूपविपक्षव्यावृत्त्यर्थमेवकारार्थः करणैः प्रवर्तयतीत्युपस्कारो ज्योतिराद्यधिष्ठानमित्यस्यैवैतदर्थत्वेनावृत्तिर्वा । तदिति पदं व्यस्तं समस्तं च । व्यस्ततच्छब्दबलाद्य-च्छब्दलाभः । 'ज्योतिराद्यधिष्ठानम्' इति हेत्वर्थगर्भमित्यभिप्रेत्य प्रवृत्तं यत् ज्योतिराद्यधिष्ठानमिति भाष्यं व्याचष्टे– **ब्रह्मैवैत्यादिना** । 'यः प्राणे तिष्ठन्' इत्यादेः पौनरुक्त्यापातेन तस्य मुख्यप्राणपरत्वे कथमत्र तदुदाहरणमित्यतस्तदामननादि'ति युक्तिप्रदर्शकमपीत्यभिप्रेत्य तदुदाहरणमित्याशयेनाह– **सर्वप्राणप्रेरकेति** ॥ 'यश्चक्षुषि तिष्ठन्' इत्यादिदृष्टयुक्तेरीश्वरकरणत्वानङ्गीकार इति न्यायविवरणं 'तदामननादि'त्येतत्प्राणानां ब्रह्मकरणत्वे श्रुतिप्रदर्शकतया व्याख्यातमित्यभिप्रेत्याह– **यश्चक्षुषीति** ॥

ननु कारणक्रमेण वचने आकाशाद्यधिष्ठानमिति कार्यक्रमेण वचने पृथिव्याद्यधिष्ठानमिति वक्तव्ये ज्योतिराद्यधिष्ठानमिति किं निमित्तमित्यत आह– **चक्षुरादिवदिति** ॥ **प्रकृतत्वादिति** ॥ उपलक्षणं चैतत् । 'चक्षुषा दर्शयति' इति श्रुतौ चक्षुष आदित्वेन ग्रहणादित्यपि ग्राह्यम् ।

## भावदीपः

**अधिकरणेति** ॥ अस्याधिकरणस्याप्रस्तुतचिन्तापरत्वनिवृत्त्यर्थं पूर्वेण प्रस्तुतं स्मारयतीत्यर्थः । अन्यथा सामान्यासिद्धौ विशेषचिन्ताया अनवसरदुस्थत्वादिति भावः । एतेनास्य विचारस्य प्राणविषयत्वाच्छ्रेष्ठश्चेत्यतःपूर्वमेवोत्पत्तिसंख्यापरिमाणचिन्तापेटिकायां निवेशः स्यादिति शङ्काऽ-पास्ता । करणत्वोक्त्यनन्तरमेवास्याकाङ्क्षोदयात् । तर्हि तदनन्तरमेव निवेशः स्यादिति न शङ्क्यम् । प्रस्तुतमुख्यप्राणचिन्तासमाप्त्यनन्तरमेवास्योत्थानौचित्यात् सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वात् ब्रह्मणः तत्कारणत्वं युक्तमित्येवं रूपत्वादस्य **विचारस्येति** ॥ **श्रुताविति** ॥ श्रुतावित्यतः परमित्यर्थः । श्रुत्युक्तामेव युक्तिं शङ्कापूर्वं व्यनक्ति ॥ **न चेत्यादिना** ॥ दृश्यन्त इति श्रौतपदभावमाह ॥ **अनुभूयत इति** ॥ **अत इति** ॥ सयुक्तिकत्वात्प्रबलेत्यर्थः । तदेवेत्यादिभाष्यं व्याचष्टे ॥ **ब्रह्मैवेति** ॥ एवकारतात्पर्यमाह ॥ **न पुनरिति** ॥ सौत्रतुशब्दोऽवधारणे । व्यस्तेन तत्पदेनान्वेतीति सूचितम् । यज्ज्योतिराद्यधिष्ठानं ब्रह्मेत्यस्य तात्पर्यमाह ॥ **ब्रह्मण एवेति** ॥ योऽग्नौ तिष्ठन्यस्तेजसि

(भावदीपः)

तिष्ठन्नित्यादिश्रुतेर्यज्ज्योतिराद्यधिष्ठानं तन्नियामकं ब्रह्म तदेव तस्मिन्नेव प्रकरणे चक्षुरादिनियामकं श्रूयते । यः प्राणे तिष्ठन्यश्चक्षुषि तिष्ठन्नित्यादीति तत्वप्रदीपोक्तं तदंशभूतानामपीत्येतट्टीकोक्तिं चानुरुध्य चन्द्रिकायां यदग्न्यादिरूपज्योतिराद्यधिष्ठानं ब्रह्म तदेव तत्कार्यरूपचक्षुरादिरूपज्योति-राद्यधिष्ठानमिति सूत्रं योज्यमित्याह भाष्यकार इत्युक्तं सर्वप्राणप्रेरकेत्यादि । यद्यपि यः प्राणे तिष्ठन्निति श्रुतः यो वाचि तिष्ठन् यश्चक्षुषि तिष्ठन्नित्यादि चेन्द्रियप्रायपाठात् प्राणपरः माध्यन्दिनानां तथा पाठाच्च । तथापि चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते इति श्रुतेः प्राणेन्द्रियप्रधानदेवताया मुख्यवायोरपि प्राणपदेन ग्रहणादधिकार्थलाभाय मुख्यप्राणप्रेरकत्व-श्रुतेरित्युक्तम् । अत एव सर्वप्राणप्रेरकेति चोक्तिः । आदिपदेन न्यायविवरणोक्तश्रुतिर्ग्राह्येति भावेनाह ॥ **यश्चक्षुषीति** ॥ ननु भूतांशत्वात्प्राणानां भूतक्रमेणाकाशाद्यधिष्ठानमिति वा यः पृथिव्यां तिष्ठन्नित्यादिश्रौतक्रमानुसारेण पृथिव्याद्यधिष्ठानमिति वा वाच्यमित्यत आह ॥ **चक्षुरादीति** ॥

## अभिनवचन्द्रिका

**सन्देहबीजं श्रुतिविगानमिति** ॥ ननु नेदं श्रुतिविगानम् । इन्द्रियाणामुभयकरणत्वसम्भवात् । यथा हि देवदत्तायाः पुत्रो देवदत्तस्यापि पुत्रो भवति । एवम् इन्द्रियाणि ईश्वरकरणान्यपि जीवकरणानि भविष्यन्ति इति चेत्, उच्यते भवत्येवैतच्छ्रुतिविगानम् । तथा हि– 'जीवस्य करणान्याहुः' इति श्रुतिस्तावत् जीवस्य करणस्वातन्त्र्यं वक्ति । 'तद्वशगा' इति तद्वशत्वाभि-धानात् । 'ब्रह्मणो वा एतानि करणानि' इति श्रुतिस्तु ब्रह्मण एव करणस्वातन्त्र्यं वक्ति । एतैः कारयतीत्यभिधानात् । न चोभयोः स्वातन्त्र्यं सम्भवतीति ॥ **चक्षुरादिभिः करणैरिति** ॥ स्वसम्बन्धिभिरिति शेषः ॥ **न पुनर्जीवेति** ॥ ईश्वराज्ञया जीवप्रयोज्यान्यपि न जीवसम्बन्धी-नीत्यर्थः । कुतो नेन्द्रियाणि जीवसम्बन्धीनीत्यतो लाघवाय 'तदामननात्' इति वक्तव्ये 'ज्योतिराद्यधिष्ठानंत्विति वदता सूत्रकृता सूचितां युक्तिमाह– **ब्रह्मण एवेति** ॥ चक्षुरादेर्ब्रह्म-प्रयोज्यत्वस्य यथेष्टविनियोज्यत्वस्योपपत्तेर्ब्रह्मसम्बन्धीनि चक्षुरादीनि न तु जीवसम्बन्धीनि । चक्षुरादीनां देवत्वेन यथेष्टविनियोगानर्हत्वात् । तदेव हि स्वं नाम भवति, यद्यथेष्टविनियोगार्हमिति भावः ।

# वाक्यार्थमुक्तावली

**अधिकरणसङ्गतिमिति ॥** अव्यवहिताधिकरणसंगतिस्तु प्रकृतस्य मुख्यप्राणस्य भगवदुत्पन्नस्य निर्णीतपरिमाणस्य प्रागुक्ताकरणत्वसिद्धये प्राणानां करणत्वप्रतिपादानादिति ज्ञेयम् ॥ **किमिति ॥** चक्षुरादिवदित्यत्र करणत्वे न प्रकृतानि चक्षुरादीनि किं जीवकरणान्युत ब्रह्मकरणानीति चिन्ता । तदर्थं जीवकरणत्वश्रुतिर्यस्मात्तद्वशग इत्यनुभवसिद्धयुक्तिश्च जीवस्वामित्वाभिप्रायेणोत ईश्वरस्वामिकत्वेऽपि जीवं प्रति क्रियासाधनत्वबहुकालं जीवसम्बन्धित्वमात्राभिप्रायेणेति । **जीवकरणानीति ॥** जीवकर्तृप्रयोज्यानीत्यर्थः । कुतो न विरोध इत्यतो दृष्टा युक्तिरित्युक्तमेव पूर्वपक्षन्यायं यस्मात् तद्वशगा इति भाष्यारूढतया दर्शयति ॥ **जीववशत्वेनेति ॥** न च करणत्वं नाम कर्तृप्रयोज्यत्वं प्राणानां जीववशत्वानुभवे च श्रुतेरनुभवयुक्तस्वेनैव प्राबल्यं प्राप्तं किं युक्तिपर्यन्तं धावनेनेति चेत्सयुक्तिकश्रुतिविरोधस्यात्र परिहार्यत्वात् । यद्यदधीनतया दृश्यते तत्र तदधीनमिति व्याप्त्युपपत्या युक्तेर्न विवक्षोपपत्तेरिति भावः । सूत्रे चशब्दोऽवधारणे । तदिति व्यस्तं समस्तं च पदम् । ज्योतिराद्यधिष्ठानमिति चावर्तते । आद्यं हेत्वर्थं गर्भविशेषाणां द्वितीयं साध्यप्रदर्शनपरम् । ततश्च यद् ब्रह्म योऽग्नौ यस्तेजसीति तिष्ठन्नित्यादिश्रुतेर्ज्योतिरादिरधिष्ठानं यस्य तत् तन्नियामकं तदेव ज्योतिराद्यधिष्ठानमिति ज्योतिरादिप्रकृतिकचक्षुरादिकरणाधिष्ठानं तानि कारणत्वेनोपादाय प्रवर्तयतीति यावत् । कुतः तदामननात् । तस्य चक्षुराद्यधिष्टातृत्वस्य यश्चक्षुषि तिष्ठन्नित्यादावामननादिति सूत्रार्थमभिप्रेत्य भाष्यारोहं दर्शयति ॥ **ब्रह्मैवेत्यादिना ॥** हेत्वर्थगर्भत्वं व्यनक्ति ॥ **ब्रह्मण एवेति ॥ तदंशभूतानामिति ॥** तेषां भूतैरुपचय इत्युक्तत्वादिति भावः । यः प्राणे तिष्ठन्' इत्यादौ प्राणशब्दस्येन्द्रियपरत्वेऽन्तर्यामिब्राह्मणे यश्चक्षुषि तिष्ठन्नित्यादेः पौनरुक्त्यं मुख्यप्राणपरत्वेत्र प्रकृतानुपयोग इति कथमत्र तदुदाहरणमित्यत आह ॥ **सर्वप्राणप्रेरकेति ॥** इत्यादीत्यादिपदार्थः ॥ **यश्चक्षुपीति ॥** एतेन दृष्टा युक्तिन्यायोऽपि भाष्यारूढो दर्शितः । आकाशादिकारणक्रमेणाकाशाद्यधिष्ठानमिति वाक्ये ज्योतिरादीत्युक्ते निमित्तमाह ॥ **चक्षुरादिवदिति ॥** चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य इत्यत्रेति भावः । तत्रापि श्रोत्रादिवदिति वाच्ये चक्षुरादिग्रहणमणवश्चेत्यत्र तद्यथाणुतश्चक्षष इति श्रुतौ चक्षुपः प्रकाशव्याप्तेः स्फुटभासत्वेन चक्षुष एवोपादानादिति बोध्यम् ।

## वाक्यार्थविवरणम्

**जीवकरणान्युत ब्रह्मकरणानीति** ॥ यस्मात्तद्वशगा इति वाक्यबलात् कर्तृप्रयोज्यत्वं हि करणत्वं प्रतीयते । एवं जीवकरणानीत्यादेर्जीवप्रयोज्यानि वा ब्रह्मप्रयोज्यानि वेत्यर्थो द्रष्टव्यः । प्रयोज्यत्वं प्रेर्यत्वम् । एवमुत्तरत्रापि जीवकरणत्वादिशब्दार्थोऽयमेव द्रष्टव्यः ॥ **सर्वप्राणेति** ॥ सर्वेन्द्रियेत्यर्थः ।

## वाक्यार्थमञ्जरी

अकरणत्वाच्च न दोष इति सूत्रे मुख्यप्राणस्याकरणत्वमेवोक्तं न तु प्राणानां करणत्वं तत्कथमेतदिति तत्राह ॥ **च शब्देनेति** ॥ ज्योतिराद्यधिष्ठानमग्न्यादिभूतनियामकं यद् ब्रह्म तत्तु तदेव ज्योतिराद्यधिष्ठानम् अग्न्याद्यंशचक्षुरादिनियामकं तत्करणमिति यावत् कुतः तदामननात् तस्य चक्षुरादिनियामकत्वस्य यश्चक्षुषि तिष्ठन्नित्यादिनाभिधानादित्यर्थः ॥ **सर्वप्राणप्रेरकेति** ॥ 'यः प्राणे तिष्ठन्' इति प्राणशब्दस्येन्द्रियपरत्वे यश्चक्षुषीत्यादिना पौनरुक्त्यापत्तेरिति भावः । आदिपदोपात्त-माह ॥ **यश्चक्षुषीति** ॥ ननु कारणक्रमेण वचने आकाशाद्यधिष्ठानमिति कार्यक्रमेण वचने पृथिव्याद्यधिष्ठानमिति वक्तव्यं ज्योतिराद्यधिष्ठानमिति वचने किं निमित्तमित्यत आह ॥ **चक्षुरादि-वदिति** ॥ उपलक्षणमेतत् । चक्षुषा दर्शयतीति श्रुतौ चक्षुष आदित्वेन ग्रहणादित्यपि द्रष्टव्यम् ।

## सूत्रभाष्यम्

**कथं जीवकरणत्वश्रुतिरित्यतो वक्ति–**

**॥ ॐ प्राणवता शब्दात् ॐ ॥ १६ ॥**

**जीवेनैव करणैः कारयति परमात्मा । अतो न विरोधः । एष ह्येनेनाऽत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति बुद्ध्या बोधयति तस्मादेतावाहुः सृतिरसृतिरिति' इति भाल्लवेयश्रुतेः ।**

**'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।**
**श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ।**

(सूत्रभाष्यम्)

न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः ।
केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितम्' ॥ इति च वाराहे ।

## तत्त्वप्रदीपिका

मनोबुद्धी त्वेकादशद्वादशो इति । द्विवचनप्रयोगात् । उभयोः सम्भूय द्वादशत्व एकादशाभावप्रसङ्गः । दशात्वपर्यवसितत्वादितरेन्द्रियाणाम् । ज्ञानेन्द्रियाणां सप्तत्वं च मनोबुद्ध्योर्द्वित्व एव युज्यते । त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् । अयमिह सङ्ग्रहः । मुख्यप्राणस्यानिन्द्रियत्वमितरेषामिन्द्रियत्वं तदधीनत्वं तेषां द्वादशत्वं चेति । अतश्चैतत्सिद्धं, करणत्वेनैषां जीवाधीनत्वमिन्द्रियाणां सर्वात्मना च मुख्यतो ब्रह्माधीनत्वमिति ।

## तत्त्वप्रकाशिका

यदि प्राणानां ब्रह्मकरणत्वं कथं तर्हि जीवकरणत्वश्रुतिरुपपद्येत किं तु ब्रह्मकरणत्वस्य विरोध एवेत्याशङ्क्य तत्परिहारत्वेन सूत्रमवतार्य व्याचष्टे ॥ **कथमिति** ॥ ब्रह्मकरणत्वाङ्गीकारेऽपि प्राणानां न जीवकरणत्वश्रुतिविरोधः । स्वकरणैरेव प्राणैर्ब्रह्म जीवेन दर्शनादि कारयतीत्येतदर्थत्वोपपत्तेर्जीवकरणत्ववाक्यस्य । ब्रह्मेन्द्रियैर्जीवेन दर्शनादि कारयतीत्येतच्च श्रुतिसिद्धमिति भावः । सृतिरसृतिरिति स्वातन्त्र्येण प्रवृत्तियुक्तस्तद्विहीनश्च । अस्तु ब्रह्म जीवेन चक्षुरादिना दर्शनादि कारयतीति तथापि जीवकरणत्वश्रुतिस्तदर्थेत्येतत्कुत इत्यत आह ॥ **करणैरिति** ॥ करणानि जीवस्य । यद्येतानि ब्रह्मणस्तर्हि मुख्यप्राणस्याप्येतत्सम्भवतीत्यकरणत्वहेतुना प्राण एवाकरणस्तस्मान्मुख्य इत्युक्तं मुख्यत्वं विरुद्धं स्यादिन्द्रियाणां जीवकरणत्वे तदुपपत्तिरित्यत आह ॥ **नेति** ॥ जीवापेक्षया ब्रह्मकरणत्वं तत्र विवक्षितमिति भावः । मुख्यं मुख्यप्राणम् ।

## गुर्वर्थदीपिका

'सृ गतौ' इति धातोः सरतीति सृतिरिति लटि कृते कर्तरि लटोऽनुशासनात्कर्तुश्च स्वतन्त्रत्वात् स्वातन्त्र्यवान्लभ्यत इति भावेनाऽऽह । सृतिस्स्वातन्त्र्येण प्रवृत्तिरित्युक्तम् । जीवस्य सुप्तौ चक्षुरादीन्द्रियाणां व्यापारादर्शनेन तत्प्रबोधदशायां च व्यापारदर्शनेन चक्षुरादीन्द्रियाणि जीवद्वारेव प्रेरयति भगवान् । अतस्तेषां मुख्यतो ब्रह्मकरणता । अमुख्यतो जीवकरणता च श्वासस्य

(गुर्वर्थदीपिका)

तदभिमानिमुख्यप्राणस्य च जीवसुप्तिदशायामपि सुतरां व्यापारदर्शनेन तदुभयं न जीवद्वारा प्रेरयति भगवान् । जीवस्य निर्व्यापारतादशायामपि प्रवर्तमानयोरनयोः जीवव्यापारान्वयव्यतिरेकानु- विधायित्वाभावात् । अतस्तयोरमुख्यतोऽपि न जीवकरणतेति भावेनाऽऽह **करणैः कारणमिति** ॥ अत्रायं विवेकः । 'प्राणवता शब्दात्' इति सूत्रं जीवद्वारा करणानां परप्रेर्यमाणत्वमाह ॥ 'वैलक्षण्यात्' इति वक्ष्यमाणसूत्रं तु मुख्यप्राणस्येतो वैलक्षण्यमात्रमाह । 'भेदश्रुतेः' इति सूत्रं तूक्तसूत्रद्वयार्थमस्पृष्ट्वैव स्थितत्वास्थितत्वादिना प्राणस्येन्द्रियाणां च वैसादृश्यमाह । अतस्सूत्राणां न गतार्थता ।

ननु वैलक्षण्यादिति सूत्र एव सर्ववैलक्षण्यं साध्यताम् । वैलक्षण्यान्तरप्रतिपादनाय किमर्थ 'भेदश्रुतेः' इति सूत्रान्तरमिति चेत्सत्यम् । 'वैलक्षण्यात्' इति सूत्रे 'प्राणवता शब्दात्' इत्यत्रोक्त- प्रमेयविलक्षण पुरुषानपेक्षप्रवृत्तिरूपवैलक्षण्यमात्रसङ्ग्रहेणापि श्रोता चरितार्थस्स्यात् । 'भेदश्रुतेः' इति पृथक्सूत्ररचनायां त्वर्थापौनरुक्त्यघटनाय पुनरर्थान्तरे दृष्टिं दिशेत् । तेन च मुख्यप्राणस्योभयथाऽपि करणेभ्यो वैलक्षण्येन महामाहात्म्यं सिद्ध्येत् । अतस्सूत्रद्वयं सार्थकमिति भावः । करणैः कारण मिति स्मृतिस्तु आदिसूत्रान्तिमसूत्रार्थसङ्ग्राहिका तत्र वाऽत्र वोदाहर्तव्या । प्रथमोल्लङ्घने कारणा- भावादत्रैवोदाहृतेति ।

## भावबोधः

**स्वकरणैरेवेति** ॥ अनेन लौकिकदृष्टेस्त्वीदृशेनैव जीवानुसारित्वक्लृप्त्योपपत्तेरिति न्याय- विवरणमपि व्याख्यातं भवति । जीवकरणत्वे तदुपपत्तिरित्यर्थः । जीवापेक्षया **ब्रह्मकरणत्वमिति** ॥ 'अकरणत्वाच्च' इति सूत्रे मुख्यप्राणस्य मुख्यत्वप्रयोजकाकरणत्वप्रतियोगित्वेन यत्करणत्वमितर- प्राणानां 'च' शब्देनोक्तं तज्जीवेनैव करणैः कारयति परमात्मेत्याद्युक्तरीत्या जीववशत्वेन ब्रह्मप्रयोज्यत्वरूपं करणत्वं तत्र सूत्रे विवक्षितम् । मुख्यप्राणस्य जीवापेक्षया ब्रह्मकरणत्वा- भावान्मुख्यत्वोपपत्तिरिति भावः ।

## भावदीपः

न विरोध इति भाष्यं व्याचष्टे ॥ **किं तु ब्रह्मेति** ॥ जीवेनैवेत्यादिभाष्यार्थं वदन्नेवातः शब्दार्थमाह ॥ **स्वेति** ॥ सूत्रे पूर्वत्र ज्योतिरादीत्यनेन प्रकृतत्वात्स्वकरणैरिति लाभः ।

(भावदीपः)

तदित्यस्यानुवृत्तिरिति भावः । जीवेन प्रयोज्यकर्त्रेत्यर्थः । युक्तिविरोधं त्वग्रे परिहरिष्याम इति भावः ॥ **करणानि जीवस्येति** ॥ स्मृतौ पूर्वं पुरुषपदेन जीवस्य प्रकृतत्वात्करणानीत्यत्र जीवस्येत्यन्वेतीति भावः । जीवस्येत्यादिस्मृतिशेषस्योपयोगं व्यनक्ति ॥ **यद्येतानीति** ॥ **एतदिति** ॥ ब्रह्मप्रयोज्यत्वरूपं ब्रह्मकरणत्वमित्यर्थः ॥ **तदुपपत्तिरिति** ॥ मुख्यप्राणस्याकरणत्वहेतुकमुख्यत्वोपपत्तिरित्यर्थः । तस्य सर्वजीवोत्तमत्वेन जीवप्रयोज्यत्वरूपकरणत्वाभावादिति भावः । तावता कथमुक्तशङ्कानिवृत्तिरित्यत आह ॥ **जीवापेक्षयेति** ॥ जीववशत्वेन ब्रह्मप्रयोज्यत्वरूपकरणत्वं तत्राकरणत्वाच्चेति सूत्रे विवक्षितम् । तदभावश्च मुख्ये सम्भवतीत्यर्थः । गौणप्रतिद्वन्द्वित्वभ्रान्तिं निराह ॥ **मुख्यं मुख्यप्राणमिति** ॥

## अभिनवचन्द्रिका

ननु भूतानामाकाशप्रभृतित्वेन आकाशाद्यधिष्ठानमिति वक्तव्यमित्यत आह– **चक्षुरादिवदिति** ॥ 'कथं तर्हि जीवकरणत्वश्रुतिः' इति भाष्यं शेषपूरणेन व्याख्याति– **यदि प्राणानामिति** ॥ का कथंतेति पृच्छति– **किंत्विति** ॥ **ब्रह्मकरणत्वस्येति** ॥ ब्रह्मकरणत्वमबाधित्वा न प्रामाण्यं भजत इति भावः । एतेन यदि ब्रह्मकरणमित्युक्ततर्कस्य विपर्ययपर्यवसानेनैव पूर्णत्वात् 'किंत्विति वाक्यं व्यर्थमिति परास्तम् । तदभिप्रायकथनार्थमेवाऽस्य वाक्यस्य प्रवृत्तत्वात् ।

## वाक्यार्थमुक्तावली

**तद्विरोध एवेति** ॥ सयुक्तिकत्वादित्यर्थः । प्राणा इन्द्रियाण्यस्य सन्तीति प्राणवान् जीवः । तेन तदित्यस्ति । ब्रह्मप्राणवता जीवेन कर्ता स्वकरणैर्दर्शनादि कारयति एष ह्येनेनात्मना चक्षुषा दर्शयतीति शब्दादिति सूत्रार्थमभिप्रेत्य भाष्यार्थमाह ॥ **ब्रह्मेति** ॥ कारणानामीशप्रयोज्यत्वे जीवस्य तदायत्तकर्तुः कर्मसु साधनत्वात्तत्परा श्रुतिरिति भावः । जीवकरणत्वे तदुपपत्तिरिति । मुख्यप्राणस्य जीवकरणत्वाभावादकरणत्वहेतुतेत्याद्युपपत्तिरित्यर्थः ॥ **जीवापेक्षया ब्रह्मकरणत्वं तत्र विवक्षितमिति** ॥ जीवेच्छामिदं करिष्य इत्यादिरूपां योजयित्वा ब्रह्मास्य स्वतन्त्रकर्तृप्रयोज्यत्वरूपकरणत्वाच्चेति सूत्रे चशब्देन विवक्षितमित्यर्थः । यथोक्तं तत्त्वप्रदीपे जीवेन कर्ता करणैः कारयति ब्रह्मजीवापेक्षां योजयित्वेत्यर्थ इति । यद्वा जीवप्रयत्नेच्छादिकमपेक्ष्येत्यर्थः । यद्वक्ष्यतीन्द्रियाणां प्रयत्नापेक्ष एवेति । मुख्यप्राणस्य तु जीवापेक्षया ब्रह्मकरणत्वाभावान्मुख्यत्वोपपत्तिरिति भावः ।

## वाक्यार्थविवरणम्

अनुपपन्नो वाऽस्त्वित्याशयेन पृच्छति ॥ **किन्त्विति** ॥ तथात्वेऽप्रामाण्यापत्तेः । तस्य चापौरुषेयेऽसम्भवात् । प्रत्युत ब्रह्मकरणत्वस्य ब्रह्मकरणत्वप्रतिपादकप्रमाणस्य तद्विरोधो जीवकरणत्वप्रतिपादकश्रुत्यैव विरोधोऽस्त्वित्याशयेनोत्तरमाह ॥ **ब्रह्मेति** ॥ स्वकरणैरेव प्राणैः परं ब्रह्म स्वप्रेर्यतया स्वस्य करणैरेव प्राणैरिन्द्रियैर्जीवेन दर्शनादिकं कारयति जीवेच्छया । जीवे प्रेर्याणि तदनुसारीणि करोतीत्यर्थः । यथोक्तं न्यायविवरणे 'ईशेनैव जीवानुसारित्वक्लृप्त्योपपत्तिः' इति । अभिप्रायकथनव्याजेन सूत्रार्थमाह ॥ **ब्रह्मेन्द्रियैरिति** ॥ प्राणवतेत्यस्यार्थमाह ॥ **जीवेनेति** ॥ जीव प्राणधारण इति धातोः । ब्रह्मेन्द्रियैर्दर्शनादि कारयतीति सूत्रे शेषपूरणम् । शब्दादित्यस्य तात्पर्यं **श्रुतिसिद्धमिति** ॥ तदर्थम् । स्वकरणैरेव प्राणैर्ब्रह्म जीवेन दर्शनादि कारयतीत्येतदर्थम् ॥ **एतदिति** ॥ ब्रह्मप्रयोज्यत्वेन करणत्वं सम्भवतीत्यर्थः ॥ **जीवेति** ॥ यदीन्द्रियाणि जीव-प्रयोज्यतया जीवकरणानि स्युस्तदैव मुख्यप्राणस्य जीवप्रेर्यत्वाभावेनाकरणत्वहेतुनोक्तं मुख्यत्वं युज्यते । न ह्येतदस्ति । इन्द्रियाणां ब्रह्मप्रयोज्यत्वेन ब्रह्मकरणत्वाङ्गीकारात् । एतादृशं च करणत्वं मुख्यप्राणस्यापि सम्भवतीत्यकरणत्वेनोक्तं मुख्यत्वं न युक्तमित्याशयः ।

ननु तर्ह्यकरणत्वादिति सूत्रे मुख्यप्राणस्य मुख्यत्वसाधकं यदकरणत्वं तत्प्रतियोगिभूतं यत्करणत्वं तत् कीदृशं विवक्षितमित्यत आह ॥ **जीवापेक्षया ब्रह्मकरणत्वमिति** ॥ 'ब्रह्मणो वा एतानि करणानि' इति श्रुतौ चक्षुरादीनां यद्ब्रह्मकरणत्वं ब्रह्मप्रयोज्यत्वं विवक्षितं तज्जीवापेक्षया जीवमपेक्ष्य जीवद्वारेत्यर्थः । यद्वा जीवेच्छयेत्यर्थः । स्वकरणान्येवेन्द्रियाणि जीवेच्छया जीवप्रेर्याणि तदनुसारीणि करोतीत्येवं ब्रह्मकरणत्वं तत्र 'अकरणत्वात्' इति सूत्रे अकरणत्वप्रतियोगितया विवक्षितम् । एतादृशं ब्रह्मकरणत्वं न मुख्यप्राणे । परं ब्रह्म मुख्यप्राणं जीवद्वारा जीवेच्छया वा प्रेर्यं न करोति । अत एतादृशाकरणत्वहेतुना तस्य मुख्यत्वसाधनं युक्तमिति भावः । करणैः कारणं ब्रह्मेति भाष्यस्यायमर्थः । कारणं सकलकार्यकारणं परं ब्रह्म करणैः स्वप्रयोज्यैः श्रोत्रादिभिरिन्द्रियैः पुरुषापेक्षया जीवापेक्षया जीवद्वारा जीवेच्छया चाखिलं तत्तदिन्द्रियकार्यं ज्ञानादि कारयति । 'एष ह्यनेनात्मन' इति श्रुतेः । तथा च स्वतन्त्रं परं ब्रह्म स्वप्रेरितेष्वेवेन्द्रियेषु स्वसङ्कल्पानुसारेणैतानि मदीयानीति जीवस्याभिमानविशेषं दत्वा तदिच्छया तत्प्रेर्याणि ज्ञानादिविषये करोतीति यावत् ।

(वाक्यार्थविवरणम्)

अतो जीवस्य करणानीति । 'जीवस्य करणान्याहुः' इति श्रुतावुच्यन्त इति विदो ज्ञानिनो विदुः । परमेश्वरो मुख्यं मुख्यप्राणं जीवापेक्षया न कारयेत् । किन्त्वात्मेच्छयैव प्रेर्यं कारयेदतस्तस्य मुख्यत्वं निश्चितम् । परमेश्वरः केवलं स्वप्रेर्ये मुख्यप्राणे 'अयं मदीयः' इति जीवस्याभिमानविशेषं दत्वा जीवापेक्षया जीवद्वारा जीवेच्छया वा प्रेर्यं न करोतीति तस्य मुख्यत्वमिति भावः ।

## वाक्यार्थमञ्जरी

ब्रह्म प्राणवता इन्द्रियवता जीवेन कर्त्रा स्वकरणैरिन्द्रियैर्दर्शनादि कारयति कुतः शब्दात् एष हीति श्रुतेः अतस्तानि जीवकरणानीत्युच्यन्त इत्यर्थः । एतत् ब्रह्मकरणत्वम् ॥ **तदुपपत्तिरिति** ॥ मुख्यप्राणस्य जीवकरणत्वाभावेनाकरणत्वहेतुनोक्तत्वेन मुख्यत्वोपपत्तिरित्यर्थः ॥ **जीवापेक्षया ब्रह्मकरणत्वमिति** ॥ तत्र अकरणत्वाच्चेति सूत्रे इन्द्रियाणां मुख्यत्वे यत्तु हेतुत्वेनोक्तं करणत्वं तज्जीवेनैव करणैः कारयति परमात्मेत्युक्तरीत्या जीवापेक्षया ब्रह्मकरणत्वं विवक्षितं मुख्यप्राणस्य च जीवापेक्षया ब्रह्मकरणत्वाभावान्मुख्यत्वोपपत्तिरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ तस्य च नित्यत्वात् ॐ ॥ १७ ॥**

**अनादिनित्यत्वाच्च जीवकरणसम्बन्धस्य युज्यते तत्करणत्वश्रुतिः । 'अथावियोगीनि । करणैर्वात्र न वियुज्यते देहेनैव वियुज्यत इत्येतद्भाव करणानां करणत्वं यद्भात्र न वियुज्यत' इति गौपवनश्रुतिः । च शब्दः करणसम्बन्धग्राही ।**

॥ इति ज्योतिरधिकरणम् ॥

## तत्त्वप्रदीपिका

इदमिह निरूप्यते– किं चतुर्मुखान्नामरूपक्लृप्तिरुत परमादिति । न चात्र चतुर्मुखस्याप्रसक्तिराशङ्कनीया । स्वयमेवायं भगवान् प्राणत्वादूर्ध्वं चतुर्मुखपदमधिष्ठास्यतीति ज्ञापयन् ।

प्राणस्वरूपनिरूपणावसरे चतुर्मुखं प्रसञ्जयति । विरेचयति विसृजति । विदधाति विशेषेण धारयति योजयति वा । परमाद्धयेते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति न ह्यवरस्याल्पशक्तेः सर्वनामरूपकर्तृत्वं युक्तम् ।

(तत्त्वप्रदीपिका)

'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम्' इति भागवते ॥

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् । अयोग्यप्रत्यक्षगम्यरूपं त्रिवृत्क्रियापेक्षया भवति, नाम च तद्व्यवहार्यं तदपेक्षं भवति । 'सेयं देवता इमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति । 'अग्निहोत्रं जुहोति, यवागूं पचति' इतिवत्, ''नामरूपे व्याकरोत्'' तदर्थं 'त्रिवृतमकरोत्' इत्यर्थः ।

## तत्त्वप्रकाशिका

'एवमस्वतन्त्रकर्तुः करणान्यन्याधीनान्यपि साधनत्वात्तत्करणानीत्युच्यन्ते । यथा परकीय-कुठारेणापि वृश्चतोऽसौ तत्करणमुच्यत इत्येकमर्थं जीवकरणत्वश्रुतेरुक्त्वार्थान्तरप्रतिपादकं च सूत्रं पठित्वा व्याचष्टे ॥ **तस्य चेति** ॥ प्राणानां ब्रह्मकरणत्वेऽपि युज्यते जीवकरणत्वश्रुतिः । जीवकरणसम्बन्धस्यानादिनित्यत्वात् । परकीयेऽपि बहुकालसम्बन्धिन्युपचारतस्तदीयत्व व्यवहार-दर्शनादिति भावः । एतेनानुभवोऽप्याभिमानिकतया व्याख्यातः । अनादिसम्बन्धनिबन्धनोऽयं व्यवहारः श्रौत इति कुत एतदित्यत आह ॥ **अथेति** ॥ अवियोगीनि जीवेनेति शेषः । करणानां करणत्वमिन्द्रियाणां जीवकरणत्वव्यवहारे निमित्तमित्यर्थः । प्राणवतेति जीवस्य प्रकृतत्वादत्र तत्परामर्शो युक्तोऽतः कथमुच्यते सम्बन्धस्येत्यत आह ॥ **चशब्द इति** ॥ तच्छब्देन जीव-परामर्शेऽपि चशब्देन प्राणवत्पदसंनिधापिताः प्राणाः प्राणसम्बन्धश्च समुच्चीयन्ते । न हि प्राणान् प्राणवत्त्वं च विना प्राणवान् भवति । अतो युक्तेयं व्याख्येति भावः । सम्बन्धिनोरभावे सम्बन्धाभावात्तदुक्तिः । तस्मात् श्रुत्यविरोधेन प्राणानां ब्रह्मकरणत्वसिद्धेर्युक्तो जगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम् ।

## गुर्वर्थदीपिका

साधनत्वात्तत्करणानीत्यत्र जीवस्यापीषदीषत्साधनत्वादित्यर्थः । तच्छब्देन जीवपरामर्शेऽ-पीत्यत्र यद्यपि प्राणः प्राणसम्बन्धो विशेष्यभूतो जीवश्चेति त्रयाणामपि प्राक्प्रस्तावोऽस्ति । तथाऽपि प्राणस्य तत्सम्बन्धस्य चोपसर्जनतया प्रस्तुतिः जीवस्य तु विशेष्यतया प्राधान्येन प्रस्तुतिः । एवं च दण्डिनमर्चयेदित्युक्ते विशेषेण यतेरेवार्चनवत्तच्छब्देन जीवस्यैव परामर्श इति भावः । तर्हि जीवकरणसम्बन्धस्येति कथं भाष्यमित्यत आह **सम्बन्धिनोरभाव** इति ॥

## भावबोधः

प्राणवत्पदेन कथं प्राणादयः सन्निधापिता इत्यत आह– **न हीति** ॥ ननु जीवकरण-सम्बन्धनित्यत्वस्यैव प्रकृतोपयोगात् तस्येत्यनेनैव प्राणवत्पदप्रकृतजीवकरणसम्बन्धपरामर्शसम्भवात् सूत्रे 'च'शब्दस्यैव वैयर्थ्ये कथमेवं तद्व्याख्यानं भाष्य इत्यत आह– **सम्बन्धिनोरभाव इति** ॥ तदुक्तिः । तस्येति परामृष्टजीवस्य 'च'शब्दगृहीतप्राणानां च नित्यत्वोक्तिरित्यर्थः । अत्राद्ये– प्राणानां ब्रह्मकरणत्वप्रतिज्ञापूर्वकं तत्र श्रुतियुक्तिरूपप्रमाणोक्तिः । द्वितीये– जीवकरणत्व-श्रुतेरीश्वरकॢप्तजीवानुसारित्वार्थकत्वेन सावकाशत्वोक्तिः । तृतीये– 'जीवस्य करणान्याहुः' इति श्रौतव्यवहारस्यौपचारिकत्वमभिप्रेत्य प्राणवत्पदप्रकृतजीवकरणतत्सम्बन्धानां नित्यत्वोक्ति-रूपोपचारबीजोक्तिरिति सूत्रक्रमः ।

## भावदीपः

इतरव्यपदेशादित्युक्तिविरोधनिरासायोक्तमस्वतन्त्रकर्तुरिति । परात्तु तच्छ्रुतेरित्यत्र तथोक्तेरिति भावः । भाष्यमाकाङ्क्षाक्रमेण व्याचष्टे ॥ **प्राणानामिति** ॥ नन्वेवं सूत्रद्वयेन श्रुतिविरोधपरिहारेऽपि ब्रह्मकरणत्वश्रुतेः प्रागुक्तयुक्तिविरोधः स्यादिति शङ्कां लौकिकदृष्टेस्त्वीशेनैव जीवानुसारित्वकॢप्त्यो-पपत्तेरिति न्यायविवरणतात्पर्योक्त्या निराह ॥ **एतेनेति** ॥ चिरकालं जीववशत्वकथनेनेत्यर्थः ॥ **प्राणा इति** ॥ एतेन भाष्ये करणानि सम्बन्धश्च तेषां ग्राहीति विग्रहो दर्शितः । सन्निधापितत्वं व्यनक्ति ॥ **न हीति** ॥ प्राणवत्त्वं प्राणसम्बन्धः । तदस्यास्त्यस्मिन्निति मतुपो विधानात् षष्ठ्यर्थस्य सम्बन्धत्वात् । यथोक्तं महाभाष्ये षष्ठी स्थाने योगेत्यत्र एकशतं षष्ठ्यर्था इति । तत्कैयटे ते च स्वस्वामिभावादयः षष्ठीदण्डके पठिता इति सूत्रे सम्बन्धमात्रनित्यत्वोक्त्यैव पूर्तौ जीवस्य प्राणानां च नित्यत्वोक्तिः किमर्थेत्यत आह ॥ **सम्बन्धिनोरिति** ॥ **तस्मादिति** ॥ जीवकरणत्व-श्रुतेरुपचरितार्थत्वाद् ब्रह्मकरणत्वश्रुतेः सयुक्तिकत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**अनादीति** ॥ श्रौतोऽयं व्यवहारः अनादिसम्बन्धनिबन्धन इत्येतत् कुत इत्यत आहेति सम्बन्धः ॥ **जीवस्य प्रकृतत्वादिति** ॥ प्राणवच्छब्देन प्राधान्येन जीवस्य प्रकृतत्वात् तत्परामर्शस्यैव

(अभिनवचन्द्रिका)

युक्तत्वेन जीवस्य नित्यत्वादिति सूत्रं व्याख्येयमिति भावः । एतेन 'प्राणवता' इति विशिष्टस्य प्रकृतत्वेन जीवमात्रपरामर्शाऽभिधानमयुक्तमिति परास्तम् ॥ **तच्छब्देनेति** ॥ सत्यं तच्छदेन प्रधानतया प्रकृतस्य परामर्शः, तथापि करणसम्बन्धस्य नित्यत्वाभिधानमुपपद्यते । जीवस्य नित्यत्वान्वये चशब्देन करणतत्सम्बन्धाभ्यां समुच्चयाभिधानात् । प्राणवच्छब्देन कथमनयोः सन्निधापितत्वमित्यत आह– **न हीति** ॥ भवतीत्यतः प्राक् 'प्राणवच्छब्दो बोध्य' इति शेषः । प्राणवान् जीवः । ततश्चैवं योजना जीवः प्राणवान्, तद्वत्त्वं च विना प्राणवच्छब्दबोध्यो न भवतीति हि प्रसिद्धमिति । ततश्च प्राणवच्छब्देन जीवबोधे तयोरप्युपस्थितिरपरिहार्यैवेति भावः । सम्बन्धनित्यत्वस्यैवोपयुक्तत्वेन तदेव वाच्यं किं सम्बन्धिनित्यत्वाभिधानेनेत्यत आह– **सम्बन्धिनोरभाव इति** ॥

पूर्वपक्षस्तु – इन्द्रियाणि जीवकरणानि 'जीवस्य करणान्याहुः' इति जीवसंबन्धित्वश्रुतेः । न च श्रुत्यन्तरविरोधः । जीववशत्वेन प्राणानां दृश्यमानत्वयुक्तियुक्तत्वेन जीवकरणत्वश्रुतेः प्राबल्यात् । ततश्च एतच्छ्रुतिविरोधेन ब्रह्मकरणत्वश्रुतेरप्रामाण्यात् न श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति ।

सिद्धान्तस्तु – ब्रह्मसम्बन्धीन्येव करणानि । जीवस्य ज्ञानादिसाधनानि न पुनर्जीवकरणानि । जीवपेक्षया तेषामुत्तमत्वेन जीवप्रयोज्यत्वाऽसम्भवात् । तदेव हि स्वं नाम भवति यद्यथेष्ट-विनियोगार्हम् । न च तत एव न ब्रह्मसम्बन्धीन्यपीति वाच्यम् । एतन्मूलतेजः प्रभृतिभूतस्यैव ब्रह्मनियम्यत्वेन सुतरामेतेषां तन्नियम्यत्वात् । 'यश्चक्षुषि तिष्ठन्' इत्यादि श्रुतेश्च । यदि करणानि जीवसंबन्धीनि तर्हि तत्करणत्वाभिधायकश्रुतेरप्रामाण्यप्रसङ्ग इति चेत्, तच्छ्रुतेः 'ब्रह्म स्वकरणैरेव दर्शनादि कारयतीति याचितकुठारवत् ईषत्सम्बन्धित्वमस्तीति तत्परत्वेन प्रामाण्योपपत्तेः । दृश्यते खलु लोके परकीये बहुकालसम्बन्धिनि तदीयत्वोपचारः । ननु यदीन्द्रियाणि ब्रह्मकरणानि, तर्हि मुख्यप्राणस्यापि तत्समानमेवेति प्रागुक्तं, तस्मात्प्राण एवाऽकरण इति मुख्यप्राणकरणत्वमयुक्तं स्यादिति चेत्, न ईश्वरः चक्षुरादीन् किञ्चिज्जीवेच्छया प्रेरयति । मुख्यप्राणं तु स्वेच्छयैवेति विशेषसद्भावेन तदुपपत्तेः । तदुक्तम् –

> 'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।
> श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ॥

**(अभिनवचन्द्रिका)**

न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः ।
केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितम्' ॥ इति ।

तस्माच्छ्रुत्यविरोधेन प्राणानां ब्रह्मकरणत्वसिद्धेः युक्तो जगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**आभिमानिकतयेति** ॥ अस्वकीये स्वकीयबुद्धिरूपतया भ्रमतयेति यावत् । तथा च जीवशब्देन प्राणानां दृश्यमानत्वं नाम यदि प्रमीयमानत्वं तदा सिद्धिर्यदि भ्रमविषयत्वं तदा प्रयोजकतेति युक्तिरपि व्याख्यातेति भावः । तच्छब्देन जीवपरामर्शोऽपीति । प्राणवतेति विशिष्टस्य प्रकृतत्वेन जीवमात्रपरामर्शाभिधानमयुक्तमिति चेन्न । पूर्वसूत्रे जीवेनेति विशेष्यमात्र सापेक्षितत्वेन विशिष्टोक्तिवैय्यर्थ्यात् । एतत्सूत्रे शब्देन प्राणसम्बन्धपरामर्शायैव प्राणतत्पदेन जीवोक्तेस्तच्छब्दस्य विशेष्यतात्पर्यकप्राणवत्पदोक्तविशेषपरामर्शकत्वौचित्यात् कथं प्राणादयः सन्निधापिता इत्यत आह ॥ **न हीति** ॥ सम्बन्धानादिनित्यत्वस्यापेक्षितत्वात्प्राणजीवनित्यत्वं किमर्थमुच्यत इत्यत आह ॥ **सम्बन्धिनोरिति** ॥ सूत्रे तस्य प्राणवतो जीवस्य च शब्दात्प्राणानां सम्बन्धस्य च नित्यत्वान्नित्य-शब्दः सद्वा विद्यमानत्वानादिनित्यत्वात्तत्कारणत्वश्रुतिरुपपन्नेति शेषः । अत्राद्ये प्राणानां जीवब्रह्मकरणत्वे प्रमाणोक्तिः द्वितीये जीवकरणत्वश्रुतेरीश्वरायत्तत्वजीवानुसारित्वार्थकत्वेन सावकाशोत्वोक्तिः । तृतीये जीवकरणत्वौपचारिकत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

पूर्वग्रन्थफलितमर्थं वदन्नुत्तरग्रन्थमवतारयति ॥ **एवमिति** ॥ कर्मणि साधनत्वादित्यन्वयः ॥ **अर्थान्तरम्** ॥ अनादिनित्यत्वरूपम् । अनादिनित्यत्वाज्जीवकरणसम्बन्धस्येति भाष्यम् । तत्रेय-माशङ्का । अस्तु जीवस्यानादिनित्यत्वं करणानां च सौक्ष्म्येण तदुभयसम्बन्धस्य त्वनादित्व-सम्भवेऽपि नित्यत्वं कथम् । मोक्षे तदुभयसम्बन्धनाशात् । न च स्वरूपेन्द्रियजीवसम्बन्धस्य मोक्षेऽपि सत्त्वेनानादिनित्यत्वात् । तत्परमिदं भाष्यमिति वाच्यम् । ज्योतिराद्यधिष्ठानमिति सूत्रस्य ब्रह्मण एव तेजःप्रभृतिभूतप्रेरकत्वेन तदंशभूतानामपि चक्षुरादीनां ब्रह्मप्रयोज्यत्वस्यैवोपपत्तेरिति

व्याख्यातत्वेन प्राकृतेन्द्रियजीवसम्बन्धनित्यत्वपरमेवेदं भाष्यमिति वक्तव्यम् । न तु स्वरूपेन्द्रिय-जीवसम्बन्धनित्यत्वपरम् । असङ्गते । अतः कथमेतदिति चेदुच्यते । जीवकरणयोरनादिनित्यत्वेऽपि तदुभयसम्बन्धस्य चानादित्वेऽपि नित्यभूतजीवकरणसाहित्यतत्सम्बन्धेऽपि नित्यत्वं छत्रिन्याये-नोपचरितमेव न मुख्यम् । अत एवोत्तरत्र टीकायां 'अनादिसम्बन्धनिबन्धनोऽयं व्यवहारः' इति सम्बन्धस्य नित्यत्वं विहायानादित्वमेव व्यवहृतमिति न कश्चिद्दोष इत्यवधेयम् । अनुभूयते खलु स्वाधीनत्वमिन्द्रियाणामित्युक्त्या अनुभवविरोधं परिहरति ॥ **एतेनेति** ॥ जीवकरणसम्बन्धस्यानादि-नित्यत्ववचनेनेत्यर्थः । जीवकरणसम्बन्धस्येत्येतत्सौत्रतच्छब्दार्थ उक्त इति भ्रान्त्या शङ्कते ॥ **प्राणवतेति** ॥ **तत्परामर्श इति** ॥ तस्येत्यनेन जीवपरामर्श इत्यर्थः ॥ **जीवपरामर्शेऽपीति** ॥ तथा च जीवस्य प्रकृतत्वादत्र तच्छब्देन जीवपरामर्श एव युक्त इति त्वदुक्तमेवाङ्गीक्रियत इति भावः । तर्हि जीवकरणसम्बन्धस्येति कथं भाषितम् । करणसम्बन्धयोः सूचकपदाभावादित्यत उक्तम् ॥ **चशब्देनेति** ॥ अप्रकृतयोः कथं प्राणतत्सम्बन्धयोः चशब्देन समुच्चय इत्यत उक्तम् ॥ **प्राणवत्पदेति** ॥ तयोः प्राणवत्पदसन्निधापितत्वमुपपादयति ॥ **न हीति** ॥ प्राणवान् प्राणसम्बन्ध-वान् । ननु जीवकरणसम्बन्धकथनस्यैव प्रकृतोपयुक्तत्वात्तस्येत्यनेन प्राणवत्पदप्रकृतजीवकरण-सम्बन्धपरामर्शकत्वोपपत्तेः तस्येत्यनेन जीवं परामृश्य चशब्देन प्राणं परामृश्य तयोरनादि-नित्यत्वकथनं प्रकृतासङ्गतमित्यत आह ॥ **सम्बन्धिनोरिति** ॥ सम्बन्धिनोर्जीवप्राणयोरनादि-नित्यत्वाभावे तदुभयसम्बन्धयोरनादिनित्यत्वायोगात् सूत्रे तच्छब्देन चशब्देन च जीवकरणयो-र्नित्यत्वोक्तिर्युक्तेत्यर्थः ।

## वाक्यार्थमञ्जरी

**वृश्चतः** छेत्तुः । तस्य जीवस्य चशब्दगृहीतेन्द्रियतत्सम्बन्धयोरपि नित्यत्वाच्चिरकालीनत्वा-ज्जीवकरणत्वश्रुतिरुपचरितार्थेत्यर्थः । अनुभवः इन्द्रियाणां स्वाधीनत्वावगाही प्राणवत्पदेन कथं प्राणादयः सन्निधापिता इत्यत आह ॥ **न हीति** ॥ ननु जीवकरणसम्बन्धनित्यत्वस्यैव प्रकृतोप-योगित्वात्तत्परामर्श एव कार्यो न जीवप्राणपरामर्श इत्यत आह ॥ **सम्बन्धिनोरभाव इति** ॥

॥ इति ज्योतिरधिकरणम् ॥

# ११. अथ इन्द्रियाधिकरणम्

## सूत्रभाष्यम्

'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति' इति सयुक्तिका पौत्रायणश्रुतिः सामान्येन प्राणानामिन्द्रियत्वं वक्ति । 'द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादश' इति च कापायणश्रुतिः । अतः कस्येन्द्रियत्वं निवार्यत इत्यतो वक्ति–

**॥ ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ १८ ॥**

मुख्यप्राणमृते त एवेन्द्रियाणि ।

'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् ।
द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट्' इति पौत्रायणश्रुतिः ।

'श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम् ।
मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ।
विपयद्रवणात्तेपामिन्द्रियत्वमुदाहृतम् ।
तेपां नियामकः प्राणः स्थित एवाखिलप्रभुः' इति बृहत्संहितायाम् ।

## तत्त्वप्रदीपिका

एवमस्य प्राणस्य भविष्यद्ब्रह्मणः श्रुतिस्मृतिप्रसिद्धं त्रिवृत्कुर्वतः परमादनन्तस्रष्टृत्वमनुसन्दर्श्य त्रिवृत्कृतैर्भूतैरारभ्यमाणं शरीरमधिकृत्य विचार्यते । भूतसृष्टिं जीवस्वरूपं चोक्त्वा तस्य भोगसाधनानां प्राणानां स्वरूपं निगद्य तदाधारभूतं मुख्यप्राणं चानुवर्ण्य तैर्भूतैस्त्रिवृत्कृतैरारभ्यं तस्य सप्राणस्य भोगायतनं शरीररूपं निरूपयतीति श्लिष्यते । यस्मादुत्क्रान्तस्य संसारिणो गत्यादिनिरूपणा समीपे करिष्यते । 'यत्रास्य पुरुपस्य मृतस्याग्निं वागप्येति, वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी शरीरमाकाशमात्मा' इति बृहदारण्यके । मांसादि भौमं यथाशब्दमितरयोश्च । मांसादीत्यादिशब्देन मन आदि । 'अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीपं भवति, यो मध्यमस्तन्मांसं, योऽणिमस्तन्मनः । आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति, यो मध्यमस्तल्लोहितं, योऽणिष्ठः स प्राणः । तेजोऽशितं त्रेधा विधीयते । तस्य

(तत्त्वप्रदीपिका)

यः स्थविष्ठो धातुस्तदस्थि भवति, यो मध्यमस्तन्मज्जा, योऽणिष्ठः सा वागन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्यादि शब्दानुकूल्येनाप्तेजसोश्च कार्यमस्मिन्नेव शरीरे लोहितास्थ्यादि ग्राह्यम् । अथवा मांसादिभौममित्युक्तमित्येतावता भौममेवेति नाशङ्कनीयम् । किन्तु अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम् । यद्वा वाथो विमिश्रमित्यादि श्रुतेः । विमिश्रं शरीरादि मांसादि वा । मिश्रत्वाद्भूतानीत्याचक्षते । सम्भूतत्वात् । एवं ग्रहणे 'यत्कठिनं सा पृथिवी' इत्याद्युक्तिविरोध इत्यत आह– **पञ्चभूतात्मकं सर्वमित्यादि ॥** मांसादि सर्वमप्येकैकशः पञ्चभूतात्मकम् । तथाऽपि तत्र प्राधान्यविवक्षया भौमं मांसमित्यादि व्यवहारः ।

> 'सर्वं च भौतिकं मिश्रं मिश्रत्वेऽपि विशेपिता ।
> भौमं मांसमसृग्वारि तेजो मज्जा विशेपत' ॥ इत्यादेश्च ।

यत्र प्रायो भूतसाम्यं तस्मिन्नंश एकैकभूतानुगतत्वविवक्षया तत्तदात्मकत्वं श्रुतिपूच्यत इत्युक्ति-नानात्वेऽप्यविरोधः । अतो हि श्रुतिराधिक्यानुसारेण तत्तदात्मकत्वमुक्त्वाऽऽह 'यद्विज्ञात-मिवाभूदित्येतासामेव देवतानां समास'' इति । 'इतरेऽर्धे विभागिन्य' इति वचनात्, 'भूयस्त्वा-चापाम्' इति वक्ष्यमाणत्वाच्च 'अम्मयं तु यतो मांसम्' इत्युक्त्यविरोधः ।

अथ च स्थलजानां शरीरं पार्थिवं, जलजानामाप्यं, स्वर्गिणां तैजसमित्यादिविशेपव्यवहारस्य गतिमाह– **वैशेष्यात्तु तद्वादस्तद्वादः ॥** तस्य तस्य भूतस्याधिकसंयोगादेव तत्तद्व्यवहारः । अर्धेन भागेन पृथिवी समाश्रितोपादानत्वेन । 'इतरेऽर्धे त्रिभागिन्य आप' इति स्वर्गिशरीरेऽपि बोद्धव्यम् । आप्यानामापोऽर्धभागिन्य इति सिद्धमविरुद्धस्समन्वय इति ।

॥ इति तत्त्वप्रदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

## तत्त्वप्रकाशिका

अत्र जगत्कारणे हरौ श्रुतिसमन्वयसिद्ध्यर्थं प्राणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । विष्णौ जगत्कारणे कथितः श्रुतिसमन्वयः प्राणविषयश्रुतीनां विरोधेनप्रामाण्ये न सेत्स्यतीत्यसौ निराकर्तव्यः । तत्र संशयबीजं श्रुतिविगानं दर्शयन् विषयसंशयपूर्वपक्षांश्च सूचयति **॥ अथेति ॥** प्राक् प्रकृतमिन्द्रियत्वमत्र विषयः । तत्काचित् श्रुतिः प्राणशब्दवाच्यानां

(तत्त्वप्रकाशिका)

**त्रयोदशानामपि वक्ति । सामान्येनोक्तत्वात् । सामान्यवचनस्य च सर्वगामित्वात् । अन्या श्रुतिर्द्वादशानामेव तद्वक्ति । अतो विप्रतिपत्तेः संशयः । किं सर्वेषां प्राणानामिन्द्रियत्वमुतैकस्य निवार्य द्वादशानामेवेति । सर्वेऽपि प्राणा इन्द्रियाणि । 'प्राणा वा इन्द्रियाणि' इति श्रुतेः । न च सामान्यश्रुतित्वाद्विशेषश्रुत्येतरया बाधः । इदं द्रवणयुक्तियुक्तत्वात् । अस्ति खलु सर्वेषां प्राणानामिदं द्रवणमिति । दुष्करं च द्वादशानामेवेन्द्रियत्वग्रहणम् । अन्यतमनिवारण-स्याशक्यत्वात् । मुख्यप्राणो नेन्द्रियमिति चेन्न । तथात्वे चक्षुषोऽनिन्द्रियत्वं किं न स्यात् । न हि मुख्यप्राणचक्षुषोः कश्चन विशेषोऽस्ति येन मुख्यप्राणो नेन्द्रियं चक्षुरिन्द्रियमिति निश्चिनुमः । उभयोरीशवशत्वाविशेषात् । प्रातिस्विकविशेषाणां तु श्रोत्रादिष्वपि साम्यात् । चक्षुरादिष्वप्येवं द्रष्टव्यम् । अतो युक्तियुक्ताद्यश्रुतिविरोधात् द्वितीयप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति भावः । द्वादशे एकादशद्वादशे । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ न ते सर्वे प्राणा इन्द्रियाणि किं तर्ह्येकमृते द्वादशैव तत्र च मुख्यप्राणमृतेऽन्ये प्राणा इन्द्रियाणि न मुख्यस्तथा विशेषश्रुतेरिति भावः । इदं द्रवणवतस्तस्य कथमिन्द्रियत्वं नास्तीत्यत उक्तम् ॥ द्रवतामिति ॥ अत्रैव स्मृतिमाह ॥ श्रोत्रादीनीति ॥**

## गुर्वर्थदीपिका

त्रयोदशानामित्यत्र सामान्यवचनस्य सकलप्राणाभिधायकत्वेन श्वासाभिमानिमुख्यप्राणस्यापि द्वादशेन्द्रियैस्सह ग्रहणे त्रयोदशत्वमिति ज्ञेयम् । इदं द्रवणयुक्तियुक्तत्वादित्यत्र 'प्राणा हीदं द्रवन्ति' इति सामान्यतः प्राणशब्दवाच्यानामिदं द्रवणकथनान्मुख्यप्राणस्यापीदं द्रवणमस्तीति शङ्कितुराशयः । इदं स्वस्वविषयं प्रति द्रवणमिदं द्रवणमित्यर्थः । मुख्यप्राणस्य चेतनत्वात्कथ-मिन्द्रियत्वमित्यत आह **प्रातिस्विकेति** ॥ प्रातिस्विकविशेषाणामप्राप्यकारित्वं नभोऽशाद्युपचितत्वं शब्दादिग्राहित्वमित्यादिविशेषाणामित्यर्थः । चक्षुरादिष्वपीत्यत्र चक्षुर्मुख्यप्राणतदभिमन्यमानश्वासे-ष्वित्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्राक् प्रकृतमिन्द्रियत्वमिति** ॥ पूर्वाधिकरणे करण-भूतचक्षुरादिप्राणप्रसङ्गेन तदिन्द्रियत्वस्यापि प्रकृतत्वादित्यर्थः । यद्वा पूर्वं मुख्यप्राणस्य जीवं

(भावबोधः)

प्रत्यकरणत्वमुक्तम् । तस्यापीन्द्रियत्वेन तं प्रति करणत्वादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिरिति **किमिति ॥** अत्र प्राणपदोक्तानां त्रयोदशानामपीन्द्रियत्वमुत द्वादशानामेवेति चिन्ता । तदर्थं द्वादशानमेवेन्द्रियत्वं 'प्राणा वा इन्द्रियाणि' इति श्रुतिविरुद्धं न वेति । तदर्थं सामान्यश्रुतिः किमिदं द्रवणयुक्तियुक्तत्वेन निरवकाशोत 'द्वादश वा' इति विशेषश्रुत्यनुसारेणैकपरित्यागे- नेतरप्राणमात्रविषयत्वेन **सावकाशेति ॥** एकपरित्यागेऽपि चक्षुरादीतरप्राणेष्वेवान्यतरपरित्याग उत मुख्यप्राणपरित्याग इति । तदर्थं मुख्यप्राणस्य चक्षुरादिभ्य इदं द्रवणराहित्यसर्वकर्तृकारयितृत्वादि- रूपो विशेषो नास्त्युतास्तीति । मुख्यप्राणस्याप्यन्यसाम्यमिति न्यायविवरणांशाभिप्रायमाह– **तथात्व इति ।** द्वितीयसूत्रनिवर्तनीयामाह– **न हीति ॥** ईशवशत्वसाम्येनेति न्यायविवरणानु- सारेणाह– **उभयोरिति ॥**

ननूभयोरीशवशत्वाविशेषेऽपि जीवापेक्षया ब्रह्मकरणत्वाभावादिरूपविशेषेण तस्यानिन्द्रियत्वं स्यादित्यत आह– **प्रातिस्विकेति ॥ चक्षुरादिष्वेवमिति ॥** चक्षुर्नेन्द्रियमिति चेत्, न; तथात्वे श्रोत्रस्यानिन्द्रियत्वं किं न स्यादित्यादि द्रष्टव्यमित्यर्थः । सूत्रांशव्याख्यानपरं त एवेन्द्रियाणीति भाष्यमेवकारव्यावर्त्यप्रदर्शनपूर्वकं व्याचष्टे– **न ते सर्व इत्यादिना ॥** 'अन्यत्र श्रेष्ठात्' इति सूत्रांशव्याख्यानपरमुख्यप्राणमृत इत्येतद्व्याचष्टे– **तत्र च मुख्यप्राणमिति ।** इदं द्रवणमित्युक्ते- र्मुख्यप्राणे असिद्धिं वक्तुं 'द्रवतां हि' इति श्रुतिविशेषोदाहरणमित्यभिप्रेत्याह– **इदं द्रवणवत इति ॥**

## भावदीपः

सङ्गतिं दर्शयति ॥ **प्राक्प्रकृतमिति ॥** सप्तगतेर्विशेषितत्वाच्चेत्यत्र ज्ञानेन्द्रियकर्मेन्द्रियत्वाभ्यां प्रकृतं प्राणानामिन्द्रियत्वमित्यर्थः । तदनन्तरमेवैतच्चिन्तामकृत्वात्र कृतौ चन्द्रिकायामेवावान्तर- सङ्गतिरुक्ता ॥ **विशेषश्रुत्येति ॥** द्वादशैवेत्येवकारेण मनोबुद्धीत्विति विशिष्योक्त्या च विशेषश्रुतित्वमितरेन्द्रियाणां दशत्व एव पर्यवसानादिति भावः । इदं विषयजातं प्रतिद्रवणमिदं द्रवणं तद्रूपयुक्तीत्यर्थः । ईशवशत्वसाम्यान्मुख्यप्राणस्याप्यन्यसाम्यमित्यन्यत्रोक्तं प्रस्ताव्य योजयति ॥ **दुष्करं चेत्यादिना साम्यादित्यन्तेन ॥** जीवापेक्षया ईश्वरप्रयोज्यत्वाप्रयोज्यत्वरूपविशेषोऽ- स्तीत्यत आह ॥ **प्रातिस्विकेति ॥** दर्शनश्रवणादिहेतुत्वादिरूपेत्यर्थः ॥ **चक्षुरादिष्वप्येवमिति ॥**

(भावदीपः)

चक्षुर्नेन्द्रियमिति चेन्न । तथात्वे श्रोत्रस्यानिन्द्रियत्वं किं न स्यादित्यादि बोध्यमित्यर्थः ॥ **अत इति** ॥ इदं द्रवणस्य सर्वत्र भावादेकस्यापीन्द्रियत्वनिवारणासम्भवाच्च युक्तियुक्तेत्यर्थः । श्रुतौ मनोबुद्ध्योः सम्भूय द्वादशत्वोक्तेरितरेन्द्रियाणां दशत्व एव पर्यवसानात् एकादशाभावेन द्वादशैवेति श्रुतिः कथमिन्द्रियद्वादशत्वे मानमित्यत आह ॥ **द्वादशे इति** ॥ अन्यथा द्विवचनप्रयोगो न स्यादिति भावः । सूत्रे भाष्ये च श्रेष्ठादन्यप्राणानामिन्द्रियत्वोक्त्या लब्धं सामान्यमाह ॥ **न त इति** ॥ भाष्यसूत्रयोरर्थमाह ॥ **मुख्यप्राणमिति** ॥ प्राणा इति सूत्रे त इति तच्छब्देन पूर्वत्र तस्य चेति चशब्देन समुच्चितप्राणपरामर्श इति भावः । सूत्रे प्राणोऽनिन्द्रियमित्यनुक्त्वा श्रेष्ठादन्ये प्राणा इन्द्रियाणीत्युक्त्या लब्धस्यैवेत्यस्यार्थो न मुख्य इति । श्रुतिरिति भाष्यं श्रुतेरिति व्याख्येयमिति भावेनाह ॥ **तथा विशेषश्रुतेरिति** ॥ उत्तरार्धोपयोगमाह ॥ **इदमिति** ॥

## अभिनवचन्द्रिका

**अन्या श्रुतिरिति** ॥ सत्यं 'द्वादश वेन्द्रियाण्याहुः' इति श्रुतिःद्वादशानामेवेन्द्रियत्वं वक्ति, तथापि – न विप्रतिपत्तिः । द्वादशत्वसंख्यापूरकत्वस्य 'मनोबुद्धी तु द्वादश' इति व्यासज्यवृत्तिताभिधानेन प्रागुक्तत्रयोदशानामन्यतमस्याऽपरित्यागादिति चेत्, स्यादेतदेवम्, 'यदि मनोबुद्धी तु' इति श्रुत्या द्वादशत्वम्, 'इतिहासपुराणःपञ्चमो वेदः' इत्यत्र इतिहासपुराणयोः पञ्चमत्वमिव मनोबुद्ध्योर्व्यासज्य वर्तत इत्युक्तं स्यात् । न चैवं किंनाम प्रत्येकं द्वादशत्वं तत्र तत्र विश्रान्तमुच्यते 'द्वादशे' इति द्विवचनश्रवणात् । अन्यथा पञ्चम इति वत् अत्रापि एकवचनमेव स्यात् । तथा 'मनोबुद्धी' इत्यत्र समाहारः स्यात् । ततश्च मुख्यप्राणस्य परित्याग एवेति भवति श्रुत्योर्विरोध इति ॥ **चक्षुरादिष्वप्येवमिति** ॥ परित्यागे बाधकमूह्यमित्यर्थः । उभयोर्द्वादशत्वमयुक्तमित्यतो मनस एकादशत्वे बुद्धेर्द्वादशीत्वं, बुद्धेरेकादशीत्वे मनसो द्वादशत्वमिति व्यवस्थया तदूह्यमिति भावेनाह– **द्वादशे एकादशद्वादशे इति** ॥ एकादशं च एकादशी च एकादशे 'नपुंसकमनपुंसके' इत्येकशेषः । तथा द्वादशं च द्वादशी च द्वादशे । ततः कर्मधारयाः । एकादशे च ते द्वादशे च एकादशद्वादशे इति । ततो मनोबुद्ध्योः प्रत्येक-मेकादशत्वं द्वादशत्वं च लभ्यते । यदि मनस एकादशत्वमेव बुद्धेर्द्वादशीत्वमेवेति टीकाशयः स्यात् तर्हि एकादशद्वादशावित्येव ब्रूयात् । न चैवमुक्तवान् । तेनोक्त एवाशयो बोध्यः । एतेन एकादशद्वादशशब्दयोर्विरूपत्वात् श्रुतौ एकशेषोऽनुपपन्न इति परास्तम् । मनोबुद्ध्योरुभयोरपि

(अभिनवचन्द्रिका)

द्वादशत्वस्येह विवक्षितत्वे द्वादशं च द्वादशी चेति स्थिते 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्यनेन एकशेषाङ्गीकारात् ।

## वाक्यार्थमुक्तावली

प्राक् प्रकृतमिन्द्रियमितिकरणत्वेन प्रकृतमित्यर्थः । तेन मुख्यप्राणस्य जीवं प्रत्यकरणत्वमयुक्तं तस्यापीन्द्रियत्वेन तं प्रति करणत्वादिति पूर्वपक्षोत्थानादनन्तरसंगतिरुक्ता भवति । अतः कस्येन्द्रियत्वमित्यस्यार्थः **अतो विप्रतिपत्तेरिति किमिति** ॥ अत्र प्राणपदोक्तानां त्रयोदशानामपीन्द्रियत्वमुत द्वादशानामेवेति चिन्ता । तदर्थं प्राणा वा इन्द्रियाणीति सामान्यश्रुतिः किमिदं द्रवणयुक्तियुक्तत्वेन निरवकाशोत द्वादशा वा इति विशेषश्रुत्यनुसारेणैकतरपरित्यागेनेतरप्राणविषयत्वेन **सावकाशेति** ॥ एकपरित्यागेऽपि चक्षुरादीतरप्राणेष्वेवान्यतरपरित्याग उत मुख्यप्राणपरित्याग इति । तदर्थं मुख्यप्राणस्य चक्षुरादिभ्य इदं द्रवणराहित्यादिरूपविशेषो नास्त्युतस्तीति । समानत्वमित्युक्तपूर्वपक्षन्यायसूचकं सामान्येन प्राणानामिन्द्रियत्वं वक्तीति भाष्यं व्याचष्टे ॥ **प्राणानामिन्द्रियाणीति** । सामान्यश्रुतेरित्यर्थः ॥ **न च सामान्येति** ॥ द्वादशैवेन्द्रियाणीति विशेषश्रुत्या प्राणा इन्द्रियाणीति श्रुतेर्द्वादशप्राणविषयत्वावगतेरित्यर्थः । सर्वेषामपि प्राणानामिदं द्रवणस्य समानत्वमिति प्रकारान्तरेण न्यायविवरणपरं प्राणा हीदं द्रवन्तीति भाष्यं व्याचष्टे ॥ **इदं द्रवणेत्यादिना** ॥ कस्येन्द्रियत्वं निवार्यते न कस्यापीत्याक्षेपार्थत्वमनुसृत्याह ॥ **दुष्करं चेति** ॥ अन्यतमनिवारणस्य शक्यत्वत इन्द्रियाणीति प्रथमसूत्रोक्तमाशङ्क्य प्रतिषेधति ॥ **मुख्यप्राण इति** ॥ मुख्यप्राणस्य कुतो नेन्द्रियत्वाभाव इत्यतः समानत्वन्यायं प्रकारान्तरेण विवृणोति ॥ **तथात्व इति** ॥ मुख्यप्राणस्यानिन्द्रियत्वे चक्षुषोऽप्यनिन्द्रियत्वं प्रसज्यत इति समानत्वमित्यर्थः । एकस्यानिन्द्रियत्वे तस्याप्यनिन्द्रियत्वं कुत इत्यतस्समानत्वं प्रकारान्तरेणाह ॥ **न हीति** ॥ न हि मुख्यप्राणे चक्षुषो विशेषोऽस्ति । प्राणत्वसाम्यादित्यर्थः । नापि द्रवणाद्रवणकृतविशेषोऽस्तीत्युक्तम् । कश्चनेति प्राणत्वाविशेषादिति भावः । नन्वीशसाम्यं मुख्यस्येतरेषां तदभाव इत्यस्ति महान् विशेष इति भेदश्रुतेरित्युक्तम् । विशेषं प्रतिक्षिपति ॥ **उभयोरपीति** ॥ नन्वीशवशत्वाविशेषेऽपीश्वरवत्सर्वकर्तृत्वसर्वकारयितृत्वसद्भावात्प्राणस्य नेन्द्रियत्वमन्येषां तदभावादिन्द्रियत्वमित्यत आह ॥ **प्रातिस्विकेऽपीति** ॥ ईश्वरवशत्वे समानेऽपि यः

(वाक्यार्थमुक्तावली)

प्रातिस्विको विशेषोऽवान्तरवैलक्षण्यं तस्य श्रोत्रादिष्वपि साम्यात् । श्रोत्रादि देवा अपि हि स्वयोग्यसर्वकर्तारः स्वावरकारयितारश्चेति भावः ॥ **चक्षुरादिष्वपीति** ॥ न चक्षुर्विना द्वादशेन्द्रियादिश्रौतस्याप्यनिन्द्रियत्वप्रसङ्गादित्यादि द्रष्टव्यमित्यर्थः । उभयोर्द्वादशत्वायोगादाह ॥ **एकादशद्वादश इति** ॥ मनस एकादशत्वे बुद्धेर्द्वादशत्वं बुद्धेरेकादशीत्वे मनसो द्वादशत्वमिति तदूह्यमिति भावः । एकादशं चैकादशी चैकादशोऽनपुंसकमनपुंसकेनेत्येकशेषः । तथा द्वादशं च द्वादशी च द्वादशे ततः कर्मधारयः । एकादशे च ते द्वादशेच एकादशद्वादश इति तथा मनोबुध्योः प्रत्येकमेकादशत्वं द्वादशत्वं च लभ्यते । यदि मनस एकादशत्वमेव बुद्धेर्द्वादशीत्वमेव टीकाशयः स्यात्तर्ह्येकादशद्वादश्यावित्येव ब्रूयात् । न चैवमुक्तवान् तेनोक्तएवाशयो बोध्यः एतेनैकादशद्वादश शब्दयोर्विरूपत्वात्सरूपाणामेकशेष इत्युक्त प्राप्त्यभावात् । श्रुतावेकशेषोऽनुपपन्न इति निरस्तम् । मनो बुध्योरुभयोरपि द्वादशत्वस्येह विवक्षितत्वेन द्वादशं च द्वादशी चेति स्थिते नपुंसकमनपुंसकेनैकवच्चेत्यनेनैकशेषाङ्गीकारादिति । श्रेष्ठादन्यत्र मुख्यप्राणादन्ये ते प्राणा इन्द्रियादि न श्रेष्ठः कुतस्तद्व्यपदेशात् तस्य श्रेष्ठानिन्द्रियत्वस्य द्वादशैवेन्द्रियाण्याहुरिति श्रुतौ व्यपदेशादिति सूत्रार्थं विशदमाह ॥ **न त इति** ॥ **इत्यत उक्तमिति** ॥ इत्यतः इदं द्रवणयुक्तेरसिद्धं सूचयितुं प्रयुक्तस्य श्रेष्ठपदस्यार्थप्रमाणमुक्तमित्यर्थः । सूत्रे श्रेष्ठादन्य इति वाच्येऽन्यत्रेति विषयसप्तमी द्योतनं तु प्राणा वा इन्द्रियाणीति सामान्यश्रुतेस्तदतिरिक्तविषयत्वमिति बोध्यम् ।

## वाक्यार्थविवरणम्

**सामान्येनोक्तत्वादिति** ॥ प्राणशब्दवाच्याः प्राणा वा इन्द्रियाणीति सामान्येनेत्यर्थः ॥ **इदं द्रवणमिति** ॥ स्वस्वविषयजातमुद्दिश्य द्रवणमित्यर्थः । अन्यतमनिवारणं शक्यमित्याशङ्कते ॥ **मुख्यप्राण इति** ॥ नन्वीशवशत्वाविशेषेऽपि ब्रह्मसामर्थ्येन जीवप्रयोज्यत्वरूपं ब्रह्मकरणत्वं चक्षुरादावस्ति न मुख्यप्राण इत्यवान्तरविशेषोऽस्तीति न तस्येन्द्रियत्वमित्यत आह ॥ **प्रातिस्विकेति** ॥ **श्रोत्रादिष्विति** ॥ तत्रापि श्रोत्रत्वादेः सत्त्वात् तेषामपीन्द्रियत्वं न स्यादित्यर्थः ॥ **इत्यत उक्तमिति** ॥ इदं द्रवणमेव तस्य नास्तीत्युक्तमित्यर्थः ।

## वाक्यार्थमञ्जरी

**विशेष श्रुत्येति** ॥ द्वादशैवेति विशिष्योक्तेरिति भावः ॥ **इदं द्रवणेति** ॥ इदं विषयजातमुद्दिश्य द्रवणादीन्द्रियपदप्रवृत्तिनिमित्तवत्त्वयुक्तीत्यर्थः । ननूभयोरपीशवशत्वसाम्येऽपि जीवापेक्षया ब्रह्मकरणत्वाच्चक्षुष इन्द्रियत्वं मुख्यप्राणस्य तदभावादनिन्द्रियत्वमस्त्वित्यत आह ॥ **प्रातिस्विकेति** ॥ प्रतिव्यक्तिनियतावान्तरविशेषाणां श्रोत्रादिष्वपि सत्त्वेन तेषां मध्ये केषाञ्चि-दिन्द्रियत्वं केषाञ्चित्तदभावः स्यादित्यर्थः ॥ **चक्षुरादिष्वप्येवमिति** ॥ चक्षुर्नेन्द्रियमिति चेन्न तथात्वे श्रोत्रस्यापीन्द्रियत्वं न स्यादित्यादि द्रष्टव्यमित्यर्थः । मनोबुद्ध्योरुभयोरपि द्वादशत्वप्रतीति-निरासायाह ॥ **एकादशद्वादशेति** ॥ छान्दसत्वान्न कश्चित् क्षुद्रोपद्रवः ॥ श्रेष्ठान्मुख्यप्राणात् अन्यत्र अन्ये ते प्राणा इन्द्रियाणि कुतस्तद्व्यपदेशात् तस्योक्तार्थस्य द्वादशैवेति श्रुत्युक्तत्वादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ भेदश्रुतेः ॐ ॥ १९ ॥**

**'स्थित एव हीदं मुख्यप्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानि' इति पौत्रायणश्रुतेः ।**

## तत्त्वप्रकाशिका

यदि मुख्यप्राणो नेन्द्रियं तर्हि चक्षुरपि न स्याद्विशेषाभावादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **भेदेति** ॥ न मुख्यप्राणस्य चक्षुरादीनां चाविशेषो मन्तव्यो येन तस्य विशिष्यानिन्द्रियत्वोक्तिविरोधः । मुख्यप्राणस्य सर्वकर्तृकारयितृत्वेनेश्वरसाम्यस्यान्येषां च तदभावस्य श्रुतत्वादिति भावः ।

## भावबोधः

**सर्वकर्तृकारयितृत्वेनेति** ॥ 'द्रवतां हि' इत्यनेनैव मुख्यप्राणस्येदं द्रवणाभावत्वोक्तेरत्र स्थित इत्युक्तस्येदं द्रवणाभावानुक्तिरिति ज्ञातव्यम् । उपलक्षणं चैतत् । 'यस्मिन्निदं सर्वमध्याघ्रोत्प्राणस्यै-

(भावबोधः)
तद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्' इत्यादिश्रुतेरीशसाम्यस्यापि भावादिति न्यायविवरणोक्तप्रकारेणापीशसाम्यं ज्ञेयम् ।

## भावदीपः

**न स्यादिति** ॥ इन्द्रियं न स्यादिति योज्यम् । योग्यसाध्यान्वयेन सूत्रभाष्ययोरर्थमाह ॥ **नेत्यादिना** ॥

## वाक्यार्थमुक्तावली

**विशेषभावादिति** ॥ न श्रेष्ठत्वप्रयुक्तो द्रवणाद्रवणविशेष उक्त इति वाच्यम् । श्रोत्रादीनामपि स्वावरश्रेष्ठत्वेन प्रातिस्विकविशेषसद्भावादित्युक्तत्वादिति भावः । सूत्रे त इति श्रेष्ठादिति च विपरिणामेनान्वेति । श्रेष्ठस्य च द्रवणं विहायैव सर्वकृत्वस्य सर्वकारयितृत्वस्यान्येषां द्रवणं विना कर्तृत्वकारयितृत्वयोरभावस्य चोक्त्या तयोरीशसाम्यतदभावे विशेषश्रवणात्त एवेन्द्रियाणीति सूत्रार्थं मनसि निधाय भाष्यभावमाह ॥ **न मुख्येति** ॥ ईशसाम्यस्येत्युक्त्या । समानत्वमिति सिद्धान्तन्यायस्य सूत्रारोहो दर्शितः ॥ **सर्वकर्तृकारयितृत्वेनेति** ॥ ईश्वरवत्प्रभुतया द्रवणं विना सर्वकर्तृत्वेन सर्वकारयितृत्वेनेश्वरसाम्यस्येत्यर्थः ।

## वाक्यार्थविवरणम्

**सर्वकर्तृकारयितृत्वेनेति** ॥ सर्वकर्तृत्वेन सर्वकारयितृत्वेन चेत्यर्थः ।

## वाक्यार्थमञ्जरी

द्वादशप्राणानां मुख्यप्राणस्य च भेदश्रुतेर्विशेषश्रवणात्त एवेन्द्रियाणीत्यर्थः ॥ **सर्वकर्तृकारयितृत्वेति** ॥ कर्तृत्वेन कारयितृत्वेन चेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ वैलक्षण्याच ॐ ॥ २० ॥**

## वाक्यार्थमञ्जरी

**विशेष श्रुत्येति** ॥ द्वादशैवेति विशिष्योक्तेरिति भावः ॥ **इदं द्रवणेति** ॥ इदं विषयजातमुद्दिश्य द्रवणादीन्द्रियपदप्रवृत्तिनिमित्तवत्त्वयुक्तीत्यर्थः । ननूभयोरपीशवशत्वसाम्येऽपि जीवापेक्षया ब्रह्मकरणत्वाच्चक्षुष इन्द्रियत्वं मुख्यप्राणस्य तदभावादनिन्द्रियत्वमस्त्वित्यत आह ॥ **प्रातिस्विकेति** ॥ प्रतिव्यक्तिनियतावान्तरविशेषाणां श्रोत्रादिष्वपि सत्त्वेन तेषां मध्ये केषाश्चि-दिन्द्रियत्वं केषाश्चित्तदभावः स्यादित्यर्थः ॥ **चक्षुरादिष्वप्येवमिति** ॥ चक्षुर्नेन्द्रियमिति चेन्न तथात्वे श्रोत्रस्यापीन्द्रियत्वं न स्यादित्यादि द्रष्टव्यमित्यर्थः । मनोबुद्ध्योरुभयोरपि द्वादशत्वप्रतीति-निरासायाह ॥ **एकादशद्वादशेति** ॥ छान्दसत्वान्न कश्चित् क्षुद्रोपद्रवः ॥ श्रेष्ठान्मुख्यप्राणात् अन्यत्र अन्ये ते प्राणा इन्द्रियाणि कुतस्तद्व्यपदेशात् तस्योक्तार्थस्य द्वादशैवेति श्रुत्युक्तत्वादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ भेदश्रुतेः ॐ ॥ १९ ॥**

**'स्थित एव हीदं मुख्यप्राणः करोति कारयति वलति वालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न वलन्ति न वालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानि' इति पौत्रायणश्रुतेः ।**

## तत्त्वप्रकाशिका

यदि मुख्यप्राणो नेन्द्रियं तर्हि चक्षुरपि न स्याद्विशेषाभावादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **भेदेति** ॥ न मुख्यप्राणस्य चक्षुरादीनां चाविशेषो मन्तव्यो येन तस्य विशिष्यानिन्द्रियत्वोक्तिविरोधः । मुख्यप्राणस्य सर्वकर्तृकारयितृत्वेनेश्वरसाम्यस्यान्येषां च तदभावस्य श्रुतत्वादिति भावः ।

## भावबोधः

**सर्वकर्तृकारयितृत्वेनेति** ॥ 'द्रवतां हि' इत्यनेनैव मुख्यप्राणस्येदं द्रवणाभावत्वोक्तेरत्र स्थित इत्युक्तस्येदं द्रवणाभावानुक्तिरिति ज्ञातव्यम् । उपलक्षणं चैतत् । 'यस्मिन्निदं सर्वमध्याघ्नोत्प्राणस्यै-

(भावबोधः)
तद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्' इत्यादिश्रुतेरीशसाम्यस्यापि भावादिति न्यायविवरणोक्तप्रकारेणापीशसाम्यं ज्ञेयम् ।

## भावदीपः

**न स्यादिति** ॥ इन्द्रियं न स्यादिति योज्यम् । योग्यसाध्यान्वयेन सूत्रभाष्ययोरर्थमाह ॥ **नेत्यादिना** ॥

## वाक्यार्थमुक्तावली

**विशेषभावादिति** ॥ न श्रेष्ठत्वप्रयुक्तो द्रवणाद्रवणविशेष उक्त इति वाच्यम् । श्रोत्रादीनामपि स्वावरश्रेष्ठत्वेन प्रातिस्विकविशेषसद्भावादित्युक्तत्वादिति भावः । सूत्रे त इति श्रेष्ठादिति च विपरिणामेनान्वेति । श्रेष्ठस्य च द्रवणं विहायैव सर्वकृत्वस्य सर्वकारयितृत्वस्यान्येषां द्रवणं विना कर्तृत्वकारयितृत्वयोरभावस्य चोक्त्या तयोरीशसाम्यतदभावे विशेषश्रवणात्त एवेन्द्रियाणीति सूत्रार्थं मनसि निधाय भाष्यभावमाह ॥ **न मुख्येति** ॥ ईशसाम्यस्येत्युक्त्या । समानत्वमिति सिद्धान्तन्यायस्य सूत्रारोहो दर्शितः ॥ **सर्वकर्तृकारयितृत्वेनेति** ॥ ईश्वरवत्प्रभुतया द्रवणं विना सर्वकर्तृत्वेन सर्वकारयितृत्वेनेश्वरसाम्यस्येत्यर्थः ।

## वाक्यार्थविवरणम्

**सर्वकर्तृकारयितृत्वेनेति** ॥ सर्वकर्तृत्वेन सर्वकारयितृत्वेन चेत्यर्थः ।

## वाक्यार्थमञ्जरी

द्वादशप्राणानां मुख्यप्राणस्य च भेदश्रुतेर्विशेषश्रवणात्त एवेन्द्रियाणीत्यर्थः ॥ **सर्वकर्तृकारयितृत्वेति** ॥ कर्तृत्वेन कारयितृत्वेन चेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ वैलक्षण्याच्च ॐ ॥ २० ॥**

(सूत्रभाष्यम्)

**पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न मुख्यस्य । 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' इति (प्र.उ.४-३) च श्रुतिः ।** ॥ इति इन्द्रियाधिकरणम् ॥

## तत्त्वप्रकाशिका

**नन्वयं मुख्यप्राणः परमात्मवशो न वा । आद्ये न तस्यैवानिन्द्रियत्वसिद्धिरीश्वरवशत्व-साम्यात् । अवान्तरवैलक्षण्यस्यान्यत्रापि सम्भवात् । द्वितीये प्रागुक्तविरोधः इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ वैलक्षण्याच्चेति ॥ भवेदीशवशः प्राणस्तथापि नोक्तविरोधः । ईशाधीनत्वेऽपि वैलक्षण्यात् । ईश्वरपरवशा हीन्द्रियाणां प्रवृत्तिर्जीवप्रयत्नापेक्षैव । जाग्रत्येव भावेन सुपुप्तावभावेन च तथा दर्शनात् । मुख्यप्राणस्य हि केवलेश्वरेच्छाधीनैव प्रवृत्तिर्न जीवापेक्षेति भावः । मुख्यप्राणस्य प्रवृत्तिर्न पुरुषप्रयत्नापेक्षयेत्येतत्कुत इत्यतश्चशब्दसूचितां श्रुतिं पठति ॥ प्राणेति ॥ 'एष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते' इतीन्द्रियाणां सुप्तौ प्रवृत्त्यभावमभिधाय प्राणाग्नय इति मुख्यप्राणरूपाणां पुरुषप्रयत्नानपेक्षा भगवदधीनप्रवृत्तिरुच्यते । न हि सुपुप्तस्य प्रयत्नोऽस्ति । अतः श्रुत्यविरोधेन मुख्यप्राणस्यानिन्द्रियत्वसिद्धेर्युक्तो जगत्कारणे विष्णौ श्रुतिसमन्वय इति सिद्धम् ।**

## गुर्वर्थदीपिका

ईश्वरपरवशा हीन्द्रियाणां प्रवृत्तिरित्यत्र जडत्वेनेन्द्रियपदप्रवृत्तिनिमित्तेनेदं द्रवणेन जीवप्रयत्न-सापेक्षत्वेन च समानानामिन्द्रियाणां प्रागुक्तावान्तरवैलक्षण्यं त्वप्रयोजकम् । मुख्यप्राणस्य तु चेतनत्वेन जीवप्रयत्ननिरपेक्षत्वेन द्वादशेभ्योऽपि वैलक्षण्यात्प्रथमसूत्रोक्तरीत्या तस्य तस्येन्द्रियपद-प्रवृत्तिनिमित्तेदं द्रवणाभावाच्चेन्द्रियस्वभावबहिर्भूतमनिन्द्रियत्वमेव वक्तीति भावः ।

## भावबोधः

**प्रागुक्तविरोध इति** ॥ चक्षुरादिवदित्युक्तविरोध इत्यर्थः । अत्राद्ये– मुख्यप्राणव्यतिरिक्त-प्राणानामिन्द्रियत्वप्रतिज्ञापूर्वकं तत्र श्रुतिरूपप्रमाणोक्तिः । द्वितीये– मुख्यप्राणपरित्यागेन तदितर-द्वादशप्राणानामिन्द्रियत्वाङ्गीकारे मुख्यप्राणस्य चक्षुरादीतरप्राणप्रतिबन्ध्यादिपरिहारार्थं चक्षुरादिभ्यो मुख्यप्राणस्य श्रुतिप्रमाणेन सर्वकर्तृकारयितृत्वेनेशसाम्यरूपविशेषोक्तिः । मुख्यप्राणस्येशसाम्ये

(भावबोधः)

तस्येशाधीनत्वमस्ति न वा ? आद्ये तस्यानिन्द्रियत्वासम्भवः। द्वितीये– प्रागुक्तविरोध इत्याशङ्का-परिहाराय, तृतीये मुख्यप्राणस्य चक्षुरादीनां चेशवशत्वाविशेषेऽपि चक्षुरादीनां जीवप्रयत्ना-पेक्षप्रवृत्तित्वे प्रत्यक्षस्य मुख्यप्राणप्रवृत्तेः केवलेश्वराधीनत्वे श्रुतिरूपप्रमाणस्य चोक्तिरिति सूत्रक्रमः।

## भावदीपः

**प्रागुक्तेति** ॥ चक्षुरादिवदित्यत्रोक्तपराधीनत्वविरोध इत्यर्थः। योग्यसाध्यान्वयेन सूत्रं योजयति ॥ **नोक्तेत्यादिना** ॥ न तस्यैवानिन्द्रियत्वमित्युक्तदोषो नेत्यर्थः। वैलक्षण्यादित्येतद्विवरणपरतया भाष्यं शेषपूर्त्या व्याचष्टे ॥ **ईश्वरेति** ॥ **दर्शनादिति** ॥ एतेन पूर्वसूत्रे प्राणस्येन्द्रियान्तराद्भेदे श्रुतिरत्र तु प्रत्यक्षमिति च भेद इति सूचितम्। प्राणानां जीवापेक्षप्रवृत्तिमत्त्वं प्रत्यक्षमित्युक्त्वा प्राणस्य तदनपेक्षप्रवृत्तिमत्त्वं श्रुतिसिद्धमिति भावेनाह ॥ **मुख्यप्राणस्येति** ॥ **प्राणाग्रय इति** ॥ प्राणापानादिरूपाग्रय इत्यर्थः। उच्यते षट्प्रश्नोपनिषदीत्यर्थः ॥ **अत इति** ॥ सामान्यश्रुतेर्द्वादश-मात्रपरत्वाच्चक्षुरादितो मुख्यप्राणस्य वैलक्षण्येनाविरोधाच्चेत्यर्थः।

## अभिनवचन्द्रिका

**ईश्वरवशत्वसाम्यादिति** ॥ कर्ता तावदीश्वरो जीवज्ञानादौ। प्राणस्तु ईश्वरप्रयोज्यः सन् ज्ञानादौ कारणम्। इदमेव हि करणानां करणत्वं यत्कर्तृप्रयोज्यत्वे सति कारकत्वम्। तच्च मुख्यप्राणस्याऽस्तीति इन्द्रियत्वमपरिहार्यं ज्ञानादिकरणस्येन्द्रियत्वात्। अन्यथा चक्षुषोऽपि न स्यादिति भावः। एतेन ईशवशत्वस्य घटादौ भावेऽपि इन्द्रियत्वाभावात् ईशवशत्वं नेन्द्रियत्वसाधकमिति परास्तम्।

पूर्वपक्षस्तु – सर्वेऽपि प्राणा इन्द्रियाणि 'प्राणा वा इन्द्रियाणि' इति श्रुतेः। सामान्यश्रुतेः सर्वगामित्वात्। न च 'द्वादशैवेन्द्रियाणि' इति विशेषश्रुत्या बाधः। इदं द्रवणयुक्तियुक्तत्वेन सामान्यश्रुतेर्बलवत्त्वात्। दुष्करं च द्वादशानामेवेन्द्रियत्वग्रहणम्। अन्यतमनिवारणस्याऽशक्यत्वात्। नियामकं विना कस्यचित्परित्यागे अपरस्यापि तत्स्यादिति द्वादशत्वहानिः। अतो युक्तियुक्ताऽऽद्य-श्रुतिविरोधात् द्वितीया श्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु – न सर्वे प्राणा इन्द्रियाणि, किन्तु मुख्यप्राणमृते द्वादशैव । 'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियः' इति विशेषश्रुतेः । न च इदं द्रवणवतः कथमनिन्द्रियत्वमिति वाच्यम् । तस्य द्रवतां स्वामित्वेन इदं द्रवणाभावात् । तदुक्तम् – 'विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतम् । तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः' इति । इदं द्रवणाभावेऽपि चक्षुरादिवत् कर्तृत्वप्रयोज्यत्वसद्भावादिन्द्रियत्वमवर्जनीयमिति चेत्, न 'स्थित एव हि इदं मुख्यप्राणः करोति कारयती' ति ईशसाम्याऽभिधानेन तस्य कर्तृप्रयोज्यत्वाभावात् । ननु ईश्वरो हि कर्ता । तत्प्रयोज्यत्वं च इन्द्रियाणामिव प्राणस्य वक्तव्यम् । ततश्च इन्द्रियत्वमवर्जनीयमिति चेत्, न ईशाधीनत्वेऽपि चक्षुरादिवत् जीवाधीनत्वाभावात् । अतः श्रुत्यविरोधेन मुख्यप्राणस्याऽनिन्द्रियत्वसिद्धेः युक्तो जगत्कारणे विष्णौ श्रुतिसमन्वय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**आद्येन तस्येति** ॥ ईशसाम्याभावात्स्वयोग्यकर्तृत्व स्वावरकारयितृत्वाख्यावान्तरवैलक्ष्यण्यस्य सर्वत्रापि सम्भवादित्यर्थः ॥ **प्रागुक्तेति** ॥ चक्षुरादिवत्विति प्रागुक्तेत्यर्थः । प्राणानां श्रेष्ठस्य जीवप्रलयसापेक्षप्रवृत्तिकत्व तदभावरूपवैलक्षण्यात्त एवेन्द्रियाणीति सूत्रार्थं हृदि निधाय भावमाह ॥ **भवेदित्यादिना** ॥ नन्वेतदकरणत्वाच्चेत्यनेन गतार्थमिति चेन्न । प्रागवान्तरत्वसमर्थनाय प्राणस्यानीश्वरप्राणेभ्यो वैलक्षण्यं श्रुत्योपपादितम् । इह त्वनिन्द्रियत्वसमर्थनाय प्रत्यक्षश्रुतिभ्यां तदुपन्यस्तमिति मानमेयविशेषेणापौनरुक्त्यात् । भेदश्रुतेरित्यनेनैवेदं वैलक्षण्यमपि लभ्यत इत्येतत्सूत्रवैय्यर्थ्यमिति चेन्न । तत्रोभयवैलक्षण्ये श्रुत्युपन्यासादत्र पुनरीशाधीनत्वे केवलेश्वरेच्छाधीनत्वपुरुष प्रयत्नसहितेश्वरेच्छाधीनत्वलभ्यवैलक्षण्ये प्रत्यक्षश्रुत्योरुपन्यासेनैतत्प्रमेयस्य तेनासिद्धेरिति ज्ञेयम् । अत्राद्ये परोक्तविषये द्रवणरूपयुक्तेरसिद्धिध्युक्तिपूर्वं श्रेष्ठस्यातीन्द्रियत्वे श्रुत्युपन्यासः । द्वितीये यदि मुख्यप्राणोऽनिन्द्रियं तर्हि चक्षुरपि न स्यादिति तर्कबाधपरिहाराय विशेषरूपव्याप्त्यभावोपपादनाय विशेषोक्तिः । तृतीये विशेषान्तरोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**साम्यादिति** ॥ तथा चक्षुराद्यन्यतमस्यैवानिन्द्रियत्वं किन्न स्यादिति भावः ॥ **अवान्तरवैलक्षण्यस्य** ॥ प्रातिस्विकविशेषस्य ॥ **अन्यत्रापि** ॥ श्रोत्रादावपि ॥ **प्रागुक्तेति** ॥ चक्षुरादिव-

दित्युक्तेत्यर्थः ॥ **जीवप्रयत्नेति** ॥ मदधीनेन्द्रियप्रवृत्तिर्जीवप्रयत्नापेक्षाऽस्त्विति तत्सङ्कल्पादिति भावः ॥ **न त्विति** ॥ तथा तत्सङ्कल्पाभावादिति भावः । तत्प्रवृत्तिरपि तदा जीवप्रयत्नापेक्षयैव किन्न स्यादित्यत आह ॥ **न हीति** ॥ येन तदपेक्षा स्यादिति भावः ॥

## वाक्यार्थमञ्जरी

**प्रागुक्तविरोध इति** ॥ चक्षुरादिवदित्यनेन तस्येशाधीनत्वोक्तिविरोध इत्यर्थः । प्राणानां मुख्यप्राणस्य **च** जीवप्रयत्नाधीनत्वरूपवैलक्षण्याच्च त एवेन्द्रियाणीत्यर्थः । न यापयते न गच्छति पुरुषो यदैवं भवति तदैनं स्वपतीत्याचक्षते स्वं स्वतन्त्रपरमात्मानम् अप्येति सुप्तो भवतीति वदन्ति ज्ञानिनः । प्राणाग्नयः प्राणापानादिमुख्यप्राणस्वरूपभूता अङ्गनेतृत्वादग्निशब्दवाच्याः जाग्रति अग्रस्तव्यापाराः स्वस्वव्यापारं कुर्वन्तीत्यर्थः ।

॥ इति इन्द्रियाधिकरणम् ॥

## १२. अथ संज्ञाधिकरणम्

### सूत्रभाष्यम्

'विरिञ्चो वा इदं सर्वं विरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति गौपवनश्रुतिः ॥

'यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते ।
एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुखः' इति च युक्तिर्ब्राह्मे ॥

अथ कस्मादुच्यते परम इति परमाध्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति । अथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद्बृंहणाच्च' इत्याग्निवेश्यश्रुतिः । अत आह–

**॥ ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ २१ ॥**

नामरूपक्लृप्तिः परादेव । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्य आस्त' (तै.आ.३-१२) इति श्रुतेः । त्रिवृत्कुर्वत इति हेतुगर्भः । त्रिवृत्करणापेक्षत्वान्नाम-रूपयोः ।

'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः ।
एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तरा' ॥ इति च पाद्मे ।

'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।
रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥
अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् ।
हरिरेव यतः कर्ता पिताऽतो भगवान्प्रभुः' ॥ इति च ब्रह्माण्डे ।

॥ इति संज्ञाधिकरणम् ॥

### तत्त्वप्रकाशिका

अत्र जगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं शरीरादिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणे हरावुक्तश्रुतिसमन्वयः शरीरादिविषयश्रुतीनां विरोधेनाप्रामाण्ये न

(तत्त्वप्रकाशिका)

सिध्येदित्यसाववश्यं निरसनीयः । तत्रेन्द्रियादीनामाश्रयः शरीरं तत्प्रसङ्गसन्निधापितं विषयः । किं विरिञ्चसृष्टं परमात्मसृष्टं वेति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥ **विरिञ्च इति** ॥ विरेचयतीत्यस्य व्याख्यानं विदधातीति । नामरूपकर्तृत्वम् । परमत्वे हेतुरुच्यते ब्रह्मशब्दस्तु निरुच्यते । श्रुतिर्विरिञ्चस्य विष्णोश्च नामरूपकर्तृत्वं वक्तीति क्रमेण शेषः । विरिञ्चस्यैव देहादि कर्तृत्वम् । 'विरिञ्चो वा इदम्' इति श्रुतेः । न च श्रुत्यन्तरविरोधः । विरिञ्चत्वयुक्तियुक्तत्वादाद्यश्रुतेः । न च सृष्टिद्वारत्वेन श्रुत्याद्युपपत्तिरिति वाच्यम् । असम्भवे हि मुख्यार्थस्यामुख्यार्थत्वं कल्प्यते । न च विरिञ्चे नामरूपात्मकदेहादिसृष्टिशक्तिर्न सम्भवति येनात्र श्रुत्यादेरमुख्यार्थत्वं कल्पयामः । अतः स युक्तिकैतच्छ्रुतिविरोधेनाप्रमाणमन्या श्रुतिस्तथा च न श्रुतिसमन्वयेन परमात्मनो जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ परमात्मनः सकाशादेव नामरूपात्मकदेहादिप्रपञ्चस्योत्पत्तिर्भवति । 'सर्वाणि रूपाणि' इति पुरुषसूक्तमन्त्रोक्तत्वादिति भावः । यदिति लिङ्गविपर्यासः । नामरूपयोर्विरिञ्चसृष्टत्वेऽप्यस्ति श्रुतिरतः कथमयं निश्चय इति तत्राह ॥ **त्रिवृदिति** ॥ विशेषणस्य हेतुगर्भत्वेन नामरूपकर्ता परः । पृथिव्यादिभूतत्रयस्य मिश्रीभावस्त्रिवृत्त्वं तत्कर्तृत्वादिति युक्तिरुक्ता भवति । तत्र त्रिवृत्कर्तृत्वं कुतो नामादिकर्तृत्वं हरेरित्यत आह ॥ **त्रिवृदिति** ॥ नामादिकरणं त्रिवृत्करणापेक्षं त्रिवृत्करणमन्तरेण रूपोत्पत्त्यभावस्य वक्ष्यमाणत्वात्तदभावे नामानुपपत्तेः । त्रिवृत्कर्तृत्वं च विष्णोरेव । 'सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यादि श्रुतेः । अतः स एव नामादिकर्तेति भावः । विरिञ्चत्वादियुक्तियुक्तेयमपि श्रुतिरित्यतस्तस्याः सावकाशत्वं स्मृत्यैव दर्शयति ॥ **सर्वेति** ॥ सर्वकर्तृत्वशक्तिस्तु त्रिवृत्कर्तृत्वेन विष्णोरेवेति सूत्रार्थे स्मृतिसंमतिं चाह ॥ **त्रिवृदिति** ॥ त्रिवृत्क्रिया यतो विष्णोरतो नाम्नश्चेत्यन्वयः । तदुपपादनं रूपमित्यादि । हरिरेव कर्ता यतश्च कर्ताऽतः पितेत्यर्थः । अतः श्रुत्यविरोधेन शरीरस्य हरिकर्तृत्वसिद्धेर्युक्तं तस्य श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ।

## गुर्वर्थदीपिका

अग्निवेश्यश्रुतौ यस्य कस्यचित् परमत्वे हेतुः कथ्यत इति शङ्कावारणाय ब्रह्मकारणत्वसूचनाज्जगद्ब्रह्मणकर्तृत्वरूपबृंहणाख्यब्रह्मगुणाभिधाने नामरूपव्याकरणाख्य प्रकृतप्रमेयसङ्ग्रहाच्च 'अथ कस्मादुच्यते ब्रह्म' इत्युत्तरवाक्योदाहरणम् ।

## भावबोधः

अनन्तरसङ्गतिं दर्शयन् विषयमाह– **इन्द्रियादीनामाश्रय इति ॥ किमिति ॥** अत्र नामरूपात्मकदेहादिप्रपञ्चः किं विरिञ्चसृष्ट उत परमात्मसृष्ट इति चिन्ता । तदर्थं परमात्मसृष्टत्वे 'विरिञ्चो वा इदं सर्वं विरेचयति' इति विरिञ्चसृष्टत्वं श्रुतिविरुद्धं न वेति । तदर्थं 'विरिञ्चो वा' इति श्रुतिः यस्माद्विरेचयेदित्युक्तयुक्तियुक्तत्वेन विरिञ्चस्य द्वारत्वमात्राभिप्रायकतया सावकाशेति । तदर्थं विरिञ्चस्य सर्वस्रष्टृत्वशक्तिर्नास्त्युतास्तीति । विपूर्वो दधातिः करोत्यर्थ इत्यन्यत्रोक्तत्वात् विरेचयति विदधातीति पुनरुक्तमित्यत आह– **विरेचयतीत्यस्यैव व्याख्यानमिति ॥** नामरूपकर्तृत्वस्य परमशब्दनिर्वचनत्वायोगात् तथा प्रतीतिं वारयितुमाह– **नामरूपकर्तृत्वमिति ॥** अनेन कस्माद्धेतोः विष्णुः परम उच्यत इति परमत्वे हेतुप्रश्ने हि यस्मात्तदुत्तमादेव नामरूपे व्याक्रियेते इति व्याप्तिमुक्त्वा तस्मादेनं नामरूपकर्तारं परममाहुरिति श्रुतियोजना भवति ।

'यस्माद्विरेचयेत् सर्वं विरिञ्चस्तेन भण्यते'

इत्युक्तयुक्तित्वादेवेत्यर्थः । 'तेजोऽतस्तथा ह्याह' इत्यादिन्यायेन गतार्थताशङ्कापरिहाराय विरिञ्चस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टेति न्यायविवरणमभ्यधिकाशङ्काप्रदर्शकतया तन्निवर्तनीयशङ्काप्रतिषेधपूर्वकं व्याचष्टे– **न च विरिञ्च इत्यादिना ।** सूत्रे 'तु'शब्द एवार्थः । त्रिवृत्कुर्वत इति विशेषणस्य परादिति विशेष्यपदमुपस्कर्तव्यमित्यभिप्रेत्य प्रवृत्तं नामरूपेत्यादिभाष्यं व्याचष्टे– **परमात्मन इति ॥** धीर इत्यादिपुंलिङ्गानुरोधेनाऽऽह– **यदिति लिङ्गविपर्यास** इति ।

'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।
रूपापेक्षं तथा नाम'

इति वक्ष्यमाणस्मृत्यनुसारेण त्रिवृत्करणापेक्षत्वान्नामरूपयोरिति भाष्यं व्याचष्टे **नामरूपादिकरणमिति ॥ सावकाशतामिति ॥** अनेन विरिञ्चस्य तु द्वारतयैवोपपत्तेरिति न्यायविवरणमपि व्याख्यातं भवति । इत्यादेस्तस्यैव कर्तृत्वशक्तिरिति न्यायविवरणानुसारेण स्मृतिमवतार्य व्याचष्टे– **कर्तृत्वशक्तिरिति ॥**

## भावदीपः

सङ्गतिं दर्शयति ॥ **तत्रेन्द्रियेत्यादिना** ॥ **तत्प्रसङ्गेति** ॥ इन्द्रियप्रसङ्गेत्यर्थः । एतेन सूत्रे संज्ञारूपक्लृप्तिरित्यनुक्त्वा मूर्तीत्युक्तेरुपयोगः सूचितः । तत्वप्रदीपे तु इदमिह निरूप्यते । किं चतुर्मुखान्नामरूपक्लृप्तिरुत परमादिति । न चात्र चतुर्मुखस्याप्रसक्तिराशङ्कनीया । यमेवायं भगवान्प्राणत्वादूर्ध्वं चतुर्मुखपदमधिष्ठास्यतीति ज्ञापयन् प्राणस्वरूपनिरूपणावसरे चतुर्मुखं प्रसञ्जयतीत्युक्तम् । पौनरुक्त्यनिरासायाह ॥ **इत्यस्य व्याख्यानमिति** ॥ तत्वप्रदीपे तु विदधाति विशेषेण धारयति नियोजयति चेत्युक्तम् । भाष्ये परामाद्ध्येव नामरूपे व्याक्रियेते । इत्येतावतैव पूर्तौ शेषोक्तेरुपयोगमाह ॥ **नामरूपेति** ॥ परमस्य विष्णोरेव नामरूपकर्तृत्वं वक्तुमिति भावः । **ब्रह्मरूपशब्द(स्तु)श्च निरुच्यत इति** ॥ नामरूपकर्तृत्वं ब्रह्मत्वे हेतुरिति सूचयितुमिति योज्यम् । 'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभ' इति स्मृतेः । स्मृत्युक्तयुक्तिमाह ॥ **विरिञ्चत्वेति** ॥ विरेचकत्वापरनामकसर्जकत्वाख्यविरिञ्चपदप्रवृत्तिनिमित्तवत्त्वरूपयुक्तियुक्तत्वादित्यर्थः । तदभिध्यानादित्यत्रोक्तन्यायेन समाधानमाशङ्कते ॥ **न चेति** ॥ विरञ्चस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टा इत्यन्यत्रोक्तां युक्तिं व्यनक्ति ॥ **असम्भवे हीत्यादिना** ॥ **अत इति** ॥ विरेचकत्वरूपविरिञ्चपदप्रवृत्तिहेतुत्वात् । चतुर्मुखस्य नामरूपसर्जनशक्तिमत्वाच्च सयुक्तिकेत्यर्थः । सूत्रभाष्ययोरर्थमाह ॥ **परमात्मन इति** ॥ सौत्रतुशब्दार्थ एवेति । यदिति यच्छब्दस्य तमेवं विद्वानिति तच्छब्देनान्वयसूचनाय वा श्रुतेर्वैष्णवत्वप्रसिद्धिद्योतनाय वा पुरुषसूक्तमन्त्रेत्युक्तम् । अत एवाह ॥ **यदिति** ॥ **लिङ्गेति** ॥ य इत्यर्थः । तथा च तमित्यग्रे परामर्शः सुशक इति भावः ॥ **वक्ष्यमाणत्वादिति** ॥ मांसादिभौममित्यत्र यद्वा वायो विमिश्रमित्यादिनेत्यर्थः । तावता कथं विष्णोरत आह ॥ **त्रिवृत्कर्तृत्वं चेति** ॥ **सेयमिति** ॥ 'तत्तेजोऽसृजत' इति तेजोऽबन्नस्रष्टृत्वेनोक्ता देवतेत्यर्थः । देवता तेजोऽबन्नदेवताभिमानिदेवता अभिमन्यमानसहिता इत्यर्थः । शरीररूपकविन्यस्तगृहीतेरिति न्यायात् । जीवेनात्मनाऽनिरुद्धाख्येन रूपेणेत्यर्थः । अत्राग्निहोत्रं जुहोति । यवागूं पचतीतिवत् नामरूपे व्याकरोत्तदर्थं त्रिवृतमकरोदित्यर्थः । इत्यादिश्रुतेः षष्ठे छान्दोग्यश्रुतेरित्यर्थः । कुतो नामरूपादिकर्तृत्वं हरेरिति शङ्कातत्समाधिप्रकारमाह ॥ **अतः स एवेति** ॥ विरिञ्चस्य द्वारतयोपपत्तेरित्यन्यत्रोक्त्यनुरोधेनाह ॥ **तस्याः सावकाशत्वमिति** ॥

(भावदीपः)

त्रिवृत्क्रिया यतो विष्णोरित्यादेस्तस्यैव कर्तृत्वोपपत्तेरित्यन्यत्रोक्त्यनुरोधेनाह ॥ **कर्तृत्वशक्तिस्त्विति** ॥ **अत इति** ॥ विरिञ्चत्वयुक्तियुक्तोक्तश्रुतेर्द्वारपरतया सावकाशतायाः स्मार्तत्वेन विष्णो-स्त्रिवृत्कर्तृत्वेन नामादिस्रष्टृत्वोपपत्तेश्चेत्यर्थः । शरीरस्येत्युत्तरसङ्गत्यर्थमुक्तं नामादेरित्यर्थः ।

## अभिनवचन्द्रिका

**शरीरमिति** ॥ यद्यप्यत्र रूपनामनी विषय इति वक्तव्यम्, तथापि सङ्गतिसूचनार्थं शरीरं विषय इत्युक्तमिति बोध्यम् । ननु नामरूपकर्तृत्वस्य परमशब्दार्थत्वाभावात् 'अथ कस्मादुच्यते परम इति प्रश्नपूर्वकं नामरूपकर्तृत्वेन परमशब्दनिर्वचनमयुक्तमित्यत आह– **नामरूपकर्तृत्वमिति** ॥ अनेन कस्माद्धेतोर्विष्णुः परम उच्यत इति परमत्वे हेतुप्रश्ने हि यस्मात्, उत्तमादेव नामरूपे व्याक्रियेते इति व्याप्तिमुक्त्वा तस्मादेनं नामरूपकर्तारं परममाहुरिति हेतूक्तिपूर्वकं साध्योपसंहारः क्रियत इति श्रुतियोजना सूचिता भवति । 'अथ कस्मादुच्यते ब्रह्म' इत्यत्रापि हेतुप्रश्ने पूर्ववत् 'बृहत्वात्' इत्यनेन हेतुरुच्यत इति भ्रान्तिनिरासायाह– **ब्रह्मशब्दस्त्विति** ॥ भाष्ये 'अथ कस्मादुच्यते ब्रह्मेति' इति वाक्यशेषोद्धारस्तु परमस्य विष्णुत्वज्ञापनार्थः ॥ **श्रुतिर्विरिञ्चस्य विष्णोश्चेति** ॥ श्रुतिरिति न प्रतीकधारणम् । विरिञ्चस्य विष्णोश्च नामरूपकर्तृत्वं वक्तीति न शेषः । किंतु हेतुकथनम् । ततश्च श्रुतिः विरिञ्चस्य विष्णोश्च नामरूपकर्तृत्वं वक्तीतिहेतोः क्रमेण शेषो द्रष्टव्य इत्यर्थः । अत्रायं विवेकः – आद्या श्रुतिः विरञ्चस्य नामरूपकर्तृत्वं वक्तीतिहेतोः 'गौपवनश्रुतिः' इत्यनन्तरं विरिञ्चस्य नामरूपकर्तृत्वं वक्तीति शेषः । द्वितीया श्रुतिः विष्णोर्नामरूपकर्तृत्वं वक्तीतिहेतोः आग्निवेश्यश्रुतिरित्यन्तरं विष्णोर्नामरूपकर्तृत्वं वक्तीतिशेष इति ॥ **विरिञ्चत्वयुक्तियुक्तत्वादिति** ॥ विरिञ्चशब्दाभिधेयत्वयुक्तियुक्तत्वादित्यर्थः ॥ **युक्तियुक्ता भवतीति** ॥ ननु 'विरिञ्च' इति गौपवनश्रुतिः विरिञ्चस्य नामरूपकर्तृत्वं वक्ति । 'अथ कस्मादुच्यते परमः' इति आग्निवेश्यश्रुतिर्विष्णोर्वक्तीति यथा नामरूपकर्तृत्वे सन्देहः, तथा त्रिवृत्कर्तृत्वेऽपि' इति कथं तस्य हेतुत्वाभिधानमिति चेत्, न । त्रिवृत्करणं प्रथमभावि, तत्साध्ये नामरूपे गौपवनश्रुतौ च प्रथमभावित्रिवृत्करणं परित्यज्य नामरूपयोरेव ग्रहणेन त्रिवृत्करणस्य विरिञ्चसाध्यत्वानभिमत्या तत्र सन्देहाभावात् ।

पूर्वपक्षस्तु – विरिञ्च एव नामरूपकर्ता तथाश्रुतेः । न च इतरश्रुतिविरोध इति वाच्यम् । विरिञ्चत्वयुक्तियुक्तत्वेनाऽस्याः श्रुतेः प्राबल्यात् । न च इयं श्रुतिर्द्वारकारणत्वपरा ।

(अभिनवचन्द्रिका)
मुख्याऽसम्भवेऽमुख्यस्य ग्राह्यत्वात् । प्रकृते च मुख्यार्थसंभावात् । अतः सयुक्तिकैतच्छ्रुतिविरोधेन इतरा श्रुतिरप्रमाणमिति ।

सिद्धान्तस्तु – परमात्मैव नामरूपकर्ता 'सर्वाणि रूपाणि' इति श्रुतेः । न च विरिञ्चस्यापि कर्तृत्वे श्रुतिरस्तीति वाच्यम् । नामरूपकरणस्य त्रिवृत्करणसापेक्षत्वात्तत्कर्तुरेव मुख्यतो नामरूपकर्तृत्वस्य वक्तव्यत्वे विरिञ्चश्रुतेर्द्वारकारणत्वमात्रार्थत्वात् । अत एव विरिञ्चत्वयुक्ति-विरोधोऽपि परास्तः । तदुक्तं – 'ब्रह्माद्यास्तदवान्तरा' इति । अतः श्रुत्यविरोधेन शरीरस्य हरिकर्तृकत्वसिद्धेः युक्तं तस्य श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं सूचयति । इन्द्रियाश्रयशरीरतत्प्रसङ्गसन्निधापितमिति ॥ **किमिति** ॥ अत्र नामरूपात्मकं देहादिलक्षणं जगत्किं विरिञ्चसृष्टमुत परमात्मसृष्टमिति चिन्ता । तदर्थं विरिञ्चतायुक्तियुक्ततया । विरिञ्चो वा इदमित्यादि श्रुतिर्निरवकाशोत अथ कस्मादुच्यत इत्यादि श्रुतिविरोधाद्विरिञ्चस्य सृष्टिद्वारतया सावकाशेति । तदर्थं विरिञ्चस्य नामरूपसृष्टिशक्तिरस्ति न वेति । विपूर्वो दधातिः करोत्यर्थः इत्यन्यत्रोक्तत्वाद्विरेचयति विदधातीति पुनरुक्तमित्यत आह ॥ **विरेचयतीत्यस्यैवेति** ॥ तत्वप्रदीपे तु विशेषेण धारयतीति व्याख्यातो कर्तृत्वस्य प्रवृत्तिनिमित्ता-भावेन परमशब्दनिर्वचनत्वयोगादाह ॥ **नामरूपकर्तृत्वमिति** ॥ विष्णुः परमः सर्वोत्तम इति । कस्माद्धेतोरुच्यत इत्युत्तमत्वे हेतुप्रश्ने वन्हिमानेव वन्हिधूमवानिति । तद्विपर्यये हेतुच्छित्तिसूचनाय परमादेव नामरूपे व्याक्रियते इत्युक्त्वा तस्मादिति नामादिकर्तृत्वं हेतुरिति तदुक्तिपूर्वं साध्योपसंहारः क्रियत इत्यर्थः ॥ **विरिञ्चत्वयुक्तीति** ॥ विरिञ्चशब्दाभिधेयत्वयुक्तियुक्तत्वात् इत्यर्थः । न चाप्रयोजको हेतुः । विरेचकत्वप्रवृत्तिनिमित्तेन विरिञ्चशब्दाभिधेयत्वस्य व्यवस्थापि-तत्वेन विरिञ्चस्य स्रष्टृत्वाभावे विरिञ्चशब्दवाच्यत्वाभावप्रसङ्गस्य विपक्षे बाधकस्य सत्त्वादिति भावः । तेजोस्तथाह्याहेत्यनेन गतार्थतां निराह ॥ **न चेति** ॥ कुतो न वाच्यमित्यत एको हि कर्तेति भाष्यसूचितं कर्तृशक्तिरित्युक्तपूर्वपक्षन्यायं स्पष्टयति ॥ **असम्भवे हीति** ॥ सूत्रे तुशब्दः एवार्थः । त्रिवृत्कुर्वत इति विशेषणस्य परादिति विशेष्यपरमुपस्कर्तव्यम् । भाष्यसूचितं कर्तरि शक्तिरित्युक्तं पूर्वसंज्ञानाम मूर्तिपदेन देह उच्यते । तच्च रूपप्रपञ्चमात्रोपलक्षकमित्यभिप्रेत्य प्रवृत्तं नामरूपेत्यादि-

(वाक्यार्थमुक्तावली)

भाष्यं व्याचष्टे ॥ **परमात्मन इति** ॥ धीर इत्यादि पुल्लिङ्गानुरोधेनाह ॥ **यदिति** ॥ **लिङ्गविपर्यास इति वक्ष्यमाणत्वादिति** ॥ रूपं तदपेक्षयेति वक्ष्यमाणत्वादित्यर्थः । तदभावे नामानुपपत्तेरिति वक्ष्यमाणत्वादित्यनुवर्तते । हेतुस्वरूपासिद्धिं परिहरति ॥ **त्रिवृत्कृत्वमिति** ॥ सेयं देवता सदाख्यपरदेवता इमास्तिसदेवतास्तेजोऽबन्नाभिमानिलक्ष्मीब्रह्मशिवाख्यदेवता अनेन जीवेनात्मना-निरुद्धरूपेण प्रविश्य नामरूपे व्याकरोत्तदर्थं तासां त्रिवृतं त्रिवृतं तदभिमत पृथिव्यप्तेजसां त्रित्वेन मिश्रीभूतामेकैकां व्यक्तिमकरोदिति श्रुत्यर्थः । भाष्ये व्यवहारेष्वित्यस्य व्यवहाराणामित्यर्थः । एक एव यतः स्रष्टेत्यनेन सूचितं कर्तरि शक्तिरित्युक्तसिद्धान्तन्यायं व्यनक्ति कर्तृत्वशक्तिरिति ।

ननु विरिञ्चब्रह्म चतुर्मुखश्रुतयो भगवति सावकाशाः । अत एव विरिञ्चत्वलिङ्गमपि जीवमुख्यप्राणलिङ्गादिति न्यायेन सावकाशं विरिञ्चिगतकर्तृत्वशक्तिरपि परात्तु तच्छ्रुतेरित्युक्तन्यायेन परायत्ता प्रतिज्ञाहानिरित्यादावीशस्यैव सर्वकर्तृत्वमुक्तं तेजोत इत्यादावन्येषां द्वारकारणत्वं चेति चेत्तथापि त्रिवृत्क्रियाया विष्ण्वैकनिष्ठत्वात्तद्वैकल्यनिमित्तं कर्तृत्वशक्तिवैकल्यमन्यस्येति विशेषप्रमेयं वक्तुं पुनरुक्तिरिति रहस्यम् ।

## वाक्यार्थविवरणम्

'अथ कस्मादुच्यते ब्रह्मेति' इति श्रुतिवत् 'अथ कस्मादुच्यते परम्' इति श्रुतिरपि परमशब्द-निर्वचनपरेति प्रतीयते । तत्र सम्भवति । अवयवार्थानानुगुण्यादित्यत आह ॥ **नामरूपेति** ॥ श्रुतिरिति तन्त्रेणोभयप्रतीकग्रहणम् । तत्र क्रमेण शेषो ज्ञातव्यः ॥ **श्रुत्यादीति** ॥ विरिञ्चो वा इदम्' इति श्रुतिः । आदिपदाद्विरिञ्चत्वयुक्तिः ॥ **विपर्यास इति** ॥ तया च य इत्यर्थ । विशेषणस्य हेतुगर्भत्वेन युक्तिरुक्ता भवतीत्यन्वयः । युक्तिर्विव्रीयते नामरूपकर्तेत्यादिना । त्रिवृत्करणापेक्षत्वा-न्नामरूपयोरिति रूपवन्नाम्नोऽपि साक्षात्त्रिवृत्करणापेक्षत्वं प्रतीयते । तच्च त्रिवृत्क्रिया' इत्यादि-प्रमाणविरुद्धमत आह ॥ **त्रिवृत्करणमिति** ॥ **तदभाव इति** ॥ रूपाभावे आश्रयाभावेन नामानुपपत्तेरित्यर्थः । तथा च रूपलक्षणाश्रयद्वारा नाम्नोऽपि त्रिवृत्करणापेक्षत्वमिति भावः ॥ **सावकाशताम्** ॥ अवान्तरा इत्यनेन सा दर्शितेत्याशयः । भाष्ये सर्वनाम्नां रूपाणां नाम-रूपात्मकवियदादिप्रपञ्चानां व्यवहारेषु तत्तन्नामरूपात्मकप्रपञ्चविषयका ये व्यवहारास्तेषामिति

**(वाक्यार्थविवरणम्)**

विभक्तिव्यत्यासः । तत्तस्मादवान्तराः स्रष्टार इत्यर्थः ॥ **कर्तृत्वशक्तिः** ॥ सञ्ज्ञामूर्तिकर्तृत्वशक्तिः ॥ **इत्यन्वयः** ॥ इत्यादिनाऽन्वयः । त्रिवृत्क्रिया यतो विष्णोरतो नाम्न इत्याद्युक्तौ रूपवन्नाम-व्यवहारयोरपि साक्षात् त्रिवृत्क्रियासापेक्षत्वप्राप्तौ रूपस्य साक्षात् तद्वारा नाम्नस्तद्वारा व्यवहारस्येत्याशयेन रूपं चेत्यादिभाष्यं प्रवृत्तमित्याशयेनाह ॥ **तदुपपादनमिति** ॥ भाष्ये ॥ **तदपेक्षया** ॥ साक्षात्त्रिवृत्करणापेक्षया ॥ **तदात्मकः** ॥ नामापेक्ष इति यावत् । यतः कर्तेत्यनुवाद-बलाद्धरिरेवेत्यनन्तरं शेषं पूरयति ॥ **हरिरेव कर्तेति** ॥

## वाक्यार्थमञ्जरी

ननु विपूर्वोदधातिः करोत्यर्थ इत्यन्यत्रोक्तत्वात् विरेचयति विदधातीत्येतत्पुनरुक्तमित्यत आह ॥ **विरेचयतीत्यस्यैव व्याख्यानमिति** ॥ **हेतुरुच्यत इति** ॥ न तु निरुच्यत इति भावः । **विरिञ्चत्वयुक्तीति** ॥ यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यत इत्युक्तयुक्तियुक्तत्वादेवेत्यर्थः ॥ **सृष्टिद्वारत्वेनेति** ॥ परमात्मा विरिञ्चेन देहादिकं सर्जयतीत्यर्थकत्वेन विरिञ्चकर्तृत्वश्रुतियुक्त्यु-पपत्तिरित्यर्थः । संज्ञामूर्त्योर्नामदेहयोः क्लृप्तिः सृष्टिः त्रिवृत्कुर्वतस्तु त्रयाणां तेजोऽबन्नानां मिश्रणं कुर्वतो हरेरेव सकाशात् न विरिञ्चतः कुतः उपदेशात् सर्वाणि रूपाणीति श्रुतेरित्यर्थः । श्रुतौ विचिंत्य कृत्वाधीर इत्यादि पुंल्लिंगानुरोधेनाह ॥ **यदिति** ॥ **लिङ्गेति** ॥ **सेयमिति** ॥ सा तेजःस्रष्टृत्वेन प्रकृतेयं नारायणाख्या देवता इमाः प्रागुक्ताः तिस्रः तेजोऽबन्नाभिमानिनीर्देवता अभिमन्यमानभूतसहिता अनेन जीवेनात्मनानिरुद्धेन रूपेण प्रविश्य नामरूपे संज्ञाशरीरे विशेषेणाकरोत् तदर्थं तासां देवतानां मध्ये एकैकम् एकैकाभिमन्यमानभूतं त्रिवृतमन्योन्यप्रविष्ट-मकरोदित्यर्थः ॥ **इयमपि श्रुतिरिति** ॥ विरिञ्चो वेत्यादि श्रुतिरित्यर्थः ।

॥ इति संज्ञाधिकरणम् ॥

## १३. अथ मांसाधिकरणम्

'अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवत्यापः शरीरमाप एवेदं सर्वम्' इति कौण्डिन्यश्रुतिः ।

'अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसत' इति च भारते ।

'पृथिवी शरीरमाकाशमात्म' इति (बृ.उ. ५-२-१३) च श्रुतिः अतो ब्रवीति–

**॥ ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ॥ २२ ॥**

'यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेज' इति श्रुतेर्मांसाद्येव भौमं न सर्वशरीरम् । अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम् ॥ 'यद्वावाथो विमिश्रं मिश्राद्ध्येतद्भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते भूतानीति' इति हि कापायणश्रुतिः ।

'पञ्चभूतात्मकं सर्वं तथाऽप्येकविवक्षया ।
एकभूतात्मकत्वेन व्यवहारस्तु वैदिके ।
भौममित्येव काठिन्याच्छौकुल्यादौदकमित्यपि ।'

॥ इति मांसाधिकरणम् ॥

## तत्त्वप्रकाशिका

अत्रेश्वरे जगत्कारणे श्रुतिसमन्वयसिद्ध्यर्थं शरीरकारणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । जगत्कारणे हरावुक्तः श्रुतिसमन्वयो देहकारणश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः प्राप्नोतीत्यवश्यमसौ परिहर्तव्यः । प्रकृतो देह एवात्र विषयः । किमाप्यः किं वा पार्थिव उत तैजसो भूतत्रयात्मको वेति सन्देहः । लेशतः सन्देहबीजं दर्शयन्पूर्वपक्षं सूचयति ॥ **अद्भ्य इति** ॥ 'अद्भ्यो हीदम्' इति प्रतिज्ञा आप इत्युपपादनम् । आप एवेति निगमनम् । श्रुतिराप्यत्वं शरीरस्य वक्तीति शेषः । 'पृथिवीं शरीरमप्येति' इति श्रुतिः शरीरस्य पार्थिवत्वमाह । कार्यस्य स्वकारण एवाप्ययनियमात् । आकाशं परमात्मानम् । तैजसत्वेऽपि श्रुतिः 'सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वं स्वर्गलोकमेति' इति । भूतत्रयात्मकत्वं च श्रूयते 'इमास्तिस्रो देवताः पुरुषं प्राप्य' इत्यादौ । आप्यमिति तावत्प्राप्तम् । 'आपो वाव मांसम्' इति श्रुतेः । न च श्रुत्यन्तरविरोधः ।

(तत्त्वप्रकाशिका)

मांसादौ तृप्तिजनकत्वदर्शनेनाप्यत्वश्रुतेर्युक्तियुक्तत्वात् । अपां हि तर्पकत्वं धर्मः । पार्थिवमित्यपरः पक्षः 'पृथिवी शरीरम्' इति श्रुतेः । काठिन्यगन्धवत्त्वादित्युक्तेश्च । तैजसमित्यन्यः । तथा श्रवणा-दौष्ण्यदर्शनाच्च । सर्वथा श्रुतोऽपि न चतुर्थः पक्षो युक्तः । शरीरे भूतानां मिश्रतायामभ्युपेताया मापः शरीरमित्यादिविशेषोक्त्ययोगान्मिश्रत्वादेव । न हि बहुषु विद्यमानेषु कारणविशेषं विनात्र देवदत्तो विद्यत इति विशेषोक्तिर्दृष्टा । न चात्र कारणविशेषं पश्यामः । अतो विरोधेन कासांचित् श्रुतीनाम-प्रामाण्यान्न विष्णौ जगत्कारणे श्रुतिसमन्वयो युक्त इति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। **अत इति** ।। यच्छरीरे कठिनं मांसादि तदेव पार्थिवं न सर्वशरीरं किं तर्ह्यप्तेजसोश्च कार्यं शरीरेऽस्थिशोणितमज्जादीत्यङ्गीकार्यम् । यत्कठिनमिनि श्रुतेः । एवमङ्गीकारस्यैव यथाशब्दत्वादिति भावः । अयं चैकपक्षप्रतिषेधः । इतरावपि पक्षावेवं निषेध्यौ ।

ननु कथं मांसस्य पार्थिवत्वमुच्यते । 'आपो वाव मांसम्' इति श्रुतेर्युक्तेश्चेत्यतो वाह ।। **अप्तेजसोश्चेति** ।। न मांसादीनां केवलपार्थिवत्वं किं नाम तत्राप्तेजसोश्च कार्यमङ्गीक्रियते शब्दवशात् । अतो मांसस्याप्यत्वोक्तिर्युक्तेति भावः । कोऽसौ शब्दो यतो मांसादीनां नैकभूत-कार्यत्वमिति तं दर्शयति ।। **यदिति** ।। भूम्यादिभूतानां स्वत एव मिश्रत्वान्नैकभूतत्वं मांसादीनां सम्भवतीति विज्ञायते । तस्मात्सम्भूतत्वान्मांसादीनामनेकभूतकार्यत्वात्तदपेक्षयाप्यत्वाद्युक्तिर्युक्तेति । उक्तार्थे **स्मृतिं** चाह ।। **पश्चेति** ।। तेजिष्टत्त्वात्तैजसं च यथाऽस्थ्रां वचनं श्रुतौ'' इति वायुप्रोक्ते ।

## गुर्वर्थदीपिका

आकाशमात्मेत्यत्र आत्मा शरीरान्तर्गतो जीवः । इमास्तिस्रो देवता इत्यत्र तेजोऽबन्नात्मिकाः पुरुषं जीवं प्राप्य देहरूपेण प्राप्येत्यर्थः ।

## भावबोधः

**शरीरकारणविषयेति** ।। पूर्वाधिकरणे देहादेः कर्तोक्तः । इह तु उपादानं चिन्त्यत इत्यनन्तर-सङ्गतिरिति भावः ।। **किमिति** ।। अत्र देहः किं पृथिव्याद्येकैकभूतमात्रोपादानक उत भूतत्रयो-पादानक इति चिन्ता । तदर्थं भूतत्रयोपादानकत्वं पृथिवीशरीरमित्यादिश्रुतिविरुद्धं न वेति । तदर्थं पृथिवीमित्यादिश्रुतिः काठिन्यतर्पकत्वरूपयुक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं देहस्य

(भावबोधः)

भूतत्रयात्मकत्वेऽप्याप्यत्वादिश्रुत्यादिकं तत्तद्भूतभागाधिक्येन नोपपद्यत उतोपपद्यत इति । तदर्थं तत्र विशेषप्रमाणं नास्त्युतास्तीति । द्वितीयनिवर्तनीयपरं मिश्रत्वाद्भूतानां मिश्रतायामपि विशेष इति न्यायविवरणं योजयति– **शरीरे भूतानामिति** ॥ न्यायविवरणे शेषोक्तिरियम् । अविशेष इत्यस्यार्थो **विशेषोक्त्ययोगादिति** ॥ 'अस्थि च भवत्याप असृग्वाव तेजो मज्जाविशेषतः' इति प्रमाणानुसारेणाप्तेजसोश्चेति भाष्यं व्याचष्टे– **अप्तेजसोश्चेति** ॥ कार्यमिति शेषोक्तिः । इतरावपि पक्षाविति । यच्छरीरे द्रवं तदेवाप्यं सर्वशरीरम् । यच्छरीरं उष्णं मज्जादि तदेव तैजसं न सर्वशरीरमिति इतरावपि पक्षौ प्रतिषेध्यावित्यर्थः ।

## भावदीपः

पूर्वसङ्गतिमाह ॥ **प्रकृत इति** ॥ तत्त्वप्रदीपे तु एवमस्य प्राणस्य भविष्यद्ब्रह्मणः श्रुतिस्मृतिसिद्धं त्रिवृत्कुर्वतः परमादनन्तरभाविस्रष्टृत्वमनुसन्दर्श्य त्रिवृत्कृतैर्भूतैरारभ्यमाणं शरीरमधिकृत्य विचार्यते । भूतसृष्टिं जीवस्वरूपं चोक्त्वा तस्य भोगसाधनानां प्राणानां स्वरूपं निगद्य तदाधारभूतं मुख्यप्राणं चानुवर्ण्य तैर्भूतैस्त्रिवृत्कृतैरारभ्य तस्य जीवस्य प्राणस्य भोगायतनं शरीरस्वरूपं निरूपयतीति श्लिष्यते । तस्मादुत्क्रान्तस्य संसारिणो गत्यादिनिरूपणा समीपे करिष्यत इत्युक्तम् । भाष्ये कोटिद्वयसंशयबीजप्रदर्शनेऽपि स्वर्गस्थानां शरीराणामिति वक्ष्यमाणस्मृत्यनुरोधेन कोट्यन्तरबीजस्याप्यूहतात्पर्यावगमात् सिद्धान्तकोटिबीजस्याग्रे भाष्ये वक्ष्यमाणदिशा सुज्ञानत्वाच्चतुष्कोटिकसंशयमाह ॥ **किमाप्य इति** ॥ अपौनरुक्त्यायाह ॥ **अद्भ्यो हीति** ॥ **अप्येतीति** ॥ यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मेति बृहदारण्यके पूर्वत्र प्रकृतमप्येतीति पदमत्राप्यन्वेतीति भावः । भाष्ये शेषं पूरयति ॥ **इति श्रुतिरित्यादि** ॥ आकाशस्यात्मोपादानत्वभ्रान्तिं निराह ॥ **परमात्मानमिति** ॥ आत्मा-जीवोऽप्येति । इतरैरदृश्यः सन् प्रविशतीत्यर्थः । स्वं कुलायं यथा पीतः पक्षी स्यादेवमीश्वरम् अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदेत्यादितत्वनिर्णयोक्तेः । सोऽग्नेरिति बह्वृचब्राह्मणवाक्यम् । श्रूयते छान्दोग्ये षष्ठे ॥ **तथेति** ॥ सोऽग्नेरिति श्रवणादित्यर्थः । कोटित्रयस्यापि सयुक्तिकश्रुतिमत्त्वेन तुल्यबलत्वे विनिर्णयाभावेन सन्देहादविशेषः स्यादित्यत आह ॥ **सर्वथेति** ॥ इमास्तिस्र इति श्रुतोऽपीत्यर्थः । एवं रूपेण निर्णयसम्भवान्न सन्देहादविशेष इति भावः । कुत

(भावदीपः)

इत्यतो मिश्रत्वाद्भूतानां मिश्रतायामविशेष इति न्यायविवरणोक्तेरभिप्रायं व्यनक्ति ॥ **शरीर इति** ॥ वैशेष्यात्त्विति सूत्रांशव्यावर्त्योक्तिर्न चात्रेति ॥ **अत इति** ॥ श्रुतीनां सयुक्तिकत्वेन प्रबलत्वादित्यर्थः । मांसादीत्येतत्सावधारणमित्युपेत्य सूत्रभाष्ययोरर्थमाह ॥ **यच्छरीर इति** ॥ मांसादीत्यादिपदेन शोणितमज्जादीत्यत्र प्रत्येकमन्वितादिपदेन च मनःप्राणवागादेः क्रमेण ग्रहः । अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वागित्यादिश्रुतेरिति भावः ।

ननु सर्वं शरीरं भौममिति पूर्वपक्षस्योक्तदिशा निरासेऽपि आप्यमेव तैजसमेवेति पूर्वपक्षयोर्निरासो नेत्यत आह ॥ **अयं चेति** ॥ मांसाद्येवेत्यवधारणकृत इत्यर्थः । सूत्रे भाष्ये च मांसादीत्यनेन शोणितादीति मज्जादीति चोपलक्ष्यं भौममिति चाप्यमित्यस्य तैजसमित्यस्य चोपलक्षणम् । भाष्ये अप्तेजसोश्चेति च भूमितेजसोश्चेत्यस्य भूमिजलयोश्चेत्यस्य चोपलक्षणम् । अत एव सूत्रे इतरयोरिति सामान्योक्तिः । यथाशब्दमित्युक्तशब्दश्च पक्षत्रयनिरासेऽपि यत्कठिनमिति भाष्योक्त एव । व्याख्यानं तु यच्छरीरे द्रवं शोणितादि तदेवाप्यं न सर्वशरीरं किं तर्हि भूतेजसोश्च कार्यं शरीरेऽस्ति मांसमज्जादीत्यङ्गीकार्यम् । यत्कठिनमित्यादिश्रुतेरिति । तथा यदुष्णं मज्जादि तदेव तैजसम् । स सर्वं शरीरं किं तर्हि भूजलयोश्च कार्यं शरीरेऽस्ति मांसशोणितादि । यत्कठिनमित्यादिश्रुतेरित्येवंरूपेण बोध्यमिति भावः । यद्यपि मांसाद्येव भौमं न सर्वशरीरं किं तु तत्राप्तेजसोश्च कार्यमस्तीति यथान्यासेनैव एकैकमात्रत्वकोटिकपक्षत्रयस्यापि निरासो भवति । तथापि प्रातिस्विकरूपेणापि निषेधलाभायैवमुक्तिः । वक्ष्यमाणश्रुत्यनुरोधेनार्थान्तरमाह ॥ **नन्विति** ॥ च शब्दव्यावर्त्यमाह ॥ **न मांसादीनामिति** ॥ तत्र मांसादौ । यथा शब्दमित्यस्यार्थः ॥ **शब्दवशादिति** ॥ **तस्मादिति** ॥ श्रौतपदानुवादः । विमिश्रत्वात्सम्भूतत्वमिति भावः । श्रुतौ विमिश्रमित्यस्य शरीरादि मांसादि वेति तत्वप्रदीपार्थः ।

## अभिनवचन्द्रिका

**किमाप्य इति** ॥ किमाप्यः, उत भूतत्रयात्मकः । तथा किं पार्थिव, उत भूतत्रयात्मकः । तथा किं तैजसः, उत भूतत्रयात्मक इति त्रयः सन्देहा बुद्ध्या विवेकेन द्रष्टव्याः । आप्यमिति तावदिति ॥ पूर्वपक्षान्तरं वक्ष्यामीति भावेन तावच्छब्दः प्रयुक्तः ॥ **न च श्रुत्यन्तरेति** ॥ 'इमास्तिस्रो देवताः' इति श्रुत्यन्तरविरोध इति नेत्यर्थः । ननु तर्पकत्वयुक्तिर्न भूतत्रयात्मकत्वश्रुतिं

(अभिनवचन्द्रिका)

विरुणद्धि । भूतत्रयात्मकत्वेऽपि अब्जन्यत्वेन तर्पकत्वसंभवादित्यत आह **अपां हीति** ॥ अपां तर्पकत्वमसाधारणधर्म इति हि प्रसिद्धमित्यर्थः । केवलाब्जन्यत्वे मांसस्यास्वापत्या स्मार्ततर्पकत्वमुपपन्नं भवेत् । भूतत्रयोपादानकत्वे तु अस्वाभावात् तर्पकत्वं न स्यात् । अत एव 'अपां तर्पकत्वं धर्म' इत्युक्तम् । अन्यथा आप्यानामित्यवक्ष्यत् । यद्यपि अस्मिन्पक्षे 'पृथिवीशरीरम्, सोऽग्नेर्देवयोन्या' इति श्रुतिभ्यां विरोधोऽस्ति, तथापि तदाच्छादनेनाऽयं पूर्वक्षो द्रष्टव्यः । एव-मितरावपि पूर्वपक्षौ द्रष्टव्यौ । पूर्वपक्षान्तरमाह – **पार्थिवमितीति** ॥ पूर्वपक्षान्तरमाह– **तैजस-मितीति** ॥ पूर्वपक्षत्रयव्यावर्त्यं युगपदाह – **सर्वथा श्रुतोऽपीति** ॥ 'आप्यमेव शरीरम्' इति युक्तं, श्रुतोऽपि चतुर्थः पक्षः = भूतत्रयात्मकमिति पक्षो न युक्त इति एको मन्यते । एवमन्यावपीति भावः । कुतो न युक्त इत्यतः पूर्वपक्षित्रयाभिमतां युक्तिं युगपदाह– **शरीर इति** ॥ शरीरस्य मिश्रतायामभ्युपेतायाम्, 'आपः शरीरम्' इति विशेषोक्तिर्न स्यादित्येकः पूर्वपक्षी । अपरः 'पृथिवीशरीर'मिति विशेषोक्तिर्न स्यादिति । अन्यस्तु 'सोऽग्नेर्देवयोन्या' इति विशेषोक्तिर्न स्यादिति मन्यत इति विवेकः ॥ **कासाञ्चिच्छ्रुतीनामिति** ॥ त्र्यात्मकत्वाभिधायिनीनामित्यर्थः ॥ **अयं चैकपक्षेति** ॥ 'मांसाद्येव भौमं न तु सर्वशरीरम्' इति भाष्यकारीयः प्रतिषेधः शरीराणां केवलपार्थिवत्वपक्षस्य शरीराणां केवलाप्यत्वतैजसत्वपक्षावपि स्वयमेव प्रतिषेध्यावित्यर्थः ।

## वाक्यार्थमुक्तावली

**शरीरकारणेति** ॥ कर्तृविचारानन्तरमुपादानकारणविचार इत्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र देहः किं पृथिव्याद्येकभूतोपादानक उत भूतत्रयोपादानक इति चिन्ता । तदर्थं पृथिवी शरीरभूतमित्याद्येकभूतप्रकृतिकत्वपरा श्रुतिः विन्यस्तफलत्वौष्ण्यरूपयुक्तियुक्तत्वेन निरवकाशातस्य भूतत्रयात्मकत्वेऽपि तत्तद्भूतभागाधिक्येन सावकाशेति । 'अद्भ्यो हीदमुत्पद्यते' इति श्रुतौ शरीरमित्यस्येदं शरीरमित्यादावन्वयः । इदं सर्वं शरीरमाप एवेत्युपसंहारेणाप्यन्वीयत इति भावेन टीकायामाप एवेति निगमनमित्युक्तम् । अथैतन्मात्रान्वये शरीरमाप एवेति निगमन-मित्यवक्ष्यत् । 'अग्निं वागप्येति, वातं प्राणः' इत्युपसंक्रमे स्थितस्याप्येतीत्यस्य सर्वत्र सम्बन्ध-मभिप्रेत्य पृथिवीं शरीरमप्येतीति श्रुतिरिति बृहदारण्यकश्रुतिरित्यर्थः । लेशतः सन्देहबीजमित्युक्तं व्यञ्जयन्भाष्यमुपलक्षणमित्याह ॥ **तैजसत्वे पीति** ॥ स यजमानः आहुतिभ्यो दत्ताभ्यो निमित्ता-त्तद्देवयोन्या देवानामाहुतिदातृत्वेन देवकारणादग्ने हिरण्यशरीरः सम्भूय स्वर्गं लोकमेतीति श्रुत्यर्थः ।

(वाक्यार्थमुक्तावली)

इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि इति छान्दोग्यश्रुतिः ॥ **न च श्रुत्यन्तरेति** ॥ पक्षत्रयप्रापकश्रुत्यन्तरेत्यर्थः ॥ **मांसादाविति** ॥ मांसे रक्तेवेत्यर्थः । असृग्वारीति न्यायविवरणोक्तेः ॥ **अपांहीति** ॥ तापापनोदो भूयस्त्वमंभसो वृत्तयस्त्विमा इति भागवतोक्तेरिति भावः । भाष्येऽप्यत्वे युक्तिरूपलक्षणमिति भावेनाह ॥ **काठिण्येति** ॥ गन्धवत्वादीत्यादिपदेन कार्ष्ण्यं गृह्यते । यत्कृष्णं तदन्नस्येति श्रुतेः । भाष्ये पूर्वपक्षे शरीरमाप एवेदं सर्वं पृथिवीशरीरमिति विशेष्यवाक्यग्रहणात्सूचितं स्वपक्षसाधकं विमिश्रतेत्युक्तन्यायं व्यञ्जयन् द्वितीयसूत्रनिरस्यं पूर्वपक्षमाह ॥ **सर्वथेति** ॥ सूत्रे मांसादित्यतः परमवधावरणार्थकस्तुशब्दोऽनुवर्तत इति भावेन भाष्ये मांसाद्येवेत्युक्त्या न सर्वशरीरमिति तद्व्यावर्त्यमित्युक्तम् । इतरयोश्चेत्यतः कार्यमङ्गीकार्यमिति शेष इत्यभिप्रेत्याप्तेजसोश्च कार्यमङ्गीकर्तव्यमित्युक्तम् । यथाशब्दं शब्दमनतिक्रम्य शब्दानुकूल्ये-नेत्येतन्मांसादेर्भौमत्वे शरीरेऽप्तेजसोः कार्यसत्त्वे च यत्कठिणमिति श्रुतिसूचकमिति भावेन श्रुतेर्मांसाद्येवेति यथा शब्दमङ्गीकार्यमिति चोभयत्र योजितमिति भावेन व्याचष्टे ॥ **यच्छरीर इत्यादिना** ॥ मांसादीत्यादिपदेनात्स्थ्नां ग्रहणम् । तत्वप्रदीपरीत्याऽर्थान्तरमुक्तं प्रमेयमुक्तावल्याम् ॥ **शोणितमज्जादीति** ॥ शोणितादिमज्जादीत्यर्थः । शोणितादीति सूत्रादेर्ग्रहणम् । मज्जादीत्यस्थ्नां ग्रहणम् । आपः पीता त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यं तन्मज्जेति श्रुतेः । अन्यथा निरवकाशश्रुतिविरोध इति श्रुतेरित्याद्यनुक्त्वा यथा शब्दमिति निर्देश इति भावेनोक्तम् ॥ **एवमङ्गीकारस्येति** ॥ **अयं चैकपक्ष इति** ॥ अयं भाष्यकारीयप्रतिषेधः शरीरं पार्थिवमेव आप्यमेव तैजसमेवेति पूर्वपक्षत्रयमध्ये एकपूर्वपक्षप्रतिक्षेपः । एवं यच्छरीरे द्रवन्तत्तदेवाप्यं न सर्वशरीरं यथा शब्दं भूतेजसोश्च कार्यमङ्गीकार्यम् । शरीरे यदुष्णं मज्जादि तदेव तैजसं न सर्वशरीरं किन्तु यथाशब्दमप्पृथिव्योश्च कार्यमङ्गीकार्यमितीतरावपि पूर्वपक्षौ प्रतिषेद्धव्यावित्यर्थः ॥ **इत्यतो वाहेति** ॥ इत्याशङ्कां परिहरन् यथाशब्दमित्यादिसूत्रखण्डं प्रकारान्तरेण व्याचष्ट इत्यर्थः । श्रुतितात्पर्यार्थमाह ॥ **भूम्यादीनामिति** ॥ मांसाद्युपादनभूम्यामित्यर्थः । तस्मादित्यस्यार्थः **सम्भूतत्वादिति** ॥ सहभूतत्वान्मिश्रत्वादिति यावत् । ततश्चायं श्रुत्यर्थः । यद्विमिश्रं वाव प्रसिद्धं अथो तस्मादेतन्मांसादिकं भवतीति प्रसिद्धम् । यद्वा यद्यस्माद्विमिस्रादेतन्मांसादिकं भवतीति प्रसिद्धम् । अथो तस्माद्विमिश्रमिति ज्ञायत इत्यर्थः । किं तस्मान्मांसोपादानं विमिश्रं कथं च तन्मिश्रता ज्ञायत इत्यत उक्तम् ॥ **विमिश्राणीति** ॥ यस्माद्विमिश्राणि भूतानि तस्मात्सहभूतत्वादेव भूतानीत्येवमाचक्षत इत्यर्थः । सूत्र खण्डतात्पर्यमाह ॥ **मांसादीनामिति** ॥ **यदि उक्तार्थ इति** ॥

(वाक्यार्थमुक्तावली)

मांसादीनामेकभूतकार्यत्वमित्युक्तेऽर्थ इत्यर्थः । मांसादेः पाञ्चभौतिकत्वे तथैव व्यवहारः स्यान्न तु भौममित्यादिव्यवहारे इत्याशङ्कां परिहरन्निति शेषः । यद्यपि मांसादिकं सर्वमप्येकैकशः पञ्चभूतात्मकं तदपि तथाप्यविवक्षायामेकैकभूतस्यापि सत्त्वविवक्षायां काठिण्यान्निमित्तान्मांसं भौममिति शौक्ल्यान्मूत्रमाप्यमिति तेजिष्ठत्वान्मज्जातैजस इत्येकैकभूतात्मकत्वेन व्यवहार इत्यर्थः । काठिण्यादिविवक्षया पृथिवीत्वादिव्यवहार इत्यत्रोदाहरणमाह ॥ **यथेति** ॥ श्रुतौ यत्कठिणमिति सामान्यश्रुतौ । अस्थ्नां काठिण्यादस्ति भौममिति । अस्ति च भवन्त्याप एवेति श्रुतौ शौक्ल्या-दस्थ्यौदकमिति तेजोशितमिति श्रुतौ तस्य यः स्थविष्ठो भागस्तदस्तीति तेजिष्ठत्वात्तैजसमिति व्यवहारोऽस्तीत्यर्थः । यद्वा तदपि तथाप्येकविवक्षया प्रधानविवक्षया प्राचुर्यविवक्षया काठिण्या-द्भौममिति शौक्ल्यादौदकमिति तेजिष्ठत्वात्तैजसमिति व्यवहार इत्यर्थः । त्र्यात्मकस्याप्येकभूतप्राचुर्य-विवक्षयैकभूतात्मकत्वेन व्यवहार इत्येतदुदाहरणेन दर्शयति ॥ **यथेति** ॥ तेजिष्ठत्वात्तेजः प्राचुर्या-त्तेजोशितं त्रेधा विधीयते तस्य यः स्थविष्ठो भागस्तदस्ति भवतीति श्रुतावस्थ्नां तैजसत्ववचन-मित्यर्थः। अन्ये च यथास्थ्नामाप्यत्ववचनमित्याहुः । तत्वप्रदीपे अप्तेजसोश्च कार्यमस्मिंच्छरीरे लोडितास्थ्यादीत्युक्तत्वात्पृथिव्यपेक्षायामाधिक्यादस्थि च भवंत्याप इति श्रुतिस्तेजोऽपेक्षयाऽपा-माधिक्येनापो वाव मांसमिति ज्ञेयम् । विस्तरस्त्वन्यत्र कृतोऽनुसन्धेयः ।

## वाक्यार्थविवरणम्

**इदम्** ॥ शरीरम् ॥ **हिरण्यशरीर इति** ॥ 'तेजो वै हिरण्यम्' इति श्रुतेस्तैजसशरीर इत्यर्थः ॥ **उपपादनमिति** ॥ शरीरस्य मांसास्थ्यात्मकत्वात् तथोपपादनं युक्तमिति भावः । भाष्ये इदं सर्वं शरीरजातम् । आत्मा जीव आकाशमिति श्रुतावधिकोक्तिर्न प्रकृतोपयोगिनी ॥ **मिश्रत्वादेव** ॥ भूतानामिति वर्तते ॥ **अत्र** ॥ आपः शरीरमित्यादिविशेषोक्तौ ॥ **कासाञ्चिदिति** ॥ भूतत्रयात्मकत्वप्रतिपादकानामिमास्तिस्र इत्यादीनामित्यर्थः ॥ **अस्थीति** ॥ अस्थिशोणितयोरप्-कार्यत्वं मज्जादेस्तेजःकार्यत्वमिति विवेकः ॥ **एकपक्षेति** ॥ सर्वशरीरस्य पार्थिवत्वपक्षप्रतिषेधः सूत्रोक्तः ॥ **इतरावपीति** ॥ यच्छरीरे द्रवं तदेवाप्यं न सर्वशरीरमिति सर्वशरीरस्याप्यत्वपक्ष-प्रतिषेधः। यच्छरीरे उष्णं मज्जादि तदेव तैजसं न सर्वशरीरमिति सर्वशरीरस्य तैजसत्वपक्षश्च प्रतिषेध्य इत्यर्थः ॥ **तत्र** ॥ मांसे कार्यद्रवादि तिष्ठतीति शेषः ॥ एकभूतत्वम् ॥ **एकभूतकार्य-त्वम्** ॥ अप्कार्यत्वोक्तावपीतरभूतकार्यत्वं प्राप्तमेवापामपीतरभूतमिश्रत्वादिति भावः ॥ **सम्भूत-**

(वाक्यार्थविवरणम्)

त्वात् ॥ मिश्रत्वादित्यर्थः । भाष्ये काठिण्याद्भौममित्यस्योदाहरणं प्रसिद्धम् । तेजिष्ठत्वात्तैजसं चेत्यस्यापि तेजो मज्जाविशेषत इत्युक्तेः मज्जादेस्तेजिष्ठत्वात् तेजःकार्यत्वप्रसिद्धम् । शौकल्या-दौदकमित्यस्य किमुदाहरणमित्यत आह ॥ **यथास्थ्रां वचनं श्रुताविति** ॥ **श्रुतौ** ॥ 'अस्थि च भवन्ति' इति श्रुतौ । अस्थ्रां शौकल्यादुदककार्यत्ववचनं युक्तमिति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

तत्र पृथिव्यां लय एवोच्यते न तत्कार्यत्वमत आह ॥ **कार्यस्येति** ॥ उपादेयस्य उपादान एवेत्यर्थः ॥ **आकाशं परमात्मानमिति** ॥ तथा च शरीरं पृथिवीमप्येति उद्गत आत्मा जीव आकाशं परमात्मानमप्येति इतरैरदृश्यः प्रविशतीत्यर्थ उक्तो भवति । कासांचिद्भूतत्रयकार्यत्व-मभिधात्रीणाम् । देहस्थमांसाद्येव भौमं पार्थिवं यन्मज्जादि तच्च इतरयोरप्तेजसोः कार्यं यथाशब्दं श्रुत्यनुसारेणाङ्गीकार्यमित्यर्थः । यद्वा मांसादि न केवलभौमं किन्तु इतरयोश्च कार्यं यथाशब्दमङ्गी-कार्यमित्यर्थः । इतरावपि पक्षाविति यच्छरीरे द्रवं तदाप्यं न सर्वशरीरं यच्छरीरे उष्णं तदेव तैजसं न सर्वशरीरमिति इतरावपि पक्षौ निषेध्यावित्यर्थः । नात्र मांसादीनामनेकभूतकार्यत्वमुच्यत इत्यत आह ॥ **भूम्यादिभूतानामिति** ॥ स्वत एव स्वरूपेणैव सम्भूतत्वादिति मिश्रत्वेन सम्यग्भूतत्वा-दित्यर्थः ।

## सूत्रभाष्यम्

कथं तर्हि विशेपवचनमित्यत आह–

**॥ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ २३ ॥**

भूतानां विशेषसंयोगादेव विशेपव्यवहारः ।

'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता ।
इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः ॥
इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुपम् ।
स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम्' ॥ इति च बृहत्संहितायाम् ।

(सूत्रभाष्यम्)

सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः । गारुडे च–

'अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ॥
अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् ।
विनिन्द्य चेतरान्मार्गान्सम्पूर्णफलता तथा' ॥ इति ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥

## तत्त्वप्रकाशिका

यदि शरीरं नैकविधभूतप्रकृतिकं कथं तर्हि विशेषोक्तिरित्युक्तमाशङ्क्य तत्परिहारार्थं सूत्रमवतार्य व्याचष्टे ॥ **कथमिति** ॥ शरीरस्यानेकभूतप्रकृतित्वेऽपि न विशेषोक्तिविरोधः । तत्तद्भूतविशेष संयोगापेक्षया तदुपपत्तेरिति भावः । मांसादीनां विशेषोक्तेरप्ययमर्थो ज्ञातव्यः । शरीरे भूतानां विशेषसंयोग एव कुतस्तद्भावे च पुनर्विशेषोक्त्ययोग इत्यत आह ॥ **पार्थिवानामिति** ॥ पृथिवी-स्थितानामित्यर्थः । अर्धं तेज इतरेऽर्धे त्रिभागिन्य आपः पृथिवीस्थितानामित्यर्थः । अर्धं तेज इतरेऽर्धे त्रिभागिन्य आपः पृथिवीभागतः । अन्येषामापोऽर्धत इतरेऽर्धे त्रिभागिनी पृथिवी भागमात्रं तेज इति द्रष्टव्यम् । देहभेदेन विशेषस्योक्तत्वान्नोक्तदोषः । द्विरुक्तेः प्रयोजनविशेषं प्रमाणविशेषेण दर्शयति ॥ **सर्वेति** ॥ अवधारणे अवधारणार्थम् । सम्पूर्णफलता शास्त्रस्योक्ता भवतीति शेषः । अतः श्रुत्यविरोधेन शरीरस्य पाञ्चभौतिकत्वसिद्धेर्युक्तो जगत्कारणे नारायणे श्रुतिसमन्वयो न पुनस्तत्र विरोधगन्धोऽपीति सिद्धम् ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां
श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

## गुर्वर्थदीपिका

पार्थिवानां शरीराणामिति स्मृतेरयमभिसन्धिः । पार्थिवे पृथिव्या अर्धरूपत्वम् । अप्तेजसो र्मिलित्वाऽर्धरूपत्वम् । अतस्तत्र पृथिव्या एव वैशेष्यात्तद्वादः पार्थिवत्ववादः । आप्यशरीरेऽपोऽर्ध रूपत्वम् । पृथिवीतेजसोर्मिलित्वाऽर्धरूपत्वम् । अतस्तत्रापामेव वैशेष्यात्तद्वादः आप्यत्ववादः तैजसशरीरे तेजसोऽर्धरूपत्वम् । अप्पृथिव्योर्मिलित्वाऽर्धरूपत्वम् । अतस्तत्र तेजस एव वैशेष्या

(गुर्वर्थदीपिका)

तद्वादः तेजसत्वोक्तिः । एवं चेकैकशरीरपरीक्षायां तत्र तत्र तस्य तस्य वैशिष्ट्यम् । सम्भूय शरीरत्रिकेंऽशगणनायामपामेव भूयस्त्वं चास्ति । तथा हि । तैजसशरीरेष्वर्धं तेजस इत्युक्त्या तेजसोंऽशचतुष्टयम् । पार्थिवेष्वेकस्तेजोंऽशः । आप्येष्वपि तेजस एकोंऽशः । एवं शरीरत्रिके मिलित्वा षडंशयुक्तं तेजः । पार्थिवशरीरेषु पृथिव्या अर्धत्वोक्त्या चतुरंशा पृथिवी । आप्यशरीरेषु त्रिभागत्वोक्त्या तैजसशरीरेष्वेकभागोक्त्या चतुरंशा औदकाः । पार्थिवेषु त्रिभागत्वोक्त्या तैजसशरीरेषु त्रिभागोक्त्या षडंशा औदकाः । एवं च मिळित्वा शरीरत्रिके दशांशयुक्ता आपः । अतस्सम्भूय सर्वशरीरेष्वद्भ्यः पादद्वयोना पृथिवी । पृथिव्याः पादद्वयोनं तेजः । आपस्तु तेजसः पादचतुष्टयाधिकाः । पृथिव्यास्तु पादद्वयाधिकाः । तस्मादपां पृथिवीतोऽपि भूयस्त्वम् । तेजसस्सकाशात्सुतरां भूयस्त्वमिति ।

ननु तेजसि त्रिभागिन्य आपः अप्सु त्रिभागिनी पृथिवीति च कुतः कल्प्यत इति चेन्न । तैजसे पृथिव्यास्त्रिभागत्वेऽपामेकभागत्वे तेजस औष्ण्यवशात् पृथिवीभागस्य भस्मीभावः स्यात् । अतस्तच्छमनायापामेव भागत्रयं वक्तव्यम् । आप्ये पृथिव्यास्त्रिभागत्वाभावे मत्स्यादिशरीरेषु काठिण्यं न स्यात् । अतस्तत्रापि त्रिभागिनी पृथिवी । 'एको भागस्तैजस' इति स्मृतेरभिप्रेतमेव । अन्यथा 'क्रमाद्दशोत्तरैः' इति वचनादद्भ्योऽपि तेजसो दशगुणोत्तरत्वेनापां भूयस्त्वात्' इति वक्ष्यमाणसूत्रविरोधस्स्यात् एवं च गूढाभिसन्धेर्व्यासस्य चमत्कारं पञ्चरात्रवक्ता मूलरूपी नारायण एव वेद । तत्प्रसादान्मध्वाख्यो भाष्यकारोऽपि वेद । येनोभयोर्हृदयमनुसन्धाय घटनेयं चरिता । इतरे तु भाष्यकारा दुर्भाष्यकारा एवेति युक्तमुत्पश्यामः । अपि चेदं पादद्वयं न केवलं श्रुतिविरोध-परिहारद्वारा समन्वयाध्याय एवोपयोगि । किन्तु नित्यत्वेनाभिमतनभोजनकत्वमुख्यवायुजनकत्व-भगवदनादिनियतत्वजगत्पालकत्वजीवनियामकत्वबिम्बत्वदेहेन्द्रियादिस्रष्टृत्वसर्वाधिकमुख्यप्राण-स्रष्टृत्वादिमहामाहात्म्यमपि साक्षादेव प्रतिपादयितुमिति ज्ञेयम् । अत एव 'न वियदश्रुतेः' 'एतेन मातारिश्वा व्याख्यातः' 'असम्भवस्तु सतोऽनुपपत्तेः' 'ज्ञोऽत एव इत्याद्याकारेणैव सूत्ररचना । भाष्यकृताऽप्यणुभाष्ये 'आकाशादिसमस्तं च तज्जं तेनैव लीयते । सोऽनुत्पत्तिलयः कर्ता जीवस्तद्वशगस्सदा । तदाभासो हरिः सर्वरूपेष्वपि समस्सदा । मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः । मुख्यप्राणवशे सर्वं स विष्णोर्वशगस्सदा । सर्वदोषोज्झितस्तस्माद्भगवान्पुरुषोत्तमः' इति प्रथमत एव निरूप्यान्ते 'उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वश'' इत्युक्तम् ।

॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां तत्त्वप्रकाशिकाटिप्पण्यां
गुर्वर्थदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

## भावबोधः

**तत्तद्भूतविशेषसंयोगापेक्षयेति** ।। अनेन मिश्रितायामपि विशेषोक्तिरिति न्यायविवरण-मुक्ततात्पर्यकं भवति । स्वर्गस्थानामित्येतदनुरोधेनाह– **पृथिवीस्थानामित्यर्थ इति** ।। अत्राद्ये– देहस्य श्रुतिप्रमाणकभूतत्रयात्मकत्वोक्तिः । द्वितीये– बाधकोद्धार इति सूत्रक्रमः ।

अत्र पादे आद्यमधिकरणपञ्चकं प्राणरूपैकार्थप्रतिपादकत्वेनैका पेटिका । तत्राद्यत्रयं प्राणोत्पत्तिप्रतिपादकत्वेनावान्तरपेटिका । तत्राद्ये– सर्वप्राणानां द्वितीये– मनसः, तृतीये– वाच उत्पत्तिसमर्थनम् । चतुर्थे प्राणसङ्ख्यायाः । पञ्चमे तत्परिमाणस्य विचार इति । उत्तरमधिकरण-चतुष्टयं मुख्यप्राणरूपैकार्थप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– तस्योत्पत्तिसमर्थनम् । द्वितीये– स्वातन्त्र्यनिरासः । तृतीये– मुख्यप्राणस्य प्राणादिपञ्चदासवत्त्वस्य प्रतिपादनम् । चतुर्थे– तत्परिमाणविचार इति । प्राणानां ब्रह्मकरणत्वप्रतिपादकतयाद्यपेटिकान्तर्भावनीयस्यापि दशमाधि-करणस्य चक्षुरादिवंदित्यधिकरणानन्तरस्यैवोत्थानात् पृथक्करणं युक्तमिति तदेकमेवाधिकरणमेका पेटिका । एवमेकादशाधिकरणस्यापि मुख्यप्राणविचारपरत्वेन द्वितीयपेटिकायामन्तर्भावनीयस्यापि पूर्वाधिकरणमुपजीव्यैवोत्थानमिति तदेकमेवाधिकरणमेका पेटिका । द्वादशत्रयोदशयोः शरीर-रूपैकार्थप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका । तत्राद्ये– शरीरकर्तुः, द्वितीये– तदुपादानस्य **विचार इति** ।।

।। इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्व प्रकाशिकाभावबोधे द्वितीयाध्यायस्य चतुर्थः पादः ।।

## भावदीपः

फलोक्तिपूर्वम् सूत्रभाष्ययोरर्थमाह ।। **शरीरस्येति** ।। अन्नमशितं त्रेधा विधीयत इत्यादिना मिश्रतायामपि विशेषोक्तेरिति न्यायविवरणानुरोधेनार्थान्तरमुपेत्याह ।। **मांसादीनामिति** ।। शरीर-पदस्थाने मांसादिपदस्थापनेन यदि शरीरमित्यादिटीका सर्वाप्यावर्तनीयेति भावः । सामान्यभाष्यस्य शरीरपदसंयोजनेन व्याख्यानं तु वक्ष्यमाणस्मृत्यानुगुण्याय । यद्यपि पञ्चभूतात्मकं सर्वमिति स्मृतौ सर्वं मांसाद्येकैकशः पञ्चभूतात्मकं तथापि तत्र प्राधान्यविवक्षया भौमं च मांसमित्यादि व्यवहार इत्यादितत्त्वप्रदीपरीत्याऽत्राप्युक्तार्थे स्मृतिं चाहेति पूर्वोक्त्या च स्मृत्यैव मांसादीनामनेकभूतकार्यत्वे

(भावदीपः)

कथं विशेषोक्तिरिति शङ्काऽपास्ता । तथापि तमर्थं सूत्रारूढं कर्तुमेवमुक्तम् । यद्वा पूर्वं स्मृतावेकविवक्षया विशिष्य व्यवहार इत्युक्तेरपि तत्तद्भूतविशेष संयोगो हेतुरित्ययमेवार्थो ज्ञातव्य इत्यर्थः । स्मृतौ पृथिवीस्वर्गरूपाधिष्ठानभेदोक्तिव्यावर्त्यमाह ॥ **पुनर्विशेषोक्तीति** ॥ एकभूतस्यैव विशेषसंयोगे आपः शरीरमिति पृथिवी शरीरमिति हिरण्यशरीरमित्यादौ शरीरस्याप्यत्वपार्थिवत्व-तैजसत्वरूपविशेषोक्तिर्न स्यात् । किं तु पार्थिवमिति वा आप्यमिति वा तैजसमिति वा एकरूपैव विशेषोक्तिः स्यात् । सर्वभूतानां विशेषसंयोगे तु सुतरां विशेषोक्तिर्न स्यादित्यर्थः । स्मृतौ प्रतीकपूर्वं शेषं पूरयति ॥ **अर्धं तेज इत्यादिना** ॥ **नोक्तदोष इति** ॥ पुनर्विशेषोक्त्ययोग इत्युक्तदोषो नेत्यर्थः । पूर्वाध्यायान्त एव द्विरुक्तेरवधारणार्थत्वस्य प्रमाणैनैवोक्तत्वात्पुनरिह तदुक्तिर्व्यर्थेत्यत आह ॥ **प्रयोजनविशेषमिति** ॥ **प्रमाणविशेषेणेति च** ॥ अनुक्तानां प्रमाणानां सङ्ग्रहादिरूपः प्रयोजन-विशेषः । अत एव भाष्ये सूत्रे कण्ठतोऽनुक्तानामनेकप्रमाणानां प्रतिनयमुदाहरणं कृतमिति भावः । एकदेशस्याध्यायमात्रस्यायोगादाह ॥ **शास्त्रस्येति** ॥ **अत इति** ॥ शरीरादेरनेकभूतकार्यत्वे श्रुत्यादिभावात् । देशविशेषस्थितदेहानां भूतसंयोगविशेषेण विशेषोक्तिसम्भवाच्चेत्यर्थः । पञ्चभूतात्मकमिति स्मृत्यनुरोधादाह ॥ **पाञ्चभौतिकत्वेति** ॥ एतच्चोत्तराधिकरणानामुत्थान-सिद्धिसौकर्यायोक्तम् । तथा च मांसादिति सूत्रे त्र्यात्मकत्वोक्तिः प्राधान्यविवक्षयेति भावः । नारायणे निर्दोषानन्तगुणपूर्णे ।

॥ इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते द्वितीयाध्याये चतुर्थः पादः ॥

## अभिनवचन्द्रिका

**कथं तर्हि विशेषोक्तिरिति** ॥ शरीरे भूतानां मिश्रतायामभ्युपेतायाम् 'आपः शरीरम्' इत्यादिविशेषोक्तिः कथमित्युक्तमाशङ्क्येत्यर्थः ॥ **तद्भावे चेति** ॥ शरीरे भूतत्रयमध्ये कस्यचिद्विशेषसंयोगाङ्गीकारे तद्भूतजन्यत्वव्यपदेश एव युक्तः स्यात्, न तु भूतान्तरजन्यत्वव्यपदेशः । न हि– अपां भूयस्त्वे निर्निबन्धना पार्थिवत्वोक्तिः । तथा पृथिव्या भूयस्त्वे निर्निबन्धना अबादित्वोक्तिश्च युज्यत इत्यर्थः । भाष्ये इति **सामान्यतो ज्ञेयमिति** ॥ पार्थिवानां शरीराणा-मित्यादिकं सामान्यतो ज्ञेयम् । पार्थिवशरीरेष्वपि क्वचित्तेजस आधिक्यम्, क्वचिद्वायोराधिक्यम् । एवमाप्यादिष्वपि अवान्तरभेदो द्रष्टव्य इत्यर्थः । भाष्ये **अध्याययान्त इति** ॥ यत्रोक्तार्थे विचारः

(अभिनवचन्द्रिका)

विचिकित्सा सज्येत प्रसक्ता भवति, तत्र पूर्वोक्तस्याऽवधारणे अवधारणार्थं, वेदे वा, वैदिकेऽपि वा, अध्यायान्ते द्विरुक्तिः स्यादित्यर्थः । द्विरुक्तिमात्रेण कथं संशयनिवृत्तिरित्यत आह– **अनुक्तानामिति** ॥ यतो द्विरुक्त्या इतरान् मार्गान् विनिन्द्य अनुक्तानां प्रमाणानां स्वीकारः कृतो भवेत् । अतः संशयनिवृत्तिः । प्रयोजनान्तरमाह – **सम्पूर्णेति** ॥ द्विरुक्त्या संपूर्णफलतोक्ता भवतीत्यर्थः ।

पूर्वपक्षस्तु – आप्यमेव शरीरम् ' अद्भ्यो हीदमापद्यत' इति श्रुतेः । शरीरावयवेषु मांसादिषु अब्धर्मतर्पकत्वदर्शनाच्च । न तु भूतत्रयात्मकम् । तथात्वे 'आपः शरीरम्' इति विशेषोक्त्ययोगात् । अथवा पार्थिवं, पृथिवीशरीरमप्येतीति पृथिव्या लयाभिधानात्, काठिन्यादियुक्तेश्च, न तु भूतत्रयात्मकं, तथात्वे पृथिवी शरीरम्' इति विशेषोक्त्ययोगात् । अथवा तैजसं 'सोऽग्नेर्देवयोन्या' इति श्रुतेः, औष्ण्यदर्शनाच्च, न तु भूतत्रयात्मकं तथात्वे 'हिरण्यशरीरः' इति विशेषोक्त्ययोगप्रसङ्गात् । अतो विरोधेन 'इमास्तिस्रो देवता' इति श्रुतेरप्रामाण्यात् न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वमिति ।

सिद्धान्तस्तु – यत् शरीरे कठिनं मांसादि तदेव पार्थिवम् । यच्च शोणितादि तदेवाऽऽप्यम् । यच्च मज्जादि, तदेव तैजसं, शरीरं तु त्र्यात्मकं 'यत्कठिनं सा पृथिवी, यत् द्रवं तदापो, यदुष्णं तत्तेजः इति श्रुतेः । ननु कथं मांसस्य पार्थिवत्वमुच्यते । 'आपो वाव मांसम्' इति श्रुतिविरोधादिति चेत्, न मांसस्यापि केवलपार्थिवत्वानङ्गीकारात् । श्रुत्यनुसारेण अबादिकार्यत्वस्याप्यभिमतत्वात् । यदि शरीरं नैकभूतकार्थं कथं तर्हि विशेषोक्तिरिति चेत्, न तत्तच्छरीराणां तत्तद्भूतसंयोगविशेषसद्भावेन वैशेष्यात्तत्तव्यपदेशोपपत्तेः । तदुक्तम् 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता । इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः' इति । अतः श्रुत्यविरोधेन शरीरस्य पाञ्चभौतिकत्वसिद्धेः युक्तो जगत्कारणे नारायणे श्रुतिसमन्वयः सिद्ध इति ।

रामचन्द्रस्य सक्तस्य सत्यनाथहृदम्बरे ।
दिवानिशं शोभमाना शुद्धाऽभिनवचन्द्रिका ॥ १ ॥

दूरीचकाराऽतिवेगात् हृदयान्तर्गतं तमः ।
टीकाभावं ज्ञापयन्ती द्वितीयाध्यायसङ्गता ॥ २ ॥

॥ इति श्रीमत्सत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां तत्त्वप्रकाशिकाऽभिनवचन्द्रिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

## वाक्यार्थमुक्तावली

नैकभूतप्रकृतिकं नैकभूतोपादानकम् । आपः शरीरं पृथिवीशरीरं अग्नेर्देवयोन्येति विशेषोक्तिरित्यर्थः । सूत्रे तुशब्दोऽवधारणे । भूम्यादिभूतसंयोगवैशेष्यादेव तद्वादः भौमत्वादिति विशेषवाद इत्यर्थः । एतेन विमिश्रितेत्युक्तोऽपि न्यायः ॥ **मांसादीनां विशेषोक्तेरपीति** ॥ एतेन सूत्रस्य वृत्यन्तरमुक्तं भवति । प्रमाणन्तु प्रागेव पठितमिति भावः ॥ **तद्भाव इति** ॥ सर्वेष्वपि शरीरेषु सर्वभूतानां विशेषसंयोगभाव इत्यर्थः । **पृथिवीस्थितानामिति** ॥ स्वर्गस्थानमिति वक्ष्यमाणत्वात्तदनुसारेणेयमुक्तिः । अन्यथा पार्थिवोपादानत्वस्य तैजसशरीरेष्वपि भावाद्विभेदकमिदं न स्यादिति ज्ञेयम् । भेदस्तु प्रतिपुरुषमित्येतत्प्रमेयमुक्तावल्यां स्पष्टं व्याख्यातम् ।

**॥ इति श्रीमद्विठ्ठलाचार्य तनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमत्तत्वप्रकाशिका वाक्यार्थमुक्तावल्यां द्वितीयाध्यायस्य चतुर्थःपादः सम्पूर्णः ॥**

## वाक्यार्थविवरणम्

**एकभूतप्रकृतीति** ॥ उपादानवाची प्रकृतिशब्दः । एकभूतोपादानकं नेत्यर्थः अनेकभूतोपादानकमिति यावत् ॥ **विशेषोक्तिः** ॥ पृथिवीमित्यादिविशिष्य पार्थिवत्वाद्युक्तिः ॥ **अनेकभूतप्रकृतित्वेऽपि** ॥ अनेकभूतोपादानकत्वेऽपि ॥ **विशेषसंयोगः** ॥ संयोगविशेषः । तत्तद्भूताधिक्यमिति यावत् ॥ **विशेषोक्तेः** ॥ आप्यत्वाद्युक्तेः । अयमर्थः । अबादिसंयोगविशेषमपेक्ष्याप्त्वाद्युक्तिरित्यर्थः ॥ **कुतः** ॥ प्रमाणात् ॥ तद्भावे च पुनर्विशेषोक्त्ययोग इति । एकस्मिन्नेव देह इति शेषः । एकस्मिन्नेव पार्थिवदेहे पृथिव्यादिभूतानां विशेषसंयोगसत्त्वे 'अयं पार्थिवो देहः' इत्यादिविशेषोक्त्ययोगः । सर्वभूतानामपि विशेषतः सत्त्वे विशिष्योक्तौ निमित्ताभावादिति भावः । एकैकस्मिन् देहे भागाष्टकं कृत्वा चतुर्भागचतुर्भागरूपार्धद्वयं कृत्वा पार्थिवानां शरीराणामित्याद्युक्तिरिति ध्येयम् ॥ **प्रतिपुरुषम्** ॥ विद्यमानपार्थिवदेहेऽपि भेदः कस्यचिद्देहेऽपां कस्यचिद्देहे तेजसः किञ्चिदाधिक्यमिति ज्ञेयम् ॥ **स्वर्गस्थानां शरीराणाम्** ॥ तैजसशरीराणाम् ॥ **अन्येषाम्** ॥ वरुणालोकस्थितानामाप्यशरीराणाम् । प्रमाणबलादस्तु शरीरे भूतानां विशेषसंयोगस्तथापि तद्भावे पुनर्विशेषोक्त्ययोग एवेत्यत आह ॥ **देहभेदेनेति** ॥ स्यादयं दोषो यदि एकस्मिन्नेव पार्थिवदेहे

(वाक्यार्थविवरणम्)
भूतानां विशेषसंयोग उच्येत । न चैवम् । किं नाम पार्थिवदेहे पृथिव्यास्तैजसदेहे तेजसः आप्य-देहेऽपामित्येवं तत्तद्भूतसंयोगविशेषस्य पार्थिवादिदेहभेदेनोक्तत्वाद्विशेषोक्त्ययोगरूपोक्तदोषो नेत्यर्थः ।

ननु प्रथमाध्यायान्ते अवधारणार्थमिति द्विरुक्तेः प्रयोजनस्य दर्शितत्वात् पुनस्तत्प्रदर्शनं व्यर्थमित्यत उक्तम् ॥ **प्रयोजनविशेषमित्यादि** ॥ तत्रानुक्तप्रयोजनविशेषो 'अनुक्ताम्' इत्यने-नोच्यते । तथा तत्र वराहसंहितावाक्यमुदाहृतम् । अत्र तु गारुडपुराणवाक्यमिति प्रमाणविशेषश्चेति ज्ञेयम् । तादर्थ्ये सप्तमीत्याशयेनावधारणार्थमित्युक्तमिति ज्ञातव्यम् । **गन्धः** लेशः । गन्धः सौरभलेशयोरित्यमरः ।

॥ इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासवर्यकृते
द्वितीयाध्यायस्य चतुर्थः पादः ॥

## वाक्यार्थमञ्जरी

प्रकृतिः प्रकर्षेण क्रियत इति प्रकृतिः कार्यम् । भूम्यादिभूतं संयोगवैशेष्यात्तद्वादः भौमत्वादि-विशेषवाद इत्यर्थः ॥ **पुनर्विशेष्योक्त्ययोग इति** ॥ एकस्मिन्देहे सर्वेषां विशेषसंयोगे सत्याप्य-मित्यादिविशेष्योक्त्ययोग इत्यर्थः । अन्येषां वरुणलोकगतानामुक्तदोषः पुनर्विशेषोक्त्ययोगरूपः । ननु पूर्वाध्यायांत एव द्विरुक्तेरवधारणार्थत्वस्य अवधारणार्थं सर्वस्येति प्रमाणेनोक्तात्पुनरत्र तदुक्तिर्व्यर्थेत्यत उक्तम् ॥ **प्रयोजनविशेषमिति** ॥ पञ्चभूतात्मकं सर्वमित्येतदनुरोधेनाह ॥ **पाञ्चभौतिकमिति** ॥

॥ इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमजर्यां शर्कराश्रीनिवासविरचितायां
द्वितीयाध्यायस्य चतुर्थः पादः ॥

॥ इति मांसाधिकरणम् ॥

॥ इति चतुर्थः पादः ।